# अनुक्रमणिका।




| विषयः | पृष्ठाङ्काः |
|---|---|
| १ उपोद्घातः— ... ... ... ... ... | 1–55 |
| श्रीशुद्धाद्वैतमतस्वरूपम्। ... ... ... | 1 |
| शांकरमतम् ( अद्वैतमतम् )। ... ... ... | 27 |
| रामानुजमतम्। ( विशिष्टाद्वैतमतम् ) ... ... | 30 |
| माध्वमतम्। ... ... ... ... | 33 |
| शांकररामानुजीयमाध्वमततो वाल्लभस्य शुद्धाद्वैतमतस्य सालक्षण्यवैलक्षण्ये। | 36 |
| श्रीमद्वल्लभाचार्याणां चरितं तथा तेषां तदनुयायिनां ग्रन्थाश्च। | 40 |
| श्रीमदणुभाष्यविमर्शः... ... ... ... | 47 |
| वेदश्रद्धा ... ... ... ... ... | 49 |
| बालबोधिनी ... ... ... ... | 54 |
| २ बालबोधिनी ... ... ... ... ... | १ |
| ३ अधिकरणानां सूचीपत्रम् ... ... ... | ४०९ |
| ४ ब्रह्मसूत्राणां वर्णानुक्रमेण सूचीपत्रम् ... ... | ४१५ |




ॐ श्रीकृष्णः शरणं मम ।

# उपोद्घातः ।

## श्रीशुद्धाद्वैतमतस्वरूपम् ।

वेदान्तोपजीव्येषु नानामतेषु चत्वार्येव अद्वैतविशिष्टाद्वैतद्वैत-शुद्धाद्वैतेत्याख्यानि मतानि तत्र तत्र बहुप्रामाणिकपरिगृहीततया विचारक्षोदक्षमाणि सन्ति । तत्र श्रीशुद्धाद्वैतमतस्वरूपं निर्दिश्यते । अस्य मतस्य ' शुद्धाद्वैतम् ' इति नाम ।

## शुद्धाद्वैतशब्दस्यार्थः ।

तदर्थः शुद्धाद्वैतमार्तण्डे वक्ष्यमाणश्लोकाभ्यां प्रतिपाद्यते । तथाहि–

**शुद्धाद्वैतपदे ज्ञेयः समासः कर्मधारयः ।**
**अद्वैतं शुद्धयोः प्राहुः षष्ठीतत्पुरुषं बुधाः ॥ २७ ॥**
**मायासंबन्धरहितं शुद्धमित्युच्यते बुधैः ।**
**कार्यकारणरूपं हि शुद्धं ब्रह्म न मायिकम् ॥ २८ ॥**

शुद्धाद्वैतपदे शुद्धं च तदद्वैतं चेति कर्मधारयः शुद्धयोरद्वैतमिति षष्ठीतत्पुरुषो वा बोध्यः । शुद्धपदस्यार्थो मायासंबन्धरहितमिति ग्राह्यस्तेन मायासंबन्धरहितस्य ब्रह्मणोद्वैतमिति । अथवा शुद्धयोर्मायासंबन्धरहितयोर्जगद्ब्रह्मणोरद्वैतमित्यर्थो भवति । तदेतत्सविस्तरं प्रतिपादयामः । तदर्थं ब्रह्मजीवजगतां स्वरूपमेतन्मतानुसारं बोध्यते ।

## ब्रह्म ।

### १ ब्रह्माणि सर्वे धर्माः सन्ति ।

अत्र हि मते ब्रह्म सर्वधर्मविशिष्टमङ्गीक्रियते । सर्वश्रुतिप्रामाण्यात् । सर्वधर्मोपपत्तेश्च ( ब्र. सू. २।१।३७ ) सर्वोपेता च तद्दर्शनात् ( ब्र. सू.

२।१।३०) इति ब्रह्मसूत्रप्रामाण्याच्च। ततो ब्रह्म सर्वधर्मवदेवोररीकर्तव्यम्। हेयगुणरहितं शुद्धधर्मवदेव ब्रह्मेति रामानुजाद्याहृतनियतधर्मवादस्वीकारे ब्रह्माणि **इयत्ताप्रसङ्गः**। तेन च देशकालवस्तुपरिच्छेदरहितं ब्रह्मेतिप्रतिपादकसर्वश्रुतिसूत्रव्याकोपः। तथा शाङ्करमतवन्निर्धर्मकत्वस्वीकारे निर्धर्मकपदार्थज्ञानस्यादृष्टत्वाद् ब्रह्मणो ज्ञानाभावप्रसंगः। ततस्तज्ज्ञानार्थं प्रवृत्तं शास्त्रमपि मुधैव भवेत्। अतः श्रीमद्भगवद्गीताव्याससूत्रश्रीमद्भागवतान्यवलम्ब्य तदेकवाक्यतया वैदिकयुक्तीः समाश्रित्य च सर्वश्रुत्यवगतं ब्रह्मणः सर्वधर्मवत्त्वमङ्गीकर्तव्यम्।

## २ ब्रह्मणि विरुद्धधर्मा अपि सन्ति।

नन्वेवं ब्रह्मणि सर्वधर्मयुक्तत्वस्वीकारे तत्र विरुद्धधर्माणामपि समावेशः स्यात्तच्च दृष्टविरुद्धमत एव निर्धर्मकं निर्विशेषं निर्गुणं निराकारं ब्रह्मानिर्वचनीयमायावशात्सगुणमिव प्रतिभासत इति शाङ्कराणां मतं संगच्छत इति चेन्न। 'उभयव्यपदेशात्त्वहिकुण्डलवत्' ( ब्र. सू. ३।२।२७ ) प्रकाशाश्रयवद्वा तेजस्त्वात् ( ब्र. सू. ३।२।२८ ) इत्यादिसूत्रप्रामाण्याद् ब्रह्मणि विरुद्धधर्मवत्त्वस्वीकारात्। दृष्टविरोधस्यानवगाह्यमाहात्म्ये केवलश्रुतिप्रतिपाद्ये ब्रह्मण्यनुपयुक्तत्वाच्च। तथाहि—यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। इति श्रुतिवाक्ये ब्रह्मणि धर्मान्निषिध्य पुनस्तत्रैव प्रकरणे—आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन। इति श्रुत्यानन्दधर्मस्य कथनम्। अत एव सूत्रकारो व्यासः—प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ( ब्र. सू. ३।२।२२ ) इति सूत्रयांबभूव। एवं च ब्रह्मणि सर्वे विरुद्धा अपि धर्माः सन्ति। किंच ते स्वाभाविका एव न मायया प्रतिभासमानाः। तद्रूपस्य वैचित्र्यात्। तदेवोक्तं—सूत्रकृता—आत्मनि चैवं विचित्राश्च हि ( ब्र. सू. २।१।२८) इति सूत्रयता। ततश्चैवं सिद्धम्—यद्ब्रह्म—अणोरणीयान् महतो महीयान्। इत्यादिविरुद्धधर्मप्रतिपादकश्रुतिभिरण्वपि महत्, अदृश्यमपि बुद्धिग्राह्यम् अनेकरूपमपि घनीभूतसैन्धववत् सर्वदैकरूपं शुद्धम् बहिःश-

मप्यन्तःस्थं स्वतन्त्रमपि भक्तपराधीनम् सर्वकार्यस्थमपि तत्स्पर्शरहितं क्रीडार्थं सर्वरूपाणां धारकमपि स्वरूपाभिन्नं प्रमाणमपि प्रमेयरूपं साधनमपि फलभूतं 'न तत्समश्चाभ्यधिकश्च' इति श्रुत्या समत्वाभ्याधिकत्वरहितमपि–'समो मशकेन समो नागेन' इति श्रुतिप्रतिपादितत्वात्समम्–इति विरुद्धसर्वधर्माश्रयत्वमनवगाह्यमाहात्म्ये ब्रह्मणि सहजतयावतारादिदशाभेदात्समुल्लसति न तत्र मायाकल्पनापेक्षा । अन्यधर्माणां का कथा यतोविकृतमपि कृपया परिणमते तत् । अतो विरुद्धधर्मत्वं न विरुद्धम् । अपि तु भूषणावहम् । अत एव भाष्यकारा असकृन्निर्दिशन्ति यद् ब्रह्मणो विरुद्धधर्मवत्त्वं तद्भूषणायेति ।

## ३ सर्वकर्तृत्वं ब्रह्मगतमेव तथापि वैषम्यनैर्घृण्ययोरनवकाशः ।

स ह एतावानास तदात्मानꣳ स्वयमकुरुत आत्मैवेदं सर्वम् यतो वा इमानि भूतानि जायन्ते ' इत्यादिश्रुतीनाम् जन्माद्यस्य यतः-शास्त्रयोनित्वात् ( ब्र. सू. १।१।२ ) इत्यादिसूत्राणाम् ' अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा ॥ ' इति गीतावाक्यस्य ' जन्माद्यस्य यतोऽन्वयादितरतः ' इत्यादिश्रीमद्भागवतवाक्यस्य च प्रामाण्याद्ब्रह्मैव स्वयं सर्वकर्तृ । तत्कर्तृत्वं स्वाभाविकमेव न मायिकं शाङ्करमतवत् । ब्रह्मैव ' एकाकी न रमते स द्वितीयमैच्छत् ' इति श्रुत्या रमणार्थं तत्तत्साधनपूर्वकतत्तत्फलदानद्वारा जगद्रूपेणाविर्भूय लीलां करोति । स्वयमविकृतमेव सत् परिणमते । तत्र दृष्टान्ताः— कामधेनुकल्पवृक्षाचिन्तामणिप्रभृतयः । तथाहि । यथा कामधेनुप्रभृतयो वरयितृकामनानुसारं स्वयमविकृताः सन्तस्तत्तद्रूपेण विपरिणमन्ते तद्वत् ब्रह्मापि तत्तान् पदार्थान् निर्माय स्वयं रमते। प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ( ब्र.सू. १।४।२३) इति सूत्रेण ब्रह्मैव जगत उपादानकारणं निमित्तकारणं च । अश्रुतं श्रुतं भवति । इति प्रतिज्ञामृत्पिण्डदृष्टान्ताभ्यां च ब्रह्मण एव कर्तृत्वं सिध्यति। ननु ब्रह्मणः कर्तृत्वाङ्गीकारे तस्य सगुणता स्यादतो विवर्तवादमालम्ब्य निर्वाहः सर्वश्रुतीनाम् । ततश्च ब्रह्मणि वास्तवं कर्तृत्वं नास्तीति चेन्न

विवर्तवादिमतेऽपि नित्यशुद्धबुद्धमुक्तविभुत्वादिगुणानां ब्रह्मणि स्वीकारात्पूर्वोक्तकल्पनानुपपत्तेश्च । अस्मिन्मते तु विरुद्धधर्मवत्त्वमनवगाह्यमाहात्म्ये ब्रह्मणि भूषणायैवेति स्वीकारान्न दोषः । ब्रह्मण एव जगदुत्पत्तिरित्यत्राधस्तनश्रुत्यादीनि प्रमाणम् । तथाहि—यद्भूतयोनिं परिपश्यन्ति धीराः मम योनिर्महद् ब्रह्म तासां ब्रह्म महद्योनिः आत्मकृतेः परिणामात् ( ब्र. सू. १।४।२६ ) योनिश्च हि गीयते ( ब्र. सू. १।४।२७ ) अश्मादिवच्च ( ब्र. सू. २।१।२३ ) उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ( ब्र. सू. २।१।२४ ) देवादिवदपि लोके ( ब्र. सू. २।१।२५ ) उभयव्यपदेशात्त्वहिकुण्डलवत् ( ब्र. सू. ३।२।२७ ) इत्यादि । यद्यपि ब्रह्मैव सर्वं जगत्करोति तथापि सृष्टपदार्थगतवैषम्यकर्तृत्वात् प्रलयादिकर्तृत्वाच्च तस्य वैषम्यनैर्घृण्ये न प्रसज्येते । अत्र त्रिधा समाधानमस्मिन्मते । १ सूत्रकारः कर्मसापेक्षत्वान्न दोष इति ब्रवीति । २ भाष्यकारास्तु स्वमाहात्म्यप्रदर्शनार्थमेव ब्रह्मणात्मनः सकाशात् सर्वा सर्वविधा सृष्टिर्निरमायि तेन न पूर्वोक्तवैषम्यदोष इति समादधुः । ३ विद्वन्मण्डनकृतो विठ्ठलेशास्तु लीलार्थं सर्वसृष्टेर्निर्माणात् लीलायाश्च विषमसृष्टिं विनानुपपत्तेर्न दोष इति समादधुः । एतेषां त्रयाणां समन्वयो वक्ष्यमाणप्रकारेण संभवति । तथाहि—सूत्रकृता व्यासेन यद्यपि 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति' ( ब्र. सू. २।१।३४ ) 'कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' ( ब्र.सू. २।३।४२ ) इति सूत्रयता कर्मसापेक्षत्वमीश्वरस्य दर्शितमिव भाति । तथापि तस्य तत्र न तात्पर्यम् । किंतु ' स आत्मानं स्वयमकुरुत । ' इति आत्मसृष्टिद्वारा समाधान एव तात्पर्यमत एवाग्रे स एव ' फलमत उपपत्तेः' ( ब्र. सू. ३।२।३८ ) इति सूत्रयन् कर्मफलमीश्वरादेवेति बोधयति नतु कर्माधीन ईश्वर इति । किंच कर्माधीन एवेश्वरः स्याच्चेत्तदीश्वरत्वहानिः । तत ईश्वरः कर्म नापेक्षते । प्रत्युत कर्मैव जडत्वादीश्वरमपेक्षते । विद्वन्मण्डनकृतमतमप्येवंरीत्या समवैति । एष ह्येव साधु कर्म कारयति फलमत उपपत्तेः ( ब्र. सू. ३।२।३८ ) ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन

तिष्ठति। भ्रामयन्सर्वभूतानि। 'धियो यो नः प्रचोदयात्' बुद्धिप्रेरकत्व-ण्णस्येति वाक्यप्रामाण्यात् विपश्चिद् विविधरसभोगचतुरो भगवान् क्रीडार्थं जीवद्वारा विविधं कर्म कारयित्वा 'पुण्यो वै पुण्येन कर्मणा भवति' इति वेदमर्यादारक्षार्थं विहितनिषिद्धकर्मानुगुणं तत्तज्जीवेभ्यः फलं यच्छतीति एवं त्रिधापि समाधानमेकार्थमेव। ततश्च ब्रह्मणि न वैषम्यनैर्घृण्यादि-प्रसक्तिस्तद्गतमेव सर्वकर्तृत्वं चेति सिद्धम्।

## ४ ब्रह्मणो जगतश्चाभेदः।

अस्मिन्मते तदनन्यत्वमारम्भणशब्दादिभ्यः (ब्र. सू. २।१।१४) इति सूत्रप्रामाण्याज्जगतो ब्रह्मणश्चाभेदः। अत्र मते शाङ्करमतवत् जगतो मायामयत्वं न किंतु ब्रह्मण आधिभौतिकस्वरूपं जगत् तेन ब्रह्मजगती अभिन्ने। अत्रेदं ध्येयम्। ब्रह्माधिदैविकाध्यात्मिकाधिभौतिकभेदेन त्रिविधम्। तत्र ब्रह्मण आधिदैविकं स्वरूपं परब्रह्म। तस्याध्यात्मिकं स्वरूपमक्षरब्रह्म। एवं तस्याधिभौतिकं स्वरूपं जगत्। एतत् त्रिविधमपि रूपमभिन्नम्। अनेन प्रकारेण ब्रह्मजगतोरनन्यत्वम्। अत्र दृष्टान्तः। संवेष्टितप्रसारितः पटः। यथा संवेष्टितः प्रसारितश्च पटः आकारभेदेन भिन्नतया प्रतीयमानोप्यभिन्न एव। तथाविर्भावतिरोभावन्यायेन ब्रह्मजगतोरनन्यता। आविर्भावदशायां जगत्। तिरोभावदशायां तदेव ब्रह्म। यथा च नियमनानियमनाभ्यां न प्राणभेदस्तथाविर्भावतिरोभावाभ्यां न ब्रह्मजगतोर्भेदः। नन्वेवं ब्रह्मणा सह जगतोनन्यत्वे भोक्तृभोग्यत्वभावाभावप्रसङ्ग इति चेन्न। ऊर्णनाभ्यादिदृष्टान्तवदुपपत्तेः। तथाच यथोर्णनाभिः स्वयं लालाद्वारा जालं निर्माय तत्र विहृत्य तत्पुनरात्मनि समावेशयति योगी वा बहुरूपाणि निर्माय तत्तद्रूपेण क्रीडित्वैक एवावतिष्ठते तद्वद् ब्रह्मापि क्रीडार्थं भोक्तृभोग्यरूपेणात्मानमेव विविधरूपत्वेन विपरिणमय्य तत्रैव भोक्तृत्वं भोग्यत्वं च निर्वाह्य पुनरेकेनैव रूपेणावतिष्ठते। नन्वेवं भोक्तृभोग्यत्वयोः संकर इति न च वाच्यम्। कटककुण्डलवदुपपत्तेः। तथाहि-लोके यथा कटकमपि सुवर्ण-

विकारः कुण्डलमपि सुवर्णविकारस्तथापि कुण्डलं कटकत्वेन न गृह्यते नवा कटकं कुण्डलत्वेन । तद्वद् ब्रह्मत्वसाम्येऽपि भोक्तृरूपं न भोग्यतामाप्नोति न वा भोग्यरूपं भोक्तृताम् । अतो न भोक्तृत्वभोग्यत्वयोः संकरः । आप्तकाममपि ब्रह्म जगद्रूपेण विपरिणम्य तदनन्यतया विविधलीलाः करोति। तदेतद् ब्रह्मणोनवगाह्यमाहात्म्यं विलसति । एवमस्मिन्मते कार्यकारणयोः शुद्धमेवाद्वैतम् । तदर्थं मतान्तरवन्मायारोपाद्यालम्बनं नाङ्गीकर्तव्यम् ।

## ५ अक्षरब्रह्मरूपम् ।

पूर्वं ब्रह्मण आधिदैविकादिभेदेन रूपत्रयमुक्तम् । तत्र यद् ब्रह्मणं आधिदैविकं रूपं तत्परब्रह्मेत्यप्युक्तम् । तच्च भक्त्येकलभ्यं नतु ज्ञानादिना । ब्रह्मणो यदध्यात्मिकं रूपं तदक्षरब्रह्म । तच्च ज्ञानिभिर्ज्ञानेनाप्यम् । परब्रह्मस्वरूपः पुरुषोत्तमः पूर्णप्रकटसच्चिदानन्दः स चाक्षरब्रह्मणः श्रेष्ठः । अतो ज्यायांश्च पूरुषः । अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । इत्यादिवाक्यप्रामाण्यात् । अक्षरब्रह्म तु अतो न्यूनम् । गणितानन्दत्वेन किंचिदानन्दांशतिरोभावात् । तद्दर्शितं-इयदामननात् ( ब्र. सू. ३।३।३४ ) इति सूत्रे प्रत्येकं शतगुणितानन्दबोधिन्या सैषानन्दस्य मीमांसा भवति इत्यन्तया श्रुत्या ।भगवान्यदा ज्ञानद्वारा ज्ञानिभ्यो मोक्षं दातुमिच्छति तदा स आधारभागभूतं चरणस्थानीयमेतदक्षरब्रह्म अक्षरकालकर्मस्वभावाख्यानि चत्वारि रूपाणि लम्भयति । पुरुषोत्तमस्याक्षरब्रह्मणश्च वैलक्षण्यमेतत् । यत्-अहमेवाविर्भूय रमेयेतीच्छामात्रेण यदान्तःकरणे सत्त्वसमुत्थानं भवत्यानन्दांशश्च किंचित्तिरोहितो भवति तदा स एव पुरुषोत्तमः केवलमिच्छामात्रकरणादक्षरब्रह्मरूपेण परिणमते। पुरुषोत्तमस्तु लीलयेच्छां करोत्यतोऽतिरोहितानन्दस्तेन स श्रेष्ठः । आनन्दांशतिरोभावसाम्येऽपि जीवापेक्षयाक्षरब्रह्म विलक्षणमुत्कृष्टं च यत

१ तत्र यत्स्वरूपं प्रकृतिपुरुषभेदाभ्यां द्विविधं तदेवाक्षरब्रह्मेत्यभिधीयते ।

इच्छाप्रादुर्भावेनैवानन्दांशस्य तिरोहितत्वम् । तत्र वस्तुतस्तदानन्दरूपमेव । अतः पुरुषावतारस्तस्माद् भवति । घनीभूता प्रथमेच्छा प्रकृतिरित्यभिधीयते । अतः प्रकृतेरक्षरं विलक्षणं तस्याः पुरुषाच्च तदुत्कृष्टम् । कूटस्थनिर्विकाराव्यक्तशब्दैरक्षरब्रह्मण एव ग्रहणम् । एतच्चाक्षरब्रह्म पुरुषोत्तमस्य चरणस्थानीयम् । आनन्दमयनिरूपणप्रस्तावे 'ब्रह्म पुच्छं प्रतिष्ठा' इत्याद्युक्तम् । तत्प्रामाण्यादक्षरब्रह्म पुरुषोत्तमस्याधारभूतं पुच्छम् । यद्यपि पुरुषोत्तमोऽनेकभावापन्नस्तथापि ज्ञानमार्गेऽक्षरब्रह्मस्वरूपेणैव सेव्यः । तत एव मोक्षप्राप्तिः ॥

## जीवः ।

### ६ जीवस्य स्वरूपं तस्य नित्यत्वं च ।

'एकोहं बहु स्यां प्रजायेय' इतीच्छावशाद्ब्रह्म क्रीडार्थं स्वकीयं पूर्णानन्दं तिरोभावयित्वा जीवस्वरूपं गृह्णाति तत्राविद्यासंबन्धोल्पीयानपि नास्ति । एवं च बहुभवनेच्छया ब्रह्मणः सकाशादेव सूक्ष्माः परिच्छिन्नाश्चित्प्रधाना असंख्याता अंशा उच्चनीचत्वभावनावशादुच्चनीचरूपेणाग्नेर्विस्फुलिङ्गा इव निरगच्छन् । ततश्चेदं सिद्धम् । स्वरूपभोगजीवभोगान् साधयितुं ब्रह्मेच्छा यदाभूत्तदा तत्कृपयानन्दांश ऐश्वर्यादिधर्माश्च तिरोभूताः । ततश्च जीवेष्वैश्वर्यतिरोभावेन दीनत्वं पराधीनत्वं वीर्यतिरोभावेन सर्वदुःखसहनं यशस्तिरोभावेन सर्वहीनत्वं श्रीतिरोभावेन जन्मादिसर्वापद्विषयत्वं ज्ञानतिरोभावेन देहादिष्वहंबुद्धिः अपस्मारिपुरुषवद्विपरीतज्ञानं च वैराग्यतिरोभावेन विषयासक्तिश्च । जीवः प्राकृतेन्द्रियैरग्राह्यः । किंतु योगेन भगवद्दर्शनसंपादयित्र्या दृष्ट्या, ज्ञानदृष्ट्या चेति त्रिधा ग्रहीतुं शक्यते । सच जीवो नित्यः । उत्पत्त्यभावात् । यत्र नामरूपसंबन्धस्तत्रैवोत्पत्तिरुच्यते । जीवस्य तु नामरूपसंबन्धो नास्ति विस्फुलिङ्गवत् तस्योच्चरणकथनात् । उच्चरणं तु नोत्पत्तिः । अयमात्माजरोमरोमृतः । न जायते म्रियते वा कदाचित् ।

इति श्रुतिभिर्जीवस्य नित्यत्वम् । तस्य जननमरणादिकं सर्वं लाक्षणिकम् ।

## ७ जीवस्य ज्ञातृत्वम् ।

ज्ञोत एव ( ब्र. सू. २।३।१८ ) इति सूत्रप्रामाण्याज्जीवो ज्ञाता धर्मी ज्ञानं तद्धर्मः । तेन तेजोमयज्योतिःस्वरूपो जीवो विज्ञानमयत्वेन प्रकाशते । ज्ञानरूपधर्मस्य ज्ञातृरूपधार्मिणश्च सूर्यप्रकाशयोरिवाभेदः ।

## ८ जीवस्य परिमाणम् ।

ब्रह्मसूत्रेषु जीवस्योत्क्रान्तिगत्यागतिकथनात्सोणुरूपो नतु शाङ्करमतवद्विभुः । 'वालाग्रशतभागस्य शतधा कल्पितस्य तु । भागो जीवः स विज्ञेयः' । इति श्रुत्या तदणुत्वं स्पष्टतया प्रतीयते । स एवाणुर्जीवः आनन्दांशप्राकट्ये पुनर्विभुर्भवतीत्यन्यदेतत् । ननु जीवस्याणुत्वस्वीकारे तस्यैकदेशस्थितत्वेन सर्वशरीरे चैतन्यव्याप्त्यभावप्रसङ्ग इति चेन्न तप्ततैलस्थितचन्दनस्य तापनिवारकत्ववदुपपत्तेः । मणेरेकदेशस्थितस्य प्रभेव चम्पकगतसुगन्धस्याधिकदेशव्याप्तिरिव वा सर्वशरीरे चैतन्यव्याप्तिसंभवाद्वा । यत्र श्रुत्यादिषु जीवस्य व्यापकत्वेन कथनं तत्र भगवदावेशादानन्दांशप्रादुर्भावयुक्तो जीवो ग्राह्यः । एवं चानन्दांशतिरोभावदशायां जीवोणुस्तदाविर्भावदशायां तु व्यापकः । यथा यशोदाङ्कस्थितोपि भगवान् बालकृष्णो जगदाधारभूतः । तथैवाराग्रमात्रोपि जीवो व्यापकः ।

## ९ जीवस्यांशत्वम् ।

अत्र मते ' ममैवांशो जीवलोके जीवभूतः सनातनः ।' अंशो नानाव्यपदेशात् ( ब्र. सू. २।३।४३ ) इति स्मृतिसूत्रप्रामाण्याज्जीवो ब्रह्मणोंशः । एवं स्वीकृते शाङ्करमतवत् आभासवादप्रतिबिम्बादिवादकल्पनस्य प्रसङ्ग एव न । नन्वेवं जीवस्यांशत्वस्वीकारे ब्रह्म सावयवं भवेत्ततश्च तन्निरवयवत्वबोधकश्रुतिव्याकोप इति चेन्न यतो ब्रह्मणः सांश-

त्वनिरंशत्वसिद्धान्ते श्रुतीनामेव प्रामाण्यम् । न लौकिकयुक्तीनाम् । अत एवोक्तम्–अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते । तपसा वेदयुक्त्या च प्रसादात्परमात्मनः ॥ इति । एतत्प्रामाण्याद्वैदिकयुक्तिसमाश्रये सति एवं प्रतीयते यन्निरिन्द्रियसर्वतोऽक्षिशिरोमुखब्रह्मणः सकाशादग्निविस्फुलिङ्गन्यायेन जडजीवानां निर्गमनम् । तत्प्रकारश्च–स्वतन्त्रब्रह्मणो मूलेच्छया अविकृतसदंशात् जडनिर्गमनम् । अविकृतचिदंशात् जीवनिर्गमनम् । जडनिर्गमनसमये चिदानन्दांशयोर्द्वयोरपि तिरोभावः । जीवनिर्गमनसमये केवलमेकस्यैवानन्दांशस्य तिरोभावः । एवं च जडजीवात्मकमुभयमपि ब्रह्मरूपं ब्रह्माभिन्नं च । अत एवैकविज्ञानेन सर्वविज्ञानसंभवः । एवं चानया व्यवस्थया जीवस्यांशत्वेपि ब्रह्मणो नांशित्वमवयवित्वं वा तस्य विरुद्धधर्माश्रयत्वस्य भूषणत्वादित्यसकृदवादिष्म । किंच ‘ पादोस्य विश्वा भूतानि ’ इति श्रुतौ पादत्वेन जीवानामंशत्वं स्पष्टतया बोधितम् । नन्वेवमंशभूतस्य जीवस्य दुःखमंशिब्रह्मणोपि स्यादिति चेन्न यतः सूर्यप्रकाशस्थघटादिवस्तुनो दोषेण यथा सूर्यप्रकाशो न लिप्यते तद्वदत्राप्युपपत्तिः । तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ॥ कर्मात्मा त्वपरो योसौ मोक्षबन्धैः स युज्यते । अनश्नन्नन्यो अभिचाकशीति । एकस्तथा सर्वभूतान्तरात्मा । न लिप्यते लोकदुःखेन बाह्यः ॥ इत्यादिश्रुतिभिर्ब्रह्मणो निर्लेपत्वबोधनाच्च ।

## १० जीवस्यावस्थात्रयम् ।

अस्य जीवस्यावस्थात्रयम् । शुद्धसंसारिमुक्तभेदात् । विस्फुलिङ्गवद्व्युच्चरणोत्तरमानन्दांशातिरोधाने सति, अविद्यासंबन्धात्पूर्ववर्तिन्यामवस्थायां शुद्धजीव इति व्यवहारः । जीवे शुद्धत्वं च अविद्यासंबन्धराहित्यम् । ततोऽस्मिन् जीवरूपे भगवदंशे भगवदैश्वर्यादिषड्गुणांशभूतानामैश्वर्यादीनां हरीच्छया तिरोभावः । ‘पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ (ब्र. सू. ३।२।५) इति तत्त्वसूत्रात् । तदा तेषां मध्ये

केषुचिज्जीवेषु रमणेच्छया संकल्पितस्य बहुत्वभवनस्य सिद्धये उच्चैर्भावेच्छाविषयीभूतं मुक्त्यधिकाररूपं सूक्ष्मसद्वासनाविशिष्टं दैवत्वं संपादयति भगवान्। तदैव जीवा मुक्तियोग्या भवन्ति। 'दैवी संपद्विमोक्षाय' इति भगवद्वाक्यात्। ततो ह्यविद्यासंबन्धाद्बन्धः। 'बन्धोस्याविद्ययानादिः' इति वाक्यात्। अनादित्वं तु कार्यान्तरापेक्षया। ततो देहेन्द्रियान्तःकरणप्राणाध्यासाः स्वरूपविस्मृतिश्चेत्यविद्यायाः पञ्च पर्वाणि। तैर्बद्धो दुःखितः उच्यते नतु जायते अभिमत्यात्मकत्वात्। अस्य जीवसंसार उच्यते—इति निबन्धात्। ततः सूक्ष्मस्थूलदेहसंबन्धात् संसारिधर्मान् जन्ममरणादीननुभवन् भगवत्कृपया सत्संगादि लब्ध्वा पञ्चपर्वात्मिकां विद्यां प्राप्य परमानन्दलक्षणां मुक्तिं लभते। वैराग्यं सांख्ययोगौ च तपो भक्तिश्च केशवे। पञ्चपर्वेति विद्येयं यया विद्वान् हरिं विशेत्। इति वाक्यात्। तत्र यावत् पञ्चपर्वात्मिकां विद्यां प्राप्नुयात् तावत्संसारीति व्यवहारः। तदग्रे मुक्त इति शास्त्रीयो व्यवहारः। स च मुक्तजीवो द्विविधः। जीवन्मुक्तो मुक्तश्चेति। तत्र सनकादयो गताविद्यास्ते जीवन्मुक्ता उच्यन्ते। येतु व्यापिवैकुण्ठेतरभगवल्लोकनिवासिनस्ते मुक्ता इत्युच्यन्ते। अन्यच्च जीवा द्विविधाः। दैवा आसुराश्च। तत्र दैवा अपि द्विविधाः। मर्यादामार्गीयाः पुष्टिमार्गीयाश्च। एतेषां द्विविधानामपि मुक्तौ भेदो वर्तते सच पुष्टिविचारविषये दर्शयिष्यते॥

## ११ जीवस्य कर्तृत्वभोक्तृत्वे।

यतः सर्वधर्मविशिष्टं ब्रह्म कर्तृ भोक्तृ च ततस्तदंशो जीवोपि कर्ता भोक्ता चेति सिद्धम्। कर्ता शास्त्रार्थवत्त्वात् (ब्र. सू. २।३।३३) इति ब्रह्मसूत्रे तस्य कर्तृत्वं कण्ठरवेणोच्यते। 'विज्ञानेन विज्ञानमादाय' इति श्रुतावपि तत्कर्तृत्वमुपपादितम्। बुद्ध्यादिकरणेषु तु साधनत्वं न कर्तृत्वं जडत्वात्। केवलं बुद्ध्यादिसाधनसंबन्धे जीवस्य कर्तृत्वं प्रादुर्भवति। यथा दण्डादिसाधनसंबन्धे कुलालस्य कर्तृत्वम्। ननु जीवस्य कर्तृत्वाङ्गीकारे स केवलं हितमेव कुर्यात् लौकिकवत्। अत्र तु हिताहितोभयकरणं दृश्यते तेन

न तत्कर्तृत्वं घटत इति चेन्न । पराधीननेत्रेन्द्रियेणेष्टानिष्टदर्शनमिव सामर्थ्यतिरोभाववता जीवेन, इष्टानिष्टोभयकरणस्य दुर्वारत्वात् । नन्वेवं पराधीनत्वात्तस्यानिर्मोक्षप्रसंग इति नच वाच्यम् । 'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥' इति भगवदुक्तरीत्या कर्मकरणे लोपाभावेन मोक्षस्य सुप्रापत्वात् । किंच केवलं कर्तृत्वं न दुःखरूपम् । ब्रह्मरूपत्वात्तस्य । यथा तक्षा स्वयं रथं निर्माय तमारुह्य विहरति तथैव जीवस्य भोक्तृत्वमपि । उभे अपि कर्तृत्वभोक्तृत्वे मुख्ये न शाङ्करमतवदौपाधिके ॥

## १२ जीवब्रह्मणोरभेदः ।

ब्रह्म पूर्णप्रकटानन्दम् जीवस्तु तिरोहितानन्द इति द्वयोर्भेदः प्रागवादि । यदा तु जीवेप्यानन्दांश आविर्भवति तदोभयोर्जीवब्रह्मणोः साम्यादैक्यं सुलभमेव । एवमभेदस्वीकारे जहदजहल्लक्षणादिकं नाररीकर्तव्यं भवति । सर्वे वेदा ब्रह्मणोनवगाह्यमाहात्म्यमेव बोधयितुं प्रवृत्ताः । 'सर्वं खल्विदं ब्रह्म' इति श्रुत्याविर्भूतानन्दांशे जीवे ब्रह्मत्वं बोध्यते । तिरोहितानन्दावस्थायां तु तत्र ब्रह्मत्वं नास्ति । अत एव 'अधिकं तु भेदनिर्देशात्' (ब्र. सू. २।१।२२) इति सूत्रे ब्रह्मणोपेक्षया जीव आधिक्यम् । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुत्या तत्समाभ्यधिकराहित्यं चोक्तम् । एवं चांशांशिभावेनैव जीवब्रह्मणोरभेदः श्रुत्या बोध्यते । तेनैवैकविज्ञानात्सर्वविज्ञानं संगच्छते । मतान्तरवत् 'तत्त्वमसि' इत्येव न महावाक्यम् । किंत्वखिलं प्रकरणम् । ततश्च विरुद्धधर्माश्रयतयांशांशिभावेनैक्यम् । आनन्दांशप्रादुर्भावे जीवो ब्रह्मरूप एव तेनाभेदः सुलभः । तथा चोक्तम् । आनन्दांशाभिव्यक्तौ तु तत्र ब्रह्माण्डकोटयः । प्रतीयेरन् परिच्छेदो व्यापकत्वं च तस्य तत् ॥ यथा बाल्ये विद्यमानं पुंस्त्वं यौवने प्रादुर्भवति तद्वत् जीवे विद्यमान एवानन्दांशो भक्त्यादिभिः प्रकटो भवति । तदुक्तम् 'संपद्याविर्भावः स्वेन शब्दात्' (ब्र. सू. ४।४।१) इति सूत्रे । एवमाविर्भावेन

व्यवस्थानङ्गीकारे आनन्दांशस्य सर्वदा विद्यमानत्वस्वीकारे च संसारावस्थाया असंभवो भवेत्। जीवास्यानन्दांश एव नेति पक्षे स्वीकृते मोक्षस्यासंभवः। ब्रह्म सानन्दं जीवो निरानन्द इति तृतीयकल्पस्वीकारे 'ब्रह्मैव सन् ब्रह्माप्येति' इति श्रुतिविरोधः। अतोस्मदुक्तपक्ष एव स्वीकार्यः। सर्वश्रुतिसमन्वयात्। स चायं साच्चित्तिरोभूतानन्दात्मको जीवो वस्तुतो ब्रह्मरूपो मोक्षदशाया सच्चित्प्रकटानन्दो भूत्वा ब्रह्मणा सहाभेदं लभते। न केवलं जीवस्यैव ब्रह्मणानन्यत्वं वेदसंमतमपि तु सर्वस्य जीवजडात्मकस्य। सर्वमतसंग्रहश्लोकः। शुद्धाद्वैतमार्तण्डे—केचित्तत्त्वमसीति वाक्यविषये तत्त्वंपदे लक्षणां, केचित्तत्र ङसो लुकं विदधते भाष्यं तु केचिज्जगुः। केचिच्चिद्विषयादभेदमपरे छिन्दन्त्यतत्त्वं पदम् सिद्धान्ते तु सुवर्णवज्जगदिदं ब्रह्मैव जीवस्तथा ॥ १ ॥ अत्र प्रकाशः—केचित् शंकराचार्यादयः सोयं देवदत्त इतिवज्जहदजहल्लक्षणां स्वीकुर्वन्ति। केचित् रामानुजमाध्वशैवास्तस्य त्वं तत्संबन्धी त्वामिति विग्रहार्थं ङसो लुकं विदधते। संबन्धश्च सेव्यसेवकभावः। केचिन्निम्बार्कादयश्चिद्विषयाच्चित्त्वसाधर्म्यादभेदः। केचिन्माध्वैकदेशिनः 'अतत्त्वमसि' इति पदं छिन्दन्ति। तदर्थस्तु—तद्ब्रह्म त्वं नासि किं तर्हि जीवोसीत्यर्थः। सिद्धान्ते (वाल्लभमते) सुवर्णस्यांशाः सुवर्णरूपास्तथा ब्रह्मांशं जगद् ब्रह्मैव तथा जीवोपि चिदंशो ब्रह्मानेन वाक्येन बोध्यत इत्यर्थः।

## जगत्।

### १३ जगत्सत्यत्वम्।

अत्र मते सदेव सोम्येदमग्र आसीत् यदिदं किंच तत्सत्यमित्याचक्षते इत्यादिश्रुतिभिर्जगतः सत्यत्वम्। 'यत्सत् तदेवोपलभ्यते' इति युक्तिरपि जगत उपलभ्यमानत्वात्सत्यत्वबोधिका। यथा घटो मृत्तिकाप्रकारः सन्। तथैव जगदपि ब्रह्मप्रकारत्वात्सत्यम्। तत्पूर्वमव्याकृतमासीत् ततो व्याकृतमभवत्। 'असद्वा इदमग्र आसीत्। इति श्रुतिरपि न जगतोसत्त्वं बोधयति तत्रत्यासीत्पदसामर्थ्यात्।' जगद्ब्रह्म-

णोरुभयोः कार्यकारणत्वेन संबन्धः सच समवायः। संबन्धस्य द्विनिष्ठत्वान्नित्यत्वाच्च द्वयोः सत्त्वमवश्यं स्वीकर्तव्यम्। यतः कार्यं कारणेन समवेतमेवोत्पद्यत इति नैयायिकराद्धान्तः। अतो जगत्सत्यत्वमेवाङ्गीकर्तव्यम्। 'तदात्मानꣳ स्वयमकुरुत' इति श्रुतिस्थात्मशब्दो जगतः सत्यत्व एव स्वारसिकः। पटस्य विद्यमानत्वेपि संवेष्टनदशायां यथा न ग्रहणं विस्तारदशायामेव ग्रहणं तद्वत् जगतो नित्यत्वेन सत्यत्वेपि तिरोभावदशायामग्रहणम्। आविर्भावदशायामेव ग्रहणम्। एतत् 'पटवच्च' (ब्र. सू. २।१।१९) इति सूत्रेण ज्ञाप्यते। नाभाव उपलब्धेः (ब्र. सू. २।२।२८) इति ब्रह्मसूत्रेणोपलभ्यमानत्वाज्जगतोभावो नेति ज्ञाप्यते। नन्वेवमुपलब्धिद्वारा सत्यत्वाङ्गीकारे स्वाप्निकपदार्थानामपि सत्यत्वापत्तिरिति चेन्न। स्वाप्निकपदार्थानां स्वप्नान्ते विपर्ययदर्शनात् जगतस्तथा दर्शनाभावाच्च। तदेवोक्तम् 'वैधर्म्याच्च न स्वप्नादिवत्' (ब्र. सू. २।२।२९) इति सूत्रयता बादरायणेन। जगतोसत्यत्वे मोक्षप्रवृत्तिरपि व्याघातघटिता स्यात्। तस्या जगदन्तर्गतत्वात्। ननु वासनावशादसत्यत्वेपि मोक्षप्रवृत्तिरिति चेन्न। जगदभावे वासनानामप्यभावात्। अनादिवासनास्वीकारेन्धपरम्पराप्रसक्तेश्च। एवंच जगद्विना वासनाया असंभवेन वासनां विनापि जगत्प्रतीतेश्चेत्यन्वयव्यतिरेकाभ्यां जगतः सत्यत्वम्। 'यतो वा इमानि भूतानि जायन्ते' 'जन्माद्यस्य यतः शास्त्रयोनित्वात्' (ब्र. सू. १।१।२) 'जन्माद्यस्य यतः' 'अन्वयादितरतः' 'तदात्मानꣳ स्वयमकुरुत' 'स ह एतावानास' 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा'। इति श्रुतिसूत्रादिप्रामाण्याज्जगतः परमेश्वरादाविर्भावः। तत्क्रमोपि श्रुतौ 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्यादिना पृथक् पृथग् दर्शितः आविर्भावदशायामपि यथा घटरूपेण परिणममाना मृत्तिका तथैव ब्रह्माविकृतमेव जगद्रूपेण परिणमते। तदुक्तम् 'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।' इति श्रुत्या। अयमर्थः। पूर्णादेव ब्रह्मणो जगत उद्गमनं पूर्णस्य पूर्णत्वं गृहीत्वापि तस्य पूर्णत्व-

मवशिष्यते ईदृशमनवगाह्यमाहात्म्यं ब्रह्म। 'सर्वं खल्विदं ब्रह्म तज्जलान्' इति श्रुत्या ब्रह्मण एव जगदाविर्भावादिकं बोध्यते। अतो जगतः सत्यत्वम्। अभेदबोधकश्रुतिभिरपि जगतः सत्यत्वमङ्गीकर्तव्यम्। अन्यथा सत्यासत्ययोर्जगद्ब्रह्मणोरभेदाभावप्रसंगः। यतः सत्यासत्ययोरभेदो युक्तिपराहतः। अत एव-'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम्।' इति जगतो नित्यत्वं भगवता कण्ठरवेणोक्त्वा जगदसत्यत्ववादिनः 'असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्।' इत्युक्त्वासुरत्वेन निन्दिताः। जगदुत्पत्तिरित्थम्—सच्चिदानन्देति त्रयात्मकस्य ब्रह्मणश्चिदानन्दांशयोस्तिरोभावे केवलसदंशाद्भगवदिच्छया जगत्प्रादुर्भावः। न प्रकृतेः परमाणुभ्यो विवर्तवादेन वा जगदुत्पत्तिः। एवं च निर्गुणमविकृतं ब्रह्मैव जगत उपादानं निमित्तं च कारणम्। किंच तत् जगत् भगवत एवाधिभौतिकं स्वरूपं यतो भगवानेव सर्वभवनसमर्थया विचित्रशक्त्या जगद्रूपेण प्रतीयते। तदुक्तं श्रुतौ—'इन्द्रो मायाभिः पुरुरूप ईयते' इति। अस्मिन्मते जगद्रूपेण परिणामेपि ब्रह्मणि न विकारः। अत्र दृष्टान्ताः। ऊर्णनाभिकामधेन्वहिकुण्डलकल्पवृक्षचिन्तामणिमन्त्रप्रभृतयः। यथा कामधेन्वादयो विकृतिं विनैव तत्तद्रूपेण परिणमन्ते तद्वद् ब्रह्मापि अविकृतमेव नामरूपात्मकजगद्रूपेण परिणमते। 'सर्वं खल्विदं ब्रह्म' इत्यनेन नामात्मके, अक्षरपदवाक्यादिशब्दसृष्टिसमावेशः। रूपात्मके आकाशादिभौतिकसृष्टेः समावेशः। आकाशादिका तेजआदिका च श्रुतौ विविधं वर्ण्यमाना सृष्टिर्भगवन्माहात्म्यातिशयं द्योतयति।

## १४ जगत्संसारयोर्भेदः।

अत्र मते जगद् भिन्नं संसारश्च भिन्न इति स्वीक्रियते। अयं जगत्संसारयोर्भेदः कस्मिन्नपि मते न ज्ञातचरः। एतत्पृथक्त्वं श्रीवल्लभाचार्यैरेव श्रुतिसूत्रादिसमन्वयेन प्रकटीकृतम्। जगत्संसारयोर्भेदो लक्षणपृथक्त्वेन ज्ञायते। तथाहि-ईश्वरेणेच्छया चिदानदांशतिरोभावेन सदंशात्

प्रादुर्भावितं यत्तज्जगत्। पञ्चपर्वात्मकाविद्यया जीवेन कल्पितोहंताममतात्मकः संसारः। स्वरूपाज्ञानं देहाध्यासः इन्द्रियाध्यासः प्राणाध्यासः अन्तःकरणाध्यास इत्येवमविद्यायाः पञ्च पर्वाणि। तत्र संसारस्याविद्याकल्पितत्वाज्ज्ञानेन नाशः। जगतस्तु ब्रह्मरूपत्वान्न नाशः। न द्वैतमविद्याजन्यम्। किंत्वहं भिन्नोस्मादिदं वास्माद्भिन्नमिति द्वैतज्ञानमविद्याजन्यमतस्तदेव ज्ञानेन नश्यति। अनेनाविद्याजन्येन द्वैतज्ञानेन जीव एव बाध्यते न ब्रह्म। तदुक्तम्—अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः। इत्यादौ। यद्यपि जीवोत्पत्तावविद्याया न कारणत्वं तथाप्यानन्दांशतिरोभावे सोविद्यया बाध्यते। ततः स संसारीत्यभिधीयते। वस्तुतः संसारित्वाभावेप्यविद्याध्यासात्तस्य संसारित्वाभिमानः संपद्यते। असद्रूपोयमभिमान एवाहंताममतात्मकः संसारोविद्याकार्यत्वाज्ज्ञानेन नश्यति। किंच कारणभेदादपि जगत्संसारयोर्भेदः। तथाहि। जगत उपादानकारणं ब्रह्म। निमित्तकारणं ब्रह्मशक्तिः। अथवा शक्तिशक्तिमतोरभेदादुभयविधमपि कारणं ब्रह्मैव। संसारस्य तु कल्पितत्वात् उपादानकारणं नास्ति। निमित्तकारणमविद्या। संसारनाशे जगतो न कापि क्षतिः। न वा विपरिवृत्तिः। ज्ञानोत्पत्तिपर्यन्तं संसारोवतिष्ठते। मुक्तौ तल्लयः। जगतस्तु लयः परमात्मेच्छानुसारं तिरोधानदशायाम्। पूर्वोक्तपञ्चपर्वात्मकाविद्याया वैराग्यसांख्ययोगतपः—प्रेमाख्यपञ्चपर्वात्मकविद्यया निवृत्तौ तज्जन्यसंसारनिवृत्तिः। संसारनिवृत्तौ जीवन्मुक्तिः तस्यां संसारजन्यानां देहेन्द्रियप्राणान्तःकरणाध्यासानामेव निवृत्तिः। देहादयस्तु न नश्यन्ति। यतस्ते जगदन्तःपातिनः। संसार एव सुखदुःखात्मको न जगत्। अत एव जीवन्मुक्तौ जगतः सत्यत्वेपि न सुखदुःखानुभवः। एवं द्वैतं निन्द्यते यत्र तासां जगत्सत्यत्वं बोध्यते यत्र तासां च श्रुतीनां संगतिर्भवति। नाणुमात्रापि लक्षणाश्रयणीया भवति। निन्दाबोधिन्यः श्रुतयः संसारनिन्दकाः।

## १५ अविकृतपरिणामवादः।

कनकमृत्साकामधेनुकल्पवृक्षोर्णनाभिचिन्तामण्यादय इव स्वयम-

विकृतं सन्निर्गुणं सच्चिदानन्दं ब्रह्मैव विपरिणमते जगद्रूपेणेति सिद्धान्तोऽस्मिन्मते मतान्तरवदारम्भविवर्तादयो वादास्तु नाङ्गीक्रियन्ते। तथा सति परमाण्वादीनां जगदुपादानानां जडत्वाज्जडवादप्रसंगः। यथा सुवर्णं कटकरुचकादिविपरिणामदशायां सुवर्णत्वान्न हीयते न विकारं लभते च तद्वद् ब्रह्म जगद्रूपेण विपरिणामेऽप्यविकृतम्। अयमविकृतपरिणामवादः श्रुतिभगवद्गीताबादरायणसूत्रश्रीमद्भागवतेतिप्रस्थानचतुष्टये तत्र तत्रोपलभ्यते। एकमेवाविकृतं कारणं नानाकार्यरूपं भवति। तच्च नानाभूतं कार्यं तिसृष्वपि अवस्थासु कारणरूपमेव तिष्ठतीत्यविकृतपरिणामवादस्य परमं रहस्यम्। अयं वादः श्रुतिस्मृतिसूत्रभागवतेतिप्रस्थानचतुष्टये गृहीत इति पूर्वमुक्तम्। तानि वचांस्यधुना प्रदर्श्यन्ते।

श्रुतौ तावत्। एकं सद्विप्रा बहुधा वदन्ति (अनेन वाक्येन ब्रह्मण एव माहात्म्यं बोधितं न मायायाः) विश्वकर्मा विश्वेदेवा महानसि (अनया श्रुत्यात्र ब्रह्मणः सर्वात्मकत्वं सर्वदेवात्मकत्वं चोक्त्वा ब्रह्ममाहात्म्योपदेशः)। यास्काचार्योऽपि—माहात्म्याद् देवताया एक आत्मा बहुधा स्तूयते। एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्तीति ब्रह्मणो माहात्म्यं ज्ञापयति। असद्वा इदमग्र आसीत्ततो वै सदजायत(अनया श्रुत्याऽव्यक्तं जगत् व्यक्तमभूदित्युक्तम्)। ब्रह्म देवानजयत्(अनया श्रुत्या ब्रह्मणः कारणत्वं बोध्यते)। ब्रह्म विश्वमिदं जगत् (अनया श्रुत्या जगतो ब्रह्मत्वं बोध्यते)। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति (इति वाक्यद्वयेन सर्वप्रकाशकत्वं ब्रह्मणो बोध्यते)। अतो न सर्वथा निर्गुणत्वं ब्रह्मणः। सर्वकामः सर्वगन्धः सर्वरसः सर्वकर्ता सर्वभोक्ता यः स सर्वविद्, (अनया श्रुत्या ब्रह्मणः सर्वाश्रितत्वं बोध्यते)। मायया ते सर्वे धर्मा भासन्त इत्यपि न। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चेति श्रुतेः सर्वकर्तृत्वादीनां स्वाभाविकधर्मत्वात्। अणोरणीयान् महतो महीयान् अपाणिपादो जवनो ग्रहीता। पश्यत्यचक्षुः स शृणोत्यकर्णः॥ (अनया श्रुत्या ब्रह्मणो विरुद्धधर्माश्रयत्वं बोध्यते)। एकमेवाद्वितीयं ब्रह्म एकोऽहं बहु स्यां प्रजायेय, एकाकी न रमते स द्वितीय-

मैच्छत्। स ह एतावानास ) इति श्रुतिभिरेकस्मादेवाविकृत-ब्रह्मणो जगद्रूपेण परिणामो बोध्यते । तदैक्षत सोऽकामयत नामरूपे व्याकरवाणि ( अनया श्रुत्या ब्रह्मणो नामरूपात्मकपरिणामः ) तदात्मानं स्वयमकुरुत। स ह एतावानास। ऐतदात्म्यमिदं सर्वम्। यदयमात्मा तत्त्वमसि ( इत्यादिश्रुतिभिर्ब्रह्मण एव कार्यरूपत्वेन विपरिणामोऽभेदश्च कार्यकारणयोरिति बोध्यते ) एष ह्येवानन्दयाति। एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ( इत्यादिश्रुत्यानन्दमयं ब्रह्मैव सर्वकारणम् ) एको देवः सर्वभूतेषु गूढः ( अनया श्रुत्या ब्रह्मणः सर्वान्तर्यामित्वम् ) सर्वं खल्विदं ब्रह्म। तज्जलान्। सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः। कथमसतः सज्जायेत। तत्सत्यमित्याचक्षते। सर्वं सर्वमयं सर्वे जीवाः सर्वमयाः ( इत्यादिश्रुतिभिः सर्वजगतो ब्रह्ममयत्वं बोध्यते )।

श्रीमद्भगवद्गीतासु 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथा। भवन्ति भावा भूतानां मत्त एव पृथग्विधाः। मम योनिर्महद् ब्रह्म तस्मिन्गर्भं दधाम्यहम्। अहं बीजप्रदः पिता। वासुदेवः सर्वमिति स महात्मा सुदुर्लभः'। इत्यादिवाक्यैरयमेव वादः स्पष्टतया प्रदर्श्यते।

श्रुतिस्मृतिसंदेहानिर्णायकेषु ब्रह्मसूत्रेष्वपि—अयमेव वादो ज्ञाप्यते। तानि च सूत्राणि—जन्माद्यस्य यतः शास्त्रयोनित्वात् (ब्र. सू. १।१।२)। तत्तु समन्वयात् ( ब्र. सू. १।१।३ ) कामाच्च नानुमानापेक्षा ( ब्र. सू. १।१।१७ ) आत्मकृतेः परिणामात् ( ब्र. सू. १।४।२६ )। योनिश्च हि गीयते ( ब्र. सू. १।४।२३ )। आत्मनि चैवं विचित्राश्च हि (ब्र. सू. २।१।२८ ) तदनन्यत्वमारम्भणशब्दादिभ्यः ( ब्र. सू. २।१।१४ )। सर्वोपेता च तद्दर्शनात् ( ब्र. सू. २।१।३०) सर्वधर्मोपपत्तेश्च ( ब्र. सू. २।१।३७ ) वैधर्म्याच्च न स्वप्नादिवत् ( ब्र. सू. २।२।२९ ) मायामात्रं तु कार्त्स्न्येन ( ब्र. सू. ३।२।३ ) प्रकृतैतावत्त्वं प्रतिषेधति ततो ब्रवीति च भूयः ( ब्र. सू. ३।२।२२ ) प्रकाशाश्रयवद्वा तेजस्त्वात् ( ब्र. सू. ३।२।२८ ) इत्यादीनि।

चतुर्थप्रस्थाने श्रीमद्भागवतेपि—जन्माद्यस्य यतोऽन्वयादितरतः । ( इत्यादिमङ्गलाचरणश्लोकेन जगत्कर्तुः सत्यस्य परब्रह्मणो ध्यानम् ) त्वय्यग्र आसीत् । इत्यादिश्लोकेनादिमध्यावसानेषु जगत् भगवद्रूपमित्येव बोध्यते । यथा हिरण्यं बहुधा । यथा सुवर्णं सुकृतम् । इत्यादिश्लोकेषु—अस्यैवाविकृतपरिणामवादस्योपदेशः । क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते । विश्वस्य कर्ता भुवनस्य गोप्ता । भूतानि विष्णुर्भुवनानि विष्णुः ।(इत्यादिश्लोकैरस्यैव वादस्य शुद्धाद्वैतमतस्य च द्योतनम् ) एवं प्रस्थानचतुष्टयेस्य वादस्य ग्रहणम् । तथा चैतन्मतमेव प्रस्थानचतुष्टये परिगृहीतमिति स्पष्टं प्रतीयते ।

## १६ आविर्भावतिरोभाववादः ।

अनुभवविषयत्वयोग्यता—आविर्भावः । तदविषयत्वयोग्यता तिरोभावः । इत्याविर्भावतिरोभावयोर्लक्षणे विद्वन्मण्डने प्रोक्ते । इमावाविर्भावतिरोभावौ ब्रह्मणः शक्ती । तथा चोक्तम्—आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः । इति । एवंच निर्गुणमविकृतं नित्यशाक्तिमद्ब्रह्माविर्भावतिरोभावाभ्यामक्षरजीवजगद्रूपैः स्वेच्छावशात्क्रीडति ततो जगतो नित्यत्वम् । तदुक्तं विष्णुपुराणे-तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पवत् ॥ आविर्भावतिरोभावेत्यस्यैव प्रपञ्चो जन्मनाशेति । जन्मशब्दगतजन्धातोः प्रादुर्भाववाचकत्वम् । ‘ जनी प्रादुर्भावे ’ इति पाणिन्यनुशासनात् । तथा नाशशब्दगतनश्धातोरदर्शनवाचकत्वेन तिरोभावपर्यायकत्वम् । ‘ णश् अदर्शने ’ इति पाणिन्यनुशासनात् । एतयोराविर्भावतिरोभावयोर्भगवच्छक्तित्वादानित्यत्वादिकं न शङ्क्यम् । किं चायं वादः श्रीमन्महाभारते पाञ्चरात्रादौ च समुपलभ्यते ।

## १७ भक्तेर्निरूपणं तन्माहात्म्यं च ।

अस्मिन्मते केवलज्ञानापेक्षया केवलभक्तेर्गरीयस्त्वम् । तथा ज्ञानयुक्तभक्तेः परममाहात्म्यम् । एतावतापि भक्तेरेव गरिष्ठत्वं स्वी-

क्रियते। यथैकस्यैव सच्चिदानन्दात्मकस्य निर्गुणब्रह्मणो रूपत्रयं रमणार्थमाधिभौतिकाध्यात्मिकाधिदैविकभेदेन ( आधिभौतिकं जगत्। आध्यात्मिकम् अक्षरब्रह्म। आधिदैविकं परब्रह्म )। एवं रमणार्थमेवाधिभौतिकाध्यात्मिकाधिदैविकभेदेन मार्गत्रयम्। तथाहि-आधिभौतिकमार्गः कर्म। आध्यात्मिकमार्गो ज्ञानम्। आधिदैविकमार्गो भक्तिः। तत्र प्रथमेनाधिभौतिकमार्गेण कर्मणा प्रायोधिभौतिके जगति पुनः पुनरावृत्तिर्विषयानन्दप्राप्तिश्च 'अयं शारीर आत्मा एभ्योङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव' 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे॥ इत्यादिप्रामाण्यात्। द्वितीयेनाध्यात्मिकमार्गेण ज्ञानेन ब्रह्मण आध्यात्मिकस्वरूपेक्षरब्रह्मणि जीवस्य लयः पुनरावृत्तेरभावश्च। अनावृत्तिः शब्दात् ( ब्र. सू. ४।४।२२ ) इति सूत्रप्रामाण्यात्। तृतीयेन सर्वोत्तमेनाधिदैविकमार्गेण भक्तिरूपेणाधिदैविकस्वरूपेण परब्रह्मणा पुरुषोत्तमेन सह सहभावपूर्वकक्रृपानन्दप्राप्तिः। अत्र भगवदिच्छया पुनरुद्धरणं प्राप्ता अक्षरब्रह्मणि लीना ज्ञानिजीवा अप्यागच्छन्ति। एवंच यद्यपि संसारे ज्ञानिनामनावृत्तिस्तथाप्यक्षरब्रह्मणोपि श्रेष्ठेन परब्रह्मणा सह कृपानन्दलाभार्थं भगवदिच्छयागमनं भवति। ज्ञानिनः अक्षरब्रह्मैव परमं फलं सच्चिदानन्दत्वदेशकालापरिच्छिन्नत्वस्वयंप्रकाशत्वगुणातीतत्वादिधर्मवदस्तीति मन्यन्ते। भक्तास्तु—अक्षरब्रह्म परब्रह्मणः पुरुषोत्तमस्य धामेति जानन्ति। पूर्वोक्तमेव ज्ञानं प्रमाणसंबद्धम्—अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां गतिम्। यं प्राप्य न निवर्तन्ते तद्धाम परमं मम॥ इत्युक्तेः। ज्ञानिनोक्षरब्रह्मैव 'अहं ब्रह्मास्मि' इति रूपेण भावयन्ति। भक्तास्तु तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मकाः भूत्वा 'आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः'। इति सर्वा भगवत्कृतलीलाः स्वयमेव कुर्वन्ति। एतेषां मार्गत्रयवर्तिनां जीवानां व्युच्चरणमार्गोपि परस्परं भिन्नः। कर्ममार्गीयजीवा मूलेच्छातो व्युच्चरन्ति। ज्ञानमार्गीया वाणीतः।

भक्तिमार्गीयास्तु—आधिदैविकस्वरूपस्य भगवतः शरीरात् । एतेषां त्रयाणां क्रमशो निष्ठात्रयम्। हरिः सर्वं सम्यगेव करिष्यतीति सम्यग्विवेकेन चित्तप्रसादो लम्भनीय इति कर्ममार्गीयनिष्ठा । मरणपर्यन्तं दुःखत्रयं सोढव्यं. सर्वत्राखण्डं शुद्धाद्वैतमनुभवनीयमिति ज्ञानमार्गीया निष्ठा। ऐहिकपारलौकिकसर्वकर्मसु कर्मणा वाचा मनसापि हरिरेव शरणीकरणीयः । तदनन्याश्रयता संपादनीया। श्रीकृष्णप्रसादो लम्भनीयश्चेति भक्तिमार्गीयनिष्ठा। कर्ममार्गे विवेको ज्ञानमार्गे धैर्यम्। एते उभे अपि भक्तेरङ्गभूते तत्परिपोषके च। भक्तिर्ज्ञानाद्गरीयसी यतो ज्ञानेनाक्षरब्रह्मप्राप्तिः। भक्त्या तु परब्रह्मणा श्रीकृष्णेन सह क्रीडारसानुभवः। मोक्षार्थं श्रवणादिभक्तिस्तु मर्यादामार्गान्तर्गतैव सोपाधिकत्वात् । तत्रोत्कटस्नेहाभावात् । मुक्तिदातृत्वेनैव भगवति तेषां स्नेहोतो निरुपधिप्रेमाभावात्तेषां मुक्तिरेव फलं नतु क्रीडायामन्तर्भावः । कदाचिद्भक्तिमाहात्म्यान्मुक्तीच्छानिवृत्तावपि तद्भक्तेः साधनमार्गीयत्वात्तत्र मुक्तिरेव फलं स्यात् । 'अनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते । अन्ते मुक्तिरेव भवित्री' इति वाक्यप्रामाण्यात् । ज्ञानेनाक्षरब्रह्मप्राप्त्यनन्तरं भगवदिच्छया तस्य भक्ताववतारो भवति। स च ज्ञानिभक्तः केवलज्ञानिनः श्रेष्ठः । अत एव वक्ष्यमाणवाक्यानि संगच्छन्ते । 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोधिकः। स्नेहो भक्तिरिति प्रोक्तः।' 'ब्रह्मविदाप्नोति परम्।' 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्।' 'मुक्तोपसृप्यव्यपदेशात्' ( ब्र. सू. १।३।२ ) मुक्तानामपि सिद्धानां नारायणपरायणः। सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने॥ जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते॥ आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः॥ इति। श्रीमद्वल्लभाचार्यैरपि तत्त्वदीपनिबन्धनेनैवाशयेन 'ज्ञानी चेद्भजते कृष्णं तस्मान्नास्त्यधिकः परः'। इति। अयमेवार्थः 'संपद्याविर्भावः स्वेन शब्दात्' ( ब्र. सू. ४।४।१ ) इति ब्रह्मसूत्रेण विशदीक्रियते । एवं ज्ञानेनाक्षरब्रह्माप्त्याऽविद्याया

निवृत्तौ प्राकृतधर्मराहित्ये पुरुषोत्तमप्राप्तौ योग्यता संपद्यते। ब्रह्मज्ञानानन्तरमपि न सर्वेषां भगवद्भक्तिलाभः। अपि तु यमिच्छति भगवांस्तेनैव तत्प्राप्तिः। यमेवैष वृणुते तेन लभ्य इति श्रुतेः। एवं च वरणं विना कदाचिदपि न भक्तिप्राप्तिः 'मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्।' इत्युक्तेः। अन्येनापि प्रकारेण ज्ञानाद्भक्तेराधिक्यं द्योत्यते। तथाहि—अध्यासो द्विविधः जीवकृतो भगवत्कृतश्च। तत्र जीवकृताध्यासस्यैव ज्ञानेन निवृत्तिः। भगवत्कृताध्यासस्य तु भगवदिच्छयैव निवृत्तिः। सा च भगवदिच्छा नाम वरणेन भक्तिमार्गे स्वीकारः। भक्तिरपि वासुदेवस्यैव श्रेष्ठा तस्यैव चित्ताधिष्ठातृत्वात्।

भक्तिमार्गेण भक्ताः प्रभुसमीपं गच्छन्ति। तत्र भगवत्प्राकट्ये सति प्रथमं नेत्राभ्यां मनसा च श्रीमुखसुधापानेन परमः प्रमोदो भक्तचित्तेष्वाविर्भवति। ततोनिर्वचनीयस्य कस्यचिद्भावस्योत्पत्तिः। ततः सर्वैरिन्द्रियैर्भगवत्स्वरूपेण सह संभाषणादिसंगमेच्छा संभवति। स च सर्वो मनोरथो भगवता पूर्यते तदेतदुक्तम्- ब्रह्मैव सन् ब्रह्माप्येति अथ मर्त्योमृतो भवत्यत्र ब्रह्म समश्नुते, इति श्रुतेः। अयं रसानुभवः श्रेष्ठो गणितानन्दत्वाभावात्। अक्षरब्रह्मानन्दस्तु-ते ये शतं प्रजापतेरानन्दाः' इत्यादिना गणितानन्दत्वान्निकृष्टः। अनयोरन्यत्तारतम्यम्। तथाहि-भक्तौ कृपानन्दो रसपानं च फलम्। ज्ञाने दुःखाभावमात्रं फलम्। भक्तौ पूर्णानन्दानुभवः फलम्। ज्ञाने स्वरूपेण प्रकर्षतो लयः फलम्। भक्तौ भेदस्थित्यानन्दानुभवः संगच्छते। ज्ञाने भेदाभावस्थितेरानन्दानुभवो न संगच्छते। भक्तावारम्भत एव निरतिशयानन्दः। ज्ञाने प्रथमं कष्टम्। अन्ते दुःखाभावो गणितानन्दावाप्तिश्च। ज्ञाने 'अहं ब्रह्मास्मि' इति वाक्यैः केवलमक्षरब्रह्मभावना। भक्तौ 'तन्मनस्कास्तदालापास्तद्विचेष्टास्तदात्मिकाः।' इति तत्स्वरूपेण 'आक्षिप्तचित्ताः प्रमदा रमापतेस्तास्ता विचेष्टा जगृहुस्तदात्मिकाः' इत्युक्त्वा स्वयं तल्लीलाकरणम्। ज्ञाने कामक्रोधादयः प्रतिबन्धकाः। भक्तौ तु न ते प्रतिबन्धकाः प्रत्युत

सहायाः । ‘ कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव च । नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥ गोप्यः कामाद् भयात्कंसो द्वेषाच्चैद्यादयो नृपाः । संबन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभोः ॥’ इत्युक्तेः । भक्तौ तु तथा भयसंभावना नास्ति ‘ आत्मप्रदः प्रियश्चापि किमर्थं मोहयिष्यति । ’ ‘आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ’ इत्युक्तेः । ‘ न ज्ञानं नच वैराग्यं प्रायः श्रेयो भवेदिह । ’ इति प्रतिपाद्य ‘ केवलेन हि भावेन गोप्यो गावः खगा मृगाः । इत्यनेन भक्त्या तिरश्चामपि भगवत्प्राप्तिकथनाज्ज्ञानतस्तस्याः श्रेष्ठत्वं सुविदितं भवति । ननु भक्तेर्द्वैतं विनाऽसंभवात् ‘ यत्र हि द्वैतमिव भवति ’ इत्यादिश्रुत्या द्वैतस्य निषेधाच्छ्रुतिविरुद्धमिदं भक्तिशास्त्रमिति चेन्न । ‘यत्र हि द्वैतमिव ’ इत्यादिश्रुतेर्द्वैताभावबोधकत्वाभावात् । तस्यां श्रुतौ केवलं द्वैतज्ञानं निषिध्यते । एवंच पुरुषोत्तमभक्तेर्विधिर्निषेधो वा नानया श्रुत्या प्रतिपाद्यते । पुरुषोत्तमदर्शने सति न द्वैतोत्पत्तिस्तेन नोक्तश्रुत्यवकाशः । प्रत्युत भगवद्दर्शनविधिरेव श्रुत्यन्तरे दृश्यते । तथाहि ‘स वा एष एवं पश्यन् एवं मन्वान एवं विजानन् ’ ‘ सदा पश्यन्ति सूरयः ’ इतिच । मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ’ इति भगवद्गीतोक्तिश्च । ब्रह्मभावानन्तरमपि परा भक्तिरनुष्ठातुं शक्यते । एतदेव भगवतोऽनवगाह्यमाहात्म्यम् । भक्तिरेवोत्कृष्टं फलम् । साधनमपि तदेव । अत एव सूरयो भक्त्यैवात्मानं भगवते समर्प्य रसपूर्णा भवन्ति । येषु नास्ति भगवत्कृपा ये वा कर्म ज्ञानं श्रवणादिनवविधभक्तिं च कष्टतमां मन्वते तैरपि ‘सर्वधर्मान् परित्यज्य’ इति वचनाद्भगवानेव शरणीकरणीयः । तत एवोत्कृष्टफलानुभवः परमानन्दावाप्तिश्च । एवं भगवच्छरणा जीवाः कदापि न मुह्यन्ति मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते । ‘ कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ’ इति भगवद्गीतासु भगवदुक्तेः ।

## १८ पुष्टिविचारो मर्यादाविचारश्च ।

श्रीमद्भागवते षष्ठस्कन्धे ‘ पोषणं तदनुग्रहः ’ इति पुष्टिलक्षणं

कृतम्। तेन भगवदनुग्रह एव पुष्टिशब्देनाभिधीयते। न विषयात्मकतुष्टौ तत्तात्पर्यमिति स्पष्टं प्रतीयते। श्रीमदणुभाष्ये पुष्टिवर्णनं बहुषु स्थलेषूपलभ्यते। तथाहि—कृतिसाध्यं साधनं ज्ञानभक्तिरूपं शास्त्रेण बोध्यते। ताभ्यां विहिताभ्यां मुक्तिर्मर्यादा। तद्रहितानामपि स्वस्वरूपबलेन स्वप्रापणं पुष्टिरित्युच्यते ( अणुभा. ३।३।२९ ) साधनक्रमेण मोचनेच्छा हि मर्यादामार्गीया मर्यादा। विहितसाधनं विनैव मोचनेच्छा पुष्टिमार्गमर्यादा ( अ. भा. ४।२।३ ) साधनं विना स्वस्वरूपबलेनैव कार्यकरणे हि पुष्टिः ( अ. भा. ४।१।१३ ) पुष्टिमार्गोनुग्रहैकसाध्यः प्रमाणमार्गाद्विलक्षणः ( अ. भा. ४।४।९ ) मर्यादापुष्टिभेदेन वरणं द्विधोच्यते। तत्र सहकार्यन्तरविधिस्तु मर्यादापक्षेणोच्यते पुष्टौ तु नान्यापेक्षा ( अ. भा. ३।४।४६ ) एतत्सर्ववाक्यपर्यालोचनया नायं मार्गो विषयपोषक इति सूरिभिर्विदितमेव स्यात्। अधुना विषयिणामत्र मार्गे न समावेश इति प्रतिपाद्यते। तथाहि—'विषयाक्रान्तदेहानां नावेशः सर्वथा हरेः ( सं. नि. ६ ) संसारावेशदुष्टानामिन्द्रियाणां हिताय वै। कृष्णस्य सर्ववस्तूनि भून्न ईशस्य योजयेत्। ( नि. ल. १२ ) किंच वैराग्यमप्यत्र मार्गे विधीयते। वैराग्यं सांख्ययोगौ च तपो भक्तिश्च केशवे। पञ्चपर्वा तु विद्येयं ( त. नि. ४८-४९ ) इत्यादिना पञ्चपर्वात्मकविद्यायां प्रथममेव परिगणनात्। तथाच नायं कामपोषको मार्गः श्रीहरिरायकृते कामाख्यदोषविवरणे 'दोषेषु प्रथमः कामः' इत्यादिना दोषेषु कामस्य प्राथम्येन परिगणनात्। गोपीलीलाविषये कामसंबन्धो नास्ति यतः श्रीमद्भागवते 'संत्यज्य सर्वविषयांस्तव पादमूलम्। ता नाविदन्नित्याद्युक्तिः। अत एव श्रीसुबोधिन्यां रासपञ्चध्यायीकारिकासु—क्रिया सर्वापि सैवात्र परं कामो न विद्यते। तासां कामस्य संपूर्तिर्निष्कामेहेति तास्तथा। कामेन पूरितः कामः संसारं जनयेत् स्फुटम्। कामाभावेन पूर्णस्तु निष्कामः स्यान्न संशयः। अतो न कापि मर्यादा भग्ना मोक्षफलापि च॥ अत एतच्छ्रुतौ लोको निष्कामः सर्वथा भवेत्। भगवच्चरितं सर्वं यतो निष्काममीर्यते। अतः कामस्य

नोद्बोधस्ततः शुकवचः स्फुटम् ॥ अलौकिकः शृङ्गाररसो न प्राकृतविषयोपभोगवद् द्रष्टव्यः । विषयोपभोगे तात्पर्याभावादिति तृतीयाध्यायतृतीयपादस्थ ५७ सूत्रगृहीतपूर्वोत्तरपक्षाभ्यां भाष्यकारैः स्पष्टं प्रदर्श्यते । तथाहि—ननु लौकिकेऽपि शृङ्गाररसभाववति पुंसि नार्यां च त्वदुक्तभावसंबन्धिव्यभिचारिभावाः श्रूयन्ते सैव सर्वत्र स एव सर्वत्रेति । एवं सति लौकिकसधर्मत्वात् न त्वदुक्तभावस्यालौकिकज्ञानादिभ्य आधिक्यं वक्तुं शक्यम् । अलौकिकविषयत्वाल्लौकिकत्वमपि न तथेति भवति संशयः ' इति पूर्वपक्षं कृत्वा ' लौकिकपुंसि नार्यां वा तदाभासो रसशास्त्रे निरूप्यते । तद्दृष्टान्तेन भगवद्भाववद्भक्तरीतिभावनार्थम् । नतु ऋषीणां लौकिके तात्पर्यं भवितुमर्हति ' इति समाहितम् । प्राकृतशृङ्गार आगमापायित्वेनानित्यत्वाद्रस एव न किंतु रसाभासः । अलौकिकभजनानन्दरसज्ञा एव जीवा दैवजीवाः । अन्य आसुराः । यतो भगवान् तानभिन्नतया जानाति तेपि भगवन्तं तथैव जानन्ति ' मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि ' इत्युक्तेः। ईदृशा एव भक्ता रसमयं भगवन्तं वशीकुर्वन्ति । ' वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः सत्पतिं यथा । अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ॥ ' इति भगवदुक्तेः ।

विषयसृष्ट्युत्पन्ना जीवाः प्रावाहिका जीवा इत्यभिधीयन्ते । तेभ्यः पुष्टिमार्गीयाणां वैलक्षण्यं तु स्पष्टमेव । प्राकृताप्राकृतभेदेनानन्दभेदात् । अयमर्थः । प्रावाहिकजीवानामानन्दः प्राकृतः । पुष्टिमार्गीयाणामानन्दोप्राकृतिकः । अलौकिक इति यावत् ।

अधुना मर्यादामार्गीयाणां स्वरूपं प्रदर्श्य पुष्टिमार्गीयतो वैलक्षण्यं द्योत्यते । मर्यादामार्गो वैदिकमार्गः । स चाक्षरब्रह्मवाणीतो निरगच्छत् । पुष्टिमार्गस्तु साक्षाद्भगवच्छरीरात् । मर्यादामार्गे वेदोक्तं फलम् । पुष्टिमार्गे भगवच्छरीरात्फललाभः। मर्यादामार्गे वेदादिशब्दाः प्रमाणम् । पुष्टिमार्गे स्वयं भगवांस्तत्कृतवेणुनादश्च प्रमाणम् । मर्यादायां ब्रह्म प्रमेयम् । पुष्टौ ' रसो वै सः ' इत्यादिश्रुत्या रसरूपः पुष्टिपुरुषोत्तमः

प्रमेयम्। मर्यादायां साधनं ज्ञानं श्रवणादिभक्तिश्च। पुष्टौ साधनं विप्रयोगरसात्मकसर्वात्मभावप्रदानमेव। मर्यादायां प्रायः सायुज्यम्। पुष्टौ तु साक्षाद्भगवदधरामृतं फलम्। मर्यादामार्गे वैराग्ये सति संन्यासेधिकारः। पुष्टिमार्गे कृष्णसेवासंसिद्धविप्रयोगात्मकस्वरूपविषयकसेवात्मकानुरागे सति संन्यासेधिकारः। मर्यादामार्गे संन्यासस्वीकारे श्रवणादीनि कर्तव्यानि। चित्तास्वास्थ्यनिवृत्त्यर्थं चैकग्रामवासनिषेधादयो नियमाः। पुष्टिमार्गे संन्यासे भगवद्विरहभावबाधकत्वाच्छ्रवणादिनिषेधः। अप्राकृतविकलता अस्वास्थ्यं च पुष्टिमार्गीयस्य स्वाभाविकमतस्तस्य ग्रामान्तरगमनं न विधीयते किंत्वेकत्रैवावस्थितिः। मर्यादामार्गीयस्य संन्यासिनोटनं मनःप्रसादनार्थम्। पुष्टिमार्गीयस्य त्वस्वास्थ्यजनकपदलीलादिदर्शनार्थमटनम्। मर्यादामार्गे संन्यासिनो देहरक्षार्थं भिक्षाटनम्। पुष्टिमार्गे विप्रयोगेण देहपातार्थमेव सर्वः समुद्यमः। तेन भिक्षाटनमपि तत्र न संभवति। मर्यादामार्गीयसंन्यासे केषांचिद्धर्माणां विधानम्। पुष्टिमार्गे तु सर्वधर्मान् परित्यज्येति भगवदुक्त्या सर्वधर्मत्यागः। मर्यादामार्गीयसंन्यासे प्रणवध्यानादि। पुष्टिमार्गे तु विप्रयोगक्लेशमात्रभावनम्। मर्यादामार्गे बहिष्ठलीलानुभवः। पुष्टिमार्गेन्तरनुभवः। एवमन्येपि विशेषा बहवः।

भक्तिरपि मर्यादापुष्टिभेदेन द्विविधा। प्रथमा भगवच्चरणारविन्दभक्तिः। द्वितीया तन्मुखारविन्दभक्तिः। प्रथमया मर्यादया नारदादिभिः श्रवणादिद्वारा सुखसंबन्धो लब्धः। इयं सुलभा। द्वितीयया स्वयं श्रीकृष्णदत्तया दुर्लभया पुष्टिभक्त्या गोपीभिर्भगवदधरामृतसेवनं संपादितम्। मर्यादाभक्तिर्वेदसिद्धा। पुष्टिभक्तिः स्वतन्त्रा। मर्यादाभक्तेः फलं सायुज्यम्। पुष्टिभक्तेः फलमभेदभावबोधनम्। मर्यादाभक्तौ फलापेक्षा। पुष्टिभक्तौ फलानपेक्षा। मर्यादाभक्तिस्थपुरुषोत्तमात् पुष्टिभक्तिस्थपुरुषोत्तमोपि भिन्नः। स च भेद इत्थम्। मर्यादामार्गीयपुरुषोत्तमो धर्मस्वरूपः। पुष्टिमार्गस्थपुरुषोत्तमो धर्मिस्वरूपः। मर्यादास्थपुरुषोत्तमो गुहानिहितः।

पुष्टिस्थः साक्षाद् दृश्यमानः । मर्यादास्थपुरुषोत्तमोक्षरात्मके व्यापिवैकुण्ठे निवसति । पुष्टिस्थः श्रीमद्गोकुले निवसति । तानि परे तथा ह्याह ( ब्र सू. ४।२।१५ ) इति सूत्रेण व्यापिवैकुण्ठाद्गोकुलस्य माहात्म्याधिक्यं वर्णितम् । मर्यादामार्गस्थपुरुषोत्तमदर्शने शुद्धाद्वैतज्ञानिनोधिकारः । पुष्टिमार्गस्थपुरुषोत्तमदर्शने स्वतन्त्रस्य रासिष्ठभक्तस्याधिकारः । मर्यादास्थभक्तानामक्षरब्रह्मणि लयः । पुष्टिस्थभक्तस्तु न लीयते । यथा पुष्टिस्थपुरुषोत्तमः स्वयं प्रादुर्भूय लीलां करोति । एवं स्वान्तस्थभक्ताननुगृह्य प्रकटयित्वा स्नेहेन स्वलीलारसमनुभावयति ।

प्रसङ्गान्मूलस्वरूपं विविच्यते । तत्र ' कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥ १ ॥ ॐ तत्सत्परं ब्रह्म कृष्णात्मको नित्यानन्दैकस्वरूपः सोहम् ॐ तद्गोपाल एव परं सत्यमबाधितम्' इति । स च परमकाष्ठापन्नः पुरुषोत्तमशब्दवाच्यः कृष्णः सदा प्रकटालौकिकसर्वधर्मा नित्यसर्वलीलः । स हि द्विभुजचतुर्भुजादिरूपैर्बृहद्वनवृन्दावनव्यापिवैकुण्ठादिषु तत्तद्भक्तैः सह रममाणः सदा विजयते । परिपूर्णतमः कृष्णो वैकुण्ठो गोकुलः स्वयम् । चतुर्भुजश्च वैकुण्ठे गोकुले द्विभुजः स्वयम् ॥ १ ॥ इति ब्रह्मवैवर्तात् । अत एव परमानन्दः । एवं च मूलरूपस्य चत्वारि रूपाणि । तत्रैकं पुरुषोत्तमस्वरूपं श्रीकृष्णशब्दवाच्यम् । एकमक्षरं स्वरूपमधिकारिभेदेन द्विविधम् । एकमन्तर्यामिस्वरूपम् । एवं चातुर्विध्यं ज्ञेयम् । सोपधिस्नेहवतां कृते मत्स्याद्यवताराः । निरुपधिस्नेहवतां कृते तु श्रीव्रजनाथप्राकट्यम् । अतः सर्वावतारापेक्षया व्रजनाथस्यैव श्रैष्ठ्यम् । मर्यादायां पापक्षयानन्तरं भक्तावधिकारः । पुष्टौ तु भक्ताः सदा शुद्धाः । मर्यादाभक्तौ ज्ञानादेः सहकारित्वम् । पुष्टिभक्तौ ज्ञानादीनामनपेक्षा । पुष्टिभक्तेरपि शुद्धपुष्टिपुष्टिपुष्टिमर्यादापुष्टिप्रवाहपुष्टिभेदैश्चातुर्विध्यम् । तद्विवरणं प्रमेयरत्नार्णवतो ज्ञेयम् ।

यस्मिन् भगवत्कृपा स पुष्टिभक्तिमार्गाधिकारी । सा च कृपा

तन्मार्गरुच्यानुमीयते । एवं च पुष्टिमार्गीयफलादित्सासमद्भूतभगवत्कृपा-जन्यपुष्टिमार्गविषयकरुचिमानधिकारीति ज्ञेयम्। सा रुचिर्भक्तिरेव। शुद्धपुष्टिभक्तिफलं तु नित्यलीलान्तःप्रवेशः। पुरुषोत्तमलाभे यो मुख्य-हेतुतयोदितः। तस्य सर्वात्मभावस्य स्वरूपमिह वर्ण्यते॥ भगवद्विषयको निरुपधिस्नेहो भक्तिविशेषः सर्वात्मभावः । अयमेव पुरुषोत्तमप्राप्तौ मुख्यं कारणम्। स च मर्यादापुष्टिभेदेन द्विविधः। तत्राद्योम्बरीषसं-बन्धी श्रीमद्भागवते नवमस्कन्ध उक्तः। द्वितीयस्तु शृङ्गाररसमध्यपाती शुद्धपुष्टिभक्तिमार्गीयव्रजसुन्दरीसंबन्धी तत्रैव दशमस्कन्धे निरूपितः॥

इति शुद्धाद्वैतमतस्वरूपम् ।

## शांकरमतम् ( अद्वैतमतम् )

अस्मिन्मते ब्रह्मैव सत्यमन्यत्सर्वं मिथ्या। जगदादि सर्वं शुक्तौ रजत-मिव भासते। ब्रह्म निर्गुणमत एव शब्दैरप्रतिपाद्यम् । अत एव वाङ्म-नसयोरगोचरमिति श्रुतौ कथ्यते। सर्वज्ञत्वादयोऽपि ब्रह्मगुणा औपा-धिकाः। जीवो ब्रह्मरूपोऽप्यज्ञानाद्भिन्न इव भाति । मनोबुद्ध्याद्युपा-धिभिः सर्वोऽपि जनोऽहमिति प्रत्येति। अतएव सुषुप्तौ मनोबुद्ध्या-दिलयेनाहमाकारप्रतीत्यभावः। एवं मोक्षावस्थायामप्युपाधिलयादह-माकारप्रतीत्यभावः। एवं चाहमिति प्रतीतिरौपाधिकी। अयं प्राती-तिको जीव एक एव न तु नाना। अन्तःकरणभेदात्सुखदुःखानुभवभेदः। चैतन्यं सर्वव्यापकं स एवात्मेत्यभिधीयते । अयमात्मेश्वरजीवसाक्षीति भेदेन त्रिविधः। सर्वजगन्मूलकारणमज्ञानं तस्मिंश्चैतन्यान्तर्गते सति स आत्मेश्वर इत्यभिधीयते। स एवेश्वरस्सत्त्वरजस्तमोभिर्विष्णुब्रह्मशंकरेति संज्ञा लभते। आत्मा ज्ञानस्वरूपो नतु ज्ञातृस्वरूपस्तस्य ज्ञातृत्वमहं-कारद्युपाधिभिः प्रपञ्चस्यापि ज्ञेयत्वमज्ञानादेव । त्रिविधं सत्यत्वं प्राति-भासिकं व्यावहारिकं पारमार्थिकं च । तत्र प्रातिभासिकस्य शुक्तिरजतादेर्व्यावहारिकसत्यरजतेन बाधः। व्यावहारिकसत्यत्वं घट-पटादीनां तच्च पारमार्थिकसत्येन ब्रह्मदर्शनेन बाध्यते। ब्रह्मणस्तु कस्या-

मप्यवस्थायां न बाधः । अत एव तत्परमार्थसत् । घटपटादीनां व्यवहारदशायां सत्यत्वं वस्तुतस्तु ते मिथ्याभूताः। स्वाप्निकपदार्थवत् । यथा स्वप्नगताः पदार्था जाग्रद्दशायां न सन्त्यतो मिथ्या तथा पारमार्थिकदशायामभावादेते व्यवहारदशायां विद्यमाना अपि घटादयो मिथ्या । पारमार्थिकात्मज्ञानेन तद्बाधात् । कासुचिच्छ्रुतिषु सृष्टिराकाशादिक्रमेण कासुचिच्छ्रुतिषु तेजआदिक्रमेण कुत्रचित्सर्वं ब्रह्मैव नान्यदित्युक्तम् । सर्वासां श्रुतीनामबाधितप्रामाण्यात्तत्समन्वयोवश्यं कर्तव्यस्तथा चेदमेव सिध्यति यद्ब्रह्मैव सत्यमिति पारमार्थिकदृष्ट्योक्तम् । आकाशादिक्रमसृष्टिस्तु व्यावहारिकी । अनेनापि प्रमाणेन जगतो व्यावहारिकसत्यत्वम् । न तु परमार्थसत्यत्वम् । यदि जगत्परमार्थसत्स्यात्तर्ह्यन्यत्किमपि नास्तीतिप्रतिपादिनी श्रुतिरनर्थिका स्यात् । एवं च सत्यानृते मिथुनीकृत्य नैसर्गिकोयं लोकव्यवहार इति मन्तव्यमत एवाज्ञानिदृष्ट्या तत्सत्यत्वं भासते । ज्ञानिदृष्ट्या च ‘ तस्य पिता अपिता भवति ’ इत्युक्तरीत्या तस्य मिथ्यात्वम् । न केवलं सर्वस्य जगतो मिथ्यात्वं श्रुत्या बोध्यतेपि तु स्वस्यापि मिथ्यात्वं श्रुतिर्निरभिमानितया ब्रूते । ननु मिथ्याभूतश्रुतेः सत्यज्ञानं कथमिति न च वाच्यम् । “ यथा कर्मसु काम्येषु स्त्रियं स्वप्नेनुपश्यति । समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने ” इत्युपनिषदुक्तरीत्या मिथ्याभूतात्स्वप्नस्थस्त्रीदर्शनात्सत्यसमृद्धिप्राप्तिरिवासत्याया अपि श्रुतेः सत्यभूतात्मदर्शनस्य संभवात् । यथा वा स्वाप्निकपदार्थानामसत्यत्वेपि तज्ज्ञानस्य सत्यत्वं तथा मिथ्याभूताया अपि श्रुतेः सत्यात्मज्ञानम् । एतस्य सर्वजगतो मूलस्वरूपमनाद्यविद्या सा च त्रिगुणात्मिका प्रलयकालसमाप्तिवेलायामविद्यया जीवकृतकर्मभिश्च “ तदैक्षत बहु स्यां प्रजायेय ” इति रीत्या परमात्मा संकल्पयति तत आकाशादिक्रमेण सृष्ट्युद्गमः । ततश्च पञ्चीकृतपञ्चमहाभूतेभ्यः शरीरादीनि प्रादुर्भवन्ति । एवमुत्पन्नशरीरे प्रविष्टं चैतन्यं जीव इत्यभिधीयते स नाणुः किंतु व्यापकः सर्वस्मिञ्शरीरे सुखदुःखानुभवात् । स च

जीवो मुक्तिपर्यन्तं स्थायी जन्मान्तरीयकर्मजसुखदुःखसंबन्धात् । ननु जन्मान्तरं नाङ्गीक्रियत इति चेज्जन्मसमकाले जायमानसुखदुःखानुभवस्यानुपपत्तिः । मातृस्तनपानादावप्रवृत्त्यापत्तिश्च । तदानीं कस्यापि कर्मणोऽसंभवात् । जीवो विस्मृतकण्ठस्थचामीकरपुरुष इवात्मविस्मृतेरज्ञानात्सुखदुःखानुभवभाक् । अज्ञानं लिङ्गशरीरं स्थूलशरीरं चेत्युपाधिस्तस्य सदा प्रत्यासन्नः । अयमुपाधिर्दशमस्त्वमसीति ज्ञानेन विस्मृतात्मस्वरूपस्याज्ञानमिवात्मज्ञानेन जीवात्मपरमात्मैक्यज्ञानापरपर्यायेण नश्यति सत्यज्ञानेन विना मिथ्याभूतदर्शनस्यानिवृत्तेः । एवमविद्यानाशे जीवो मुक्तो भवति । तस्य ज्ञानाग्निः प्रारब्धेतराणि संचितक्रियमाणानि कर्माणि नाशयति । अस्यां दशायां प्रारब्धकर्माणि भुञ्जानः स विगतशरीराद्यभिमानो जीवन्मुक्त इत्यभिधीयते । प्रारब्धकर्मावसाने देहपाते स विदेहमुक्तो भवति । इयमेव परमा मुक्तिः । अस्यां जीवः परमात्मसायुज्यं नाम स्वरूपमधिगच्छति । नच मतान्तरवदल्पेनापि सेवकादिरूपेण भिन्नास्तिष्ठति । यद्यपि जीवः सदैवात्मस्वरूपस्तथापि भावरूपेणाज्ञानेनात्मानं सुखदुःखभाजं मनुते तदैव बद्ध इत्यभिधीयते तादृशाज्ञानस्य निवृत्तौ स एव मुक्त उच्यते । **साधनक्रमः** । वेदविहितवर्णाश्रमकर्मणा चित्तशुद्धिस्ततो ब्रह्मनिष्ठगुरुं प्रति शरणगमनं तेन तत्त्वमसीति ज्ञानोपदेशस्तच्छ्रवणमनननिदिध्यासनैः संन्यासाश्रममधिवसन्कर्माणि परित्यजंश्च स सुस्थिरज्ञानो मोक्षं लभते । कदाचिद्वामदेवादिवत्पूर्वजन्मकृतकर्मभिः शुद्धचित्तोऽत्र जन्मनि ज्ञानेन मुक्तो भवति । मोक्षाप्तौ ज्ञानमेव साक्षात् साधनम् । कर्मोपासने तु चित्तशुद्धिचित्तैकाग्र्यप्रापकत्वात्परंपरितसाधने । ज्ञानकर्मसमुच्चयस्तु नेष्टः । नित्यानित्यवस्तुविवेक इहामुत्रार्थभोगविरागः शमदमादिसाधनसंपद् मुमुक्षुत्वं चेति साधनचतुष्टयसंपत्त्यनन्तरं ब्रह्मजिज्ञासा । अस्मिन्मतेऽनिर्वचनीयख्यातिः । प्रत्यक्षानुमानोपमानशाब्दार्थापत्त्यनुपलब्ध्याख्यानि षट् प्रमाणानि । तत्रालौकिकार्थ आत्मनि शाब्दमेव मुख्यं प्रमाणम् । अन्यदनुमानादि

तदवष्टम्भेन प्रमाणं भवति । अत्र मते विवर्तवादः । तत्स्वरूपं स्वप्रकाश-परमानन्दाद्वितीयं ब्रह्म स्वमायावशान्मिथ्यैव जगदाकारेण कल्पते । यथा शुक्तौ रजतं रज्जौ भुजंगमश्च । ननु शुक्तिरजतादौ सारूप्यं विवर्तत्वे कारणं जीवजडयोः सारूप्याभावेन चिद्विवर्तत्वं प्रपञ्चस्य कथमिति चेन्नैतत्साधु । नहि सारूप्यनिबन्धनाः सर्वे विभ्रमा इति व्याप्तिरस्ति । असद्रूपादपि कामादेः कान्तालिङ्गनादिष्विव स्वप्नविभ्रमस्योपलम्भात् । किंच कादाचित्के विभ्रमे सारूप्यापेक्षा नानाद्यविद्या-निबन्धने प्रपञ्चे तदुक्तमाचार्यवाचस्पतिना—'विवर्तस्तु प्रपञ्चोयं ब्रह्मणो-परिणामिनः । अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥' इति । अस्य मतस्य संग्राहकः श्लोकः ॥ " ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः " इति ॥

## रामानुजमतम् ( विशिष्टाद्वैतमतम् )

विशिष्टाद्वैतशब्दार्थः— चिदचिद्विशिष्टस्य परमात्मनोऽद्वैतमथवा सूक्ष्मशरीरविशिष्टस्य कारणरूपस्य परमात्मनस्तथा स्थूलशरीरविशि-ष्टस्य कार्यरूपस्य परमात्मनश्चेत्युभयोरद्वैतम् । पदार्थास्त्रिविधा आचि-च्चिदीश्वरभेदेन । तत्र प्रकृतिकालशुद्धसत्त्वभेदेनाचित्पदार्थस्त्रिविधः । तत्रापि प्रकृतिस्त्रिधासूक्ष्मसूक्ष्मतरसूक्ष्मतमेतिभेदेन । सा च क्रमेणाऽव्यक्ता-क्षरतम इति संज्ञिका। ईश्वरः परमात्मा स एव ब्रह्मेत्यभिधीयते । ।चिदचित् ( जीवजड )पदार्थात्मकमीश्वरस्य शरीरं तच्छरीरमपि स्थूलसूक्ष्मभेदेन द्विविधं सूक्ष्मशरीरयुतः परमात्मा स्थूलस्य जगत उपादानकारणम् । परमात्मन्यप्राकृताः शब्दस्पर्शरूपरसगन्धाः शक्तिज्ञानानन्दादयश्च गुणाः सन्ति । स च सर्वाश्रयो व्यापकश्च तज्ज्ञानं शरीरमपि व्यापकम् । स च पञ्चविधः परव्यूहविभवान्तर्याम्यर्चावतारभेदेन । स एव सूक्ष्मचिदचि-त्पदार्थयुक्तो जगत उपादानं विशेषसंकल्पयुक्तश्च निमित्तकारणं भवति । तथा कालाद्यन्तर्यामितया सहकारिकारणं च भवति । अयं परमात्मा सर्वेषां चेतनाचेतनवस्तूनां प्रेरकः कर्मानुकूलफलप्रदोऽप्युदासीनः सर्व-

जीवानां जडानां च नियन्ता कल्याणगुणपूर्णो हेयगुणप्रत्यनीकः सर्वान्तर्याम्यचिन्त्यशक्तिबलैश्वर्यवीर्यतेजःसंपन्नो भक्तिलभ्यश्चास्ति। जीवजडौ परमात्मनः शरीरभूते। एतद्विशिष्टपरमात्मातिरिक्तं जगति किंचिन्नास्ति। यद्यपि जीवजडौ विशिष्टपरमात्मनोनातिरिक्तौ तथापि केवलपरमात्मनस्तौ भिन्नौ नित्यौ च चिदपरपर्यायो जीवः स चाणुर्न तु व्यापकः। स च चेतन ईश्वराधीनकर्तृत्वगुणः स्वप्रकाशः सुखी नित्यः प्रतिशरीरं भिन्नश्च। स च बद्धमुक्तनित्यभेदेन त्रिविधः। ब्रह्मादिकीटान्ताः सर्वे संसारिजीवा बद्धाः। विमुक्तसंसाराः प्राकृतसूक्ष्मशरीररहिता वैकुण्ठे भगवत्संनिधिनिवासिन आविर्भूताष्टगुणा ये ते मुक्तजीवाः। मूलत एव संसारसंबन्धरहिताः परमात्मेच्छानुवर्तिनोसंकुचितज्ञाना येनन्तगरुडादयस्ते सर्वे नित्यजीवाः। जीवात्मानोनन्ताः। जगत्प्रवाहश्चानादिः। नित्यजीवाः स्वेच्छया लीलाविभूतिष्ववतारं धारयन्ति। एतेषु नित्यजीवेषु यथाधिकारं तारतम्यं वर्तते। मुक्तजीवेषु तारतम्यं नास्ति। तेषां न कोप्यधिकारो न वा तेषामवतारधारणम्। मुक्तौ जीवैः परमात्मसादृश्यं लभ्यते न त्वैक्यम्। जीवो ज्ञातृस्वरूप आनन्दस्वरूपश्च तथा कर्ता भोक्ता। तस्य शरीरं प्रकृतिजन्यं पाञ्चभौतिकं स च स्वयं परमात्मनः शरीरभूतो जीवात्मा लिङ्गदेहोपाधिना संसरति। स च लिङ्गदेहः प्राकृतोनादिश्च। उपाधिभूतलिङ्गदेहत्यागेन जीवेन मोक्षो लभ्यते। मोक्षावस्थायामपि जीवस्य ज्ञातृत्वं न हीयते। मोक्षार्थं जीवस्य ब्रह्मविचारो विधीयते। तत्र पूर्ववृत्तं कर्म ब्रह्मज्ञानेङ्गभूतम्। न साधनचतुष्टयसंपत्त्यानन्तर्यं तत्रापेक्ष्यते। यत्रेश्वरनित्यजीवमुक्तजीवाश्च विविधभोगानुपभुञ्जते। यत्र च कर्मरूपाविद्या न संभवत्यसौ देशः शुद्धसत्त्वमित्यभिधीयते। एतत्सत्त्वं प्राकृतसत्त्वगुणतो विलक्षणम्। ज्ञानं स्वप्रकाशं चेतनं व्यापकं बुद्ध्यपरपर्यायं चास्ति। जीवेश्वरौ तदाधारभूतौ तयोर्धर्मो ज्ञानं तच्च स्वतः प्रमाणं बद्धदशायां तत्कर्माच्छन्नं संकुचितं भवति मोक्षे तु तद्विकासितं भवति। प्रकृतिपदार्थो जडो नित्यश्च। तेन परमात्मस्वरूपमाच्छादितं भवतीति कर्मवश्या बद्धजीवा मन्यन्ते। इयं प्रकृतिः सत्त्वरजस्तम इति

गुणत्रयात्मिका चतुर्विंशतितत्त्वात्मिका च। तानि तत्त्वानि प्रकृतिर्महत्तत्व-महंकारो मनः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च तन्मात्राणि पञ्च महाभूतानि चेति। एतेषु प्रथमतत्त्वं प्रकृत्याख्यं सर्वेषां जडानां मूलकारणम्। एतदतिसूक्ष्मं सृष्ट्यादौ परमात्मन इच्छया प्रकृतौ परिणम्यमानायां यथा यथा सूक्ष्मता हीयते तथा तथावस्थान्तरं भवति। तत्र प्रथमावस्था तम इत्यभिधीयते। द्वितीयावस्थाक्षरं तृतीयावस्थाव्यक्तं च। इदं तृतीयमव्यक्तं नाम कार्योन्मुख्यवस्था। अव्यक्तानन्तरं जायमानाः सर्वे परिणामा व्यक्ताः। तत्र प्रथमपरिणामो महत्तत्वम्। अत्र गुणत्रयसाम्यं नास्ति। त्रिष्वन्यतमो गुणः प्रबलो भवति। महत्तत्वं ब्रह्मणः शरीरम्। अस्माज्जायतेन्तःकरणवृत्तिर्बुद्धिनाम्नी निश्चयाख्या। महत्तत्त्वात्सत्त्वगुणप्राबल्येन जायमानः सात्त्विकोहंकारो वैकारिक इति कथ्यते। अस्मात्सात्त्विकाहंकारात्पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्चोत्पद्यते। एतदेव मनः स्मृत्यादीनां साधनं सर्वेन्द्रियाणां प्रेरकं संसारबन्धकारणीभूतं च। अचिद्वस्तूनां यथा महत्तत्त्वादिरूपेण परिणामा भवन्त्येवं जीवात्मनो ज्ञानधर्मसंकोचविकासादयोवस्था भवन्ति। तथात्मनोपि सृष्ट्यादिसंकल्पादयोवस्था भवन्ति। जडव्यापाराः सदा परबुद्ध्यवलम्बनेन संभवन्ति। परमात्मनः सर्वे व्यापाराः स्वबुद्ध्यवलम्बनेन संभवन्ति। जीवस्य तु केचिदेव व्यवहारा ईश्वरबुद्ध्यवलम्बनेन केचित्स्वस्य परमेश्वरस्य चेत्युभयोर्बुद्धिमवलम्ब्य प्रवर्तन्ते। केवलमेव स्वबुद्धिमवलम्ब्य जीवेन व्यवहारः कर्तुं न शक्यते। जडपदार्थाः सदान्यस्य शरीरं भवन्ति। आत्मत्वं तु तेषां नास्ति। तथेश्वरः सदात्मैव शरीरत्वं तस्य नास्ति। जीवस्तु स्थूलदेहस्यात्मा। ईश्वरस्य शरीरमित्युभयं भवति। अन्तर्नियामकत्वं चात्मशब्दप्रवृत्तिनिमित्तं तेन जीवः परमात्मेति द्वयमप्यात्मशब्देन व्यवह्रियते अन्तर्यामित्वस्य परा काष्ठा परमात्मेति। ज्ञानं द्विविधं स्वरूपभूतं धर्मभूतं च। तत्र स्वरूपभूतज्ञानं जीवाभिन्नं धर्मभूतं तु ततः पृथक्। एवं च स्वरूपभूतज्ञानं ज्ञानदृष्ट्या ज्ञानस्वरूपो जीवः। स एवाहमिति प्रतीत्या भासमान-

त्वाज्ज्ञेयोपि । तथा तादृशज्ञानवत्त्वात् स एव ज्ञातृस्वरूपोपि । पञ्चीकृत-पञ्चमहाभूतानि महत्तत्त्वमहंकारश्चेति सप्त तत्त्वानि प्रकृतिश्चेत्यष्टभ्यः शरीरोत्पत्तिः । ततस्तच्छरीरं पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनश्च भूषयति । भक्तिः प्रपत्तिश्चेति मोक्षसाधने । भक्तिर्भजनम् । अनन्यभावेन परमेश्वरः शरणीकरणीय इति प्रपत्तिः । **साधनक्रमश्चेत्थम्**— कर्मज्ञानयोगौ भक्तिकारणम् । साधनभक्तिः प्रपत्त्यङ्गम् । साच प्रपत्तिर्यत्र देहे तद्देहपात एव मोक्षः । अत्र मते प्रत्यक्षमनुमानमागमश्चेति प्रमाणत्रयम् । अन्यप्रमाणानामत्रैवान्तर्भावः । अत्र मते सत्ख्यातिः । जीवन्मुक्तिर्नास्ति । अत्र मतेद्वैत[illegible]वादृतो विवर्तवादः खण्डयते परिणामवादश्च स्वीक्रियते । तत्तात्पर्यमित्थम्—जगति विद्यमानानि सर्ववस्तूनि सत्यानि तानि मूलप्रकृतिपरिणामभूतानि च । श्रुतिगतानि 'असत्यं' 'नास्ति' इति पदानि न मिथ्यार्थबोधकानि । किन्तु विनाशित्वबोधकानि परिणामिपदार्थस्वरूपं तत्तदवस्थासु भिद्यतेतस्ते पदार्था असत्या विनाशिन इत्युच्यन्ते नतु मिथ्याभूतत्वं तेषामिति मन्तव्यम् । एवंच जगत्सत्यमिति राद्धान्तः ।

## माध्वमतम् ।

अत्र स्वतन्त्रास्वतन्त्रभेदेन द्विविधं तत्त्वम् । तत्र स्वतन्त्रं तत्त्वं सर्वसद्गुणाश्रयो दोषरहितो विष्णुरेव । अयमेव ब्रह्मशब्देनाभिधीयते । विष्णुभिन्नं सर्वमस्वतन्त्रम् । जीवो ब्रह्म च परस्परं भिन्ने । नाभिन्ने । सच्चिदानन्देति त्रयं परमात्मनः शरीरम् । स परमात्मा विष्णुः सर्वजगतो मूलकारणम् । स एव सर्ववस्तुष्वन्तर्यामी । तस्य केवलं सुखभाक्त्वम् । दुःखं तु तस्य कदाचिदपि न संभवति । यथा परमात्मनो जीवो भिन्नस्तथा जगदपि तस्माद् भिन्नम् । अत्र मते पञ्च भेदाः स्वीक्रियन्ते । तथाहि १ जीवेश्वरभेदः २ जडेश्वरभेदः ३ जीवजडभेदः ४ जीवजीवभेदः ५ जडजडभेदः । मोक्षावस्थायामपि जीवः परमेश्वराद्भिन्न एव तिष्ठति । गीतासु—इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेपि नोप-

जायन्ते प्रलये न व्यथन्ति च ॥ १४।२ इत्यनेन ज्ञानेन भक्ता मत्सादृश्यं यान्तीत्युक्तः । जले जलप्रक्षेपे उभयोः सामरस्यैनैक्यं न भवतीति युक्त्यापि तथैव वक्तुं शक्यते । यथा तज्जलमेकमिव प्रतीयतेनभिज्ञैस्तथैव जीवेश्वरयोरप्यैक्यं प्रतीयतेनभिज्ञैः । जीवो मुक्त्यवस्थायां न परमैक्यं गच्छति वैरूप्यात् । तथाहि भगवान् पूर्णः स्वतन्त्रः । जीवस्त्वल्पोस्वतन्त्रः । तयोरैक्यं भवितुं नार्हति । किंतु बुद्धिसारूप्यमेकस्थाननिवासो वा भवति । यथा ब्राह्मणं भक्त्या संपूज्य शूद्रोपि ब्राह्मणो भवेदिति वाक्यस्य ब्राह्मणवत् शुद्ध इति लाक्षणिकोर्थः । तद्वद् ब्रह्म वेद ब्रह्मैव भवतीत्यस्य ब्रह्मसदृशो भवतीति लाक्षणिकोर्थो ग्राह्यः । ब्रह्माणि जीवाः सर्वेपि परब्रह्माणि मुक्तिगाः । प्रकृतिः परमं ब्रह्म परमं महदच्युतः ॥ तस्मान्न मुक्ता नच सा न क्वचिद्विष्णुवैभवम् । प्राप्नुवन्ति स एवैकः स्वतन्त्रः पूर्णषड्गुणः ॥ इति परमश्रुतेः । यथापियन्ति तेजांसि महातेजसि भास्करे । पृथक् पृथक् स्थितान्यांह्न स्वरूपैरपि सर्वशः । परे ब्रह्मणि जीवाख्यब्रह्माण्यपि (च) यन्ति हि । मुक्तौ पृथक् स्थितान्येव तदन्येषामदर्शनम् । अप्ययोयं समुद्दिष्टो न स्वरूपैकता क्वचित् ॥ इति नारायणीयश्रुतेः । मोक्षे जीवो न दुःखभाक् । ईश्वरवत्स विविधसुखानि भुङ्क्ते किंतु लक्ष्मीश्रीवत्सप्राप्तिस्तस्य न भवति । तथा जगन्निर्माणशक्तिश्च नास्ति । तत्रापि स ईश्वरपराधीनो न स्वतन्त्रः । मुक्तानां तारतम्यं वर्तते । उपासनाभेदात् मोक्षसाधनीभूतेश्वरदर्शनभेदः । एवं तत्रापि तारतम्यम् । अधुना मोक्षक्रम उच्यते । मोक्षावस्थायां प्रथमं जीवस्य कर्मक्षयः । ततस्तस्य देहादुत्क्रमः स चाणुपरिमाणो न विभुः । जीवो नानारूपो नतु तस्यैकत्वम् । जीवलक्षणं च परमश्रुतौ—अहमित्येव यो वेद्यः स जीव इति कीर्तितः । स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः ॥ इति । स चांशस्वरूपः । स जीवो विशिष्टमार्गेण गच्छति तदा परमात्मवत्सुखादि भुङ्क्ते । मुक्तेः साधनं ज्ञानमेव । ज्ञानकर्मसमुच्चयोत्र मते नेष्टः । कर्म ज्ञानाङ्गम् । कर्मणा कृतेन ज्ञाने फलतारतम्यं भवति । जीवो ज्ञातृस्वरूपो

ज्ञानं तस्य गुणः । ज्ञानानन्दादयस्तस्य गुणा मुक्तेः प्रागनभिव्यक्ताः । मुक्तौ तेभिव्यज्यन्ते । मुक्त्यर्थं जीवेनेश्वरभजनं कर्तव्यमेव । सर्वेश्वरो हरिः सेव्यो जीवः सेवकः । अयं भेदो मुक्तावप्यवशिष्यते । सेवा च त्रिविधा अङ्कननामकरणभजनभेदात् । अङ्कनम्—तप्तमुद्राधारणम् । नामकरणम्—पुत्रादीनां केशवादिनामकरणम् । भजनम्—कायिकवाचिकमानसिकेतिभेदेन त्रिविधम् । एवमाराधितो विष्णुः प्रसन्नो जीवाय मुक्तिं यच्छति । विष्णुप्रसादादन्यसाधनेन मुक्तिर्न लभ्यते । स च विष्णुप्रसादो विष्णुगुणोत्कर्षज्ञातरि भक्ते भवति नाभेदज्ञातरि । घातयन्ति हि राजानो राजाहमिति वादिनम् । ददति च सर्वमाभिप्रेतं गुणोत्कर्षवादिने ॥ इति । जगत्सत्यं न मिथ्या । अनादि च । तदुत्पत्तिः परमाणुभ्यो भवति । तेच परमाणवो नित्याः प्रलयेपि न विनश्यन्ति । तथेन्द्रियाण्यपि सूक्ष्मरूपेण प्रलयेपि तिष्ठन्ति । विष्णोरेव जगदुत्पत्तिस्थितिसंहारा जीवबन्धमोक्षाश्च भवन्ति । उत्पत्तिस्थितिसंहारा नियतिर्ज्ञानमावृतिः । बन्धमोक्षौ च पुरुषायस्मात्स हरिरेकराट् ॥ इति स्कान्धोक्तेः । अत्र मते शाब्दमेव मुख्यं प्रमाणम् । तदनुकूलतयानुमानादि । बन्धमोक्षस्वरूपं च । यथा चोरापहार्यौ च यथा पुंविषयावपि । तथा जीवेश्वरौ भिन्नौ सर्वदैव विलक्षणौ । तथापि सूक्ष्मरूपत्वान्न जीवात्परमो हरिः । भेदेन मन्ददृष्टीनां दृश्यते प्रेरकोपि सन् । वैलक्षण्यं तयोर्ज्ञात्वा मुच्यते बध्यतेन्यथा । इति च परमोपनिषदि । विष्णुः संसारिणोन्यो यस्तमविज्ञाय मूढधीः । देहेन्द्रियप्राणबुद्धिनेतृत्वं मन्यते त्मनः । अतः संसारपदवीं याति जीवेशयोः सदा । वैलक्षण्यं परं ज्ञात्वा मुच्यते बध्यतेन्यथा । इति । एकविज्ञानेन सर्वविज्ञानं च प्राधान्यात् किंचित् सादृश्यात्कारणत्वाच्च न तदन्यस्य मिथ्यात्वात् । एतन्मते प्रमाणग्रन्थाः—ऋगाद्या भारतं चैव पञ्चरात्रमथाखिलम् । मूलरामायणं चैव पुराणं चैतदात्मकम् । ये चानुयायिनस्तेषां सर्वे तेच सदागमाः । दुरागमास्तदन्ये ये तैर्न ज्ञेयो जनार्दनः ।

ज्ञेय एतैः सदा युक्तैर्भक्तिमद्भिः सुनिष्ठितैः । इति ब्रह्माण्डपुराणे। अस्य मतस्य संग्राहकः श्लोकः— श्रीमन्मध्वमते हरिः परतरः सत्यं जगत्तत्त्वतः। भेदो जीवगणा हरेरनुचरा नीचोच्चभावं गताः॥ मुक्ति-र्नैजसुखानुभूतिरतुला भक्तिस्तु तत्साधनम्। ह्यक्षादि त्रितयं प्रमाणम-खिलाम्नायैकवेद्यो हरिः ॥ इति ॥

## शाङ्करारामानुजीयमाध्वमततो वाल्लभस्य शुद्धाद्वैत-मतस्य सालक्षण्यवैलक्षण्ये।

१ अथ शाङ्करमतेनाद्वैतेन सह वाल्लभस्य शुद्धाद्वैतमतस्य साल-क्षण्यवैलक्षण्ये प्रदर्श्येते।

शाङ्करमते—अद्वैतवादः। अत्र वाल्लभमते शुद्धाद्वैतवादः। शांकरमते प्रमाणादीनि व्यावहारिकाणि परमार्थतः सत्यं ब्रह्मैव। अस्मिन्मते प्रमाणादि सर्वं सत्यं केवलं ब्रह्मैव स्वेच्छावशात् प्रमाणादिरूपैर्विचित्रां लीलां करोतीति स्वीक्रियते। शांकरमते प्रमाणानां व्यावहारिकसत्यताम-ङ्गीकृत्य तेषां प्रत्यक्षानुमानोपमानशाब्दार्थापत्त्यनुपलब्धीतिभेदेन षट्त्वं स्वीक्रियते। अत्र मते शाब्दमेव मुख्यं प्रमाणं तदनुकूलतयान्येषां प्रामा-ण्यम्। किन्तु तत्संख्या नापेक्ष्यते। शब्दप्रमाणेपि—अखण्डशु-द्धाद्वैतज्ञानपर्यन्तं स्वतः प्रमाणं वेदाः साङ्गाः श्रीमद्भगवद्गीता मीमांसाद्वयं श्रीमद्भागवतं (व्यासस्य समाधिभाषा) चेति प्रस्थान-चतुष्टयं प्रमाणं शाङ्करमते प्रस्थानत्रयं प्रमाणम्। शाङ्करमतेत्र च शाब्दप्रमाणस्यैव प्रमाणान्तरापेक्षया श्रैष्ठ्यम्। शाङ्करमते जगदन्तः-पातित्वाद्वेदानामपि न पारमार्थिकत्वमत्र तु वेदो नारायणः साक्षादिति प्रामाण्यात्तस्य पारमार्थिकत्वम्। उभयमतेपि प्रमेयं ब्रह्म किंतु शाङ्क-रमते तस्य निर्गुणत्वं निराकारत्वं च। अत्र तु मते तस्य सर्वधर्मविशि-ष्टत्वं सर्वधर्माणां च ब्रह्माभिन्नत्वं स्वाभाविकत्वं च धर्मधर्मिणोऽविकृत-ब्रह्मरूपा इत्यप्यत्र मते स्वीक्रियते। शाङ्करमते—आनन्दमयो न ब्रह्म किंतु ततः परं ब्रह्म अन्यत्। अत्र मते तु आनन्दमयमेव ब्रह्म सैव

परा काष्ठा न ततः परं किंचिदिति स्वीक्रियते। शाङ्करमते सगुण-निर्गुणेति कल्पना परापरेति विद्याद्वैविध्यं चाङ्गीक्रियते। अस्मिन्मते तु न तथा। ब्रह्मणो विरुद्धधर्माश्रयतया सर्वस्य सुसंगतत्वात्। शाङ्करमते 'परमार्थतोऽकर्तृभूतं ब्रह्मैव मायावशात्कर्तृत्वेन प्रतीयते' इति स्वीक्रियते। अत्र तु मते ब्रह्मैव स्वतोऽभिन्ननिमित्तोपादानकारणतया कर्तृ। शाङ्करमते जगतोऽसत्यत्वाद्ब्रह्मणानन्यत्वं न संभवति। अत्र मते तु जगतः सत्यत्वादभेदसंभवः। शाङ्करमतेऽविद्यावशाद्ब्रह्मैव जीवरूपेण भासत इत्यङ्गीकृतम्। अस्मिन्मते सच्चिद्रूपानन्दाद्ब्रह्मणोऽग्नेर्विस्फुलिङ्गवदंशात्मकजीवोत्पत्तिः। स च जीवो नित्य इत्यङ्गीक्रियते। शाङ्करमते विद्ययाऽविद्यानिवृत्तौ जीवत्वनाशः। अस्मिन्मते तदविद्याया नाशे तत्संसारनाशो नतु जीवस्यैव नाशः। शाङ्करमते जीवश्चैतन्यज्ञानस्वरूपो नतु ज्ञातृरूपः। अत्र मते ज्ञातृरूपो धर्मी च। शाङ्करमते जीवो विभुर्बुद्धिसंबन्धादणुरूपेण भासते चेति स्वीक्रियते। अत्र तु मते—आनन्दांशतिरोभावेन व्यापकोऽपि सोणुरूप एव। पुनरानन्दांशप्रादुर्भावे व्यापकश्च। शाङ्करमते जीवस्य कर्तृत्वभोक्तृत्वादिकं बुद्धिसंबन्धजं न पारमार्थिकम्। अत्र तु मते—ईशेच्छया जायमानं तत्सर्वं पारमार्थिकम्। शाङ्करमते जीवः प्रतिबिम्बभूत आभासः। अत्र तु मते विरुद्धधर्माश्रयतया जीवो ब्रह्मणोंशो गर्भदासश्च। शाङ्करमते ब्रह्म माययानेकजीववद्भासते। अत्र तु मते ब्रह्मैव स्वेच्छावशादनेकजीवरूपाणि धारयित्वा विचित्रलीलाः करोति। शाङ्करमते जहदजहल्लक्षणयाऽभेदसिद्धिः। अस्मिन्मतेंऽशांशिभावेनाभेदसिद्धिः। शाङ्करमते जगत् असत्यम्। अविद्यया भासते च। अस्मिन् मते जगत् ब्रह्मण आधिभौतिकं स्वरूपमत एव सत्यम्। शाङ्करमते द्वैतमविद्याकार्यम्। अत्र तु मते द्वैतज्ञानमविद्याकार्यम्। शाङ्करमते जगत्संसारयोर्भेदो नाभिमतः। अत्र तु मते जगद्भिन्नं संसारो भिन्नश्च। जगत् सत् भगवत्कार्यं भगवद्रूपं च। तस्य न नाशः। संसारस्त्वविद्याकार्यम् असन् ज्ञाननाश्यश्च। शाङ्करमते विवर्तः। अस्मि-

न्मतेऽविकृतपरिणामः। शाङ्करमते—अध्यारोपापवादौ। अत्र तु—आविर्भावतिरोभावौ। शाङ्करमते—अनिर्वचनीयख्यातिः। अस्मिन्मते प्रकारभेदेन—अख्यातिरन्यथाख्यातिश्च। शाङ्करमते कर्म उपासना ज्ञानमिति साधनक्रमः। भक्त्युपासनयोर्भेदो नाभिमतः। अत्र मते कर्म उपासना ज्ञानं भक्तिरिति साधनक्रमः। भक्तिरन्योपासना चान्या। कर्मोपासनाज्ञानानि भक्तेरङ्गानि। शाङ्करमते कर्मादिसर्वसाधनानि जगदन्तःपातित्वादपारमार्थिकानि। अत्र मते तु सर्वाणि साधनफलात्मकानि ब्रह्मरूपाणि। शाङ्करमतेऽविद्यानिवृत्तिरूपो मोक्षः। अत्र मते—आत्यन्तिकदुःखनिवृत्तिपूर्वकपरमानन्दप्राप्तिरूपो मोक्षः। शाङ्करमते मोक्षः कैवल्यमित्यभिधीयते। अत्र तु मते प्रवेशात्मकसायुज्यमित्यभिधीयते। शाङ्करमते—अविद्यामायाद्यङ्गीकारेणाद्वैतं प्रतिपाद्यते। अस्मिन्मते तु भगवदिच्छाभगवल्लीलाद्यालम्बनेनाद्वैतं प्रतिपाद्यते। शाङ्करमते सर्वमलीकमिति मत्वाऽद्वैतं साध्यते। अस्मिन्मते—एकमेवाद्वितीयं वस्तु स्वेच्छया तत्तद्रूपेण परिणमत इति मत्वाद्वैतं साध्यते शाङ्करमते तत्तच्छ्रुतिव्यवस्थार्थं निर्गुणसगुणोपजीव्यत्वोपास्यत्वपरब्रह्मत्वादिकल्पनम्। अत्र तु मते वेदस्याक्षरमप्यन्यथा न कल्प्यते। सर्वविरुद्धधर्माश्रयं ब्रह्मेति स्वीकारेण सर्वश्रुत्यर्थो व्यवस्थाप्यते च।

२ रामानुजमततो वाल्लभमतस्य वैलक्षण्यसालक्षण्ये।

रामानुजमते विशिष्टाद्वैतम्। वाल्लभमते—अविशिष्टाखण्डाद्वैतम्। रामानुजमते जडस्य जडेनैवाभेदश्चितश्चितैव। अत्र तु मते चिदानन्दांशप्रादुर्भावे जडमपि ब्रह्मैव भवति तथानन्दांशप्रादुर्भावे चिदपि ब्रह्मैव। रामानुजमते प्रमाणानां त्रयम्। तत्रागमस्य मुख्यत्वम्। अत्र तु वेदानुकूलानि सर्वाणि प्रमाणानि। तत्संख्यानियमो नास्ति। रामानुजमतेत्र च ब्रह्मैव प्रमेयं किंतु रामानुजमते ब्रह्मणश्चिदचिद्रूपे शरीरे तयोः परिमाणं च स्वीक्रियते। रामानुजमते ब्रह्म दिव्यधर्मवदत्रापि तथा परं त्वेतन्मतवत्तत्र विरुद्धधर्माश्रयता ब्रह्मणि न स्वीक्रियते। उभयोरपि मते ब्रह्मणः कर्तृत्वमङ्गीक्रियते। परंतु

अत्र मते अविकृतब्रह्मण एव परिणामः । रामानुजमते तु ब्रह्मशरीरं परिणमत इत्यङ्गीक्रियते तेन द्वैतस्वीकाराद्वैषम्यनैर्घृण्यपरिहारो दुष्करः। अत्र तु मतेऽखण्डाद्वैतस्वीकारात्स सुलभः । रामानुजमतेत्र च जीवो नित्यः कर्तृरूपश्च । जीवोणुरूप उभयोरपि मतयोस्तथापि रामानुजमते तस्य सर्वदैवाणुत्वम् । अत्र तु मते—आनन्दांशप्रादुर्भावे तस्य व्यापकत्वम् । उभयोरपि मतयोर्जीवस्य कर्तृत्वभोक्तृत्वे तथा जीवस्य नानात्वमपि समानम् । परंतु अत्र मते ब्रह्मैव नानारूपाणि स्वेच्छया धारयतीति यथाविर्भावतिरोभाववादेनाङ्गीक्रियते तथा रामानुजमते नास्ति यतस्तत्र सर्वदैव जीवानां नानात्वं स्वीक्रियते । एतन्मतवज्जगत्संसारयोर्भेदो रामानुजमते नास्ति । रामानुजमतेत्र च कर्म ज्ञानं भक्तिरिति साधनक्रमः । किंतु यथैतन्मते भक्त्युपासनयोर्भेदस्तथा रामानुजमते नास्ति । रामानुजमते सत्ख्यातिः । अत्र तु मते—अविद्वद्दशायामन्यथाख्यातिः । पूर्णज्ञानिदृष्ट्याऽख्यातिश्च ॥

३ माध्वमततो वाल्लभमतस्य सालक्षण्यवैलक्षण्ये ।

माध्वमते प्रत्यक्षानुमानशाब्देति प्रमाणत्रयम् । वाल्लभमते वेदानुकूलं सर्वं प्रमाणं तत्संख्या नास्ति । माध्वमते ब्रह्मणः प्रमेयत्वेऽपि जीवो जगदिति पृथक् तत्त्वद्वयम् । ब्रह्मजीवजगतां कदाप्यभेदो न । अत्र तु मते सर्वदाऽभेदः । माध्वमते ब्रह्म सर्वदा सधर्मकमेव । अत्र तु मते सधर्मकं निर्धर्मकं चेत्युभयविधम् । माध्वमते ब्रह्मणि विरुद्धधर्माश्रयता नास्ति । अत्र मते तु सा वर्तते । माध्वमते ब्रह्म निमित्तकारणं प्रकृतिश्चोपादानकारणम् । अत्र तु ब्रह्मैवाभिन्ननिमित्तोपादानकारणम् । माध्वमतेऽनन्यत्वं नास्ति । अत्र तु मतेऽखण्डाद्वैतम् । एतन्मतवदाध्यात्मिकमक्षरब्रह्मस्वरूपं माध्वमतेऽनभिमतम् । माध्वमते जीवः पृथक् तत्त्वम् । अत्र तु मते जीवो ब्रह्मण एवेच्छागृहीतं रूपम् । उभयोरपि मतयोर्जीवस्य नित्यत्वं ज्ञातृत्वं च । माध्वमते जीवः सर्वदाणुरूपः । अत्र तु मतेऽणुरूपस्यापि तस्यानन्दांशप्रादुर्भावे व्यापकत्वम् ।

उभयोरपि मतयोर्जीवस्य कर्तृत्वभोक्तृत्वे। माध्वमते जीवस्य नानात्वं पारमार्थिकत्वं च। अत्र तु मते तस्येच्छाविपरिणामवत्त्वम्। माध्वमते यद्यपि जीवस्यांशत्वं स्वीक्रियते तथापि तस्मादेवांशत्वरूपकारणात्तस्य ब्रह्मणः सकाशाद्भेदः। अत्र तु मतेंऽशत्वादेवांशांशिभावेन तस्य ब्रह्मणा सहाभेदः। जगत्संसारयोर्भेदो माध्वमतेऽप्यनभिमतः। माध्वमतेऽप्येतन्मतवत् कर्म ज्ञानं भक्तिरिति साधनक्रमस्तथापि भक्त्युपासनयोर्भेदस्त्वनभिमतो माध्वमते। माध्वमतेऽन्यथाख्यातिः। अत्र मतेऽविद्वद्दशायामन्यथाख्यातिः पूर्णज्ञानिदृष्ट्याख्यातिश्च। रामानुजमाध्ववाल्लभमते जगत्सत्यत्वं जीवांशत्वं जीवाणुत्वं जीवकर्तृत्वभोक्तृत्वे जीवानेकत्वं जीवदास्यं मोक्षदशायामपि भक्तिसंभवो ज्ञानाद्भक्तेराधिक्यं चेत्येतानंशान् किंचिद्भेदभिन्नानङ्गीकृत्य शाङ्करमतखण्डने प्रयासो दृश्यते। एते रामानुजाचार्या मध्वाचार्या वल्लभाचार्या वेदानन्तरं श्रीमद्भागवतं महाभारतं रामायणं नारदपाञ्चरात्रं शाण्डिल्यसूत्राणि नारदसूत्राणि तथैवान्यानपि वैष्णवागमग्रन्थान् प्रमाणयन्ति। रामानुजाचार्या रामायणं मध्वाचार्याश्च महाभारतं वेदतुल्यं मन्वते। प्रायो रामानुजानुयायिनो रामचन्द्रं मध्वानुयायिनो विष्णुं कमपि तदवतारं च भजन्ते। श्रीवल्लभाचार्यानुयायिनस्तु श्रीमद्भागवतं चतुर्थं प्रस्थानं मत्वा तत्प्रतिपाद्यं श्रीकृष्णं सेवन्ते तमेव पूर्णं भगवत्स्वरूपं मन्वते। एते चांशकलाः सर्वे कृष्णस्तु भगवान् स्वयमिति श्रीमद्भागवतोक्तेः॥

## श्रीमद्वल्लभाचार्याणां चरितं तथा तेषां तदनुयायिनां ग्रन्थाश्च।

तैलङ्गदेशे 'कंकरवाड' नाम्नि ग्रामे दीक्षितसंज्ञकमेकं कृष्णयजुर्वेदिनां प्रथितं कुलमासीत्। तत्र कुले सर्वेपि पुरुषाः सोमयाजिनः समभवन्। अत्रैव कुले लक्ष्मणभट्टसंज्ञकाः प्रादुरभवन्। तेच बहूनध्वरानाहृत्य स्वपत्न्या सह काशीयात्रार्थमगच्छन्। तत्पत्नी मध्येमार्गं १५३५ मिते विक्रमार्कसंवत्सरे वैशाखकृष्णैकादश्यां

( ख्रिस्ताब्दे १४३९ तमे ) सुतं प्रासूत । स एव वल्लभेत्याभिख्यां जगाम ( श्रीमद्वल्लभाचार्याणामधुना या जन्मकुण्डलिका समुपलभ्यते तच्छिरोभागे जन्मसंवत्सरत्वेन १५३५ मितं विक्रमार्कवर्षं लिखितं परं ज्योतिःशास्त्रानुसारं ग्रहगणनया तत् संवत्सरं न संवदाति । श्रीमद्वल्लभाचार्यपौत्रगोकुलनाथवल्लभमहाराजानामनन्यसेवकभूता मठपतिकल्याणभट्टाः कल्लोलसंज्ञे ग्रन्थे १५२९ मिते संवत्सरे वल्लभाचार्याणां जन्मेति निबबन्धुः । परं तत्संवत्सरसंवादिनी जन्मकुण्डलिका नोपलभ्यते। तत उभयसंवत्सरवैशाखकृष्णैकादशीगतं जन्मलग्नं तथा साधनीयं यथाचार्याणां चरितं ज्योतिःशास्त्रफलानुवादि स्यात्तेन च निर्णेयो जन्मकाल इति मे भाति । ) ततो लक्ष्मणभट्टा भार्यापुत्राभ्यां सह द्वादशवर्षाणि काश्यां न्यवसन् । अत्रान्तरेगाधमेधाः श्रीवल्लभदीक्षिता निखिलान् वेदान् सर्वशास्त्राणि चाधिजगिरे । ततः स्वदेशमागतास्ते त्रयः । ततो लक्ष्मणदीक्षिता दिवमलंचक्रुः । पुनस्तीर्थयात्रां गताः श्रीमद्वल्लभदीक्षिता बिल्वमङ्गलाचार्यैः सह समागमं लेभिरे । अत्र प्राञ्चः केचन । अथ भगवता श्रीकृष्णेन वेदव्यासेन चानुगृहीतं तबिल्वमङ्गलाचार्यमतं वल्लभदीक्षिता अनुययुः । तदा दीक्षितानां तत्तादृशमलौकिकं वैदुष्यमुपलभ्य विष्णुस्वामिशिष्या बिल्वमङ्गलाचार्यास्तानाचार्याभिख्यया भूषयामासुः । किंच तान् स्वमतस्य प्रवर्तकत्वेन निरणैषुरिति वदान्ति । तथैवच भाण्डारकरमहाभागा वुइल्सनमहोदया अन्येपि केचित् श्रीमद्वल्लभाचार्या विष्णुस्वामिमतानुयायिन इति वर्णयान्ति किंतु तन्न युक्तम् । यतः श्रीमद्वल्लभाचार्याः श्रीमद्भागवततृतीयस्कन्धद्वात्रिंशत्तमाध्याये ३७ तमे श्लोके सुबोधिन्यां—प्रावोचं भक्तियोगस्य स्वरूपं ते चतुर्विधम् ॥ इत्यत्र स्वयमेवैवं निर्दिशान्ति—उक्तानां भक्तिभेदानां सगुणनिर्गुणभेदप्रतिपादनार्थं चातुर्विध्यमाह—प्रावोचमिति । भेदः पारमार्थिक इति शास्त्रं पुरस्कृत्य त्रिविधो भक्तियोग उक्तः— तेच सांप्रतं विष्णुस्वाम्यनुसारिणस्तत्त्ववादिनो रामानुजाश्चेति तमोरजस्सत्त्वैर्भिन्ना अस्मत्प्रतिपादितश्च

नैर्गुण्यः।' यदि श्रीमद्वल्लभाचार्या विष्णुस्वाम्यनुसारिणो भवेयुस्तर्हि कथंकारं तन्मतं तामसमिति ब्रूयुरिति सुधियो विभावयन्तु। एत आचार्या वह्न्यवतार-भूता इति तत्तन्निर्देशतो ज्ञायते परंतु श्रीविठ्ठलेशादयस्तु तान् श्रीकृष्ण-रूपत्वेन वर्णयन्ति। तथा चोक्तं श्रीविठ्ठलेशैर्वल्लभाष्टके—अज्ञानाद्यन्धकार-प्रशमनपटुताख्यापनाय त्रिलोक्यामग्नित्वं वर्णितं ते कविभिरपि सदा वस्तुतः कृष्ण एव। प्रादुर्भूतो भवानित्यनुभवनिगमाद्युक्तमानैरवेत्य त्वां श्रीश्रीवल्लभेमे निखिलबुधजना गोकुलेशं भजन्ते ॥ १ ॥ एतस्यां दिव्य-क्षेत्रयात्रायां श्रीवल्लभाचार्याः शास्त्रचर्चया बहून् वादिनः पराजिग्यिरे। यात्राप्रसङ्गेन श्रीवल्लभाचार्याः कंचित्कालं श्रीमद्गोकुले आदिवृन्दावने कंचित्कालं मथुरायां च न्यवसन्। तदा देवदमनाख्ये गोवर्धनपर्वते श्रीनाथजीत्यपरपर्यायो भगवान् श्रीकृष्णः श्रीवल्लभाचार्यसंनिधौ स्वयं प्रादुर्भूयात्मानं दर्शयामास। आज्ञापयच्च श्रीवल्लभाचार्यान् यत् प्रवर्तय मदाज्ञां यत् 'सेवया विना नरो न पुष्टिमार्गाधिकारी' इति। स एव पुष्टिमार्गः श्रीवल्लभाचार्यैः प्रवर्तितः। इति परंपरागता प्रथा। श्रीवल्लभाचार्यास्त्रिवारं दिग्विजयान् विधाय तीर्थयात्राप्रसङ्गेन दृष्टस्य भगवतो विठ्ठलनाथस्याज्ञया वाराणस्यां स्वजातीयस्य कस्यचित्सुतां महालक्ष्मीनाम्नीमष्टवर्षां ब्राह्मविवाहविधिना परिणीयाहिताग्नयो ज्योति-ष्टोमादीन् बहुविधान् यज्ञानाहृत्य प्रयागक्षेत्रादनतिदूरे 'अडेल' ग्रामे (अलर्कपुरे) बहुकालमुषितवन्तः। तत्र गोपीनाथविठ्ठलाख्यौ द्वौ सुतौ यथाक्रमं (१५६७ मिते) तथा (१५७२ मिते) विक्र-मार्कसंवत्सरे जन्म लेभाते। तदा सुतयोः पुष्टिमार्गधुरन्धरतां वीक्ष्य संपूर्णगार्हस्थ्याश्रमाः प्रोत्तीर्णाखिलर्णा भगवदाज्ञानुरोधात् सर्वशा-स्त्रसंमतं त्रिदण्डसंन्यासं परिगृह्य गृह्यं बाह्यं चाखिलं तृणाय मन्यमाना-स्तूर्णं वाराणसीमुपव्रज्य १५८७ मिते विक्रमाब्दे आषाढशुक्लद्वितीयायां भगवद्धाम प्रापुः। द्विपञ्चाशतमब्दानि द्वौ मासौ सप्त वासरान् श्रीम-दाचार्यचरणैर्महीतलमलंकृतम्। आचार्यद्वितीयसुतानां श्रीविठ्ठलेशानां सप्त सुताश्चतस्रः कन्याः। तत्र सुताः श्रीगिरिधरादयो भिन्नभिन्नस्थलेषु

आचार्यपीठानि भूषयन्ति स्म । तद्वंशजा अधुनापि तत्तत्पीठमलंकुर्वते । महाराजसंज्ञका एते शिष्यान् अष्टाक्षरपञ्चाक्षरमन्त्रोपदेशेनानुगृह्णन्ति श्रीकृष्णसेवायामभिरताश्च । एतेषां मन्दिरेषु प्रवर्तमानं श्रीकृष्णसेवनं श्रीवैपुल्येन भक्तिश्रद्धाधिक्याच्चातीव रमणीयं दर्शनीयतमं च । कन्यावंशो भट्टसंज्ञया प्रथितस्तत्रैव विद्वद्विभूषणाशुकविश्रीगट्टूलालसंज्ञका जनुर्लेभिरे । एतैर्बहवो ग्रन्था निबद्धाः ।

## श्रीवल्लभाचार्याणां तदनुयायिनां च ग्रन्थाः ।

श्रीवल्लभाचार्यग्रन्थानामयमेकः सामान्यतः परीक्षानिकषोपलो यद्यत्र श्रीपुरुषोत्तमकृता टीका स आचार्यग्रन्थ इति । यथानन्दज्ञानविरचिता यत्र व्याख्या स आद्यशंकराचार्यकृतो ग्रन्थो विज्ञायते । श्रीवल्लभाचार्यप्रणीता ग्रन्था द्विविधाः । महाग्रन्थलघुग्रन्थभेदेन । महाग्रन्थाः—१ अणुभाष्यम् । २ तत्त्वदीपनिबन्धः ३ निबन्धः सप्रकाशः ४ श्रीमद्भागवतसुबोधिनी ५ श्रीमद्भागवतसूक्ष्मटीका ६ पूर्वमीमांसाभाष्यम् ( त्रुटितम् ) । लघुग्रन्थाः—१ पुरुषोत्तमनामसहस्रम् । ( भागवतसंक्षिप्तवर्णनम् ) २ यमुनाष्टकम् । ३ बालबोधः ४ सिद्धान्तमुक्तावली ५ पुष्टिप्रवाहमर्यादाभेदः ६ सिद्धान्तरहस्यम् ७ नवरत्नम् ८ अन्तःकरणप्रबोधः ९ विवेकधैर्याश्रयः १० कृष्णाश्रयः ११ चतुःश्लोकी १२ भक्तिवर्धिनी १३ जलभेदः १४ पञ्च पद्यानि १५ संन्यासनिर्णयः १६ सेवाफलम् १७ सेवाफलविवृतिः १८ परिवृढाष्टकम् १९ पत्रावलम्बनम् २० दशमस्कन्धानुक्रमणी २१ त्रिविधनामावली २२ शिक्षाश्लोका इत्यादयः । श्रीमद्वल्लभाचार्यविरचितश्रीमद्भगवद्गीताभाष्यं नोपलभ्यते कालवशाल्लुप्तमित्यनुमानम् । तथापि श्रुतिगीतासूत्रभागवतसंमेलनरूपतत्त्वदीपनिबन्ध उपोद्घाततया गीतार्थबोधके शास्त्रार्थाख्ये प्रथमप्रकरणे संक्षेपतः प्रमाणादिचतुष्टयोद्देशपूर्वकस्वप्रयत्नोपपादनानन्तरं जडजीवब्रह्मणां स्वरूपं सृष्ट्यादिप्रकाराः सांख्ययोगनिष्कर्षश्च दर्शितः । सर्वार्थनिर्णयाख्ये द्वितीयप्रकरणे प्रमाणप्रमेयफलसाधनपरीक्षणपुरः-

सरं वेदादीनां सर्वेषां तात्पर्यार्थनिर्णयेनासंभावनाविपरीतभावनादोषौ निवारितौ । तृतीयं गीताविस्ताररूपभागवतशास्त्रार्थकथनाख्यं प्रकरणम् । पूर्वं शिष्यधारणसौकर्यार्थं कारिकात्मना प्रारब्धोयं ग्रन्थोध्यापनसमये 'एतस्य विशेषविवरणमवश्यं भवतु' इति माधवभट्टादिभिः सच्छिष्यैर्विज्ञापितत्वादाचार्यैस्तत्त्वप्रकाशो निरमायि । अन्येषामाचार्यग्रन्थानां तात्पर्यं तन्नामत एव ज्ञातुं शक्यम् ।

श्रीमद्वल्लभाचार्याणां प्रथमपुत्रश्रीगोपीनाथजीमहाराजैः साधनदीपकः केचन सेवाश्लोकाश्च निर्मिताः । तेषामेक एव सुतः । तदग्रे वंशो नास्ति ।

आचार्याणां द्वितीयसुताः श्रीविठ्ठलेशा अकब्बरसमकालीनास्तान्मित्रभूताश्च । एतेषां जन्मकालः १५७२ मिते विक्रमसंवत्सरे पौषकृष्णनवमी । लीलाप्रवेशश्च १६४२ विक्रमसंवत्सरे । एतेषां ग्रन्थाः १ अणुभाष्यपूर्तिः २ निबन्धप्रकाशः ३ विद्वन्मण्डनम् ४ शृङ्गाररसमण्डनम् ५ सुबोधिनीटिप्पनी ६ भक्तिहंसः । सुबोधिनीटिप्पनी संशयवंशच्छेद इति नाम्नाप्यभिधीयते । अतोन्येपि बहवो न्यासादेशविवरणादयोपि ग्रन्था वर्तन्ते ।

श्रीमद्विठ्ठलेशानां सप्त सुता आसन्निति प्रागुक्तमेव । तत्तत्सुतवंशे बहवो ग्रन्थकृतः । तन्मध्ये गोकुलनाथजी श्रीवल्लभा वा मालाप्रसङ्गोद्धारकाः । जहांगीरसमानकालीना एते । तथा श्रीहरिरायजीमहाराजाः सहस्रशः स्वल्पग्रन्थानां प्रणेतारः । फलात्मकदैन्यसंपन्नाश्च ।

श्रीकृष्णचन्द्रमहाराजा अपि मान्यपण्डिताः श्रीपुरुषोत्तममहाराजानां गुरुचरणा एते । एतैर्भावप्रकाशिकाख्या सूत्रवृत्तिर्निबद्धा । सा च विद्वन्मान्या ।

श्रीमद्विठ्ठलेश्वरतृतीयसूनुश्रीमद्बालकृष्णतः पुरुषगणनया चतुर्थवंश्यश्रीपीताम्बरगोस्वामिनामात्मजाः श्रीपुरुषोत्तममहाराजाः । एतेषां

जन्म ( १७२४ ) विक्रमसंवत्सरे समभूत्। एतेप्पय्यदीक्षितग्रन्थसमालोचकाः परिनिष्ठितपण्डिताः सर्वतन्त्रस्वतन्त्राः। एतेषां ग्रन्थेषु परमश्रेष्ठो **भाष्यप्रकाशाभिधो** निबन्धः श्रीमदणुभाष्यव्याख्यानरूपः। तत्र प्रत्याधिकरणं सर्वेषां भाष्यकृतां मतपरामर्शः। एतादृशो ग्रन्थः पण्डितैरदृष्टचरः। वयं त्वेतत्कथनेपि न साहसमङ्गीकुर्मो यद्भाष्यप्रकाशप्रणयनेन श्रीपुरुषोत्तममहाराजा जीवातुभूता एव शुद्धाद्वैतमतस्येति। नेदृशाः पण्डिताः शुद्धाद्वैतमतानुयायिषु अद्याप्यवतेरुः। एतद्विरचिता ग्रन्था नवलक्षश्लोकपरिमिताः। एते: १ सुबोधिनीप्रकाशः। २ उपनिषद्दीपिकाः ३ आवरणभङ्गः ४ प्रस्थानरत्नाकरः ५ सुवर्णसूत्रम् ६ षोडशग्रन्थविवृतिः ७ प्रहस्तादिचतुर्विंशतिवादावली। इत्यादयो बहवो ग्रन्थाः पाण्डित्यमदविलोपिसरण्या निबद्धाः सन्ति। एतद्विषये सांप्रदायिकः श्लोकः। श्रीमद्वल्लभदीक्षिताह्वयहरेर्वन्याान्वये सप्तमस्तत्कारुण्यसुधाभिषेकविकसत्सौभाग्यभूमोदयः। दृप्यद्दुर्मदवादिविद्वद्दिभदुष्कूटोक्तिकुम्भस्थलीसद्योभञ्जनकेलिकेसरिपतिः पीताम्बरस्यात्मजः॥ १॥ नासीद्येन समः समस्तनिगमस्मृत्यादितत्त्वार्थविद् वक्ता चाप्रतिमः सदःसु विदुषामद्यापि भूमौ बुधो, यः सर्वं नवलक्षपद्यकमितप्रौढप्रबन्धं व्यधात्स श्रीमान् पुरुषोत्तमो विजयतामाचार्यचूडामणिः॥ २॥ एतेषामखिलं चरितं पुरुषोत्तमदिग्विजयतो द्रष्टव्यम्। ईदृक्षाः पण्डिता मतान्तरेपि विरला एव।

श्रीमुरलीदासगोस्वामिनः। एतेषां ग्रन्थः—भाष्यटीका। एतेषामन्ये ग्रन्थाः केवलं मद्रासकॉलेजपुस्तकालये विद्यन्ते नान्यत्र। निर्भयरामभट्टानां ग्रन्थः—अधिकरणसंग्रहः सुबोधिनीकारिकार्थः अशौचनिर्णयः इति।

श्रीमद्विठ्ठलेश्वरपञ्चमसूनुश्रीमद्रघुनाथवंश्या लेखकृदित्याख्यया सुप्रसिद्धाः श्रीवल्लभगोस्वामिनः। एतज्जन्माष्टादशशतके। एतद्ग्रन्थाः— १ गीतातत्त्वदीपिका २ सुबोधिनीटीका ३ गद्यटीका ४ षोडशग्रन्थविवृतिः। इत्यादयो बहवः।

श्रीविठ्ठलेश्वरद्वितीयसूनुश्रीगोविन्दवंश्याः श्रीयोगिगोपेश्वरसर्वविदः। इमेपि प्रसिद्धाः पण्डिताः। एभिः प्रकाशोपरि रश्मिग्रन्थो निरमायि स च विद्वन्मान्यः। किंचैभिः सुबोधिनीबुभुत्सुबोधिनीभक्तिमार्तण्डादयोपि ग्रन्था निर्मिताः।

श्रीगिरिधरजीमहाराजाः काशीस्थाः। एतद्ग्रन्था बहवः। तत्र भाष्यविवरणं श्रेष्ठम्।

आचार्याणां कन्यावंशो भट्टसंज्ञयाभिधीयते। तत्रापि तत्तद्ग्रन्थानां प्रणेतारो बहवः समभवन् गोष्ठीशालभट्टाः— एतैः कठोपनिषद्भाष्यं विरचितम्। तत्र जयगोपालभट्टानां ग्रन्थाः— १ सेवाफलटीका २ भक्तिवर्धिनी टीका ३ तैत्तिरीयोपनिषद्भाष्यम् ४ संगीतसूत्रभाष्यम्।

लालूभट्टानां ग्रन्थाः— १ अणुभाष्यटीका २ निबन्धटीका ३ सुबोधिनीटीका ४ षोडशग्रन्थटीकाश्च।

व्रजनाथभट्टानां ग्रन्थः—मरीचिकावृत्तिः। अयमपि मान्यग्रन्थः। लालूभट्टाः श्रीपुरुषोत्तममहाराजा वल्लभगोस्वामिनश्च समकालभवाः। आचार्यसुतकन्येतिवंशद्वयाभिन्नानामपि पण्डितानामेतन्मते बहवो ग्रन्थाः सन्ति। तथाहि—इच्छारामभट्टाः ( डाकोर ) एतैः प्रशस्ता भाष्यप्रदीपनाम्नी टीका निर्मिता गुरवे समर्पिता च।

भट्टगट्टूलालजीपण्डितानां ग्रन्थाः— १ वेदान्तचिन्तामणिः २ प्राभञ्जनमारुतशक्तिः ३ सत्सिद्धान्तमार्तण्ड इत्यादयः। श्रीवल्लभाचार्या विष्णुस्वाम्यनुयायि आसन्निति एतेषां महाभागानामतीव निर्बन्ध आसीत्।

पं. मन्नलालशास्त्रिणः। एते विद्वांसः M. A. इत्युपाधिं भूषयन्तोपि नान्यादृशा यतः शुद्धाद्वैतमते निरतिशयश्रद्धासंपन्नास्तन्मतानुयायिसदाचारेणाधुनातनान् सर्वानतिशेरते। मन्ये निखिलभारतेधुना न कोपि पण्डितः शुद्धाद्वैतमतरहस्यवेदितया श्रीमन्नलालशास्त्रिणां साम्यं

लभेतेति निर्दिश्यापि नात्मानमतिशयोक्तिभाजनं करोमीति । एते महाविद्वांसः शुद्धाद्वैतमतग्रन्थान्मुद्राप्य गुर्जरादिभाषासु ताननूद्य न केवलं शुद्धाद्वैतमतानुयायिन उपकुर्वन्ति अपि तु ग्रन्थरत्नादिदृक्षूनन्यानपि । मयाप्युपोद्घातलेखनसमये श्रीमद्वाल्लभमतप्रतिपादनविषये सांप्रदायिकतत्त्वविषयेषु चैतेषां तथैतान्निबद्धशुद्धाद्वैतप्रदीपस्य चातीव साहाय्यमासादितम् । एतेषां ग्रन्थः— शुद्धाद्वैतसिद्धान्तप्रदीपः ( अयं शुद्धाद्वैतमार्तण्डस्योपोद्घातरूपेण निबद्धो गुर्जरभाषायाम् । ) अस्मिन्मते अधुना मूलचंदतेलीवाला B. A. LL. B. एते महाभागाः श्रीमदाचार्यग्रन्थान् सटीकान् ससामग्रीकान् प्रकाश्य मुद्रापयन्ति तेनापि बहूनामुपकारः संपद्यते ।

## श्रीमदणुभाष्यविमर्शः ।

श्रीमद्वल्लभाचार्याणां ग्रन्था उपरि निर्दिष्टाः । तत्र सर्वोत्तमो ग्रन्थोणुभाष्यमेव । एतद्भाष्यम् ' स्थानविशेषात्प्रकाशादिवत् ' ( ब्रह्मसू. ३।२।३४ ) इत्येतत्सूत्रतः प्राक् श्रीवल्लभाचार्यनिर्मितम् । तदग्रे श्रीविठ्ठलेशानां कृतिः । प्राक्तनभाष्येपि ' आनन्दमयाधिकरणे ' द्वितीयवर्णकं श्रीविठ्ठलेशनिर्मितमेव । एतस्यैव टीका चतुर्थाध्यायभाष्यम् । अत एव प्रपञ्चितं चैतदस्माभिरानन्दमयाधिकरणे इति श्रीविठ्ठलेशानामुक्तिः संगच्छते । एवं पितापुत्राभ्यां भाष्यं कृतमित्यत्र प्रकाशकृदुक्तिः प्रमाणम् । तथाहि—इत आरभ्य प्रभूणामिति प्रतिभाति इति स्थानविशेषात्प्रकाशादिवत् ( ब्र. सू. ३।२।३४ ) इति सूत्रे । ' सांप्रतं तु प्रभुचरणैः ' इत्यानन्दमयाधिकरणे ।

अत्रान्तर्गतप्रमाणमप्यस्ति । तथाहि—चतुर्थाध्यायसमाप्तिश्लोके ' भाष्यपुष्पाञ्जलिः श्रीमदाचार्यचरणाम्बुजे । निवेदितस्तेन तुष्टा भवन्तु मयि ते सदा ॥ १ ॥ ' इत्यत्रायं भाष्यपुष्पाञ्जलिः श्रीमदाचार्यचरणाम्बुजे निवेदित इति निर्देशेन श्रीविठ्ठलेशैर्भाष्यं निर्माय श्रीमदाचार्यपदबोधितश्रीवल्लभाचार्यचरणयोः समर्पितमिति प्रतीयते ।

ततश्च पूर्वोक्तमतं दृढं भवति । अत्राचार्यचरणाम्बुज इत्यनेन व्यासाचा-

...नुज गृह्यत इति कश्चित्। एवंच श्रीविठ्ठलेशकृतभाष्ये 'अस्मा-भिरुक्तम्' इति यदा निर्देशस्तदा स सुबोधिनीस्थो ज्ञेयः। एवंच—अस्माभिरित्यस्यार्थोऽस्मत्पितृभिरिति। 'विद्वन्मण्डने' इति निर्देशो भाष्ये यत्रास्ति तत्र 'अस्माभिः मया' इत्यादि किमपि न लिखितम्। विद्वन्मण्डनं श्रीविठ्ठलेशकृतमिति पूर्वं निर्दिष्टमेव।

पितापुत्रभाष्यगतं वैलक्षण्यम्—तृतीयाध्यायमारभ्याध्यायादौ श्लोकाः सन्ति। श्रीवल्लभाचार्यकृतभाष्ये प्रथमद्वितीयाध्यायादौ तथा श्लोका न वर्तन्ते। श्रीविठ्ठलेशकृतभाष्ये बाणभट्टकृतकादम्बरीवत् दीर्घ-समासबाहुल्यम्। श्रीवल्लभाचार्यकृते पूर्वस्मिन् भाष्ये तु न तथा। श्रीविठ्ठले-शकृतभाष्येऽन्यवादिष्वल्पीयांसोऽभिशापाः। पूर्वभाष्ये तु बहुशोऽभिशापाः सन्ति। श्रीवल्लभाचार्यभाष्ये बहवः संहिताब्राह्मणसूत्रनिर्देशाः। श्री-विठ्ठलेशभाष्ये त्वल्पीयांसः। प्रसिद्धतमानामीशावास्याद्युपनिषदां निर्देशाः पूर्वस्मिन् भाष्ये। श्रीविठ्ठलेशभाष्ये तु गोपालतापिन्याद्युपनिषदां बहवो निर्देशाः।

अतःपरं संपूर्णभाष्यविषयकमुच्यते। अस्मिन् भाष्ये पूर्वभाष्यकृ-दुक्ते विषये न किमपि लिख्यते केवलमनभिमतं तदुक्तं खण्ड्यते तेनैत-द्भाष्यलापनसमये मध्ये मध्येऽध्याहारापेक्षा भवति। श्रीवल्लभाचार्याणाम-न्यदेकं श्रीमद्भाष्यमस्ति तन्मध्यस्थोऽल्पीयान् भागोऽधुनोपलभ्यते। तस्य श्रीमद्भाष्यस्य संक्षेपभूतमिदं भाष्यम्। अतोऽप्यध्याहारापेक्षा भवति। ते चाध्याहारा बालप्रबोधिन्यां तत्तत्स्थले प्रदर्शिता एव। पूर्वोक्तश्रीम-द्भाष्यमनुसृत्यैव भावप्रकाशाख्या वृत्तिर्वर्तते। अन्यच्च-श्रीमद्भाष्ये शंक-राचार्यादीनां पूर्वभाष्यकृतां समीक्षा कृतास्ति सैव श्रीपुरुषोत्तमकृतप्रकाश उद्लेखीति सांप्रदायिकाः। अणुभाष्यमिति नाम्नापि संक्षेपभूतं भाष्यमिद-मित्यनुमीयते।

भाष्यमिदं पाण्डित्येन शास्त्रीयकौशलेन चातिशेते ग्रन्थान्त-राणि। तेन सर्वशास्त्रनदीष्णा एते भाष्यकारा इति निर्विवादम्। महा-

भाष्ये पातञ्जले श्रीवल्लभाचार्याणां विशेषतो रुचिरिति प्रतीयते तदु-क्तिभिः । तथाहि— तत्त्वदीपनिर्णयस्थद्वितीयप्रकरणगत १५० तम-श्लोकव्याख्यायां 'सूपः कूपो यूप' इत्यत्र वर्णानां तुल्यत्वेपीति पातञ्जल-भाष्यप्रथमाध्यायतृतीयाह्निकगतोक्तिः ।

अस्मिन्भाष्ये श्रीमद्भागवताक्षरानुपूर्वी अर्थानुरोधात् स्वरूपत एव समाद्रियते । तथाहि— 'अर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्क-शास्त्रकलिलान्तःकरणाश्रयदुरवग्रहवादिनां विवादानवसरे ' इति श्रीमद्भा-गवतषष्ठस्कन्धनवमाध्यायस्थं ३६ षट्त्रिंशन्मितं गद्यं ' श्रुतेस्तु शब्दमूल-त्वात्' ( ब्र. सू. २।१।२७ ) इति सूत्रे भाष्ये गृह्यते ।

## वेदश्रद्धा ।

अस्मिन् भाष्ये यद्यपि पुष्टिभक्तिमाहात्म्यमतीव वर्णितं तथापि वेदविषये भाष्यकृतां निरतिशया श्रद्धा। वेदस्याक्षरमप्यन्यार्थकमर्थ-वादार्थकं वा नाङ्गीकुर्वन्ति श्रीवल्लभाचार्याः । यद्यप्यर्थवादपरता वेदस्य जैमिनिनये स्वीकृता। अन्यैश्चाचार्यैस्तथा स्वीकृता तथापि सर्वत्राना-श्वासभिया भाष्यकृत एते तथा नानुमन्वते ।

वेदवाक्यविषयकसंदेहनिराकरणार्थं श्रीमद्भागवतवाक्यान्यादरणी-यानीत्येषां मतम् । तथा चोक्तम्— वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि । समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम् ॥ उत्तरं पूर्वसंदेह-वारकं परिकीर्तितम् । ननु चतुर्णां क्वोपयोगः । एकेनैव चरितार्थत्वादि-त्याशङ्क्याह-उत्तरमिति । उत्तरोत्तरं पूर्वपूर्वस्य संदेहवारकं प्रकर्षेण कीर्तितम् । यथा—अपाणिपादो जवनो ग्रहीतेत्यत्र । किं प्राकृतपाणि-पादरहितं ब्रह्म । आहोस्वित् सामान्यनिषेधः। इति संदेहे सर्वतः पाणि-पादान्तमित्यादिगीतावाक्यं निर्णायकम् । तथा गीतायां-नित्यः सर्वगतः स्थाणुः । ममैवांशो जीवलोके । इत्यादिषु संदेहे ' उत्क्रान्तिगत्यागतीनाः' इत्यादिसूत्रैर्निर्णयः । तथा ' जन्माद्यस्य यतः ' इति सूत्रसंदेहे 'अन्वय-

व्यतिरेकतः' इति भागवतेन निर्णयः ॥ ७।८ ॥ वेदा इति। शब्द एव प्रमाणम्। तत्राप्यलौकिकज्ञापकमेव। तत् स्वतःसिद्धप्रमाणभावं प्रमाणम्। वेदाः सर्व एव काण्डद्वयस्थिताः। अर्थवादादिरूपा अपि। स्मृतित्वेन कृष्णवाक्यानि वेदत्वेपि पृथगुक्तानि। व्याससूत्राणि चकाराज्जैमिनिसूत्राणि च। एवकारेण व्याससूत्राविरोधेनैव तदङ्गीकरणम्। हि युक्तश्चायमर्थः। उपजीव्यत्वात्। व्यासस्य समाधिभाषा-भागवतम्। तत्रापि यत्र लौकिकरीत्या वदति। यथा 'अथोषस्युपवृत्तायामित्यादिनापि परमतरीत्या 'श्रुतं द्वैपायनमुखात्' इत्यादि। यावत्समाधौ स्वयमनुभूय निरूपितं सा समाधिभाषा। एतच्चतुष्टयमेकवाक्यतापन्नं प्रमाजनकमित्यर्थः। (तत्त्वदीपनिबन्धः प्र. १ श्लो. ७।८) एतैर्निबन्धवाक्यैः श्रीवल्लभाचार्यैरेतदपि स्पष्टीक्रियते यद् वेदाः पूर्वोत्तरकाण्डगताः प्रमाणम्। परमेतत् सुधीभिर्विवेच्यम्। यतो यथा पूर्वकाण्डगतवेदा अध्वरादिकर्मणि प्रमाणम्। तथा आत्मनिरूपणाविषये उत्तरकाण्डगता वेदा उपनिषद्रूपाः प्रमाणमिति सर्वसंमतः पन्थाः। अन्याचार्यवत् उपक्रमोपसंहारबलान्मीमांसाभिमततया स एवादरणीयः। तथापि श्रीवल्लभाचार्यैर्भाष्ये पूर्वोक्तव्यवस्थामनङ्गीकृत्य तत्र तत्रोपनिषत्प्रमाणसाहचर्येण पूर्वकाण्डगतवाक्यान्यपि प्रमाणत्वेनादृतानि। किंच पूर्वकाण्डगता मन्त्रा गोकुलादिवर्णनपरतयापि श्रीविठ्ठलेशैर्लापिताः। तथाहि-ता वां वास्तूनीति मन्त्रः (४।२।१५) इति सूत्रे भाष्ये गोकुलवर्णनपरतया निर्दिष्टः। तथाच तत्रत्यं भाष्यम्—'उक्तानि वस्तूनि परे प्रकृतिकालाद्यतीते वैकुण्ठादप्युत्कृष्टे श्रीगोकुल एव सन्तीति शेषः। तत्र प्रमाणमाह। तथा ह्याह श्रुतिः। ऋग्वेदे पठ्यते। ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि ॥ (द्वितीयाष्टकद्वितीयानुवाकचतुर्विंशवर्गे षष्ठी ऋक्) ता तानि वां भगवत्तदन्तरङ्गभक्तयोः संबन्धीनि वास्तूनि वस्तूनि गमध्यै प्राप्तुमुष्मासि कामयामहे तानि कानीत्याकाङ्क्षायां गूढाभिसंधिमुद्घाटयति यत्र श्रीगोकुले गावो भूरिशृङ्गा बहुशृङ्गा रुरुप्रभृतयो मृगाश्च वसन्तीति शेषः। अयासः

शुभावहाः। तत उक्तगुणविशिष्टम् उरु गीयते इत्युरुगायस्तस्य। गोप्यो हि सततं तं गायन्ति। अत एव तदादिभक्तेषु कामान् वर्षतीति वृषा तस्य परमं प्रकृतिकालाद्यतीतं पदं स्थानं भगवतो वैकुण्ठं भवति। तत्रैतादृशलीलाभावेन तस्मादपि परममुत्कृष्टमत्र भूमाववभाति प्रकाशत इत्यर्थः। तथापि स्वदृग्गोचरो न भवतीति खेदेन अत्राहेत्याह श्रुतिरुरु गीयते परं सर्वत्र कामवर्षणं भक्तेष्वत्रैवेति तात्पर्येण वा विशेषणद्वय-मुक्तम्। यमुनापुलिनतदुपवननिकुञ्जगह्वरप्रदेशाद्रिसान्वाद्यात्मकत्वेन भूरि बहुरूपं तथा चैतादृशम्। यत्परमपदमवभाति तत्संबन्धीनि वास्तूनि कामयामहे इति वाक्यार्थः संपद्यते।' एवमर्थः कृतः। इयमृक् वैष्णवी यूपावधाने विनियुक्ता सोमातिरेकशस्त्रे च। तत्र गोकुलवर्णनस्य प्रसङ्ग एव नास्ति। सायनभाष्येपि सा गोकुलार्थपरतया न व्याख्यायते। तथाहि-हे पत्नीयजमानौ वां युष्मदर्थं ता तानि गन्तव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि गमध्यै युवयोर्गमनाय उश्मसि कामयामहे तदर्थं विष्णुं प्रार्थयाम इत्यर्थः। तानीत्युक्तं कानीत्याह—यत्र येषु वास्तुषु गावो रश्मयो भूरिशृङ्गा अत्यन्तोन्नत्युपेताः बहुभिरा-श्रयणीया वा अयासः अयना गन्तारोतिविस्तृताः। यद्वा अयासः गन्तारोतादृशा अत्यन्तप्रकाशयुक्ता इत्यर्थः। अत्राह—अत्र खलु वास्त्वाधार-भूते द्युलोके उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य वृष्णः कामानां वर्षितुर्विष्णोस्तत्तादृशं सर्वत्र पुराणादिषु गन्तव्यत्वेन प्रसिद्धं परमं निरतिशयं पदं स्थानं भूरि अतिप्रभूतम् अवभाति स्वमहिम्ना स्फुरति। इति। एवं चैतात्सिद्धम्—यत्पूर्वकाण्डगतमन्त्राणां ज्ञानकाण्ड उपयोगः अन्यार्थकरणं च प्रकरणाननुरोधित्वेन विचार्यम्।

तथैव तत्तदधिकरणगतसूत्रसंख्यामादाय किंचित्कारणप्रदर्शन-मत्र भाष्ये प्रदर्शितम्। तथाहि—आनन्दमयाधिकरणे 'अष्टसूत्राणि किमर्थ' मिति प्रश्नस्योत्तरार्थकतया 'षडिन्द्रियस्वरूपद्वयानन्दभेदेनानन्दस्याष्ट-विधत्वादष्ट सूत्राणि' इत्युक्तम्। एतत्संख्याविषयकल्पिकरणं शतपथब्रा-ह्मणादिषु बहुशो दृश्यते परं सूत्रविषये तादृशक्लृप्तिस्वीकारो न दृष्टचरो

युक्तिसहोऽपि । यतः पूर्वं सूत्राण्यविभागेनासन् । सूत्रविभागो भाष्यकृत्कल्पितः । एतच्च तैस्तैराचार्यैर्भिन्नविभागपूर्वकं सूत्राणि व्याख्यातानि ततो ज्ञायते । तथाहि— जन्माद्यस्य यतः शास्त्रयोनित्वात् १।१।२ इत्यभिन्नमेव सूत्रं श्रीवल्लभाचार्याणां मते । अन्याचार्याणां मते तत्र सूत्रद्वयम् । अत एव श्रीवल्लभाचार्याणां मते त्रिसूत्री । अन्याचार्याणां मते चतुःसूत्री । इति । ततश्च स्वयं सूत्रविभागं कृत्वा तत्संख्यया सूत्रकृतामयमभिप्रायः 'एतावत्सूत्रयुक्ताधिकरणग्रहणे' इति कथनं कथंकारं युक्तिसहं भवेत् ।

एतद्भाष्ये यद्यपि स्वमतेन सूत्राणि लापितानि तथापि मायावादिखण्डने श्रीवल्लभाचार्याणामतीव निर्बन्धः । तेनाकाण्डेऽपि तन्मतं खण्डयन्ति । यद्यपि तत्तत्स्थलेषु शतशो मायावादिनामाक्षेपाः सन्ति तथापि 'उभयथाच दोषात्' (ब्र. सू. २।२।२३ ) इति सूत्रे बौद्धमतखण्डनप्रतिज्ञाकरणाद् बौद्धमतखण्डनप्रसंगेऽपि मायावादिमतं खण्ड्यतया निर्दिष्टं 'क्षणिकवादिनो मिथ्यावादिनश्च मन्यन्ते' इत्यादिना ।

निखिलशास्त्रपारंगमानां वैयाकरणधुरीणानामपि श्रीवल्लभाचार्याणां भाष्ये 'गुहां प्रविष्टौ' ( १।२।११ ) इत्यादिसूत्रे विद्वदविद्वतोरिति प्रयोगः किंचिदिव वैयाकरणानां वैरस्यमुत्पादयेत् । अयमधुनातनोऽपपाठ इत्यपि वक्तुमशक्यम् । यतः प्रकाशकृद्भिः श्रीपुरुषोत्तममहाराजैस्तस्य पाठस्य सिद्धये बहु प्रयतितम् । तद्विषये बालप्रबोधिन्यां भूयान् विचारः । स च तत एवावगन्तव्यः । एतन्मते ज्ञानभक्त्योस्तारतम्यमन्यादृशम् । ज्ञानं सर्षपवत् । भक्तिः स्वर्णाचलसदृशी । तथाचोक्तम्—३–३–३७ सूत्रे २ भाष्ये—सर्षपस्वर्णाचलयोरिव ज्ञानभक्त्योस्तारतम्यं कथं वर्णनीयमिति भाव इति ।

शास्त्रान्तरविषये श्रीवल्लभाचार्याणां मतम्— पुराणन्यायमीमांसेत्यत्रवाक्ये न्यायशब्देन नीतिशास्त्रं ग्राह्यं नतु अक्षपादविरचितम् । तथाचोक्तं तत्त्वदीपे २–८३ इत्यत्र । न्यायस्तु नीतिशास्त्रं हि तर्को मीमांसया

युक्तः । मोहार्थान्यन्यशास्त्राणि कृत्वे कृष्णे तदिच्छया । वेदार्थैः कल्पितान्येव तदुक्तं सर्वथा मृषा ॥ व्याख्यातं च स्फुटम् । पुराणन्यायेत्यत्र सांप्रतमक्षपादविरचितं धर्मोपयोगि भविष्यतीत्याशङ्क्य समाधानमुखेनैव तदेवाह— न्यायस्त्विति । पुराणन्यायेत्यत्र नीतिशास्त्रमेव न्यायशब्देनोच्यते । नतु लोके प्रसिद्धम् । यस्तर्केणानुसंधत्त इत्यत्र तर्कशब्दो वेदानुकूलतर्कवाचकमीमांसापरः । अन्यानि काणादादिशास्त्राणि मोहार्थान्येव । अतस्तन्नादरणीयमित्यर्थः । कणादाद्याहृतः प्रागभावो नाभिमन्यते तथाच सप्रकाशतत्त्वदीपे २—११६ इत्यत्र अपृथग्विधमानत्वान्न धर्मैराधिको गणः । व्याख्यातं च प्रागभावः कारणावस्थातो नातिरिच्यते तस्य भिन्नकारणकल्पनायां मानाभावात् । आग्रिमजननज्ञानेनैव तस्यानुभवः । अन्यथात्यन्ताभाव एव स्यात् । काव्यविषये श्रीवल्लभाचार्याणां मतम् । काव्यादीनामनन्यज्ञानोपयोगः कथंचन ॥ ( तत्त्वदीप १—८० ) अन्याचार्यवदेव श्रीवल्लभाचार्याणामपि मते मन्वादिस्मृतीनां प्रामाण्यं वेदाविरोधेनैव ।

संन्यासविषये श्रीवल्लभाचार्याणां मतम् । तत्कृतसंन्यासनिर्णये । कलिदोषात्कर्ममार्गे ज्ञानमार्गे च संन्यासो न कर्तव्यः । भक्तिमार्गे तु कर्तव्यः । इति ।

कर्मज्ञानमार्गापेक्षया भक्तिमार्गे श्रीवल्लभाचार्याणां विशेषतः पक्षपातः । एतन्मते भगवत्प्रमाणानुरोधित्वं भक्त्येकलभ्यत्वं च विशेषतो दृश्यते । यद्यपि वैदिककर्मविषयिणी श्रद्धा तेषामानुवंशिकी स्वयं च वैदिककर्मनिष्ठाः सोमयाजिनश्च आहृतास्तथापि तदानीन्तनराजकीयस्थितिं लौकिकानां वैदिककर्मस्वनादरं च वीक्ष्य भक्तिमार्गो विशेषतः प्रचारितस्तैरिति तद्ग्रन्थत एव ज्ञायते तथाच—तत्त्वदीपे सर्वनिर्णयप्रकरणे— अशुद्ध तु कलौ सर्वं विनष्टाचारतत्पराः । स्वाध्यायादिविनिर्मुक्ता [illegible] ॥ २१२ ॥ क्रियमाणं तथा चान्नं विधिहीनं प्रकुर्वते । विधि[illegible] प्राप्य विरोधाय [illegible] ॥ २१३ ॥ तत्त्वमार्गः ततो

दुष्टास्तत्र धर्मः कथं भवेत् । षड्भिः संपद्यते धर्मस्ते दुर्लभतराः कलौ ॥ २१४ ॥ अथापि धर्ममार्गेण स्थित्वा कृष्णं भजेत्सदा । श्रीभागवतधर्मेण स कथंचित्तरिष्यति ॥ २१५ ॥ श्रीवल्लभाचार्यसमये या च राजकीयपरिस्थितिस्तद्विषये तेलीवालामहाभागैः पुष्टिप्रवाहमर्यादाया आङ्ग्ल प्रस्तावनायां बहु लिखितं तत्तत एवावगन्तव्यम् ।

अणुभाष्यपाठविषये यद्वक्तव्यं तद्विस्तरशो मया पूर्वभागप्रस्तावनायामाङ्ग्लभाषामय्यां स्फुटमुक्तम् ।

## बालप्रबोधिनी ।

पूर्वाः प्रकाशविवरणप्रदीपाख्या व्याख्या विद्यन्तेत्र भाष्ये । ताश्च वैदुष्यघटिता विस्तृताश्च । परमल्पज्ञैस्ता दुरवगमास्ततः इयं बालप्रबोधिनी व्याख्या मयाल्पमतिनापि प्रकाशाद्यनुयायिना बालबोधार्थं संग्रथिता । एतस्यां प्रकाशादिगता एवार्थाः सुगमभाषया निबद्धाः । पूर्वोक्तटीकात्रयादतिरिक्तं टीकाद्वयमप्युपलभ्यते । तदुपयोगोपि कुत्रचिदङ्गीकृतः । तत्रैका लालूभट्टटीका अपूर्णा । अन्या च तृतीयाध्यायद्वितीयपादात्मिका । तदन्त एवं निर्देशः । श्रीमद्धरिवागीशसूनुश्रीमद्विठ्ठलनाथचरणचन्द्रचन्द्रिका निरस्तसमस्ताज्ञानहृदयध्वान्तगोस्वामिश्रीरघुनाथात्मजव्रजनाथविरचितायामणुभाष्यटीकायामित्यादि । प्रस्तावनायां मया पूर्वं साविस्तरं वाल्लभमतं प्रदर्शितं तच्च शुद्धाद्वैतप्रदीपतो विशेषतः संगृहीतम् । ततो मतान्तरतुलनासौकर्याय शाङ्कररामानुजमाध्वमतानि दर्शितानि । ततश्चतुर्णां सालक्षण्यवैलक्षण्ये प्रदर्शिते । ततः श्रीवल्लभाचार्यचरितम् । ततस्तेषां ग्रन्थाः । ततस्तदनुयायिनां विदुषां चाल्पशो ग्रन्थपरिचयः । ततोणुभाष्यविमर्शः । एवं बालप्रबोधिन्यां व्याख्यायां प्रस्तावनायां चासीद् बहूनां पण्डितानां तथा तद्ग्रन्थानां च साहाय्यं तदर्थं तदुपकारभरान् सदा धारये । अत्र विशेषतो निर्देशार्हाः सुगृहीतनामधेयश्रीबेलवलकर ( डॉ. श्रीपाद कृष्ण बेलवलकर एम्. ए. पी. एच्. डी. ) प्रभृतयः ।

अयत्वे शुद्धाद्वैतमतजीवातुभूताः सरलस्वान्ताः शास्त्रिमग्नलालमहोदयाः पण्डिता एम्.ए. पदवीभूषणभूताः साहाय्येन तत्तत्कर्मणि मामन्वग्रहीषुरिति निवेदने मे परमः प्रमोदः । यत एभिः कालव्ययं कार्यान्तरातिपातं चाविगणय्य मुक्तकण्ठं साहाय्यमाचरितम् । तदेतेषां भूयो भूयोनुग्रहभरान् सदा धारयाम्यृणित्वेन । संप्रार्थये च सर्वविदुषः यत्तैः प्रस्तावनागतं टीकागतं च स्खलितं ज्ञापयित्वानुग्राह्योयं जन इति । अतः परं सर्वविद्येशान ईशानः प्रसीदतु कृत्यानयेति साशिरःपातं यथाशक्ति प्रणम्य विरम्यत इति शम् ।

पुण्यपत्तने
पौष कृ. ५ इन्दौ
१८४७ मिते शाके } विद्वद्वशंवदेन पाठकोपाव्हश्रीधरशर्मणा ।

॥ श्रीः ॥

॥ श्रीकृष्णाय नमः ॥

# श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्या ।

# बालबोधिनी ।

## अथातो ब्रह्मजिज्ञासा १ । १ । १ ।

मनोज्ञवनमालिकारुचिरपीनवक्षस्थलं
कलैर्मुरलिकारवैः समनुहूतगोगोपिकम् ।
सनीरघनसुन्दरं चतुरराधिकाराधितं
स्मरामि सततं मुदा किमपि धाम कृष्णाभिधम् ॥ १ ॥
प्राचीनैः पुरुषोत्तमप्रभृतिभिः पण्डावदग्रेसरै-
र्भाष्यार्था विशदीकृता विवृतिभिर्गूढाः प्रकाशादिभिः ।
तानर्थाननतिश्रमेण रुचिराञ्जानन्तु बाला इति
टीका संग्रथिता मयार्थविशदा श्रीबालबोधिन्यसौ ॥ २ ॥
माता यस्य सरस्वती भुवि सतीमूर्धन्यभूषामणिः ।
तातस्त्र्यम्बकपादपूजनरतः श्रीत्र्यम्बकाख्यः सुधीः ॥
लब्धं येन जनुश्च पाठककुले शाण्डिल्यगोत्रे मुदा ।
तेन श्रीधरशर्मणा शिवपदं टीकासुमेनार्च्यते ॥ ३ ॥

अथ श्रीवल्लभाचार्या बादरायणसूत्राणि व्याचिकीर्षवः शिष्टाचारानुमितश्रुतिबोधितं मङ्गलं कर्तव्यमपि सूत्रगतेनाथशब्देनैव तस्य गतार्थत्वं मन्यमानाः श्रीमद्व्याससूत्रेणैव भाष्यमारभन्ते । भाष्यलक्षणं च—

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥

इति ।

अथातो ब्रह्मजिज्ञासेतिसूत्रं न ब्रह्मविचारप्रतिज्ञामात्रं तथा चेदधिकारिसंबन्धविषयप्रयोजनानां निरूपणाभावाच्छास्त्रारम्भो न समर्थितो भवेत् । तेन च शास्त्रप्रवृत्ताववश्यमपेक्ष्यमाणा या संगतिः सा निरूपयितुमशक्या भवेत्ततश्च प्रेक्षावत्प्रवृत्त्यभावेन शास्त्रारम्भो निष्फलः स्यात् । किं च शास्त्रस्य वैधत्वविचारमन्तरा वेदान्तानुपयुक्तत्वं प्रामाणिकैरग्राह्यत्वं च प्रसज्येत तदर्थं भगवान् बादरायण इदमधिकरणरूपं प्रथमं सूत्रं प्राणैष्ट । अधिकरणलक्षणं च—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
संगतिश्चेति पञ्चाङ्गं शास्त्रेधिकरणं स्मृतम् ॥

**१—३ इदमिति** । इदं वक्ष्यमाणं वेदान्तानां विचार इत्यादि । **अत्र**–उपोद्घाते । **विचार्यते**–चिन्त्यते । **वेदान्तानाम्**–उपनिषद्वाक्यानाम् । **पूर्वपक्षमुत्थापयन्ति**–**किमित्यादिना** ।

—४ **कुत इति** । प्रतिवादिप्रश्नोयम् । तदाशयश्चायं–वेदान्तविज्ञानसुनिश्चितार्थाः–इति श्रुत्यार्थनिश्चयं प्रति वेदान्तविज्ञानं कारणत्वेन बोधितं तच्च विवरणेन विना दुष्प्रापमतो विचारो नारम्भणीय इति कथं ब्रवीषीति । ततः पूर्वपक्षिणा प्रोच्यते वेदान्तविज्ञानान्यथानुपपत्त्या त्वया वेदान्तविचारस्यावश्यकत्वं द्योत्यं परं प्रत्यक्षं विचारे विधिर्नास्ति यथा–स्वाध्यायोऽध्येतव्यः–इत्यध्ययनविधिः । क्व च विधिरस्तीति कारिकया कथयन्ति । कारिकार्थश्च शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषामिति षडङ्गानि तैः सहितो वेद ऋग्वेदादिरध्येयस्तथा ज्ञेयश्चार्थतः । अर्थसाधनं शब्दा एव । यतस्त एव बोधकाः । केवलं शब्दोच्चारणसमय आपाततोर्थज्ञाने सत्यपि निःसंशयं तेषामर्थाः शक्तिग्रहद्वारा लौकिकशब्दार्थवद् व्याकरणेन स्पष्टा भवन्ति । व्याकरणं निरुक्तकोशादीनामुपलक्षणम् ।

शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥

इत्युक्तेः ।

—७ कारिकोक्तं विशदयन्ति–**अर्थज्ञानार्थमित्यादिना** । अर्थज्ञानार्थं विचारस्यापेक्षा । स चार्थो ब्रह्मरूपोतस्तज्ज्ञाने मोक्षरूपः पुरुषार्थो भविष्यतीति न ज्ञेयं यतो विचारेण विनापि साङ्गवेदाध्ययनादर्थः प्रतीयेत ।

—९ नन्वर्थज्ञानं न विधीयते, अविचारिताश्च शब्दा नार्थं बोधयन्तीति चेन्न ज्ञेयश्चेत्यनेनार्थज्ञानस्यापि विहितत्वात् । इतीममर्थं शङ्कासमाधानाभ्यां कथयन्ति ।

—११ तदर्थं बाधकं शिक्षावाक्यं प्रमाणयन्ति–**गीतीत्यादि** । **गीती**–लौकिकगायनस्वरेण वेदपाठकः । **शीघ्री**–अतित्वरया वेदाभ्यसनशीलः । **शिरःकम्पी**–लीलया यः शिरः कम्पयति । **लिखितपाठकः**–अर्थज्ञानविधुरं गुरुशिक्षाविधुरं, च पुस्तकलिखितं पठति यः । **अल्पकण्ठः**–बाह्याभ्यन्तरप्रयतनापेक्षितकण्ठविकासरहितः । एते षडधमा वेदस्य पाठकाः ।

—१४ **बाधोपलब्धिरिति** । बाधकप्रमाणमुपलभ्यत इत्यर्थः । **शब्द इति** । चक्षुरादीन्द्रियम् आन्ध्यदूरस्थत्वादिदोषेण यथा संशयास्पदमर्थं बोधयत्येवं शब्दो न संदिग्धार्थस्य प्रतिपादकः । **तदर्थश्चेति** । शब्दार्थो लौकिकवाक्यवद्वैदिकवाक्येपि व्याकरणादिना निश्चयेन ज्ञायते ।

—१६ तद्विरुद्धं-व्याकरणादिविरुद्धम्। तथा च व्याकरणादिप्रमाणाभावपूर्वकेर्थे गृहीतिप्रामाण्यं प्रसज्येत। पूर्वपक्षं निगमयन्ति-तस्मादिति।

—१८ वेदार्थज्ञानस्य कृते विचारस्य नावश्यकतेत्यर्थः। अतः परमेकदेशिनो मतं द्योतयन्ति। **स्यादेतदित्यादिना**। अयं भावः। केवलं वेदार्थज्ञानाय विचारो न किंतु ब्रह्मणो ज्ञानाय। ब्रह्मण आत्मनश्चाभेदः। तद्ब्रह्म अविद्ययावच्छिन्नम्। सा चाविद्या देहात्मभावं दृढं प्रत्याययति। देहात्मभावातिरिक्तं ब्रह्म तु नोपलभ्यते। न च वेदमात्रादसंभावनां निवर्तयज्ज्ञानं संभवेत्।

२—२ न केवलं ज्ञानासंभव एव प्रत्युतानिष्टमपीत्याहुः-**प्रत्युतेति**। वैपरीत्येनोत्पद्यमानं ज्ञानं देहात्मभावं दृढं प्रत्याययेत् तेन वेदो लाक्षणिकार्थबोधको वार्थवादरूपो वेति कल्पना प्रसज्येत। अत्रेदमाकूतम्। शक्यार्थबाधे तात्पर्यार्थबाधे वा लक्षणा भवति। एवं च वेदस्य मुख्योर्थो बाधितः स्यात्। तथा चार्थवादो निन्दास्तुत्यात्मकः केवलं स्वेतरमर्थान्निन्दासमये तादितरस्य स्तुतिं स्तुतिसमये च तादितरस्य निन्दां बोधयति। एवंरीत्या स्वार्थे प्रमाणम्।

—३ एवं प्रतिपादितमेकदेशिमतं पूर्वपक्षी खण्डयति-**मैवमित्यादिना**। **अलौकिक इति**। अलौकिकत्वाद्वेदार्थः केवलयुक्त्या न प्राप्यते। किंतु तपसा वैदिकयुक्त्या परमात्मप्रसादाच्च लभ्यते।

—७ **ब्रह्म पुनरिति**। **वेदान्तेषु**-उपनिषत्सु। वेदाविरोधेनाणुमात्रमप्यन्यथाकल्पना चेत् श्रोतुर्वक्तुश्च दोषः प्रसज्येत। तत्र श्रोतुर्दोषो-योन्यथा सन्तमित्यादिश्रुत्या। वक्तुश्च-नैषा तर्केणेत्यादिश्रुत्या च दर्शयन्ति।

—९ यथाक्रमं श्रुत्यांरर्थश्च। अन्यथा वर्तमानमात्मरूपमर्थमन्यथा संभावयन्नरश्चौरवदखिलपापकारी। इयं मतिस्तर्केण वेदाविरुद्धेन केवलेन वा नापनेया न लम्भनीया।

—१२ परस्परविरुद्धानामुपनिषन्मन्त्राणां संभवात्तन्निश्चयार्थं विचारस्यावश्यकता स्यादिति चेन्न। द्विविधानामपि वेदान्तानां प्रामाणिकत्वेनादरणीयत्वादेकतरानिश्चयस्याशक्यत्वादचिन्त्यब्रह्माणि विरोधासंभवाच्चेत्यर्थं **नचे**त्यादिना **विरोधाभावाच्चे**त्यन्तेन ग्रन्थेन दर्शयन्ति। **अचिन्त्यानन्तशक्तिमतीति**। परास्य शक्तिर्विविधैव श्रूयते-इति श्रुत्यास्य परब्रह्मणोचिन्त्या अनन्ताश्च शक्तयः सन्ति।

—१४ तत्र प्रमाणमाहुः—**अत एवेति**। **उपनिषत्सु**-तैत्तिरीयच्छान्दाग्यादिषु। **तत्तदुपाख्याने**-भृग्वादिष्विन्द्रादिकथासु च। बोधाभावेत्यन्तमज्ञाने। **औपाधिकबोधे**-उपाधावेव ब्रह्मबुद्धौ च।

–१५ न च–तप आलोचने–इति पाणिनिस्मरणात्तपःशब्दार्थो विचार एवेति वाच्यम् । उपसन्नस्य शिष्यस्य केवलविचारेणाधिकज्ञानप्राप्तेरभावात्तथार्थकरणस्यासांगत्यात् । इममर्थं पूर्वोत्तरपदाभ्यां द्योतयन्ति । अयं भावः । पूर्वं शिष्यः सद्गुरुं ब्रह्मनिष्ठं ज्ञानबुद्ध्योपसन्नः स च गुरुस्तं विचारं कुर्विति केवलं भूयो भूयो बोधयेत्तर्हि तेन गुरुणा न कोपि विशेषः साधितः स्यात् । किं च निष्कृपत्वं गुरोः प्रकटितं भवेत् ।

**–१६ न चोपाख्यानानामिति** । अर्थवादरूपत्वादुपाख्यानानि मिथ्याभूतानीत्यपि वक्तुं न शक्यते । एवं चेत्सर्वेष्वप्युपाख्यानेष्वसत्यता प्रसज्येत । तच्चानिष्टं यतः सर्वेषां· ब्रह्मस्वरूपादिष्वविश्वासः प्रसज्येत सर्व एव वेद उच्छिन्नः स्यात् । तदाह–**नहीत्यादिना** ।

–१९ **तस्मादिति** । **वैदिकानां**–अर्थज्ञानपूर्वकमबाधितो वेदार्थ इति दृढश्रद्धावतां न केवलशब्दग्रहणवताम् । **विरुद्धार्थकल्पना**–वेदो विरुद्धार्थं द्योतयतीति कल्पना । **विद्यास्विति** । **तदश्रुतेः**–विचारस्याश्रवणात् ।

—२० स्वोक्तमथ निगमयन्ति–**यदीत्यादिना** । भाष्यलक्षणमेवैतत्स्ववाक्यव्याख्यानादि । तदुक्तं–सूत्रार्थो वर्ण्यते यत्र–इत्यादिना । अङ्गत्वेन व्याकरणस्य यथा विद्यामध्ये परिगणनं तथा विचारस्यापि कृतं भवेत् ।

—२१ ननु मास्त्वङ्गमध्ये पाठस्तथापि पुराणादेरिव स्वातन्त्र्येण–

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

इति स्मृत्यनुरोधाद्विचारस्य परिगणनमस्त्विति चेत्तत्राहुः– **स्वातन्त्र्ये चेति** । अयं भावः । पुराणं यथा वैदिकमेवार्थं प्रकारान्तरेण मित्रवद् द्योतयति तथा विचारोपि भिन्नप्रकारेण तं वैदिकमर्थं द्योतयेत्तच्च न संमतं श्रुतेः ।

—२२ एतद् द्योतयन्ति । तं त्वौपानिषदमिति श्रुत्या । **औपनिषदं**–उपनिषदि दृष्टमर्थादुपनिषदुक्तदिशैव ज्ञापनीयं न तु विचारादिभिर्ज्ञेयम् ।

—२३ **तेषां**– विचारादीनाम् । अन्यथाज्ञानस्याफलत्वमाहुः— **अन्यथेत्यादि** । **तस्मादिति** । **तस्मात्**–निष्फलत्वात् ।

३–१ यथा तपस एवोपदेशाद्ब्रह्मविचारो नारम्भयितु शक्य एवं धर्मविचारोपि नारम्भणीयस्तत्रापि तपस एवोपदेशादित्याहुः–**अनेनेत्यादि** । **आक्षिप्त एव**-पूर्वपक्षीकृत एव । ननु धर्मविचारो निराकर्तुमशक्य ऋष्यु-

क्तिल्वादति चेदाहुः– **न ह्येतादिति**। एतदुत्तरमीमांसाशास्त्रं येन वादिना निराक्रियते तस्य पूर्वमीमांसाशास्त्रनिराकरणे नातिभारः। न दुष्करमित्यर्थः। अयमाशयः। गुरोर्व्यासस्योत्तरमीमांसारूपं शास्त्रं यो निराकरोति वादी तस्य तच्छिष्यजैमिनिमतनिराकरणे कः प्रयासः। इति पूर्वपक्षः।

—३ अतः परमुत्तरपक्षमुपक्रमन्ते। **सिद्धान्तस्त्वित्यादिना**।

—४ **संदेहवारकं**–संशयोच्छेदि। **शास्त्रं** मीमांसारूपम्। **तदुद्भवः**- संशयस्योद्भवः। **बुद्धिदोषात्**–अवैदिकशास्त्रपरिशीलनजा बुद्धिरेव दोषस्तस्मात्। तथैव विरुद्धशास्त्राणामवैदिकानां संभेदात्सांमिश्रणादपि संदेहस्योद्भवः।

—५ शिक्षादिभिरङ्गैरपि तन्निर्णयः कर्तुमशक्य इति बोधयन्ति- **अङ्गैश्चेत्यादि**।

—६ तस्मात्सूत्रानुसारेण **सर्वनिर्णयः**– सर्वेषां साधनप्रयोजनाद्यनुबन्धानां निर्णयः कर्तव्यः।

—७ **अन्यथेति**। अन्यथा सूत्रानुरोधेन विचाराकरणे मध्यमो मध्यमाधिकारी तथादिमो मन्दाधिकारी च स्वार्थाच्छास्त्रज्ञानरूपाद्भ्रश्यते तदेव विवृण्वन्ति। यथा श्रवणं वेदाक्षराणां गुरुपरंपरया भवति तथार्थज्ञाने गुरुमुखात्संपद्यमाने मन्दमध्यमाधिकारिणोः संशयो भवेत्।

—९ अत्र दृष्टान्तमाहुः–**पदादिपाठवदिति**। पाठे गुरुपरंपरारूपसमानधर्मदर्शनाद्दृष्टान्तः। अर्थे च समानधर्मदर्शनं यथा। अक्ताः शर्करा उपदधातीत्यत्राञ्जनसाधनानि घृततैलवसादीनि समानानि। तथाच केन साधनेनाक्ता इति संशयः। पदादिपाठवदित्यस्य विवरणं–देवाय ते यजमानाय शीकाय ते स्वाहेति संहितापरंपरापाठः। देवय ते शीकय ते इति पदपरम्परापाठः। एवं चात्रोदाहरणे यथा–ह्रस्वत्वदीर्घत्वयोः संदेह एवमुपनिषत्स्वपि–अपाणिपादो जवनो ग्रहीता–इत्यादौ विरुद्धधर्मदर्शनेन ब्रह्मैवंरूपमेवंरूपमिति संशयो भवेत्। **तत्रेति**। **तत्र**–संहितापदपाठस्थले–अक्ताः शर्करा उपदधाति–इत्यत्र च। यथा **लक्षणानां**–प्रातिशाख्यसूत्राणां जैमिनिसूत्राणां च। **मीमांसायाः** सूत्रात्मकव्यासविचारशास्त्रस्य।

—१० **तदुक्तं**–तथैव प्रत्यपादि।

—११ मीमांसाया अधिकारिभेदेनोपयोगतारतम्यमाहुः–निःसंदेहेपि वेदार्थे व्याससूत्रात्मिका मीमांसा प्राज्ञपुरुषस्याधिगतार्थदृढीकरणार्थं भवति। हीनाधिकारिणस्तु व्यासमीमांसातः संदेहनिवृत्तिर्वेदार्थनिश्चयश्चेति द्वयं भवतीति बोधयन्ति श्लोकेन। प्राज्ञे मीमांसानिर्णयोऽसंदिग्धेपि स्थूणाखननवन्मतः। दुर्बुद्धेस्तु ततो द्वयमित्यन्वयः। **स्थूणाखननवत्**–**स्थूणा** स्तम्भः।

यथा स्तम्भं भूमावारोपयन्पुरुषः पुनः पुनस्तमधोगमनार्थं खनति । तथा वेदार्थे संशयरहितेपि दृढज्ञानार्थं व्यासमीमांसायाः प्राज्ञविषय उपयोगः । **मीमांसानिर्णयः**–मीमांसैव निर्णयो निर्णयसाधनं यस्मिन्नेतादृशः शब्द-समुदाय इत्यर्थः । **दुर्बुद्धेः**–हीनाधिकारिणः । **ततः** व्याससूत्रेभ्यः । **द्वयं**–संदेहनिवृत्तिरर्थनिश्चयश्चेत्यर्थः ।

—१३ **तथा चेति । निर्णये**–उपनिषदर्थनिर्णये । **हरिः**–श्रीकृष्णद्वैपायनावतारः ।

—१४ **तत्कर्तव्यतां**–विचारकर्तव्यताम् । **व्यासोक्तत्वादिति** । ब्रह्म-जिज्ञासा कर्तव्येति व्यासेन कथितत्वादपि विचारः कर्तव्यः । अधिगतकर्म-काण्डीयवेदार्थेन यथा नित्यं संध्यावन्दनमाचरितव्यं तथैव निर्णीतवेदान्तार्थेन पुरुषेण वेदान्तविचारः कर्तव्यः ।

—१६ यथाश्रुतसूत्रेण कर्तव्यता न प्रतीयतेतोध्याहर्तव्यं कर्तव्येति पद-मित्युपपादयन्ति–**कर्तव्यपदेत्यादिना** । अयं भावः । यद्यप्यध्याहारस्वीकारो दोषस्तथापि विधिवाचकतव्यप्रत्ययघटितकर्तव्यपदाध्याहारे विचारस्य वैधत्वं स्यात् । एवं च वैधत्वेन वैदिकत्वादुपनिषदुक्तफलसमर्पकता भवेत् । **अन्यथा**–विधिवाचकतव्यप्रत्ययघटितकर्तव्यपदाभावे योगपुराणादिफलं यथोपनिषत्फलविरहि तथा व्याससूत्रमीमांसाया अपि भवेत् ।

—१७ **तथाच**–स्वतन्त्रतासत्त्वेनौपनिषत्कफले सतीत्यर्थः । **ज्ञानानुपयोगः**–ब्रह्मविचारस्यौपनिषदज्ञानानुपयोगः ।

—१८ तत्प्रपञ्चयन्ति– **तथाहीत्यादिना** । **औपनिषदं**–उपनिषादि दृष्टं-केवलोपनिषद्वेद्यम् । ब्रह्मज्ञान उपनिषदतिरिक्तसाधनं नेत्यर्थः ।

—१९ **शास्त्रान्तरवेद्यं**–शास्त्रान्तराणि काणादादीनि तैर्वेद्यं नेत्यर्थः । फलितमाह–**तद्यदीत्यादि** ।

—२१ पूर्वस्मिन्पक्षेध्याहारकरणं दोष इति मन्यमाना आचार्याः पक्षान्तरं सूचयन्ति–**अथवेत्यादि** । **अधिकारे**–अधिकर्तव्य इत्यस्मिन्नर्थे ।

—२२ विचारार्थं प्रवृत्तस्य तु वेदाध्ययनान्तर्यमर्थापत्त्यैव सिद्धमिति बोधयन्ति । **नह्यनधीत एवेत्यादिना** । एवंच वेदाध्ययनाभावाच्छूद्राणां मीमांसायामनधिकारः । अथशब्दस्याधिकर्तव्यत्वरूपार्थे स्वीकृतेध्याहारं विनापि–अथ शब्दानुशासनम्–इति महाभाष्यीयारंभवाक्यवत् स्वातन्त्र्य-रूपो दोषो ( अनौपनिषदफलप्राप्तिपर्यायो ) न भवेत्तथापि तुष्यतु दुर्जन इति न्यायेन दोषमङ्गीकृत्य समादधते । **तत्रैतत्स्यादित्यादिना** ।

—२३ **तत्र**-कर्तव्यपदाध्याहाराभावपक्षे । **प्रतिविधास्यामः**-समाधानं करिष्यामः। जिज्ञासापदस्य विचारे लक्षणां बोधयन्ति-**वेदानुकूलविचार इति**। वास्तववेदार्थब्रह्मनिर्णायको विचार इति तात्पर्यम्। एवंच साङ्गवेदाध्येतुर्विचारेधिकार इत्यर्थस्य विचारपदादेव लाभेन स्वातन्त्र्यदोषो न।

४-१ उभयपक्षयोः कतरः श्रेयानिति विचारयन्ति-**किमत्रेति**। अत्र -१ अध्याहारः २ अथशब्दस्याधिकारार्थत्वं चेत्युभयोः पक्षयोः। सिद्धान्तमाहुः। **व्याख्यानमिति**। अथशब्दस्याधिकार्यार्थत्वस्य व्याख्यानम्। अत्रार्थे महाभाष्यीयपरिभाषैकदेशनिदर्शनेन पतञ्जलिमहर्षिसंमतिमाहुः-**व्याख्यानत इति**। संपूर्णपरिभाषास्वरूपं-व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्। परिभाषार्थश्च व्याख्यानेन विशेषज्ञानं भवति। संशयादलक्षणमननुष्ठापकं लक्षणं न। यथाणुग्रहणेषु संदेहे व्याख्यानान्निर्णयः। तथा च लणूसूत्रे भाष्यम्। अणुदित्सवर्णे परिहाय पूर्वेणाणूग्रहणं परेणेण्ग्रहणमिति व्याख्यास्यामः। ननु व्याकरणोपयोगिनीयं कथमत्राभिलप्यत इति चेन्न कर्मकाण्डादिष्वविरोधस्थले तस्या आदरणात्। एतदेव बोधयन्ति-**यथा कर्मणीत्यादिना**। दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः- इति मूलं तदर्थः- अथातो दर्शपूर्णमासौ व्याख्यास्यामः- इति व्याख्यानेन बोध्यते दर्शपूर्णमासौ त्वित्यादेः- यतो दर्शपूर्णमासयोः पशुसोमादिभ्यः पूर्वमनुष्ठानमतस्तौ व्याख्यास्याम इत्यर्थः। स चाथातो दर्शपूर्णमासावित्यादिवाक्यस्याथशब्देनैव व्याख्यातो नाध्याहार आदृतस्तथा-अथातो ब्रह्मजिज्ञासा-इति सूत्रेप्यध्याहारस्यानावश्यकता।

--४ अधुनाध्याहारपक्षे संभाव्यमान्दोषान् अथशब्दस्याधिकर्तव्यत्वरूपार्थस्वीकारपक्षे गुणांश्चाहु-**अथवेत्यादि**। **अथवा**-किं च। **एतर्हि**-एतस्मिन्नधिकार्यत्वरूपार्थपक्षे। **अधिकाकाङ्क्षेति**। उक्तवैपरीत्येनाथशब्दस्यानन्तर्यार्थत्वे स्वीकृते कस्मादनन्तरमित्याकाङ्क्षा भवेत्साधिकार्यार्थत्वपक्षे नास्ति।

—५ **अध्याहारः**- कर्तव्यपदाध्याहाररूपं गौरवमपि न कर्तव्यं भवेत्। **पुरुषार्थः**- मोक्षरूपः। **उच्छेदश्च**-आनन्तर्यार्थेङ्गीकृते कस्मादनन्तरमिति प्रश्नस्य यदुत्तरं तदलाभे विचारोच्छेदो भवेदित्यर्थः। अधिकारार्थपक्षे कथं पूर्वोक्तदूषणानि नेति पृच्छति- **कथमिति**।

—६ अथशब्दस्य चत्वारोर्थाः संभवन्ति।

ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥

इति वाक्यादथशब्दस्य मङ्गलवाचकत्वम् । अथ शब्दानुशासनमित्यादावधिकारार्थकोथशब्दः । भुञ्जेथ गमिष्यामीत्यादावथशब्द आनन्तर्ये । आदौ किंचिदुक्त्वाथेदमुच्यत इत्यादावर्थान्तरोपक्रमे ।अत्राथशब्दो मङ्गलार्थे न । केवलं मङ्गलार्थे तस्याप्रयोगात् ।

—७ यथान्यार्थं प्रवर्तमानस्तूर्यनिस्वनोन्यस्य मङ्गलावह एवमन्यार्थमुद्दिश्य प्रयुज्यमानोथशब्दो मङ्गलबोधको भवेदिति द्योतयन्ति । **तत्र श्रुतिमात्रेणैवेति** । **अर्थान्तरस्य**- पूर्वोक्तार्थान्तरोपक्रमस्य । अयं भावः । कश्चनार्थः पूर्वमवसितो द्वितीयश्च मीमांसारूपः प्रारब्ध इत्यस्याभावात् ।

—८ अवशिष्टयोर्द्वयोर्विचारं प्रदर्शयन्ति । **आनन्तर्यं त्विति** । आनन्तर्यार्थे स्वीकृते कस्मादनन्तरमित्यधिकाकाङ्क्षारूपो दोषो भवेदिति पूर्वोक्तो दोषः ।

—९ ननु वेदाध्ययनस्यानन्तर्येणाधिकाकाङ्क्षा शाम्येदिति चेन्न तस्यार्थापत्तिप्रमाणसिद्धत्वादिति बोधयन्ति- **स्वतःसिद्धत्वादिति** । वेदाध्ययनं विना विचारोनुपपन्न इति भावः । **तथा सति**- एवं चार्थत्रयस्यानुपपत्तावधिकार्यार्थत्वास्वीकारे । **तदभावात्**-अधिकार्यार्थत्वाभावात् ।

—१० अधिकारार्थतातिरिक्ततां निरस्यन्ति । **तथाहीत्यादिना** । अथशब्दस्यानन्तर्यार्थकत्वे स्वीकृते धर्मविचारानन्तरमियं ब्रह्मजिज्ञासेत्यर्थश्च संभवेदिति चेन्न । अथ हृदयस्याग्रे अवद्यति अथ जिव्हाया अथ वक्षसः इति वाक्यं यथा क्रमस्य विनिगमकं तथात्र प्रमाणाभावात् कदाचिद्ब्रह्मजिज्ञासानन्तरं धर्मजिज्ञासेति विपरीतार्थस्यापि संभवादित्याहुः-**न तावदिति । न च पाठत इति** ।

—११ वेदे पूर्वं धर्मविचारः प्रोक्तस्ततो ब्रह्मज्ञानमित्यास्ति धर्मजिज्ञासानन्तर्ये विनिगमकमिति चेन्न । **तत्रापि तथा**- विपर्यये बाधकाभावात् । ज्ञानकाण्डानन्तरं कर्मकाण्डस्य पठितुं शक्यत्वादित्यर्थः । **न चाचारादिति** । पूर्वं धर्मविचारः पश्चाद्ब्रह्मविचार इति रूपाच्छिष्टाचारादपि न व्यवस्था । तत्र शिष्टाचारेपि नायं नियमो वक्तुं शक्यते ।

—१२ तथा नियमः कुतो नेत्याहुः-**प्रत्यवायाश्रवणात्**-पूर्वं ब्रह्मविचारे प्रत्यवायो भवतीति श्रुतेरभावादित्यर्थः । ननु धर्मविचारमन्तरेण ब्रह्मविचारः कर्तुमशक्य एव । विचारार्थमत्यन्तापेक्षितानां श्रुतिलिङ्गादिनियमानां पूर्वमीमासान्तर्गतत्वात्तेन संभवत्येव धर्मविचारानन्तर्यमित्याहुः-**संभवेपीति** । अस्मिंस्तु पक्षेध्ययनविधिवदन्यथानुपपत्त्यैव कार्यसिध्या नार्थोथशब्देन । अयं भावः । अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेति वाक्येध्यापनं माणवककृताध्ययनेन विनानुपपन्नं सदर्थापत्तिप्रमाणेनाध्ययनविधिं

कल्पयति तथा श्रुत्यादिनियमाज्ज्ञामात्पूर्वं धर्ममीमांसाध्ययनमित्यर्थापत्तिप्रमाणेनार्थो भविष्यति। एवं चाथशब्दस्य प्रयोजनमनन्यथासिद्धं न।

—१२ **तथा चेति। ततोपि**–ब्रह्मविचारे धर्मविचारानन्तर्येर्थापत्तिप्रमाणेन समागतेपि पुनः कस्यानन्तर्यमित्यधिकाङ्क्षा भवेदित्याहुः–आकाङ्क्षेति।

—१३ अधुना शमवैराग्यादिसाधनचतुष्टयसंपत्त्यानन्तर्यमथशब्देन कुतो न गृह्यते तद्विवृण्वन्ति। **न च वैराग्येत्यादिना। तेषामेवाभावात्**–वैराग्यादीनां ब्रह्ममीमांसायाः प्रागुत्पत्तेरभावात्। वैराग्यादीनां संभवे सति कर्तव्यो विचार इति वक्तुं न शक्यते पूर्वोक्तादेव कारणात्।

—१५ तदसंभवमेव प्रकटयन्ति। **तथाहीति।** ब्रह्म परमपुरुषार्थरूपं तत्साधनं ब्रह्मज्ञानं यज्ञादयश्च चित्तशुद्धिद्वारा ब्रह्मज्ञानसाधनीभूताः। निरभिसंधिना ब्रह्मज्ञानार्थं कर्मकरणे चित्तशुद्धिस्तदनन्तरं वैराग्यादीनामुत्पत्तिः। एवं ब्रह्मविचारार्थं प्रवृत्तस्य वैराग्यादि संभवति। वैराग्यादिप्राप्त्यनन्तरं ब्रह्मविचार इत्यन्योन्याश्रयः संभवेदतो वैराग्यादिसाधनानन्तर्यरूपोथशब्दस्यार्थो दोषघटितः।

—१८ किंचोपनिषदर्थो गुरुसंनिधौ निर्धार्यः पश्चाद्वैराग्यादिसमुत्पत्तौ तद्विचारः कर्तव्यस्तेन नान्योन्याश्रय इति चेन्न वेदान्तार्थनिर्धारणानन्तरं विचारस्य वैयर्थ्यादित्याहुः–**निर्धारिते त्विति।** पूर्ववेदान्तानिर्धारणस्य विचार उपयोगः फलं विचारस्य च ब्रह्मसाक्षात्कारः फलं तेन न वैयर्थ्यमिति चेन्नेत्याहुः–**न चेति।**

—१९ तस्य विचारस्य शब्दशेषत्वेन शाब्दबोध ग्रीमध्यानिवेशेन। **तत्कल्पनायां**–साक्षात्कारकारणत्वकल्पनायाम्। अयं भावः। विचारः श्रुत्यादिप्रमाणानामाकाङ्क्षादीनां चोचितत्वानुचितत्वविचारेण शाब्दबोध एवोपक्षीणसामर्थ्यः, ततस्तस्यापरोक्षज्ञानजनने सामर्थ्यमेव न। ननु शब्दोपि–दशमस्त्वमसि–इत्यादौ प्रत्यक्षज्ञानजनको दृष्ट इत्याशङ्कां निरस्यन्ति–दशमस्त्वमसीत्यादाविति। दशमस्त्वमसीत्यत्र वाक्ये देहज्ञानवान् देहद्रष्टा च पुरुषो बोध्यते तेन प्रत्यक्षदेहदर्शनेन तथा साक्षात्कारः। अत्र तु विचारविषयं प्रत्यक्षदर्शनाभावाद्ब्रह्मसाक्षात्कारो नेति दृष्टान्तवैषम्यमिति भावः।

—२१ नन्वत्रापि विचारविषये प्रत्यक्षसामग्री स्यादिति चेत्तत्राहुः–**न तथेति। आनर्थक्यप्रसंगात्।** आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्य इत्यादिश्रुतेः मननादीनां पृथक्कथनवैयर्थ्यात्।

—२३ ननूत्तमाधिकारिणः श्रवणेनैव बोधो मन्दाधिकारिणः श्रवणानन्तरं मननादीनामुपयोग इत्यधिकारिभेदकल्पने न मननादिश्रुतिवैयर्थ्यमित्याशङ्कां निषेधन्ति–**न चेति**। आकाङ्क्षायोग्यतादीनां यथा काणादादिशास्त्रे शाब्दज्ञानकारणत्वेन ग्रहणं तथाधिकारस्य कुत्राप्यग्रहणादित्यर्थः।

—२४ अधिकारस्य शाब्दबोधे कारणतास्वीकारेत्यन्तासत्यार्थकखपुष्पादिभ्योप्यधिकारिणः शाब्दबोधः स्यात्तच्चासंगतमित्याहुः–**अत्यन्तासत्येपीत्यादि**। अन्यरीत्या च शाब्दापरोक्षं खण्डयन्ति–**प्रमाणसंकरापत्तिश्चेति**। प्रमाणशब्दो व्युत्पत्तिद्वयघटितः। प्रमीयते तत्प्रमाणम्। प्रमीयतेनेन तत्प्रमाणमिति च। तत्र प्रथमव्युत्पत्त्या प्रमेयमित्यर्थः। द्वितीयव्युत्पत्त्या प्रमाणमित्यर्थः। इत्थं च यत्र शाब्दात्प्रत्यक्षात्मकं शाब्दमुत्पद्यते तत्र प्रमायां शाब्दत्वप्रत्यक्षत्वयोरेकत्रसमावेशेन संकररूपदोषात् जातित्वं न स्यादित्यर्थः। एवमेव प्रमाणगतयोः शब्दत्वप्रत्यक्षत्वयोरपि सांकर्याज्जातित्वबाध इत्यर्थः। यतः सांकर्यं जातिबाधकसंग्रहे निर्दिष्टं तथाहि–

व्यक्तेरभेदस्तुल्यत्वं संकरोथानवस्थितिः।
रूपहानिरसंबन्धो जातिबाधकसंग्रहः॥

ननु तत्त्वमस्यादिवाक्यसहकृतमनसैव शाब्दापरोक्षं भवतीति स्वीकार्यं मनसैवानुद्रष्टव्यमिति श्रुतेस्ततश्च न सांकर्यमत आहुः–**मनसेति**। **तज्जनने**–शाब्दापरोक्षोत्पत्तौ। **तथा**–पूर्ववदेव मनःप्रमे गृहीत्वा संकरापत्तिरित्यर्थः। **प्रमाणसंकरापत्तिश्च**।

५—१ **मनसा तज्जननेपि तथा**। इतिवाक्यद्वयस्य तत्तानि व्याख्यानानि लिख्यन्ते। **श्रीपुरुषोत्तमकृतप्रकाशस्थमर्थद्वयं तु** तत एव विज्ञेयं, व्याख्यानान्तराणि त्वद्याप्यमुद्रितानीति तान्यत्र लिख्यन्ते। तथाहि–**प्रदीपे**। अधिकारताखण्डनेन शाब्दापरोक्षं खण्डयित्वा प्रकारान्तरेण शाब्दापरोक्षं खण्डयितुमाहुः–**प्रमाणसंकरेत्यादि**। तथा चात्र प्रमाणशब्देन व्युत्पत्तिभेदात्प्रमाणप्रमेयं बोध्ये। इत्थं च यत्र शाब्दादपरोक्षात्मकं शाब्दं जायेत तादृशप्रमायां शाब्दत्वसाक्षात्कारत्वयोः केवलशाब्दबोधप्रत्यक्षत्वयोः परस्परात्यन्ताभावसमानाधिकरणयोरेकस्यां समावेशेन शाब्दत्वसाक्षात्कारत्वयोर्जातित्वं न स्यादित्यर्थः। एवमेव प्रमाणगतयोः शब्दत्वप्रत्यक्षत्वयोरपि सांकर्यसंभवात् जातित्वबाध इत्यर्थः। ननु तत्त्वमस्यादिवाक्यसहकृतमनसैव शाब्दापरोक्षमङ्गीकार्यं मनसैवानुद्रष्टव्यमिति श्रुतिसाहाय्यादित्थं च शब्दप्रमाणमादाय न जातिसंकरापत्तिरत आहुः **मनसेत्यादि**। **तज्जनने**–शाब्दापरोक्षजनने। **तथा**–पूर्ववदेव मनःप्रमे आदाय संकरापत्तिरित्यर्थः। संकरापत्तिस्तु मनसि शाब्दप्रत्यक्षयोः करणत्वात्प्रमाणसंकरापत्तिः प्रमितौ च

शाब्दत्वप्रत्यक्षत्वयोः सत्त्वात् प्रमितिमादाय संकरापत्तिर्बाधिका । एवमुत्तमाधिकारिणः शब्दसहकृतमनःसकाशात्खपुष्पादिशब्देभ्योऽपि शाब्दापरोक्षं स्यादित्यपि दूषणम् ॥

**लालूभट्टटीका**–दूषणान्तरमाह–**प्रमाणसंकरापत्तिश्चेति** । यद्युत्तमाधिकारिणि शब्दोऽपरोक्षमेव जनयेत्परोक्षं च मन्दे तथा मध्यमाधिकारिज्ञाने परोक्षत्वापरोक्षत्वयोरुभयोरपि सत्त्वे तत्प्रमाणयोः शाब्दबोधप्रत्यक्षयोः संकरः सांकर्यं परस्परात्यन्ताभावसमानाधिकरणयोरेकत्र समावेशनं तस्यापत्तिः प्राप्तिः स्यादित्यर्थः । ननु मध्यमाधिकारिण्यपि परोक्षमेव शब्दाद्भविष्यतीति सांकर्यासंभव इति चेदुच्यते । यदि मन्दाधिकारिणीव मध्यमेऽपि शब्दः परोक्षमेव ज्ञानं जनयेदुत्तमाधिकारिणीवापरोक्षं च तदा कथमिव तस्य मध्यमत्वं भवेत्तदान्यथानुपपत्त्या परोक्षत्वापरोक्षत्वोभयवैशिष्ट्याङ्गीकारे तु सांकर्यं सिद्धमेवेति न शब्दादपरोक्षसाक्षात्कारो भवतीति सिद्धम् । ननु विचारसहकृतेन शब्देनापरोक्षसाक्षात्कारासिद्ध्यभावेऽपि तादृशशब्दसहकृतेन मनसैव तत्साक्षात्कारः कस्मान्न भवतीत्याशङ्क्य परिहरन्ति–**मनसैवेति** । मनसा साक्षात्कारजननेऽपि **तथा**–पूर्वोक्तदूषणद्वयापत्तिरित्यर्थः ।

**मथुरानाथकृतभाष्यप्रकाशः**–दूषणान्तरमाहुः–**प्रमाणसंकरापत्तिश्चेति**। संकरो भेदः। अयमर्थः । प्रमाणानां स्वरूपतो भेदोऽकिंचित्करः किंतु क्रियाभेदघटितो भेदः । विजातीयक्रियाजनकतावच्छेदकत्वं प्रमाणान्तरत्वं तथा चोभाभ्यां प्रमाणाभ्यां यद्येकैव क्रियाजनिष्यत तदोभयोर्भेदं कोऽकरिष्यत्। ननु ब्रह्मसाक्षात्कारो न चाक्षुषः किंतु मानसप्रत्यक्षात्मकः। तथा च न प्रमाणसंकर इत्याशङ्क्न्ते। **न मनसेति । तज्जनने तथा**–प्रमाणसंकरापत्तिः। मनोलक्षणस्य शब्दलक्षणस्य च प्रमाणस्याभेदः। इति ॥ उपसंहरन्ति–**तस्मादिति । प्रथमं**–वैराग्यादिभ्यः प्राक् । **शाब्दमेव**–वेदान्तवाक्यैर्विचारद्वारा परोक्षमेव ।

–२ **अनुभवसिद्धत्वात्**– तत्तदुपनिषद्गताख्यायिकादृष्टगुरुशिष्यसंवादेन परोक्षज्ञानस्यैव प्रतीतिगोचरत्वात् । आख्यायिकागृहीतर्षीणां शमादिमत्त्वं कदाचित् स्यादित्यत आहुः–**इदानींतनानामपीति**।**निर्विचिकित्सितं** संशयरहितं वेदार्थज्ञानम् ।

–३ **उपलब्धेरिति** । अन्यथा तादृशविचारे प्रवृत्तिरेव न स्यात् । शाब्दादपरोक्षज्ञानस्वीकारे दूषणान्तरमाहुः–**संन्यासानुपपत्तिश्चेति** । यदि केवलाद्वाक्यादेवापरोक्षज्ञानं तर्हि–

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोके तु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥

इति श्रुतौ विहितस्य संन्यासस्य वैयर्थ्यमित्यर्थः । अथशब्दस्यानन्तर्यार्थत्वस्वीकारपक्ष उक्तेषु चतुर्षु दूषणेषु प्रथममधिकाकाङ्क्षारूपं दूषणं व्याख्याय द्वितीयमध्याहाररूपमाहुः— **किंचेत्यादिना** । आकाङ्क्षानिवृत्त्यर्थम् अथातो ब्रह्मजिज्ञासा कर्तव्येति कर्तव्यादिपदाध्याहारः । तत्कर्तव्यादिपदं स्वार्थं स्वस्य वक्तुर्व्यासस्य विचारप्रवृत्तिनिमित्तं, व्यर्थमेव । वाक्यप्रयोगात्पूर्वमेव विचार इष्टसाधनताज्ञानसत्त्वात् । तादृशज्ञानाभावे प्रतिज्ञावाक्यमर्थात्संपूर्णं सूत्रमेव न वदेत् ।

—४ **परार्थत्वे**— परस्य विचारे प्रवृत्त्यर्थत्वे ।

—५ अशक्यतां व्युत्पादयन्ति—**न हीत्यादिना** । अन्यदुक्तमवश्यं कर्तव्यमिति प्रमाणाभावात्सर्वेषामपि तथाप्रवृत्तेः । **स्वकृतीति** । परस्य विचारार्थं वाक्यप्रयोगः । परेण तु विचारो न क्रियते । एवंच प्रतिज्ञारूपाया व्यासकृतेर्वैयर्थ्यम् । **असंगतिरिति** । स्वपरयोरन्यतरस्यापि प्रवृत्त्यनुपयोगादसंगतं सूत्रम् ॥

—६ तृतीयं पुरुषार्थासिद्धिरूपं दूषणं दर्शयन्ति—**किंचेत्यादिना** । **पुरुषार्थो** मोक्षः ।

—७ **उक्तन्यायात्**—उक्तयुक्तेः । तथाहि आनन्तर्यार्थस्वीकारपक्षे कस्मादनन्तरमित्याकाङ्क्षा सर्वदोदेष्यति तेन चानन्तर्यावधिज्ञानवन्मोक्षाकाङ्क्षायाः सर्वदैवासंभव इत्यर्थः । उच्छेदरूपं चतुर्थं दूषणमुपपादयन्ति—**किं चेति** । **तादृशस्य**—उत्तमस्य साधनचतुष्टयसंपन्नस्य ।

—८ **प्रवचनासंभवात्**—उत्तमाधिकारिकृतशिष्यपाठनासंभवात् । **शास्त्रोच्छेद** इति । शास्त्रपरंपरोच्छेद इत्यर्थः । **शास्त्रविरोधः**— शास्त्रोक्तिवैफल्यरूपो विरोधः वेदान्तविचारेण केवलतत्त्वमस्यादिवाक्यादेवापरोक्षज्ञानं भवतीति स्वीकारे व्यासशास्त्रस्य वैफल्यमित्यर्थः । तदेव वैफल्यं विवृण्वन्ति—**साधनानामिति** । **साधनानां**—उपासनादिरूपाणाम् ।

—९ **अग्रे**—तृतीयाध्याये । कार्यं कृतार्थतारूपं प्रथमाध्यायप्रथमसूत्रे । कारणानि चोपासनादीनि तृतीयाध्याय इत्यसंगतमित्यर्थः । एवं च बहुदूषणदुष्ट आनन्तर्यरूपार्थो न स्वीकार्यः । किंतु योग्यतरोधिकारार्थ एव ग्राह्य इति कथयन्ति—**अत इत्यादिना** ।

—१० एवमथशब्दार्थं निर्णीय जिज्ञासाशब्दार्थं विचारयन्ति । सन्प्रत्ययान्तजिज्ञासापदस्य ज्ञानगोचरेच्छारूपोर्थः । साच जिज्ञासाधिकर्तुं कृत्या

साधयितुमशक्येति शङ्कन्ते। **न चेति**।विचारार्थत्वादिति । रूढ्या विचारार्थकत्वस्वीकारादित्यर्थः ।

—११ एवं रूढार्थपरिग्रहे शाबरभाष्यप्रमाणमाहुः-**अत एवेति**। अत्र रूढ्यभावे जिज्ञासितुमित्यस्य ज्ञानेच्छां कर्तुमित्यर्थः स्यात्स चासंगतः। रूढ्या जिज्ञासितुमित्यस्य विचारयितुमित्यर्थो भवति ।

—१२ नन्वेवं चेत्प्रत्यक्षतया विचारपदमेव कुतो नोक्तमाचार्येण किमर्थं जिज्ञासापदस्य प्रयोग इति चेत्तत्राहुः-**जिज्ञासापदेनेति** । **जिज्ञासापदेन**-ज्ञानविषयकेच्छाप्रतिपादकजिज्ञासापदेन ।

—१३ **तदिच्छापूरणाय**--पुरुषार्थसाधनीभूतब्रह्मज्ञानेच्छापूरणाय । अथशब्दार्थमाहुः-**आरभ्यत इति**। एवं चायं निर्गलितोर्थः। केवलं ब्रह्मविचारः कर्तव्य इति। शब्दप्रयोगे ब्रह्म विचार्यमित्येवार्थः स्यात् । ब्रह्मज्ञानमिष्टं पुरुषार्थसाधनमित्यर्थो न स्यात्। जिज्ञासापदोच्चारणे तु तादृशार्थो जायते । अतःपदघटितसूत्रार्थमाहुः-**यस्मादित्यादिना** । **कर्मादिभ्यः**-कर्मादिव्यतिरेकेण ।

—१४ **तज्ज्ञानाय**-ब्रह्मज्ञानाय । अधिक्रियतेधिकारिपुरुषोद्देशेन ब्रह्मजिज्ञासारभ्यते।

—१५ अधुनापेक्षितमधिकारिणं वदन्ति-**अधिकारी त्विति**। **त्रैवर्णिकः**-आर्यवर्णत्रयजः। ब्राह्मणक्षत्रियवैश्यान्तर्गत इत्यर्थः।

—१६ ननु वेदाधिकार्येवात्राधिकारीति स्वीकारे वेदाध्ययने मन्दमतेरप्यधिकारादत्रापि वेदान्तविचारे सोधिकारी भवेदतस्तद्व्यावृत्त्यर्थं मतिमत्त्वमधिकारिविशेषणमस्त्विति चेन्नेत्याहुः-**नहीत्यादिना** । **मतिमत्त्वं**-ग्रहणधारणपटुत्वम्। अयमर्थः। मतिमतोपि गृहपुत्राद्यासक्तस्य मननं न संभवति तेन च न ब्रह्मसाक्षात्कारः ।अतो मतिमत्त्वापेक्षया शान्तत्वदान्तत्वादिकमधिकारिगुणजातमादरणीयं यथा यागकर्मण्याज्यावलोकनमन्धेन विष्णुक्रमणं च पङ्गुना कर्तुमशक्यमतः सहकारिकारणभूताङ्गफलासंभवात्प्रधानफलमपि न संभवति तथैव शमादिरहितस्य शमदमादिसहकार्यङ्गफलाभावात्प्रधानभूतविचारफलमपि न संभवेदेवं चानैकान्तिकफलत्वान्मतिमत्त्वं नादरणीयम्।

—१८ ननु जैमिनीयधर्ममीमांसयास्या ब्रह्ममीमांसाया गतार्थत्वमिति चेत्तन्निषेधन्ति-**नचेति**।

—१९ **अप्रतिज्ञानात्**-अथातो ब्रह्मजिज्ञासेति तत्राप्रतिपादनात् । ननु लक्षणया धर्मजिज्ञासापदेन ब्रह्मजिज्ञासापि संगृहीतुं शक्येति चेत्तत्राहुः-**अनुपलम्भेश्चेति**। चोदनालक्षणोर्थो धर्मः (जै. सू. १।१।२) इत्यादिषु यथा

धर्मविचार उपलभ्यते तथा जैमिनिसूत्रेषु ब्रह्मविचारस्यानुपलम्भात् तमं-वानुलाभिहेतुं विवृण्वन्ति–**न चेत्यादिना** ।

—२१ पूर्वपक्षिणो मीमांसकस्य मतमुद्भावयन्ति–**स्यादेतदित्यादिना** । स्यादेतत्–एतत्संभवतीत्यर्थः । धर्मविचारप्रतिज्ञया ब्रह्मविचारोपि संभव-तीत्यर्थः ।

—२२ **नोदकवाक्यार्थस्य**–विधिवाक्यार्थस्य ।

—२३ संदेहाः–मन्त्रार्थवादानामप्रामाण्यसंदेहाः । **तत्र**–धर्मपदार्थे धर्मत्वं चोदनालक्षणेत्यादिलक्षणघटितत्वाद्धर्मत्वं ब्रह्मज्ञानस्यापि । ब्रह्मज्ञान-विधायकश्रुतिस्मृतिवाक्यान्याहुः–**आत्मेत्येवोपासीतेत्यादिना** ।

२५ नोदना प्रेरणा विधिरित्यर्थः ।

६—२ तस्माद्वा एतस्मादाकाशः संभूत इत्यादिवाक्यान्युपासनाविध्यर्थ-स्तावकतयार्थवादरूपाणीत्याहुः–**सृष्ट्यादिवाक्यानामिति** । आदिपदेनेन्द्र-प्रतर्दनाद्याख्यायिकानां ग्रहणम् । अर्थवादप्रकारं व्युत्पादयन्ति । **आरोपाप-वादेति** । ऐतदात्म्यमिदं सर्वं, यतो वा इमानि भूतानीत्यारोपः । अथात आदेशो नेति नेतीत्यादिरूपोपवादः । तद्विषया मिथ्याभूताः सर्व एव धर्मा-स्तेषां प्रतिपादकत्वेन विधेयोपासनाविषयस्तावकत्वात्–विधेयभूतानां प्रती-कोपासनानां विषया जगत्कर्तृत्वादयस्तत्स्तावकत्वात् । अयं भावः । सृष्ट्या-ख्यायिकादिबोधक उपनिषद्भागो ह्यारोपापवादन्यायेन प्रतीकोपासनाबोधन-द्वारा जगत्कर्तृत्वादिगुणैरुपास्यस्तावक एव ।

—३ ज्ञानादीनां कृतिसाध्यत्वाभावादविधेयतां शङ्कन्ते । **न चेति** ।

—४ **प्रमाणवस्तुपरतन्त्रत्वेन**–श्रवणमननादिप्रमाणपरतन्त्रतया जायमानं ज्ञानं हि वस्तुतन्त्रं तच्च विधातुमशक्यमिति भावः । समादधते–**न हीति** । यद्यपि ज्ञानं वस्तुतन्त्रं तथापि ज्ञानोत्पादकसंनिकर्षादिसिद्ध्यर्थं कृतेरपेक्षणात् सर्वथैव तथा वस्तुतन्त्रं न किंतु केनचिदंशेन कृत्यधीनं तेन च विधिप्रवृत्तिः सुकरा । तथापि यागादिवत्कृतिसाध्यता न ।

—५ अस्ति तत्र प्रकारभेद इति चेत्तत्राहुः–**प्रकारभेदस्त्विति** । **अप्र-योजकः**–ज्ञानस्य कृत्यसाध्यत्वसाधको नेत्यर्थः । सर्वस्यापि ज्ञानयागादेः । **कारणेषु**–संनिकर्षक्रियाकलापादिषु । **पुरुषव्यापृतिः**–पुरुषव्यापारस्तत्कृति-साध्यत्वमित्यर्थः । **तत्**–तस्मात् । **अत्र**–ज्ञाने । **वृत्तिसंपादने**–ब्रह्माकारवृ-त्त्युत्पत्तौ ।

—६ **प्रमाणसंपादने**–आवृत्तचक्षुरमृतत्वमिच्छन् इति श्रुत्यावृत्तचक्षुरा-दिप्रमाणसंपादने । एवं चोभयविषयेपि पुरुषकृतिसाध्यता वर्तते । **अन्यथा**–ज्ञानस्य परस्य कृत्यधीनत्वानङ्गीकारे ।

—७ **मननादिशास्त्रवैफल्यापत्तेः**—श्रोतव्यो मन्तव्य इति श्रुतिगतमन्तव्यादिपदवैयर्थ्यं भवेयतस्तत्र मन्तव्य इत्यादिपदेषु विध्यर्थकस्तव्यप्रत्ययः। **साधनप्रतिपादकेत्यादि**। शान्तो दान्त उपरतास्तितिक्षुः । तपसा ब्रह्म विजिज्ञासस्वेति तपःप्रभृतिसाधनबोधकश्रुतीनां वैयर्थ्यम् ।

—८ **येनापि**—ज्ञानस्य कृत्यसाध्यत्वमिति प्रतिपादकेन वेदान्तिनापि । **निराकार्य**—खण्डनीयम् । **गुरूपसत्तिः**—समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतिप्रतिपादिता । यत्रापि ब्रह्मविदाप्नोति परमित्यादिषूपनिषद्वाक्येषु विध्यश्रवणं विधिबोधकानां लिङ्लोट्तव्यदादीनामश्रवणम् ।

—९ **परिकल्प्य**—लेट्लकारान्तत्वं परिकल्प्य ।

—१० **तच्छेषत्वं**—तद्विध्येकवाक्यतया प्रामाण्यमङ्गीकर्तव्यम् । **अनया**—उत्तरमीमांसया । **अन्यथा**—ब्रह्मविदाप्नोति परमित्यादीनां वाक्यानां परिकल्पितविध्येकवाक्यतया प्रतिपन्नानां प्रामाण्यानङ्गीकारे । **विरोधोपि**—आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम् ( जै. सू. १।२।१ ) इति सूत्रबोधितरीत्यानर्थक्यरूपो विरोधोपि स्यात् ।

—११ एवं पूर्वपक्षं दूषयितुं पूर्वमीमांसाया निष्प्रयोजनत्वं मन्वानस्य सिद्धान्त्येकदेशिनो मतं बोधयन्ति **स्यादेतदित्यादिना** । नेति । धर्मविचारो नारम्भणीय इत्यर्थः । तत्र कारणमाहुः—**सर्ववेदेत्यादिना**। सर्ववेदविभागकर्तृत्वेन तदर्थज्ञातृत्वं बोधितम् । ज्ञानं विना विभागस्य कर्तुमशक्यत्वात् । पूर्वमीमांसा तु तच्छिष्येण केवलसामवेदज्ञेन जैमिनिना कृता न सर्ववेदज्ञनातो न प्रमाणमिति भावः ।

—१२ **तुच्छफलत्वाच्च**—तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते—इति श्रुत्या क्षयिफलोपयोगिमन्त्रविचारकत्वादित्यर्थः । ननु धर्ममीमांसाया अभावे वेदमन्त्रविनियोगादिज्ञानं कथं भवेदिति चेत्तत्राहुः—**कल्पेत्यादि । कल्पसूत्राणि**—श्रौतस्मार्तसूत्राणि कात्यायनादिमुनिकृतानि । तैरेव विनियोगादिबोधनसंशयनिरासरूपं धर्ममीमांसाप्रयोजनं मन्स्यतीत्यर्थः ।

—१३ अधुनापि शिष्टाः कल्पसूत्रादिद्वारैव स्वकार्यं निर्वाहयन्तीत्याहुः—**एतर्हीति** ।

—१४ **संदेहे**—अनुष्ठयाविषयकसंशये । **सूत्रभाष्यं**—कल्पसूत्रभाष्यम् । **याज्ञिकाः**—अविरतयज्ञानुष्ठानशीलाः । त एवानुरुध्यन्ते न मीमांसकाः । अथ यदि ते कर्मविचिकित्सा वृत्तविचिकित्सा वा स्याये तत्र ब्राह्मणाः संमर्शिनः—इत्यादि—यथा ते तत्र वर्तेरन् तथा तेषु वर्तेथाः—इत्यान्ततैत्तिरीयोपनिषच्छ्रुतेः ।

—१५ उपसंहरन्ति-**तस्मादिति** । **निःसंदेहकरणं**-यज्ञस्य निःसंशय-मनुष्ठानम् ।

पूर्वमीमांसाया अफलत्वमित्येव न किंतु विपरीतबोधकत्वादनर्थावहत्व-मपीति बोधयन्ति । **किं चेति** । अयं भावः । परमकृपालुर्वेदः संसरणशील-फलबोधनेन स्वानिष्ठान् वञ्चयेदित्यसंगतम् । अत्र दृष्टान्तः । आत्मनि विश्वस्तानन्धान्यथा न कोपि शिष्टः कूपे सुमार्गोऽयमिति बोधयित्वा पातये-त्तथा । एवमसंगतत्वभिया फलबोधकवेदस्यायमर्थो यद्रोचनार्थं फलम-स्तीति । केवलं निष्कामबुद्ध्या कर्मानुष्ठेयं ततश्चित्तशुद्धिद्वारा मोक्षः स्यात् । एवं च संसारिणां क्रमेण मुक्तिः । परमकृपालुर्वेदः संसारिणः संसा-रान्मोचयितुं कूपेन्धपातनवदप्रामाणिकत्वभिया चित्तशुद्ध्यर्थं कर्माणि बोधितवानित्यवसीयत इत्यन्वयः ।

—१७ **अवसीयते**-अयं फलितोर्थ इति भावः । **विपरीतबोधिका**-वेद-तात्पर्यभूतक्षयिसंसारफलमेव वेदे तात्पर्यतया कथितामिति बोधिका ।

—१८ **न कर्तव्या**-नारम्भणीया ।

—१९ इदं सिद्धान्त्येकदेशिमतं दूषयति पूर्वपक्षी-**नैवमिति** । न कर्तव्यं मया पूर्वपक्षिणेति शेषः ।

—२० **तुल्यत्वात्**-त्वयापि विचारमात्रं न कर्तव्यं भवेत्तेनोत्तरकाण्ड-विचाराभावस्तवापि भवेदिति तुल्यत्वम् । ययोरेव समो दोष इति न्यायेन तवापीष्टसिद्धेरभावेन दूषणसाम्यादित्यर्थः । समर्थितत्वाच्च-त्वयोत्तरमीमांसा कर्तव्या मया पूर्वमीमांसा न कर्तव्येत्यत्र विनिगमकाभावरूपसमर्थनम् । **द्वितीये**-पूर्वमीमांसा न कर्तव्येति पक्षे । **सामान्यन्यायेनेति** । कल्पसूत्रा-दिना सामान्यग्रन्थेन सामान्यसंदेहनिवारणप्रसक्तावपि विशेषसंदेहनिरा-करणार्थं पूर्वमीमांसापेक्ष्यते । यथा सामान्यतः पाणिनिसूत्रेण बोधेपि प्रातिशाख्यसूत्राणामुपयोगो विशेषसंदेहनिराकरणाय भवति तदाहुः— **लक्षणवदिति** ।

—२१ **अनिष्टतयेति** । मीमांसा क्षयिफल एव वेदतात्पर्यं बोधयतीत्या-कारकमनिष्टप्रतिपादकत्वं न मीमांसादूषणं संभवति यतः क्वचिदपि मीमांसा-सूत्रे तादृशप्रतिपादनं न । अयं च दोषो विचारकस्वभावमूलक एव ।

—२२ **आवश्यकत्वादिति** । कर्मविचारस्यावश्यकत्वादित्यर्थः । आवश्य-कत्वं प्रकटयन्ति-**निवृत्तानामिति** । संसारान्निवृत्तैरपि मुमुक्षुभिर्यागादि-ज्ञानार्थं मीमांसाङ्गीकार्या । चित्तशुद्ध्यर्थं यागादिज्ञानस्यावश्यकत्वात्पूर्व-मीमांसाया आवश्यकत्वम् ।

—२३ आश्रमभेदेन व्यवस्थामाहुर्विवरणपूर्वकं-**परमाश्रमभेदेनेति** ।

७-१ **आद्यस्य**-ब्रह्मचारिणः । **वाचिकः**- ब्रह्मयज्ञादिरूपः । **द्वितीयतृतीययोः**- गृहस्थवानप्रस्थयोः । **कायिकः**- अग्निहोत्राद्यनुष्ठानरूपः । **चतुर्थस्य**-यतेः । **मानसिकः**-उपासनादिरूपः ।

—२ उपसंहरन्ति-**तस्मादिति** । **एकेनैव**-धर्मविचारेणैव । **चरितार्थत्वात्**-कृतकार्यत्वात् । इति पूर्वपक्षः ।

—३ अधुनोत्तरवादी समाधत्ते-**उच्यत इति** । उपासना मानासिकक्रियान्तर्गतत्वाद्यद्यपि धर्मरूपा तथापि न ब्रह्म धर्मरूपं तस्य ज्ञानरूपत्वेन कृत्यसाध्यत्वात् ।

—४ सृष्ट्यादिवाक्यान्यर्थवादरूपाणीत्युक्तं पूर्वपाक्षिणा तत्खण्डयन्ति-**न चार्थवादानामिति** ।

—५ अनुपयुक्तत्वं विवृण्वन्ति । **उत्पत्तीत्यादिना** । सोमेन यजेतेत्युत्पत्तिविधावेष एव वा प्रथमो यज्ञो यज्ञानामित्यर्थवादः । सामिधो यजतीत्यादौ प्रकारभेदे वम वा एतद्यज्ञस्य क्रियत इत्यर्थवादः । खादिरो यूपो भवति खादिरं वीर्यकामस्येति फलभेद यदाङ्क्ते चक्षुरेव भ्रातृव्यस्येत्यर्थवादस्तथात्मोपासन उत्पत्तिप्रकारफलभेदविधुरे विधौ नार्थवादः संभवति । **प्रकृते**-उत्तरकाण्डे । **माहात्म्यज्ञानार्थं**-ब्रह्ममाहात्म्यज्ञानार्थम् । **तदुपयोगः**-सृष्ट्यादिवाक्योपयोगः ।

—६ ज्ञानोपयोगप्रकारमग्रे वक्ष्याम इत्याहुः-**तस्य चेति** । नन्वात्मेत्येवोपासीतेत्यादिषूत्पत्त्यादिविध्यसंभवेपि विनियोगविधिः कुतो नेत्यत्राहुः-**चतुर्थ इति** । चतुर्थाध्याये तेषां मनोव्यापारबोधरूपत्वमेवोक्तं न तु क्रियाबोधरूपत्वमित्यर्थः ।

—७ व्यासविचारोपि ज्ञानोपयोगीत्यग्रे वक्ष्यत इत्याहुः-**विचारस्यापीति** ।

—८ औपनिषदज्ञानेनापि कर्माणि श्रेयस्त्वसंपादनं भवतीत्याहुः-**किं चेति** । **विद्यया**-ब्रह्मज्ञानेन ।

—९ **श्रद्धया**-फलावश्यंभावनिश्चयेन । **उपनिषदा**-उपनिषदर्थज्ञानेन

—१० **अत एव**-ज्ञानेन कर्माणि श्रेयस्त्वं भवतीति स्वीकारादेव । **सर्वदेवसांनिध्यं**-आहुतिभाक्सर्वदेवसांनिध्यम् ।

—११ **अन्यथा**-देवसामीप्याभावे कर्माणि प्रतिष्ठादिफलाभाससाधकानि भवेयुर्न देवतासांनिध्यरूपमुख्यफलप्रदानीति बोधयन्ति-**आभासत्वमेवेति** । ननु ब्रह्मविदां देहाद्यध्यासाभावात्कथं कर्मस्वधिकार इति शङ्कां निराकुर्वन्ति-**न चेति** । देहाद्यध्यासमन्तरा कर्माणि संभवन्तीति यावत् ।

—१३ सर्वे व्यापारा इति। श्रूयन्त इति शेषः। स्मृतिरिति। भगवद्गीतास्थं वाक्यजातम्।

—१४ युक्तः-ब्रह्मनिष्ठः।

—२१ धर्मविचारकाणामिति। धर्मविचारकैः कर्माणि वीर्यवत्तरत्वसंपत्त्यर्थं ब्रह्मज्ञानमाप्तव्यमित्यर्थः।

—२२ उपसंहरान्ति-तस्मादिति।

—२३ पुनश्चाथशब्दस्यानन्तर्यवाचित्वं स्वीकृत्य शङ्कन्ते। नन्विति।

—२५ विरक्त इति। शमदमादिसाधनचतुष्टयसंपत्त्यनन्तरमित्यर्थः।

८—२ अधेनुं- अप्रसवशीलां गाम्।

—४ केवलस्य-शाब्दज्ञानस्य। निन्दाश्रवणात्-निन्दारूपार्थवादेन निवृत्तिद्योतनादित्यर्थः। समादधते-नेति।

-५ अनुपयोगात्-फलकामनाधिकारिविशेषणेनुपयुक्तेत्यर्थः। अन्येनैव-ब्रह्मविदाप्नोति परमिति वेदवाक्येनैव। समर्पणं-फलप्राप्तिबोधनम्। संध्यावन्दनकर्मवज्ज्ञानं नित्यं तेन कामनाशून्येनापि ज्ञानलब्धौ न प्रत्यवाय इत्याहुः-नित्यत्वादिति।

—६ अधेनुमिव रक्षत इति निन्दार्थवादस्तु मन्तव्यो निदिध्यासितव्य इत्यादिविधीनामङ्गभूतो ज्ञेय इत्याहुः-निन्दार्थवादस्त्विति।

—७ अथ ब्रह्मणो विचारः कर्तव्य इत्येव प्रतिज्ञायाविरोधसाधनफलानामध्यायत्रितयार्थानामप्रतिज्ञातत्वम्। ननु तेविरोधादयोर्था मा सन्त्विति चेन्न विरोधनिराकरणादि विना निःसंदेहज्ञानानुत्पत्तेरिति शङ्कन्ते-नन्विति।

—८ समादधते-ब्रह्मण इतीति। अयं भावः कर्मणि षष्ठीस्वीकारे ब्रह्मकर्मको विचार इत्यर्थः स्यात्तेन ब्रह्मातिरिक्तं विचारायितुमशक्यं भवेत्। शेषषष्ठीस्वीकारे तु तत्संबन्धि विरोधिनिराकरणादिरूपं यद्यत्तत्सर्वं विचारायितुमर्हम्।

—१० सामान्यतो विचार्यवस्त्वन्तर्गतत्वेन ब्रह्मणो गौणत्वापत्तिस्तेन चाविचार्यत्वं स्यादिति शङ्कन्ते-नचेति।

—११ उत्तरयन्ति-ब्रह्ममात्र इति। ब्रह्ममात्रे-ब्रह्मास्तित्वमात्र इत्यर्थः। सर्वो हि ब्रह्मणोस्तित्वं प्रतिपद्यते। ननु यदि न ब्रह्म संदिग्धं तर्ह्यविचार्यतापत्तिस्तेन च-अथातो ब्रह्मजिज्ञासा-इति प्रतिज्ञाहानिरित्याहुः-संदिग्धस्यैवेति। परब्रह्मणि ज्ञानक्रियाशक्त्योः संभवासंभवाभ्यां संशयोस्तीत्यर्थः।

—१२ **शब्दत एवेति** । ब्रह्मविदाप्नोति परमित्यत्र ज्ञानविषयतायां गौणत्वं शब्दमर्यादयार्थमर्यादया प्राधान्यं तथैवात्रापि षष्ठ्यर्थसंबन्धविशेषणतया शब्दमर्यादया गौणत्वमर्थतस्तु प्राधान्यमेवेत्यर्थः ।

वेदप्रामाण्यं पूर्वं कुतो न विचार्यते तदधीनत्वादुत्तरकाण्डगतवेदवाक्यप्रामाण्यस्येति चेत्तत्राहुः-**वेदप्रामाण्यमिति**। सर्वेष्वप्यास्तिकशास्त्रेषु वेदप्रामाण्यं प्रतिपादितं तेनैवात्रापि निर्वाह इत्यर्थः । **प्रतितन्त्रसिद्धं**-गौतमकणादादिसकलमुनिप्रणीतशास्त्रसिद्धम् ।

—१३ अधिकरणमुपसंहरन्ति-**तस्मादिति** । **सिद्धमिति** । अग्रे द्वितीयाद्यध्यायेषु ब्रह्मसंबन्धिनामविरोधादीनां विचारेपि ब्रह्मणो विषयत्वमर्थतः सिद्धमित्यर्थः । एवं चात्र विषयो ब्रह्म । प्रतिपाद्यप्रतिपादकभावः संबन्धश्चाप्यनुक्तसिद्धः । अधिकारिप्रयोजने तु पूर्वमुक्ते । इत्यनुबन्धचतुष्टयम् ।

**सूत्रार्थः**-पुरुषार्थसाधकत्वाद्ब्रह्मज्ञानमिष्टम् । यतः पुरुषार्थसिद्धौ कर्माद्यपेक्षया ब्रह्मज्ञानमेव विशेषतः साधनमतस्तदर्थं विचार आरभ्यत इति ॥ १ ॥

इति प्रथमाधिकरणम् ।

## जन्माद्यस्य यतः शास्त्रयोनित्वात् १।१।२

—१५ अग्रिममधिकरणसूत्रमवतारयन्ति-**किंचेति** । **तत्र**-विचारविषयब्रह्मणि ।

—१६ लक्षणप्रमाणे आह सूत्रकारो बादरायणः-जन्माद्यस्य यतः शास्त्रयोनित्वात् । पूर्वं दण्डायमानसूत्रसमूहस्य तैस्तैर्भाष्यकृद्भिर्व्याख्यानसमये च्छेदः कृतः । अत्र च शङ्कराचार्यादिभिः-जन्माद्यस्य यतः इति भिन्नं सूत्रं शास्त्रयोनित्वात् इति च भिन्नं सूत्रमादृतम् । वल्लभाचार्यैस्त्वेकमेव सूत्रमादृतम् । एतदेव युक्तम् । यतोग्रे सर्वत्र सूत्रेषु हेतुघटितः सूत्रच्छेदः क्रियते तद्वदत्रापि शास्त्रयोनित्वादिति हेतुघटितमेकमेव सूत्रम् ।

—१७ पूर्वपक्षी लक्षणविषये शङ्कते-**नन्वित्यादिना** । श्रुतौ सत्यं ज्ञानमनन्तं ब्रह्मेति स्वरूपलक्षण उक्तेपि कथं तल्लक्षणविषये संशय इति भावः ।

—१८ **विरुद्धमिति** । एतत्कार्यद्वारा लक्षणकथनम् । पूर्वं श्रुतौ स्वरूपलक्षणमुक्त्वा-तस्माद्वा एतस्मादात्मन आकाशः संभूतः-इति कार्यद्वारा लक्षणमुच्यते । अत्र तु व्यासेन जन्माद्यस्य यत इति पूर्वमेव कार्यद्वारा लक्षणमुच्यते । एवं चैतद्व्यासवचः श्रुतिविरुद्धमित्यर्थः । किंचैवं कथनमपि न संभवि । यतः पूर्वं स्वरूपलक्षणस्याकथने लक्ष्यज्ञानाभावात्कार्यद्वारा कारणलक्षणस्य कथयितुमशक्यत्वादित्याहुः-**स्वरूपलक्षणाकथन इत्यादि** ।

—१९ असंभवे हेत्वन्तरमाहुः- **विवादेत्यादि**। जगज्जन्मादिकारणं मायाशबलितब्रह्म वा केवलब्रह्म वेति विवाद एवेति भावः। विवादमेव स्पष्टयन्ति- **न हीति**।

—२० **सर्वसंमतमिति**। अद्वैतिभिर्मायाशबलितब्रह्मण एव कर्तृत्वाङ्गीकारात्। सांख्यैश्च प्रकृतेरेव कर्तृत्वाङ्गीकारात्। न च यतो वा इमानि भूतानि जायन्त इत्यादीनि केवलं वेदवचांसि जगत्कारणत्वं ब्रह्मणो बोधयितुमलं वेदवाक्यानां लक्षणयाप्युपपत्तेः कर्तुं शक्यत्वादित्यभिप्रायेणाहुः- **न चागमोदितमिति**। **वेदमात्रस्य**- केवलस्य वेदस्यानुमानादिरहितस्य।

—२१ **एवं विचारः**- कारणलक्षणात्मको विचारः। वैयर्थ्यं व्युत्पादयन्ति-**लक्षणप्रमाणाभ्यामिति**।

—२२ लक्षणपदेन स्वरूपलक्षणस्यैव ग्रहणात्तस्य च वेद उक्तत्वादयं विचारो विफलो युक्तिरहितश्चेत्याहुः-**किमनेनेति**। **उत्पश्यामः**- विचारयामः।

—२३ उत्तरपक्षी समाधत्त- **उच्यत इति**।

—२४ **संदेहवारकमिति**। वेदप्रामाण्यवादिनां शास्त्रं मीमांसात्मकं संदेहवारकं- उत्पद्यमानसंशयनिरासकं न तु वेदव्याख्याने प्रवृत्तमित्यर्थः।

—२५ अत्र ब्रह्मणि शास्त्रप्रवर्तकः संदेहः कोस्तीत्याहुः- **क्रियाशक्तीत्यादिना**। **परस्थिते**- परब्रह्मणि विद्यमाने क्रियाशक्तिज्ञानशक्ती **संदिह्येते**- संदेहविषयीभवतः।

९-१ कारिकार्थमेव विवृण्वन्ति- **न हीति**। **सूत्रकारो**- व्यासः।

—२ क्रियाशक्तिज्ञानशक्तिविषयं संदेहं स्फोरयन्ति- **तत्रेति**। सत्यमित्यादिश्रुत्या ब्रह्मणः स्वरूपलक्षणप्रतिपादिन्या कर्तृत्वादिप्रपञ्चधर्माणामभावः प्रतिपाद्यते। कार्यलक्षणप्रतिपादिन्या यतो वा इत्यादिश्रुत्या ब्रह्मणः कर्तृत्वं द्योत्यते।

—५ तेन श्रुतिद्वैविध्यात्संशय इति स्पष्टयन्ति- **तत्र संदेह इत्यादिना**। पूर्वपक्षमाहुः- **किं तावदित्यादिना**।

—६ कार्यलक्षणासंभवात्मकं पूर्वपक्षमतं विवृण्वन्ति। पूर्वकाण्डे यत्र फलसंबन्धोस्ति तस्यैव प्रधानवाक्यत्वमङ्गीक्रियते यथा स्वर्गकामो यजेतेत्यादिषु तथात्राप्युत्तरकाण्डे परप्राप्तिरूपफलसंबन्धाद् ब्रह्मविदाप्नोति परमितिप्रधानवाक्यमित्याहुः- **ब्रह्मविदित्यादिना**।

—७ पूर्वकाण्डवदत्रायं नियमः कुतो ग्राह्य इति शङ्कां वारयन्ति- **ऋचापि विवृतमिति**। यद्यस्य प्रधानवाक्यत्वं न ऋचा विवरणं भवेदि-

दित्यपिना ध्वन्यते । ऋगर्थः– सत्यज्ञानादिविशेषणविशिष्टं परमाकाशस्थ-बुद्धिगुहायां विद्यमानं ब्रह्म यो जानाति स विपश्चिता ब्रह्मणा सह सर्वान् कामानाप्नोतीति ।

—९ **फलं**—साक्षात्कृतब्रह्मात्मकम् । **फलवाक्योक्तेत्यादि**– फलवाक्योक्तानां सत्यत्वज्ञानत्वादिधर्माणां ज्ञानादित्यर्थः । **नान्यथा**– कार्यब्रह्मगतकर्तृत्वादिधर्मज्ञानात्पूर्वोक्तं फलं नेत्यर्थः ।

—१० परत्वस्य विवरणार्थमेव कर्तृत्वं श्रुतौ द्योतितमित्याहुः– **कर्तृत्वं चेति** । यः सर्वान्तर आनन्द इत्यानन्दमयकोशवर्णनम् । सर्वपदेनान्नमयादिचतुर्णामान्तरो गृह्यते न ज्ञेयब्रह्मापेक्षयान्तरः ।

—११ **परिचयार्थम्**– आनन्दमयकोशस्य ज्ञेयब्रह्मापेक्षयावरत्वस्य ज्ञापनार्थम् । किंच ज्ञेयब्रह्मणः परत्वस्य ज्ञापनार्थम्– गौणाकाशाद्यपेक्षया हीनत्वम् ।

—१२ **परिहृतं**– गौणाकाशादीनां कर्तृत्वेन स्वातन्त्र्यस्य सिद्ध्यापहृतमित्यर्थः । अयं भावः । अयमानन्दमयो गौणाकाशादीनामुत्पादकोत एव तदपेक्षया श्रेष्ठः । नन्वानन्दमयो यदि गौणस्तर्हि किमर्थं गौणोपासनाफलं वेदेनोक्तमित्यत आहुः–**गौणोपासनेत्यादि** । प्रधानभूता या नित्यशुद्धब्रह्मोपासना तस्या यन्मोक्षरूपं फल तदङ्गत्वेन गौणोपासनाफलमुक्तम् । मोक्षरूपफलात् प्राक्तनानि सर्वाणि क्षयिष्णूनि फलानीत्यवरोपासनाफले वैराग्यमुत्पादयितुमित्यर्थः । ननु तर्हि मुख्यब्रह्मणि निरुपाधिके– तस्माद्वा एतस्मादितिवाक्येन कर्तृत्वं कथं बोध्यते इत्यत आहुः– **तत्रान्यगतकर्तृत्वेत्यादि** । **तत्र**– तस्माद्वा एतस्मादितिवाक्ये । **अन्यगतं**–प्रकृतिगतं यत्कर्तृत्वं तस्य विशेष्ये नित्यब्रह्मणि योध्यारोपस्तेन श्रुतिरूपोनुवादः संभवति । अयं भावः । यद्यपि ब्रह्मणि स्वतःसिद्धं कर्तृत्वं नास्ति तथापि प्रकृतिगतं तत्तास्मिन्नारोप्यते ।

—१३ एवमेवानुवाकान्तरेप्यतिदिशन्ति । **ततश्चेति ततः**— एकतः शास्त्रार्थस्य सिद्धत्वात् ।

— १४ काकवन्तो देवदत्तस्य गृहा इत्यत्राविद्यमाना अपि काका यथा देवदत्तगृहपरिचायका एवमविद्यमानमपि कर्तृत्वं ब्रह्म परिचाययतीत्याहुः– **परिचायकत्वादिति** । **अनूद्यते**– प्रकृतिगतकर्तृत्वमारोपद्वारा ब्रह्मपरिचायकत्वेन श्रुत्यानुवादरूपेणोच्यते । **फलाश्रवणात्**– एतस्मिन्प्रपाठके कार्यब्रह्मोपासनायाः फलस्याश्रवणादित्यर्थः ।

—१५ **पूर्वपक्ष इति** । जगज्जन्मादिकर्तृत्वं शुद्धे ब्रह्मणि न संभवतीति पूर्वपक्षाशयः ।

—१७ उत्पत्तीत्यादि । बृहद्-ब्रह्म जगदुत्पत्तिस्थितिलयकर्तृ । तद् ब्रह्मणो जगज्जन्मादिकर्तृत्वं वेदेन बोधितं तच्चान्यथा गौणमारोपितं वा भवितुं नार्हति ।

—१९ श्रुतिविरोधः—सत्यत्वादिधर्मप्रतिपादकश्रुतीनां गोत्वाश्वत्वादिवद्विरुद्धधर्मप्रतिपादकत्वं नास्ति । कल्पः— कल्पसूत्रमपि न विरुध्यते ।

—२० सर्वभावः—सर्वभवनम् । बृहद्-ब्रह्म । कर्तृत्वाकर्तृत्वादिसर्वभावसमर्थत्वादचिन्त्यैश्वर्यवदस्ति ।

—२१ कारिकार्थं स्पष्टयन्ति । वेदेन-यतो वा इमानीत्यादिना । परमाप्तः— अत्यन्तं यथार्थवक्ता ।

—२२ अन्यथा-वेदस्यायथार्थवादित्वे । सर्वत्र-सत्यं ज्ञानमित्यादिस्वरूपलक्षणवाक्येष्वपि । ननु सकलधर्मराहिते कर्तृत्वं विरुध्येतेत्याहुः— न च कर्तृत्व इति ।

१०-२ ननु सर्वथा निर्धर्मकमेव ब्रह्माद्रियते तत्र कर्तृत्वादीनां संभवः कथमिति चेन्न तादृशनिर्धर्मकत्वस्वीकारे सामानाधिकरण्यस्यैवानुपपत्तेरित्याहुः— सामानाधिकरण्याविरोध इति । अयं भावः । सामानाधिकरण्यं नाम नानापदार्थतावच्छेदकविशिष्टानामभेदेन बोधः । ततश्च पदार्थतावच्छेदकधर्मा यदि धर्मिणि नाङ्गीक्रियन्ते तदा तादृशबोधस्यानुदय इत्येवंरूपो विरोधः । तदुपपत्तेः— सत्यत्वादिधर्माणां सामानाधिकरण्येन बोधोपपत्तेः ।

—३ अहंकारविमूढात्मा कर्ताहमिति मन्यते ।

इति भगवद्वाक्यात्कर्तृत्वं संसारिधर्मो देहाध्यासमूलकत्वादिति शङ्कां वारयन्ति-नचेत्यादिना । प्रापञ्चिके कर्तृत्व इति । प्रापञ्चिककर्तृत्वे देहाद्यध्यासमूलकत्वं न त्वलौकिककर्तृत्व इत्यर्थः ।

—४ अलौकिककर्तृत्वे-वेदबोधितकर्तृत्वे । अत एव-वेदबोधितकर्तृत्वस्यालौकिकत्वादेव । अस्येत्याह-सूत्रकार इति शेषः ।

इदमस्तु संनिकृष्टे समीपतरवर्ति चैतदो रूपम् ।
अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥

इतिकारिकया संनिकृष्टस्य पुरोवर्तिनः प्रपञ्चस्येदंशब्देन ग्रहणमिति द्योतयन्ति-अस्येति पुरोवर्तीति ।

—७ प्रपञ्चरचनस्यालौकिकत्वं द्रढयितुमनेकभूतेत्यादिविशेषणजातमाहुः- अनायासेन-लीलयैव । अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात्-

न लौकिके इति भाष्ये निषेध्यं यल्लौकिकं तदविद्याध्यस्तं न किंतु प्रतीतमेवेत्याहुः— **प्रतीतं च निषेध्यमिति**।

—८ ननु तस्माद्वा एतस्मादात्मन आकाशः संभूत इत्यादिश्रुतिप्रतीतकर्तृत्वस्य न लौकिकमिति निषेधः स्यादित्याहुः—**न श्रुतिप्रतीतमिति**। अयं भावः। श्रुत्या प्रतीतस्य कर्तृत्वस्य श्रुत्यैव निषेधे क्रियमाणे विकल्पो भवेन्न निषेधः। ननु– सदेवेदमग्र आसीद्–नासदासीद्–नो सदासीद्–इत्यादिश्रुतिभिः सत्यं ज्ञानमित्यादिश्रुतिप्रतीतस्य सत्यत्वादेर्यथा निषेधो भवति तथात्रापि श्रुतिप्रतीतस्य श्रुत्यैव निषेधो भविष्यतीत्यत आहुः–**सत्यत्वादय इति**। एवं च लौकिकसत्यत्वादीनामेवोक्तश्रुत्या निषेधो न तु श्रुतिप्रतीतसत्यत्वादीनामित्यर्थः। **सर्वनिषेधे**–लोकश्रुतिप्रतीतसाधारण्येन सर्वनिषेधे।

—९ **तदज्ञानम्**– ब्रह्माज्ञानम्। १ अस्ति २ भाति ३ प्रियमिति त्रीणि ब्रह्मणो रूपाणि तदन्तर्गतमस्तित्वपर्यायं सत्यत्वमेव लोके प्रतीयते न तु वस्तुगत्या तल्लोकस्येति शङ्कां वारयन्ति–नचेत्यादिना।

—१० **कारणगतं**– ब्रह्मगतम्। **कर्तृत्वमिति**। **तथा**–ब्रह्मगतम्।

—११ एवं कृते स्मृत्यनुग्रहोपि भवेदित्याहुः– **स्मृतिश्चेति**।

—१२ ब्रह्मण्यन्यगतं कर्तृत्वमारोपितमिति शङ्कां वारयन्ति– **नचारोपन्यायेनेति**। एतन्न्यायस्वरूपं तु नित्यशुद्धबुद्धस्वरूपं ब्रह्म वास्तवकर्तृत्वोपेतं न भवत्यतोन्यगतकर्तृत्वं तत्रारोप्यते। **तथा सति**– अन्यगतकर्तृत्वस्य ब्रह्मण्यारोपे वक्तव्ये सति। **अन्यस्य स्यादिति**। कस्यान्यस्य कर्तृत्वं ब्रह्मण्यारोपितामिति मीमांसायां न कस्यापि संभवति किंतु ब्रह्मण एव तद्वास्तवमिति बोधयितुमाहुः– **तत्र नेत्यादि**। आनन्दमयाधिकरणे द्वितीयाध्याये च प्रकृतिगतकर्तृत्वं भगवता व्यासेनैव निषिध्यते।

—१३ ननु जीवगतं कर्तृत्वं ब्रह्मण्यारोप्यतामित्यत आहुः– **न जीवानामिति**। प्रपञ्चमध्यवर्तित्वेन जीवानां प्रपञ्चोत्पत्तिकरणे स्वातन्त्र्याभावादित्यर्थः।

—१४ **न चान्येषामिति**। **अन्येषां**– प्रकृतिजीवातिरिक्तानाम्। **उभयनिषेधादिति**। प्रकृतिजीवनिषेधेनैव तदन्तर्गतानामन्येषां निषेध इत्यर्थः। उपसंहरन्ति–**तस्मादिति**। ब्रह्मगतालौकिककर्तृत्वे श्रुतिनिषेधोपि नेत्याहुः– **कर्तृत्वम्**–अलौकिककर्तृत्वम्।

—१६ ननु च असंगो ह्ययं पुरुषः निष्क्रियम् इत्यादि श्रुतौ कर्तृत्वविरोधान्निषेधिका श्रुतिः कल्प्येति चेत्तत्राहुः–**कथा त्विति**। कल्पिता सा श्रुतिर्लौकिकपरा लौकिकप्रमाणान्तःपातिन्यव भविष्यति नालौकिकं कर्तृत्वं

निषेद्धुं प्रभवेत् । अलौकिककर्तृत्वं मंसाध्य भोक्तृत्वं साधयन्ति-**फलवाक्येपीति**। ब्रह्मविदाप्नोति परमिति फलवाक्ये श्रुतानां भोक्तृत्वादिसर्वधर्माणामुपसंहारः कर्तव्यः किमुत केवलं भोक्तृत्वस्यैवेति कैमुतिकन्यायलब्धमर्थमाहुः- **गुणोपसंहारः कर्तव्य इति**।

—१७ तत्र प्रथमं पुष्टिसृष्टिप्रकारेण सूत्रार्थमाहुः- **तथा चेति**। जन्म प्रादुर्भावः आदि प्रथमावयवरूपं येषां ते। **अतद्गुणसंविज्ञानो बहुव्रीहिरिति**। तद्गुणातद्गुणबहुव्रीह्योर्लक्षणे उदाहरणे च । तद्गुणसंविज्ञानत्वं नाम तस्य गुणस्यावयवपदार्थस्य संविज्ञानं विशेष्यान्वयिनान्वयित्वम् । अन्वयित्वं च संयोगसमवायान्यतरसंबन्धेन । यथा शुक्लवाससमानय । यत्र विशेषणस्य कार्ये संबन्धाभावस्तत्रातद्गुणसंविज्ञानत्वम् । यथा चित्रगुमानय ।

—१८ बहुव्रीह्यपेक्षया द्वन्द्वसमासे लाघवात्प्रवाहसृष्टिप्रकारेणाहुः-**अथवेति**। **भावविकारा इति**। १ जायते २ अस्ति ३ विपरिणमते ४ वर्धते ५ अपक्षीयते ६ नश्यनीति षट् ।

—१९ **धर्मवाचीति**। आदिपदस्य प्राथम्यरूपधर्मे शक्तिः। यथा पूर्वमीमांसका गवादिपदानां गोत्वादिधर्मेषु शक्तिमाहुः।

—२० स्वसंबन्धिनं-स्वधर्मिणम्। **लक्षयतीति**। आदिशब्दो धर्मवाचकत्वात्स्वधर्मिणमनुमापयतीत्यर्थः। **तस्य**-प्राथम्यस्य। **उभयसापेक्षत्वात्**-स्वाश्रयतया जन्मनोपेक्षा, निरूपकतयेतरेषां स्थित्यादिपदार्थानामपेक्षेत्यर्थः।

—२२ **अन्ये त्विति**। जन्मन इतरे भावविकारा आदिमन्तः।

—२३ **तदाधारस्य**-स्थित्याद्याधारस्य जन्मन इत्यर्थः। **स्वाधारसद्धर्मवाची**-स्वशब्देन स्थित्यादयो भावविकाराः तदाधारः सन् सद्रूपो यः प्रपञ्चस्तस्य धर्मः सत्त्वरूपस्तद्वाचकः शक्त्या बोधक इत्यर्थः।

—२४ **तद्धर्माणां**-सतः प्रपञ्चस्य विकाराणामुपलक्षको लक्षणया बोधक इत्यर्थः। एतादृशजन्मादि यत इति वाक्यार्थः।

इदानीं मर्यादासृष्टिप्रकारेण बहुसंमतत्वात्तद्गुणबहुव्रीहिमाश्रित्याहुः-**अथवेत्यादि**। **गमनप्रवेशयोरिति**। **गमनं**-उत्पत्तिरूपं जन्म **प्रवेशः**- भङ्गरूपः प्रलयः। जन्मप्रलययोर्मध्ये यत्कार्यस्वरूपं तस्येत्यर्थः। भेदात्-कारणतो भेदात् ।

२५—जन्म आदिर्येषां तज्जन्मादि । अत्र जन्मनो विकारत्वात्तज्जातीयाः सर्वे भावविकारा गृह्यन्ते । विकारबाहुल्याद्बहुवचनं तु न शक्यम् । जातित्वादेकवचनस्योपपत्तेः । तदाहुः-**जात्यपेक्षयेति** । नन्वत्राप्यादिपदस्य -समुदायत्वावच्छिन्ने लक्षणया सर्वेषां बोधेपि जन्मनो जन्मत्वेन रूपेणाबोधाद्

अतद्गुण एव भवेदत आहुः– जन्मेत्यादि। श्रुतत्वादिति। यतो वा इमानीत्यादिश्रुत्युपस्थापितत्वाज्जन्मविशिष्टजन्मनिष्ठादितानिरूपकसमुदायत्वावच्छिन्ने आदिपदलक्षणातात्पर्यात् तद्गुणसंविज्ञान एवायमित्यर्थः।

११—१ जन्म–आदि–अस्येति च्छेदापेक्षया जन्म आद्यस्येति पदच्छेदे सारल्यं मत्वा तस्माद्वा एतस्मादित्येव विषयवाक्यमस्य सूत्रस्य नतु यतो वा इमानीत्यादीति बोधयितुं पक्षान्तरमाहुः– अथवेति।

—२ बहूनां विषयवाक्यानां मध्ये तस्माद्वा एतस्मादित्यस्यैव विचारे कारणमाहुः–फलसंबन्धित्वादिति। ब्रह्मविदाप्नोति परमिति फलबोधकवाक्यघटितप्रपाठकान्तर्गतत्वेनैतस्य प्राधान्यादित्यर्थः। इममेव शास्त्रार्थमतिदिशन्ति–तेनेत्यादि। तेन–ब्रह्मकारणतायाः सिद्धत्वेन। तस्माद्वा एतस्मादित्यत्र ब्रह्मणः प्रपञ्चकारणत्वमिति सिद्धः शास्त्रार्थः। प्रकारान्तरेणेति। यतो वा इमानि, आनन्दाद्ध्येव खल्विमानि इत्यादिवाक्येष्वपीत्यर्थः।

—४ उभयत्र कर्त्रैक्येऽपि प्रकारभेदमाहुः–अत्रेत्यादिना। विस्फुलिङ्गा यथा वन्हेरेकदैवोद्भवन्ति तथा सर्वभूतानां युगपदेवोत्पत्तिर्यतो वा इमानीत्यनेन प्रदर्शिता। तस्माद्वा एतस्मादित्यादिनाकाशादिक्रमेणैवायं विभिन्नोत्पत्तिक्रमो भगवदिच्छामूलक एव।

—५ ननु सूत्रे जन्माद्यस्येति श्लिष्टप्रयोगः किमर्थमादृतो यत्र चानेकव्याख्यानसंभवः स्पष्ट एव कुतो न प्रयोगो येनैकमेव व्याख्यानं युक्तं भवेत्तदाहुः—एतेनेति। एतेन जन्माद्यस्येति श्लिष्टप्रयोगेण। प्रकाराः–व्याख्यानप्रकाराः। ते च स्वमते साक्षात्कर्तृत्वं परमते तटस्थत्वं कुत्रचित् क्रमेणेति सूचिताः। भगवता बादरायणेनेति शेषः। मयापि तथैव व्याख्यातमित्यर्थः। एवं च लक्षणांशो व्याख्यातः।

—७ प्रमाणांशं व्याख्यातुं नित्यशुद्धब्रह्मणः कारणत्वं कथमिति बोधयितुं वा सूत्रशेषं व्याख्यान्ति–शास्त्रे प्रतिपादिता योनिरित्यर्थं मनसिकृत्याहुः– शास्त्रोक्तेत्यादि। ब्रह्म जगतः कारणमिति वेदे प्रतिपादितत्वादित्यर्थः। शास्त्रलक्षणं च।

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येते तच्छास्त्रमभिधीयते॥

इति। एवं च वैदिकसमधिगम्यत्वं यथा ब्रह्मणस्तथाब्रह्मनिष्ठकारणत्वस्यापि नतु लौकिकयुक्तिसमधिगम्यत्वम्।

—८ उपनिषत्पदमनुक्त्वा सामान्यतः शास्त्रशब्दस्य ग्रहणे तात्पर्यमाहुः–सामान्येति। पूर्वकाण्डे–कर्मकाण्डे। पूर्वसृष्टिवाक्यानां–प्रजापति-

रकामयतेत्यादिवाक्यानाम् । **संग्रहार्थमिति** । ब्रह्मणि कारणताप्रतिपादकत्वेनेति शेषः ।

—९ ननु प्रजापतिरकामयतेत्यादिवाक्येषु प्रजापत्यादीनामेव कारणत्वं प्रतिपाद्यते न ब्रह्मण इत्यत आहुः-**यथास्यैवेति** । **अस्यैव**-ब्रह्मण एव । एवकारेण ब्रह्मभिन्नानां प्रजापत्यादीनां कारणत्वव्युदासः । ननु प्रपञ्चस्योत्पत्तिमत्त्वे तस्याब्रह्मत्वापत्तिरित्यत आहुः- **मतान्तरवदिति** । अयं भावः । यथा मतान्तरे सांख्यमते जन्मादीनां विकाररूपत्वं स्वीक्रियते न तथास्मन्मते । किंत्वाविर्भावतिरोभावावेव जन्मादिपदेन गृह्येते ।

—१० अत्रार्थे सूत्रकारसंमतिमाहुः—**तथेत्यादि** । वक्ष्यते द्वितीयाध्याय इति शेषः ।

—११ ननु तस्मादित्यादिवाक्येनाकाशाद्यर्थप्रपञ्चस्य कर्तृत्वं ब्रह्मण्यागतं तथाप्याकाशवाय्वादिशब्दप्रपञ्चस्य कर्तृत्वं नागतं तेन न्यूनता स्यादित्यत आहुः- **नामेति** ।

—१२ **प्रपञ्चमध्यपातात्**-प्रपञ्चान्तर्गतत्वात् । जन्माद्यस्येत्यत्रेदंशब्देन संनिकृष्टमात्रपरामर्शान्नामप्रपञ्चस्यापि श्रोत्रसंनिकर्षात्सोपीदंशब्देन गृह्यते तेन न न्यूनतेति भावः ।

—१३ मतान्तरमनुवदन्ति । **केचिदिति** । **केचित्**-शङ्कराचार्यादयः । **योगविभागेन**- सूत्रद्वयकरणेन । अस्मिन्मते जन्माद्यस्य यतः शास्त्रयोनित्वादिति सूत्रद्वयमङ्गीकृत्य रूपप्रपञ्चकर्तृत्वं प्रथमसूत्रेण नामप्रपञ्चकर्तृत्वं द्वितीयसूत्रेण प्रतिपाद्यते । तथा समन्वयादिसूत्रेष्वेव हेतुवर्णनम् ।

—१४ **अन्वयसिद्ध्यर्थं चेति** । प्रथमान्ते ब्रह्मशब्दे पञ्चम्यन्तस्य शास्त्रयोनित्वादित्यस्यान्वयो न स्यादतः, अतति व्याप्नोतीति व्युत्पत्त्या तस्य प्रथमान्ततापादनमित्यर्थः । **तन्निर्दिशन्ति- अततीत्यादि** ।

—१५ **सूत्रकारसंमतमिति** । शास्त्रयोनिरित्येतावतैव निर्वाहे शास्त्रयोनित्वादित्यत्र त्वात्पदं निरर्थकम् । गौरवघटितं सूत्रकारो न प्रयुङ्क्तेत्यर्थः ।

—१६ उपसंहरन्ति- **तस्मादिति** । **निरङ्कुशजगत्कर्तृत्वेनेति** । स्वतन्त्रतया जगत्कर्तृत्वेनेत्यर्थः ।

—१७ बीजाङ्कुरन्यायेनानादिसृष्टिवादिमीमांसकपूर्वपक्षमुद्भावयन्ति- **नन्विति** । **तपोयज्ञादियुक्तेत्यादि** । अत्र तपोयज्ञादिप्रयुक्तेत्यपपाठः केषुचित्पुस्तकेषु । प्रजापतिप्रभृतीनामित्यत्र प्रभृतिपदेन क्षेत्रज्ञप्रकृत्यादीनां ग्रहणम् ।

—१८ **पूर्वकाण्डे**- कर्मकाण्डे। **तत्तदुपाख्यानेषु**- प्रजापतिक्षेत्रज्ञाद्युपाख्यानेषु।

—१९ ननु मुख्यं कारणत्वं ब्रह्मणः स्यात्, अवान्तरकारणत्वं तु प्रजापत्यादीनामित्यत आहुः- **न चेति**। **अश्रवणात्**- प्रजापत्याद्याख्याने परकारणताबोधकशब्दानामश्रवणात्। ननु पूर्वकाण्डेऽश्रवणेप्युत्तरकाण्डे ब्रह्मकारणता श्रूयत इति चेन्न तत्रोभयप्रतिपादनादित्याहुः- **उत्तरकाण्डे त्विति**।

—२० **द्वयप्रतिपादनादिति**। तस्माद्वा एतस्मात्- यतो वा इमानीत्यादिश्रुतिभिः कर्तृत्वस्य- नित्यशुद्धबुद्ध- इत्यादिभिः कर्तृत्वाभावस्येति द्विधाप्रतिपादनात्। **संदेहश्चेति**। कर्तृत्वाकर्तृत्वेति विरुद्धोभयकोटिकज्ञानत्वेन संशय इत्यर्थः। **मीमांसायाः**- उत्तरमीमांसायाः।

—२१ **उभयसमर्थने**- कर्तृत्वाकर्तृत्वयोर्ब्रह्मण्यङ्गीकारे। **शास्त्रवैफल्यमिति**। उभयस्वीकारेण संदेहनिवारकमीसांसाशास्त्रस्य वैफल्यमिति भावः।

—२२ **तत्सिद्धेरिति**। कर्तृत्वाकर्तृत्वेति धर्मद्वयस्य ब्रह्माणि सिद्धेरित्यर्थः। वेदप्रामाण्यं द्रढयन्ति- **बाधितार्थेत्यादिना**।

—२३ वेदान्तप्रामाण्येऽङ्गीकृते तदुक्तार्थसिद्धिः स्यात्। परं तत्प्रामाण्यमेव नास्मत्संमतमिति मन्वाना मीमांसका आहुः- **किंचेत्यादि**।

—२४ **अनारभ्याधीतत्वेनेति**। **अनारभ्य**- प्रकरणमप्राप्य **अधीतत्वेन** पठितत्वेन। यस्य पर्णमयीजुहूर्भवतीति वाक्यं यथा क्रतुसंबद्धजुहूद्वारा क्रतुं स्मारयत्पर्णतायाः क्रतुशेषतां बोधयति तथा क्रतुसंबद्धात्मोपस्थितिद्वारानारभ्याधीतानां वेदान्तवाक्यानां कर्मोपयोगित्वे पूर्वमीमांसयैवोत्तरमीमांसाया अपि गतार्थता स्यात्। विद्यायामप्रवेशश्च भवेत्। तथाहि कर्मशेषत्वस्वीकारे श्रवणमननादिलभ्यब्रह्मविद्यायां वेदान्तानामनुपयोगो भवेत्।

—२५ **मन्त्रब्राह्मणत्वाभावादिति**। वेदान्तानां मन्त्रब्राह्मणत्वाभावादित्यर्थः। तत्र हेतुः-**यज्ञाप्रतिपादनादिति**। ब्राह्मणेनेष्टसाधनीभूतकर्म प्रतिपाद्यते। मन्त्रेण तु कर्मप्रवृत्तपुरुषस्य व्यापाराः प्रतिपाद्यन्ते। एवं च वेदान्तेष्वेतदुभयाभावान्मन्त्रब्राह्मणत्वरूपवेदाभावः संपन्नः। एवं चेद्वेदान्ता वेदबहिर्भूताः स्युरिति शङ्कामपाकर्तुं निगमयन्ति-त**स्मादिति**। **वेदोषराः**- ऊषरभूमेर्भूमित्वेपि यथा न फलसंपादकत्वं तथा वेदान्तानां वेदत्वेपि वेदफलसंपादकत्वं नेत्यर्थः।

—२६ **तेषां किं स्यादिति**। ऊषरत्वाद्वेदान्तानां विचारेण किं फलं स्यादित्यर्थः। एवं च यत्र वेदान्तवाक्यानामेव निष्फलत्वं तत्र तद्बोधितकर्तृत्वं दूरापेतमिति भावः। मीमांसकमतं प्रत्यादिशन्ति-**मैवमिति**।

—२७ **अध्ययनादिभ्य इति।** अध्ययनाध्यापनादिविध्यनुरोधाद् वेदान्तानां वेदत्वमेव न तु वेदोपरत्वम्। **स्मरणाच्चेति।**

साङ्गोपनिषदो वेदानधीत्याध्याप्य विस्तरात्।
ब्राह्मणो ब्रह्मवर्चस्वी लभते ब्रह्मणः पदम्॥
स्वयंभूरेष भगवन् वेदो गीतस्त्वया पुरा।
शिवाद्या ऋषिपर्यन्ताः स्मर्तारोस्य न कारकाः॥

इति स्मृतेरित्यर्थः। **प्रमाणमिति।** मुख्यवृत्त्या स्वार्थप्रामाण्यबोधकः।

१२-१ **अतिप्रसंगात्**-अर्थवादादिष्ववेदापत्तेरित्यर्थः।

—३ **न व्यभिचरन्ति**-वेदत्वरहिता न भवन्ति।

—४ वेदान्तानां मन्त्रब्राह्मणत्वं साधयन्ति-**ऋग्वेति।**

—५ ननु विधिविषयकत्वाभावाद्वेदान्तानां निष्फलत्वमिति चेन्न। तादृशज्ञानमेव फलोत्पत्तयेलमित्याहुः-**यद्यपीत्यादिना।**

—६ नन्वेवं वेदान्तानां पूर्वकाण्डवैलक्षण्यमिति चेत्तदस्माकं भूषणमेवेत्याह-**भूषणायेति।** भूषणाय-पूर्वकाण्डस्य स्वर्गसाधकत्वाद्वेदान्तजब्रह्मज्ञानस्य च मोक्षरूपोत्कृष्टफलसाधकत्वात्पूर्वकाण्डवैलक्षण्यमिष्टमेवेत्यर्थः।

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्॥

इति श्रुतेः। ननूभयकाण्डयोर्वैलक्षण्ये शास्त्रयोनित्वादिति सामान्यतः सूत्रकरणमनुपपन्नमुपनिषद्योनित्वादिति विशिष्यैव सूत्रकारेण वक्तव्यमिति चेत्तत्राहुः- **काण्डद्वयस्येति।**

—७ तदेव प्रतिपादयन्ति-**यदेवेत्यादिना।**

—८ **पूर्वशेषत्वं सर्वस्य**- सर्वस्य वेदस्य पूर्वकाण्डोक्तकर्माङ्गत्वम्। **तमेतमिति। वेदानुवचनेन**- वेदाध्ययनेन।

—९ **उत्तरशेषत्वं**-सर्वस्य वेदस्योत्तरकाण्डोक्तवेदान्तजज्ञानाङ्गत्वम्। ननु सर्वस्य वेदस्य समतया प्रामाण्येङ्गीकृते प्रजापत्यग्निहोत्रादीनामपि कर्तृत्वप्रतिपादनाद् ब्रह्ममात्रपर्यवसितकर्तृत्वं कथं सिध्येदित्यत आहुः-**कर्मब्रह्मणोरिति।** कर्मणः क्रियारूपत्वेन ब्रह्मणो ज्ञानरूपत्वेन-धर्मो यस्यां मदात्मकः-इत्येकादशस्कन्धोक्तेर्ब्रह्मणोपि धर्मरूपत्वेन धर्मिणोः क्रियाज्ञानयोरैक्यात्पूर्वोत्तरमीमांसयोरपि क्रियाज्ञानरूपधर्मिविचारकत्वेनैक्यात्पूर्वोत्तरकाण्डगतं कर्तृत्वं ब्रह्मण्येव पर्यवस्यतीति न विरोध इति भावः।

—११ **सिद्धमिति।** ब्रह्मणि वेदप्रतिपाद्यं जगत्कर्तृत्वं सिद्धमित्यर्थः।

—१२ वैशेषिकाद्यनुसारिणां मतमनुवदन्ति–केचिदिति । अनुमानं–केवलव्यतिरेक्यनुमानम् । तत्स्वरूपंच । ब्रह्म । इतरभिन्नास्तित्ववत् । जगज्जन्मादिकर्तृत्वात् । यन्नैवं तन्नैवमिति । द्वितीयमनमनुवदन्ति–अन्ये इति ।

—१३ श्रुत्यनुवादकं–यतो वा इमानीति श्रुत्यनुवादकम् । सर्वकर्तृत्वं सर्वज्ञतां विना न सिध्यत्यतः सर्वज्ञत्वसिद्ध्येनुमानमिति बोधयन्ति–सर्वज्ञत्वायेति ।

—१४ तन्मतद्वयं दूषयन्ति- तान्विति । औपनिषदमिति । उपनिषदि दृष्टस्तम् । तं त्वौपनिषदमिति वाक्येन ब्रह्मणः केवलमुपनिषद्वाक्यैरेव ज्ञेयत्वं नानुमानादिनेत्यर्थः ।

—१५ अनधिगतार्थगन्तृत्वादिति । यदनधिगतार्थस्य–अज्ञातार्थस्य बोधकं तदेव प्रमाणम् । तादृशप्रामाण्यं च वेद एवास्ति न त्वनुमाने । तस्य प्रत्यक्षमूलकत्वात् । ननु ब्रह्मण उपनिषदतिरिक्तावेद्यत्वे–आत्मा वारे द्रष्टव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतौ मनननिदिध्यासनयोर्ग्रहणं निष्फलमिति चेत्तत्राहुः–मनननिदिध्यासनयोरिति । श्रवणाङ्गत्वं–ब्रह्मप्रतिपत्तौ श्रवणमेव कारणं मनननिदिध्यासने तु सहकारिकारणे इत्यर्थः ।

—१६ संदेहवारकत्वादिति । शास्त्रस्य–न्यायिकमीमांसाशास्त्रस्यापि संशयनिवारकत्वेन श्रवणाङ्गत्वमेवेति । सूत्रार्थः–आद्यस्याकाशस्य जन्म यतस्तद्ब्रह्म । वेदरूपशास्त्रोक्तकारणत्वादिति ॥ २ ॥

इति द्वितीयाधिकरणम् ।

## तत्तु समन्वयात् ३।१।३

—१८ पूर्वाधिकरणे ब्रह्मणि सामान्यतो जगत्कारणत्वं प्रतिपादितमधुना विशेषरूपेण समवायिकारणत्वप्रतिपादकं समन्वयाधिकरणमवतारयन्ति–तत्रैतत्स्यादिति । तत्र–शास्त्रे । एतत्–वक्ष्यमाणम् । स्यात्–विचार्यं स्यात् । तत्र–यतो वा इमानीति शास्त्रे । कर्तृ वेति । कुलालवद् ब्रह्मणि कारणत्वं वेत्यर्थः । एवं च श्रुतौ ब्रह्म जगतः समवायिकारणं निमित्तकारणं कर्तृकारणं वेति विचार्यं स्यादित्यन्वयः । किमत इति । यद्येवं संशयस्ततः को दोष इत्यर्थः ।

—१९ दूषणमाहुः–यद्येकमिति । कर्तृनिमित्तसमवायिनामन्यतमं यद्येकं स्यात्तर्हि दूषणमाहुः–क्रियाज्ञानशक्त्योरिति । तथा चोक्तत्रिविधकारणमध्ये यद्येकं कारणं ब्रह्म भवेत्तदा तेषामितेतरकारणसमवधानं विना कार्यजनकत्वं न स्याद्ब्रह्मणोपि । इत्थंच क्रियाज्ञानशक्तिमत्त्वेन यन्निरतिशयत्वमितरनैरपेक्ष्येण कार्यजननसामर्थ्यं तद्भज्येतेत्यर्थः ।

—२० ब्रह्मणः समवायिकारणत्वेऽङ्गीकृते दूषणान्तरमाहुः- **मृदादीति**। ब्रह्म यदि मृत्तुल्यं समवायिकारणं स्यात्ततो मृद्वदेवानित्यत्वं सावयवत्वं तस्य भवेदित्यर्थः। **मतान्तरवदिति**। यथा सांख्याः पुरुषस्य परिणामित्वं सावयवत्वदोषादेव नाङ्गीकुर्वन्ति प्रकृतेश्च सावयवत्वादङ्गीकुर्वन्ति। नैयायिकमतं स्वीकृत्य चानित्यत्वदोषस्यावतारः। तथाहि कपालौ घटस्य समवायिकारणं तौ चानित्यौ तद्वद्ब्रह्मणो द्रव्यसमवायिकारणतायामनित्यत्वं स्यात्। संशयं द्रढयन्ति-**कथमेवमिति**।

—२३ **निमित्तत्वकथनादिति**। तस्माद्वा एतस्मादात्मन इति श्रुतावात्मन इति पञ्चम्या ब्रह्मणो निमित्तत्वकारणबोधनादित्यर्थः।

—२४ **तद्वाचकाश्रवणादिति**। कर्तृत्वसमवायिकारणत्वयोर्वाचकपदाश्रवणादित्यर्थः। ननु कल्प्यं समवायि कारणमिति चेदाहुः-**कल्पनायामित्यादि**।

—२५ **सुतरां संदेह इति**। घटसमवायिकारणकपाले सावयवानित्यत्वे दृश्येते तद्वदत्रापि जगतः समवायिकारणे ब्रह्मणि सावयवत्वानित्यत्वयोरापत्त्यात्यन्तं संदेह इत्यर्थः। **एवं प्राप्त इति**। ब्रह्मणि कर्तृत्वसमवायिकारणत्वयोरभावे प्राप्त आह-समाधानसूत्रमिति शेषः।

१३-२ **पूर्वपक्षव्यावृत्त्यर्थ इति**। पूर्वपक्षावसर एव नास्तीति ज्ञापनार्थं तुशब्दः। ननु तुशब्देन निमित्तकारणताया व्यावृत्तिः कुतो नेत्यत आहुः-**निमित्तत्वस्येति**। **श्रुतिसिद्धत्वादिति**। ब्रह्मणि निमित्तकारणतायाः श्रुतिप्रतिपादित्वात्। एवं च तुशब्देन निमित्तकारणताव्यावृत्तिर्न संभवतीत्यर्थः। **मतान्तरेत्यादि**। शास्त्रदृष्ट्या तूपदेशो वामदेववदित्यस्मिन् सूत्रे तुशब्दस्येतरार्थत्वानिरासो यथा तथात्रापि पूर्वपक्षनिरासः। समवायिकारणमिति नामरूपात्मकप्रपञ्चस्येति शेषः।

—४ **सम्यगनुवृत्तत्वादिति**। अनुवृत्तेः सम्यक्त्वं-कार्यमात्रे संबद्धत्वम्। तदेव प्रतिपादयन्ति-**अस्ति भातीत्यादिना**।

—५ ननु ब्रह्मधर्माणामस्तित्वादीनां यथाकार्येन्वयस्तथा प्रकृतिगुणानां सत्त्वादीनामपि कार्येन्वयात्प्रकृतेरेव प्रपञ्चोपादानत्वमस्त्वत आहुः-**प्रकृतेरपीति**। **स्वमते**-शुद्धाद्वैतमते। **तदंशत्वात्**-ब्रह्मांशत्वात्।

—६ प्रपञ्चे परिच्छिन्नत्वमप्रियत्वं च यद्भासते तदज्ञानमूलकम्। सर्वात्मकब्रह्मज्ञानेन परिच्छिन्नत्वाप्रियत्वधर्मयोर्बाधदर्शनादित्याहुः- **अज्ञानादित्यादिना**। नन्वेकोऽहं बहु स्यामिति श्रुत्या भगवता नानात्वं स्वीकृतं तच्च परिच्छि-

न्त्वं विना न संभवतीत्याहुः–**नानात्वमिति**। एकस्मिन् ब्रह्मण्यनुभूयमानं नानात्वम्। **ऐच्छिकमेवेति**। स्वेच्छया कृतमित्यर्थः।

—७ **एकैकांशप्राकट्यादिति**। अयं भावः। जडजीवान्तर्यामिषु प्रत्येकं सच्चिदानंदेतिरूपत्रयसत्त्वेपि जडे सदंशस्य प्राकट्यं चिदानन्दांशयोरिच्छयावरणम्। एवं जीवे चैतन्यांशस्याधिकप्राकट्यात् सदानन्दांशयोरिच्छयावरणम्। तथा चान्तर्यामिण्यानन्दांशस्योद्भूतत्वेन सच्चिदंशयोरिच्छयावरणम्। नन्वेकरसस्य ब्रह्मणो वैचित्र्यं कथमित्याशङ्क्य समादधते–**कथमित्यादिना**।

—८ **घटरूपक्रियास्विवेति**। यथैक एव सदंशो द्रव्यगुणक्रियेति त्रिभिः प्रकारैः प्रकटोभवत्। तत्रैकस्यैव सदंशस्य द्रव्यत्वादिधर्माणां परस्परविरुद्धत्वेन भानं तथा सति सच्चिदानंदेति त्रयाणां परस्परवैलक्षण्येन ज्ञाने किं चित्रमित्यर्थः। ता आप ऐक्षन्त। अस्पन्दनं गतिमतां पुलकस्तरूणामित्यादाविव जडेपि भानत्वादिप्रतीतिरित्यर्थः। **आविर्भावः**- प्रत्यक्षयोग्यता।

—९ एतादृशतारतम्ये भगवदिच्छैव नियामिकेत्याहुः– **भगवदिच्छाया इति**। वैशेषिकादिमतवत्परमाण्वादयो जगत्समवायिकरणं न संभवन्तीत्याहुः– **नचेति**।

—१० **साधारण्येन**। सकलकार्यान्वयिकारणधर्मेण। ननु पार्थिवादिपरमाणुचतुष्टयस्य प्रत्येकं पृथिव्यादौ समन्वयोस्त्येवेत्यत आहुः- **एकस्मिन्निति**।

—११ **अन्याय्यत्वादिति**। एकस्मिन् ब्रह्मण्यनुगते समवायिकारणे संभवति सति अनेककारणत्वकल्पना गौरवघटितेत्यर्थः। ननु घटपटादिकार्येषु मृदादीनि भिन्नोपादानानि लोके दृष्टानि तत्कथं ब्रह्मैवोपादानं जगत इत्याहुः– **लोक इति**। अयं भावः– लोके घटपटादीनां कुलालादिकर्तृविशेषवत्त्वेपि यथा ब्रह्मकर्तृत्वं निराबाधं तथा घटादीनां मृदाद्युपादानकत्वेपि ब्रह्मण उपादानत्वं न विरुद्धम्।

—१२ ननु यत्रास्तित्वादिप्रतीतिस्तत्र ब्रह्मोपादानकत्वमिति नियमेङ्गीकृतेलीकप्रतीतेषु स्वाप्निकरथमार्गादिष्वस्तित्वादिसत्त्वात् ब्रह्मोपादानकत्वं तत्रापि संभवेदित्याहुः– **अलीकप्रतीत इति**। **अलीकप्रतीते**-मिथ्याप्रतीतिविषयभूते स्वप्नरथादौ।

—१३ **सम्यगन्वयाभावादिति**। प्रबोधादनन्तरं तत्रास्तित्वादिप्रतीतेर्बाधादबाधितान्वयाभावादित्यर्थः। **न कार्यत्वेत्यादि**। एवं च तत्राबाधिता-

स्तित्वादिहेतोरेवाभावाद्ब्रह्मकार्यत्वमपि न ब्रह्मकार्यस्यास्तित्वे व्यभिचारोऽपि नेत्यर्थः । ब्रह्मणः समवायिकारणत्वं निगमयन्ति–**तस्मादिति** ।

—१५ **निमित्तत्वमिति** । कार्यमात्रं प्रति ब्रह्मणो निमित्तकारणत्वमित्यर्थः । **स्पष्टमेवेति** । तत्र हेतुमाहुः– **सर्ववादिसंमतमिति** । वैशेषिकादिभिरपीश्वरस्य निमित्तकारणताङ्गीक्रियते ।

—१६ अन्यमतमुपक्षिपन्ति– **केचिदिति** । रामानुजाचार्यादयः ।

—१७ **योजयन्तीति** । तन्मते प्रथमसूत्रेण ब्रह्मजिज्ञासाप्रतिज्ञा । ब्रह्म च किंलक्षणमिति जिज्ञासायां जन्मादिसूत्रेण ब्रह्मलक्षणमुक्त्वा ब्रह्मणि सर्वज्ञत्वसर्वशक्तिमत्त्वयोः समर्थनम् । तद्दृढीकरणार्थं पुनः शास्त्रयोनित्वादिति सूत्रं तदर्थश्च शास्त्रस्य वेदरूपस्य योनित्वात् कारणत्वादिति । शास्त्रे वेदे योनित्वं कारणत्वं यस्य वेत्यर्थः । तथाच शास्त्रोक्तसर्वकारणतावद्ब्रह्मेति सिद्धम् । अत्र पूर्वपक्ष एतच्छास्त्रोक्तसर्वकारणतावत्त्वं ब्रह्मणस्तदा सिध्येद्यदा कर्मप्रतिपादकभिन्नानां सिद्धार्थबोधकानां वेदान्तवाक्यानां स्वार्थे प्रामाण्यं स्यात् तदेव न सिध्यति तेषां क्रियाप्रतिपादकत्वाभावादतः पूर्वकाण्डे यथा क्रियार्थानामर्थवादानां कर्मसंबद्धं प्राशस्त्यकर्तृदेवतादिप्रकाशनद्वारा विध्येकवाक्यतया प्रामाण्यमङ्गीकृतं तथा सिद्धार्थानां वेदान्तवाक्यानामपि कर्मसंबद्धं कर्तृदेवतादिप्रकाशनद्वारोपासनाविध्येकवाक्यतया प्रामाण्यं न तु स्वातन्त्र्येण । इत्थंच यतो वा इमानीत्यादिशास्त्रोक्तकारणत्वेन सर्वज्ञत्वसर्वशक्तिमत्त्वयोरसिध्या शास्त्रयोनित्वादित्यत्रोपष्टम्भको हेतुरसिद्धः । अस्य पूर्वपक्षस्य समाधानार्थं तत्तु समन्वयादिति । तन्मतेनास्यार्थस्तु तत्तु ब्रह्मणो वेदान्तोक्तकारणत्वं तु समन्वयात् सिद्धार्थे योग्यत्वेन समन्वयात् तरति शोकमात्मवित् । ज्ञानादेव हि कैवल्यम् । ब्रह्मैव सन् ब्रह्माप्येति । इत्यादौ ब्रह्मणो वेदान्तैकसमधिगम्यत्वेन तत्प्रापकसाधनफलादिप्रतिपादकतया पुरुषार्थपर्यवसानेन वेदान्तानां स्वार्थे प्रामाण्याभ्युपगमान् न तत्प्रामाण्यार्थं क्रियोपासनावाक्याकाङ्क्षेत्यर्थः । पूर्वमतं दूषयन्ति–**तदिति** ।

—१८ असंगतिं विवृण्वन्ति–**तथाहीति** ।

—१९ **अवान्तरवाक्यानां**–मन्त्रार्थवादरूपवाक्यानाम् । **प्रकारशेषत्वादिति** । यज्ञसाधकाङ्गत्वेन तत्साधनसमुदायमध्यपातादित्यर्थः ।

—२० **सर्वस्मिन्निति** । ज्ञानकाण्डसहितेपीत्यर्थः । **तद्गुरुणा**–जैमिनिगुरुणा । शिष्यस्य जैमिनेर्भ्रमसंभवेपि तद्गुरोर्व्यासस्य सर्वज्ञस्य न कदाचिदपि भ्रमसंभव इत्यर्थः ।

—२१ प्रतिज्ञातत्वादिति। एवं चोत्तरकाण्डस्यापि कर्मणि समन्वयाङ्गीकारे व्यासकृतपृथक्ब्रह्मजिज्ञासाया वैयर्थ्यमेव भवेत्। संदेहमात्रेत्यादि। धर्मब्रह्मजिज्ञासयोः केवलं संदेहनिवारणमेव फलं संदेहोपि मन्दमध्यमाधिकारिणोरेव संभवति उत्तमस्य तु न संभवति। न त्वित्यादि। वेदोक्तधर्मब्रह्मप्रमितिसाधनातिरिक्तं फलं नास्तीत्यर्थः।

—२२ तथा सति—वेदप्रामाण्ये मीमांसाधीने सति।

—२५ सर्वस्य—अग्निहोत्रादिकर्मजातस्य। साधनमित्यादिश्लोकार्थः। श्रुतिराखिलकर्मजातस्य साधनं फलं च ब्रूते कर्मसु प्रवृत्तिं जनयितुं तस्याः सामर्थ्यं न। यदि सा कर्मण्यपि जनं प्रवर्तयेत्तर्हि कर्माकरणजो नरको न कस्यापि स्यात्।

१४—१ तर्हि कर्मप्रवर्तकत्वं कस्येत्याहुः—प्रवर्तकस्त्विति। सर्वात्मा एष तेन्तर्यामीति श्रुत्या। तस्य च प्रवर्तकत्वं-एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते—इतिश्रुत्या।

—२ पूर्वत्र—पूर्वकाण्डे। यज्ञरूपो विष्णुः सिद्धावस्थापन्ननामार्थो बोध्यते। सिद्ध एवेत्येवकारेण यजेतेति तिङन्तार्थभावनारूपक्रियाव्यवच्छेदः।

—३ सर्वत्र—काण्डद्वये। वेदवादिनां—वेदप्रामाण्यज्ञानपूर्वकं तदनुसारिणाम्।

—४ सिद्ध एव हि वेदार्थ इत्यत्र हेतुमाहुः— मन्त्राणामित्यादि। श्रुतौ मन्त्राणां दर्शनं तु स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत्, स एतं दीक्षितवादमपश्यत्, इत्यादौ। कर्मणां चैवेति चकारः—अपश्यत् पुरोडाशं कूर्मं भूतं सर्पन्तम्—इति द्रव्यादीनां दर्शनस्य समुच्चायकः।

—५ ननु सर्वस्य वेदस्य सिद्धार्थपरत्वे यजेतेत्यादिलिङ्घटितवेदवाक्यानां का गतिस्तत्राहुः—कृतिरिति कृतिर्भावनारूपपर्याया वेदबोध्या कृतिः। सिद्धतुल्यत्वं यजेतेत्यादिवाक्यानां लिङ्बोध्यकृतेरपि सिद्धवदर्थसंपादकत्वेन सार्थकत्वमित्यर्थः। वेदः— वाक्यरूपो वेदः। स्वार्थे—शक्तिलक्षणान्यतरवृत्तिघटिततद्रूपार्थे। संमत इति पाठो युक्तः। चकारेणार्थवादवाक्यानां लक्षणया प्राशरस्त्यर्थे प्रमाणीभूतत्वम्। एवंचायं निर्गलितोर्थः। पूर्वकाण्डे यज्ञरूपार्थ उत्तरकाण्डे ब्रह्मरूपार्थे च तात्पर्यादुभयोरपि काण्डयोः सिद्ध एव वेदार्थो न तु साध्ये।

—६ दर्शनश्रवणश्रुतिमुदाहरन्ति— प्रजापतिरिति। अपश्यादिति सिद्धस्यैव दर्शनं लब्धंश्रुत्या।

—७ अस्यां तैत्तिरीयब्राह्मणश्रुतावपश्यदिति पदस्य ज्ञानार्थताया अपि संभवेन निःसंदिग्धसिद्धार्थता न स्यादतो द्वितीयां संहिताप्रथमाष्टकस्थामृच-

माहुः–प्रजापतिर्यज्ञानसृजतेत्यादि। तत्रोन्मानं कर्मणामसिद्धत्वे वक्तुमशक्यमिति सिद्ध एव वेदार्थः।

—९ ननूपाख्यानानामर्थवादत्वेन मिथ्यात्वमिति चेन्न बुद्धावतारात्प्रागस्यार्थस्य केनाप्यनुक्तत्वात्। ननु यदि बुद्धेन भगवता तथोक्तं तर्हि यद्यदाचरति श्रेष्ठ इति न्यायेनान्योपि तथा मन्यन्तामिति चेन्न। असुरव्यामोहनार्थं बुद्धेन तथोक्तत्वेनान्यैस्तथाननुष्ठेयत्वात्। शंकरस्य गरलभक्षणवद्बुद्धस्य भगवतस्तु तद्भूषणायैव। एतदाहुः–नहीत्यादिना। बुद्धजन्मनः–बुद्धावतारात्प्राङ्न केनचित्तथोक्तम्। असुरव्यामोहनार्थं तथा भगवता कृतत्वेनान्यैस्तदनुसरणं न युक्तमिति फक्किकार्थः।

—१० तथा सति–उपाख्यानानां मिथ्यार्थत्वे सति। एकदेशमिथ्यात्वादखिलोपि वेदो मिथ्या भवेत्। उक्तं–केनापीति शेषः। अत्रार्थे दृष्टान्तमाहुः–मिथ्येत्यादि। कदाचिदसत्यकथनेनाप्रामाणिकत्वेन गृहीते जने यथानाश्वासः सर्वदा तथा वेदेपि स्यादित्यर्थः।

—११ उपसंहरन्ति–तस्मादिति। यस्मात् पूर्वोक्तरीत्या विचारे कृते सर्वस्य वेदस्य क्रियापरत्वं नास्ति ये तु तथा वदन्ति तेषां पूर्वमीमांसानभिज्ञत्वं स्फुटमेव।

—१२ उत्तरवादिनोपीति। पूर्वाज्ञानं– पूर्वपक्षिणामज्ञानम्। पूर्वपक्ष्याशयश्चायं– सर्वोहि वेदो लिङर्थप्रेरणापरः प्रेरकश्च। यजेतेति प्रेरणाया आत्मेत्येवोपासीतेति प्रेरकत्वस्य लिङ्घटितवाक्येन श्रावणात्। अर्थवादमन्त्रादिवाक्यानि च विध्येकवाक्यतया प्रमाणानि एवंच सर्वो वेदो यज्ञ उपासनायां च प्रवृत्तिरूपक्रियाया एव मुख्यतया प्रतिपादको न तु ब्रह्मस्वरूपस्य प्रतिपादकः। एवमशुद्धमज्ञानमयं पूर्वपक्षमङ्गीकृत्य तत्खण्डनार्थं प्रवृत्ता उत्तरवादिनोप्यज्ञा एवेत्यर्थः। पूर्वानुपयोगित्वं–यज्ञानुपयोगित्वम्।

—१३ एवं च ब्रह्मज्ञानं यज्ञकर्मण्यनुपयुक्तं नेत्यपि तूपयुक्तमिति छान्दोग्यश्रुतिप्रामाण्येन साधयन्ति– यदेवेत्यादिना।

—१५ कारणता–सहकारिकारणता। एवं चोपनिषज्ज्ञानं यज्ञादिकर्मणि सहकारिकारणम्। ननूपनिषदर्थज्ञानेनाविद्यानिवृत्तौ सत्यां यज्ञे प्रवृत्तेरेवाभावाच्छ्रुतिप्राप्तापि सहकारिकारणता बाध्येतेति शङ्कन्ते–न चेति।

—१६ ननु ब्रह्मज्ञानेन सर्वयज्ञफलप्राप्तौ वसिष्ठादिषु यज्ञाग्रहः किमर्थमिति शङ्कन्ते–न चैवमिति।

—१७ उत्तरयन्ति-इत्थंभूतत्वादिति। यज्ञस्य-विष्णोः 'यज्ञो वै विष्णुः' इति श्रुतेः। इत्थंभूतत्वं-ब्रह्मज्ञानवता वसिष्ठाद्यधिकारिपुरुषेण कृते यज्ञे विष्णुराविर्भवति तेनैव फलसिद्धिरन्यथा नेत्यर्थः। ननु यज्ञादौ प्रवृत्तिर्लौकिक-फलमुद्दिश्य भवति ब्रह्मज्ञस्य तु लौकिकफलार्थं प्रवृत्तिरनुचितेति शङ्कन्ते-**किं चेति**। **ब्रह्मफलस्यापि**-ब्रह्मज्ञानफलस्यापि। अत्र भृगुवल्लीस्थश्रुतिं प्रमाणयन्ति-**य एवं वेदेत्यादि**। अन्नवत्त्वमन्नादत्वमित्यादयो लौकिक-फलविशेषाः।

—१९ देहवर्णाश्रमाद्यध्यासवत एव यज्ञेधिकार इति मतं खण्डयन्ति-**अत्यन्ताविद्यावत इति**। देहाध्यासस्य यज्ञकारणता नास्ति।

—२० ब्रह्मार्पणमित्यादिस्मृत्या ब्रह्मण्येव कारणताबोधनादित्याहुः-**न चेत्यादिना स्मृतेरित्यन्तेन**।

—२१ उपसंहरन्ति-**तस्मादिति**।

—२२ **अन्योन्योपयोगित्व इति**। ब्रह्मात्मज्ञानं देहात्ममतिनिरासकतया यज्ञादावुपयोगि यज्ञाश्चान्तः करणशुद्धिद्वारा ब्रह्मविद्यायामुपयोगिन एवं-च परस्परोपयोगे न कोपि दोष इत्यर्थः। ननु परस्पराकाङ्क्षत्वेनैकवाक्यत्वादे-कशास्त्रत्वमेव स्यादित्यत आहुः-**क्रियेति**। **पुरुषार्थसिद्ध्यर्थामिति**। धर्मार्थकामरूपत्रिवर्गसाधनार्थं क्रियाज्ञानयोरुभयोरपि स्वातन्त्र्याच्छास्त्र-भेदसिद्धिरित्यर्थः।

—२४ अन्यैराचार्यैरस्य सूत्रस्यार्थो न ज्ञात इति ज्ञापयन्ति-**किं चेत्यादिना**। जन्मस्थितिलयकारणीभूतं ब्रह्म पक्षीकृत्य वेदान्तशास्त्रप्रति-पाद्यत्वं साध्यते शङ्कराचार्यादिभिः समन्वयादिति हेतुश्च प्रतिपाद्यते। तन्मत-तात्पर्यं चैतत्। यज्जगज्जन्मादिकारणीभूतं ब्रह्म तद् वेदान्तशास्त्रप्रतिपाद्यमस्ति वेदान्तवाक्यसमनुगतत्वात्।

१५-१ अत्रायं विचारः। निःसंदिग्धतया ब्रह्माणि सर्वेषां वेदान्तवा-क्यानां समन्वयोखिलशास्त्रसमाप्त्यनन्तरं सेत्स्यति ननु ततः पूर्वं चतुर्थ एव सूत्रे तेन कथं हेतुं सिद्धवत्कृत्य निर्देशस्तदाहुः-**तत्कथमित्यादि**। **अग्रिम-ग्रन्थवैयर्थ्यं चेति**। अतः परस्मिन्ग्रन्थे सर्वेषां वाक्यानां समन्वयः साध्यत्ते सोपीदानीं सिद्धत्वाद्व्यर्थ इत्यर्थः।

—२ ननु यथा भाविनो ग्रन्थस्य बुद्धिस्थस्य प्रतिज्ञा तथा समन्वयं साधयिष्य इति बुद्धिस्थप्रतिज्ञागर्भितो हेतुरपि न विरुध्यत इत्याशङ्कन्ते-**न चेति**। उत्तरमाहुः- **अनुपयोगादिति**। अयमर्थः। अन्यमतनिराकरणं तादितरो बुद्धिस्थो हेतुः साधयितुं नालम्। एवंच समन्वय दिति हेतुना

भट्टादीनां मतं निराकार्यं तत्र बुद्धिस्थस्य हेतोरनुपयोगः। किंच यथा वयं वेदान्तिनो वेदान्तानां ब्रह्मप्रतिपादकत्वमङ्गीकुर्मस्तथा तेपि मीमांसका वेदान्तानां ब्रह्मप्रतिपादकत्वमङ्गीकुर्वन्ति केवलं तेषामस्माकं चैतद्विवाद-स्थानं यत्ते वेदान्तानां पूर्वकाण्डशेषत्वरूपं गौणत्वं ब्रुवते वयं वेदान्तानां मुख्यत्वमङ्गीकुर्म इत्येतदाहुः- **गौणमुख्यभाव इत्यादि**।

—३ ननु सम्यङ्‍ मुख्यत्वेन ब्रह्मप्रतिपादनं समन्वयशब्दार्थ एवंच हेतुप्रयोगस्य नौचित्यमतो दूषणान्तरमाहुः- **नचेति**। **येन रूपेण**- यावद्धर्मशून्यत्वरूपेण। समन्वयः- सर्वेषां वेदान्तवाक्यानामिति शेषः। **मतान्तरस्थैः**- अद्वैतवादिभिः।

—४ एवं चाग्रिमसूत्रेषु सर्वत्र कर्तृत्वादिरूपेणैव तत्तद्वाक्यानां ब्रह्मप्रति-पादकत्वमसंदिग्धमिति सम्यक् मुख्यत्वेनान्वयः समन्वय इत्यर्थकसमन्व-यादिति हेतुर्नोचितः। सर्वत्र श्रुत्या सिद्धार्थ एव प्रतिपाद्यते चेत्तर्हि संदेह एव नोदेति तेन व्यर्थः शास्त्रारम्भ इत्यत आहुः-**शास्त्रारम्भस्त्विति**। प्रथमसूत्रे नच गौणतापत्तिरजिज्ञास्यत्वं चेत्यादिना ग्रन्थेन। उपसंहरन्ति- **तस्मादिति**। ब्रह्म विकारि न कार्यरूपत्वाभावात्कारणरूपत्वाच्चेति बोधयितुं केवलं कारणं ब्रह्मेत्येवोच्यतां सामान्यरूपेण न तु विशेषतः समवायिकारणमिति। समवायित्वेन ब्रह्मणि कोप्युत्कर्षः प्रतिपादयितुं न शक्यत इत्यर्थः।

—६ **विकृतत्वमिति**। यत्परिणामि तद्विकृतमिति व्याप्त्या ब्रह्मणि विकृतत्वं स्यादित्यर्थः।

—७ नन्वात्मपदस्वारस्यादेव विकृतत्वं न स्यादतो दूषणान्तरमाहुः-**अन-र्थरूपत्वेनेति**। समवायिकारणस्य कार्यरूपतासिद्धान्ताज्जगद्रूपब्रह्मकार्यस्य विनाशित्वेन तत्समवायिकारणस्य ब्रह्मणो विनाशित्वं स्यात्तदयुक्तमित्यर्थः। **अनारम्भणीयमिति**। समवायिकारणत्वद्योतनाय नारम्भणीयमिति पूर्वपक्षः।

—८ उत्तरयन्ति-**नैवमिति**। **सर्वोपनिषत्समाधानार्थं**-सर्वोपनिषद्गत-विरुद्धवाक्यानामेकवाक्यतासंपादनार्थम्।

—९ **समवायित्वं**- उपनिषत्सिद्धं समवायित्वम्। **व्यर्थः स्यादिति**। स्वार्थे प्रामाण्याभावाद्व्यर्थता। तत्र कानिचिदुदाहरन्ति।

—१० **इदमिति**। अस्मिन्प्रथमवाक्ये मैत्रेयीब्राह्मणस्थे सर्वस्मिन्ना-त्माभेदः प्रतिपादयितुमिष्टः स च ब्रह्मणः समवायिकारणत्वाभावे न संगच्छेत। द्वितीयं छान्दोग्यस्थं सनत्कुमारनारदसंवादविषयकं तृतीयं पुरुषविधब्राह्मणस्थं, चतुर्थं मैत्रेयीब्राह्मणस्थं तदर्थश्च सर्वमिदमात्मभिन्नं यो वेद तं प्रति ब्रह्म परादात्सोमृतत्वाभावरूपं पराभवं प्राप्नुयादित्यर्थः।

पञ्चमं तैत्तिरीये ब्रह्मवित्प्रपाठकस्थं तत्र ब्रह्मणः समवायिकारणत्वाङ्गीकरणमन्तरेणैकस्यैव कर्मकर्तृभावो न घटते। षष्ठं छान्दोग्यस्थम्। सप्तमं गार्गीब्राह्मणस्थं तत्र तु स्पष्टमेव समवायित्वं मृत्तिकादिदृष्टान्तेन दृश्यते। एवंच सामान्यकारणताज्ञाने जाते सामान्यधर्मप्रकारकं ज्ञानं विशेषधर्मप्रकारकजिज्ञासाजनकमिति न्यायात् सामान्यधर्मजिज्ञासापूर्तिद्वारा विशेषधर्मजिज्ञासासंपादकत्वेनावश्यकमिदं सूत्रम्।

—१४ ब्रह्म समवायिकारणमिति श्रुतिभिर्निःसंदिग्धं प्रतिपादिते सूत्रमिदं व्यर्थमित्याशङ्कते–**नन्विति**। **एवं**–श्रुतिप्रतिपादितत्वेन।

—१५ **सूत्रप्रवृत्तिरिति**। सूत्रप्रवृत्त्यन्यथानुपपत्त्या श्रुतिभिर्ब्रह्मणः समवायित्वं न प्रतिपाद्यत इति शङ्काकर्तुराशयः। समादधते–**उच्यत इति**। **अस्थूलादीति**। आदिपदेनानण्वित्यादि गृह्यते। एवं च निर्विशेषत्वप्रतिपादकवाक्यानि। अपिना सविशेषत्वप्रतिपादकानां संग्रहः। **प्रपञ्चतद्धर्मेति**। प्रपञ्चस्तद्धर्माश्चेति द्वन्द्वः। तस्य प्रपञ्चस्य धर्माः सविशेषत्वादयः। अयमर्थः। उपनिषत्सु निर्विशेषत्वबोधकानि सविशेषत्वबोधकानि चेत्युभयविधवाक्यानि सन्ति। तेषां परस्परविरोधेनैकविधवाक्यानां स्वार्थस्य मुख्यवृत्त्या जायमानार्थस्य बाधो वक्तव्यो भवेत्समन्वयसिद्ध्यर्थं तत्र कोपि मायावादिसदृक्षः प्रपञ्चस्वरूपवाक्यानां बाधं कृत्वा तत्र गौणत्वं कल्पयेत्। तत्र युक्तिः ब्रह्मस्वरूपापेक्षया कार्यस्य प्रपञ्चस्य तदैक्षतेतीच्छोत्तरं जायमानत्वेन गौणत्वम्। एवंच तथा प्रपञ्चस्वरूपवाक्यानां गौणतारूपो बाधो मा भूदेतदर्थं भगवान् व्यासः समन्वयसूत्रं सूत्रितवान्। अत्र दृष्टान्तः।

—१८ **जन्मादिसूत्रवदिति**। जन्मादिसूत्रेण कर्तृत्वं ब्रह्मण एव नतु प्रकृत्यादीनामिति यथा प्रतिपादितं तथानेन सूत्रेण समवायित्वं ब्रह्मणि प्रतिपादितमितीममर्थमाहुः– **अस्थूलादीत्यादिना सूत्रितवानित्यन्तेन**।

—१९ एवं शङ्कासमाधाननिर्गलितं सिद्धान्तमाहुः– **तथाचेति**। **वेदान्तार्थः**–सर्वं खल्विदं ब्रह्मेत्यादिश्रुत्यर्थः।

—२० **संगत इति**। निःसंदिग्धतया सगत इत्यर्थः। एवंच विरुद्धवाक्यैः संदेहोदये तन्निराकरणार्थं सूत्रप्रवृत्तिरिति भावः।

—२१ ननु विरुद्धसर्वधर्माश्रयत्वं कल्पनासाध्यमित्यत आहुः–**भूषणायेति**। नात्र कल्पनापेक्ष्यते। अपाणिपादो जवनो ग्रहीतेत्यादिश्रुत्या भूषणस्य सत्त्वात्। नाहि परस्पराविरुद्धधर्मवान्यः कश्चन संभवतीति ब्रह्मण एवायमसाधारणो धर्म इति कृत्वा भूषणमेवैतदित्यर्थः।

—२२ ननु ब्रह्मणि विरुद्धसर्वधर्मवत्त्वस्य साधनमित्येतदेव कारणं स्याच्चेदस्य तर्हि तत्पूर्वसूत्रेणैव गतार्थं तत्र कर्तृत्वधर्मस्य ससाधनात्।

एवंच पुनर्ब्रह्मणि समवायित्वस्वीकारो विफलस्तदङ्गीकारे च विकृतत्वदोषोपि दुरुद्धरस्तेन न कर्तव्यमेवेदं सूत्रमिति शङ्कन्ते-किंचेति । अन्यपदार्थसृष्टौ-ब्रह्मणोन्यो यः पदार्थस्तदुपादानकसृष्टौ । कुलालेन मृदुपादानको घटः क्रियते तद्वद् ब्रह्मणा स्वातिरिक्तपदार्थोपादानकसृष्टिकरण इत्यर्थः । वैषम्यनैर्घृण्ये-एकस्य सुखित्वविधानमन्यस्य दुःखित्वविधानमेतद्रूपवैषम्यं दुःखित्वविधानेन च निर्दयत्वमिति दोषद्वयं ब्रह्मणि स्यादित्यर्थः । समवायिकारणत्वं ब्रह्मणीति स्वीकर्तॄणामस्माकं मते तु-आत्मानꣳ स्वयमकुरुत । एकाकी न रमते । बहु स्यां प्रजायेयेति । निर्विकारो निरञ्जनः । इति श्रुतिभिर्निर्विकारत्वमपि स्वीकर्तव्यं श्रुतिप्रामाण्यात्स्वसृष्टौ स्वयमेव जगद्रूपेण क्रीडतीति वैषम्यनैर्घृण्यसंभावनापि नास्तीत्यतः समन्वयसूत्रं कर्तव्यमिति भावः । ननु पर्जन्यवदीश्वरः साधारणं कारणं बीजसाद्गुण्यवैगुण्यवशाद्यथा वृक्षाणां वैलक्षण्येनोत्पत्तिरेवं प्राणिकर्मवैलक्षण्येन प्राणिषु विषमतेति न वैषम्यनैर्घृण्यावकाश इत्यत आहुः-कर्माधीनत्व इति ।

—२३ अनीशिता-स्वतः सामर्थ्याभावः कर्माधीनत्वात् । ततः-अस्वातन्त्र्ये । भज्येत- स्वतन्त्रः कर्तेति पाणिनिनिरुक्तकर्तृत्वलक्षणाभावात् । सर्वमाहात्म्य इति । कर्तृत्वान्यथानुपपत्त्या कल्पितानि सर्वज्ञत्वादीनि कर्तृत्वाभावे नश्येयुरित्यर्थः ।

१६-१ ब्रह्मणि सर्वधर्माश्रयत्वमसहमानो निर्विशेषमात्रत्ववादी पुनः शङ्कते-नन्विति । एवं-कर्तृत्वादिकम् । अपवादार्थत्वादिति । ब्रह्मणि श्रुत्या यत्कर्तृत्वं बोध्यते तदविद्याकल्पितत्वेनापवादार्थमेव बाधार्थमित्यर्थः । वस्तुतः कर्तृत्वं ब्रह्मणो नास्ति तेन न विरुद्धसर्वधर्माश्रयत्वम् । नन्वसत्यार्थप्रामाण्येन श्रुतेरप्रामाण्यमित्यत आहुः-रज्जुसर्पवदित्यादि । अयं भावः । यथातिचपलं बालं रज्जुः सर्पत्वेन प्रदर्श्यते भीत्यर्थं ततः परं विनीतं तमेव नासौ सर्पः किंतु रज्जुरिति बोध्यते तद्वत्संसाराद्यासक्तेषु भीत्यर्थं कर्तृत्वनियामकत्वादिरूपं वेदेन बोध्यते ततो वैराग्याद्युत्पत्तौ कर्तृत्वादिरहितं स्वरूपं बोध्यते तेन न कर्तृत्वादौ तात्पर्यम् ।

—२ नन्वात्मैवेदं सर्वमिति श्रुत्या समवायित्वं बोध्यत इत्यतो व्यापकत्वविषयिणीं स्मृतिं प्रमाणयन्ति-सर्वं समाप्नोषीति । समाप्नोषि-व्याप्नोषि । भगवद्गीतासु विश्वरूपदर्शनानन्तरमर्जुनेनोक्तमिदम् । एवंच पूर्वोक्तस्मृतिप्रामाण्यादात्मेत्यादिश्रुतेर्व्यापकत्वमर्थो न तु समवायित्वम् ।

—३ समादधते-मैवमिति । पाषण्डित्वं-पापलिङ्गत्वम् । तथा सति-एवमर्थकल्पने ।

—४ गणितत्वादिति। तत्र गीतावाक्यं प्रमाणयन्ति।

—५ असत्यं-मिथ्याभूतं, अप्रतिष्ठं-न विद्यते ब्रह्मणि प्रतिष्ठा यस्य तत्। अनीश्वरं-न विद्यत ईश्वरो नियन्ता यस्य तत्।

—६ अपरस्परसंभूतं-सर्वस्य कारणत्वकार्यत्वाभिमतस्य मिथ्यात्वात् स्त्रीपुरुषादिरूपकारणाजन्यमित्यर्थः। एवं चेत्कथं दृश्यते तदाह-कामहैतुकं, अन्यत्किम्। कामातिरिक्तं कारणं नास्तीत्यर्थः। अयं भावः। यथा कामिना पुरुषेणाविद्यमानापि कामिनी दृश्यते द्वेषादनिष्टमपि दृश्यते तथाविद्यादोषान्मिथ्याभूतमपि दृश्यत इति त आहुः।

—८ शास्त्रानर्थक्यं च-यतो वा इमानि भूतानि। जन्माद्यस्य यतः। इति ब्रह्मणो जगत्कारणताप्रतिपादकश्रुतिसूत्रयोर्वैयर्थ्यम्। किंचात्रेदं बोध्यम्। अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते। इति कथयितुरद्वैतिनो मतेन शास्त्रप्रवृत्तिर्भ्रमनिवृत्त्यर्थं ब्रह्मसत्ताबोधनार्थं चेति कल्पद्वयं संभवति। तत्राद्यकल्पे ब्रह्मस्वरूपप्रतिपादकैर्भ्रमनिवृत्तौ सत्यामन्येषां वाक्यानां वैयर्थ्यं, द्वितीयकल्पोपि न संभवी सर्वैरपि वादिभिः स्वस्वमतरीत्या चेतनस्य ब्रह्मणोङ्गीकारात्। असंगतं स्यादिति। तत्र हेतुमाहुः-वस्तुपरिच्छेदादिति। ब्रह्मणो व्यापकस्य व्याप्यापेक्षायां सर्वं जगत्संबध्यते। आरोपापवादन्यायवादिमते व्याप्यस्य सर्वस्य मिथ्यात्वाद्व्याप्यवस्तुनोभावे व्यापकत्वमपि मिथ्यैव भवेदिति तात्पर्यम्।

—९ ननु वेद एव तथोक्तमित्याहुः-नहीति। यदि निष्कलमित्यादिना प्रपञ्चाविलक्षणं ब्रह्म प्रतिपाद्य कर्तृत्वं निषेध्येत तदेकदेशद्वारा मृषावादित्वेनाखिलस्यापि वेदस्याप्रामाण्यं स्यादित्यर्थः।

—१० अध्यारोपापवादवादिनमुपहसन्ति-तस्मादिति। तिलापः कृताः। मृतस्यौर्ध्वदेहिक उपयुज्यमानास्तिलापो यथा स्पर्शानर्हास्तथा तैर्वेदान्ताः स्पर्शानर्हाः कृताः। ते वेदान्तार्थं न स्पृशन्तीति यावत्। सर्ववाक्यार्थबाधात्। सर्वं खल्विदमित्यादीनि सर्ववाक्यानि। ननु जगत्समवायित्वे जगद्रूपकार्यदोषो ब्रह्मणि प्रसज्येतेत्याहुः-यथेत्यादि।

—११ उपरिष्टात्-अन्तस्तद्धर्माधिकरणे।

—१३ अध्यारोपवादी पुनः प्रत्यवतिष्ठते-नन्विति। इदं-वेदान्तशास्त्रम्। अज्ञानं भावरूपं नतु ज्ञानाभावोज्ञानम्। तथा सत्यहमज्ञ इति प्रत्यक्षानुपपत्तेः।

—१४ ज्ञानेनैव-मिथ्यापदार्थव्यावृत्तब्रह्मज्ञानेनैव।

—१६ **व्याख्यानं**–वेदान्तानां व्याख्यानम् । **यथाकथंचिदिति** । अध्यारोपापवादप्रकारेणापि ।

—१७ समादधते–**नेति** ।

—१८ **स्वबुद्ध्या शास्त्रार्थमिति** । अवैदिकाध्यारोपापवादकल्पनेन सर्वेषां वेदान्तानां निर्धर्मके ब्रह्मणि तात्पर्यमिति शास्त्रार्थम् ।

—१९ **महासाहसिका इति**। लोकेविचारितकर्तारः साहसिका उच्यन्ते। इमे तु वेदार्थोल्लङ्घनेनाविचारितवक्तारोनुचितमार्गे जनान्प्रयोजन्त्यत एव महासाहसिका इत्यर्थः ।

—२० ननु भवत्संमतः पुरुषार्थ उच्यतामित्याहुः–**अवगत इति**। पुरुषार्थावगमो येभ्यो वाक्येभ्यस्तान्याहुः–**ब्रह्म वेदेत्यादिवाक्यपञ्चकम्** । परप्राप्तिर्ब्रह्मभावः । **अनावृत्तिः**–संसारेनावृत्तिः । मोक्षस्य स्वात्मरूपत्वेनानाप्यत्वम् ।

—२४ ब्रह्मणः शाबल्यादज्ञानवत्त्वं च यदुच्यते वादिभिस्तदसंगतमित्याहुः–**ब्रह्म च पुनरिति**। मात्रं कार्त्स्न्येवधारणे–इति कोशादात्ममात्रम्। कृत्स्नमात्मस्वरूपम् ।

१७–१ **प्रतिपादनादिति**। एकस्यैव ममांशस्येत्यादिवाक्येन जीवस्यांशत्वं बोध्यते भगवता स्वस्य चांशित्वं बोध्यते तेन ब्रह्मणो जीवात्ममात्रत्वे निवारिते मोक्षस्यात्मरूपत्वेनानाप्यरूपत्वं निवारितमत उभयमप्यसंगतमित्यर्थः। सिद्धमाहुः–**तस्मादिति**। **तस्मात्**–पूर्ववादिमतस्य न्यायोपबृंहितत्वाभावात् । **न्यायोपबृंहितेत्यादि** । न्यायेनोत्तरमीमांसयोपबृंहितो वर्धितो वेदान्त उपनिषद्भागस्तेन प्रतिपादिताः सर्वे धर्मास्तद्विशिष्टं ब्रह्मेत्यर्थः।

—२ **तस्य**–सर्ववेदान्तप्रातिपादितधर्मविशिष्टस्य ।

—३ **अतिशुद्धे चित्त इति**। एवंच सर्वाणि बहिरङ्गान्तरङ्गसाधनानि चित्तशुद्ध्यर्थमेव । **स्वयमेवाविर्भूतस्येति** । आत्मप्राप्तौ न कानिचित्साधनान्युपयुज्यन्ते नायमात्मा प्रवचनेनेत्यादिश्रुतिनिषेधात् । किंतु यमेवैष वृणुते तेन लभ्य इति श्रुत्या प्रसादादेव स्वयं तस्याविर्भाव इति स्वयमेवेति पदेन द्योत्यते ।

—४ **परमपुरुषार्थ इति**। सायुज्यमेव मोक्षः। **स्वार्थ एव**–शक्यार्थ एव।

—५ **न्यायैः**-उत्तरमीमांसासूत्रैः। सर्वत्र शक्त्यैवोपनिषद्वाक्यप्रतिपादनं व्यासस्येष्टमिति भावः। **समवायित्वाय**-समवायिकारणत्वबोधनाय।

**सूत्रार्थः**—तद्ब्रह्मैव समवायिकारणम्। अस्तिभातिप्रियत्वेन सच्चिदानन्दरूपेण सम्यगनुवृत्तत्वादिति।

॥ इति तृतीयाधिकरणम् ॥ ३ ॥

## ॥ इति त्रिसूत्री ॥

## ईक्षतेर्नाशब्दम् १।१।४

—८ एवं लक्षणं प्रतिपाद्य वागाद्यविषयत्वेपि ब्रह्मणो विचारकर्तव्यतां प्रतिपादयितुं सप्तभिः सूत्रैरीक्षत्यधिकरणमारचयति सूत्रकारः। वक्ष्यमाणग्रन्थावतारणाय पूर्वोक्तमनुवदन्ति-**एवमिति**।

—१० **सिद्धा**-सूचिता।

—११ त्रिसूत्र्या यदुक्तं तदेवाध्यायचतुष्टयेन विस्तरशः प्रतिपाद्यत इति बोधयितुमाहुः-**तत्र ब्रह्मणीति**।

—१२ **विचारिते**-प्रथमाध्यायेन विचारिते।

—१३ ननु मतान्तरनिराकरणं किमर्थं क्रियते यथा स्वरूपफलसाधनप्रतिपादकानि वेदान्तवाक्यानि वर्तन्ते तथा मतान्तरनिराकरणे तु तानि न सन्तीत्यत आहुः-**मतान्तरनिरासव्यतिरेकेणेति**। मतान्तरनिराकरणं द्वितीयाध्याये क्रियते। क्रमेणाध्यायचतुष्टयस्य विषयमाहुः-**अत इत्यादिना**।

—१४ प्रथमाध्यायस्थपादचतुष्टयविषयमाहुः-**तत्रेत्यादिना**।

—१६ **निःसंदिग्धानि**-सत्यं ज्ञानमनन्तं ब्रह्मेत्यादीनि।

—१८ **प्रथमपाद इति**। शब्दसंदेहनिवारके प्रथमे पादे।

—१९ कार्यवाक्यानां भेदानाहुः- **सच्चिदानन्देत्यादि**। सच्चिदानन्दरूपेण सच्चिदानन्दप्रतिपादकानि त्रीणि। आकाशवायुप्राणवाचकानि त्रीणि। एवंप्रकारेण षड्विधवाक्यानीत्यर्थः।

—२० नन्वाकाशादिपदानां भूताकाशादिवाचकत्वं लोके प्रसिद्धमित्यत आहुः-**अन्यत्रेत्यादि**। **अन्यत्र**-लोके। **वेदान्तेषु**-छान्दोग्यादिषूपनिषत्सु।

—२१ **लक्षणविचारे**-पूर्वसूत्राभ्यां कृते। **सद्रूपाणामिति**। सदेव सोम्येदमग्र आसीदित्यादिकार्यवाचकवाक्यस्थसदादिपदानामित्यर्थः। **वाचकता**-ब्रह्मवाचकता। ईक्षत्यधिकरणस्य प्रयोजनमाहुः-**चिद्रूपस्येत्यादि**।

—२२ **सप्तद्वारत्वादिति** । पञ्च चक्षुरादीनीन्द्रियाणि मनो जीवश्चेति ज्ञानस्य सप्त द्वाराणि । नैयायिकमते ज्ञानशब्द आत्मविशेषगुणबोधकोऽप्यत्र ब्रह्मवाचको बोध्यः ।

—२४ **स्वप्रकाशत्वेनेति** । न तद्भासयते सूर्य इत्यादिस्मृत्या स्वप्रकाशत्वं ब्रह्मणः ।

—२५ तत्र प्रमाणान्तरमपि न संभवतीत्याहुः–**यतो वाच इत्यादिना** ।

१८–१ **स्वप्रकाशत्वविरोधादिति** । प्रमाणगम्यत्वे तज्ज्ञानस्य प्रमाणपरतन्त्रत्वेन स्वप्रकाशत्वाभावेन तद्विरोधात् । **श्रुतिविरोधादिति** । मनोवाग्विषये पदार्थे विचारः प्रवर्तते । ब्रह्मणो विचारे क्रियमाणे यतो वाच इति श्रुतेर्विरोधः स्यात् ।

—३ पूर्वपक्षयुक्तिमाहुः–**ज्ञापनार्थमिति** । प्रमाणानि प्रत्यक्षादीनि चक्षुःसंनिकर्षादिद्वारा ह्यज्ञातस्य घटादेर्ज्ञानविषयीकरणार्थं प्रभवन्ति ब्रह्म तु सर्वप्रमाणाविषयं तत्र कथं प्रमेत्यर्थः । संनिकर्षादिमार्गत इत्यत्रादिपदेन सहकारिकारणानि ग्राह्याणि ।

—४ **अव्यवहार्ये**–मनःसहकारेण वृत्त्यभाववति ।

—५ तदेवाव्यवहार्यत्वं विवृण्वन्ति–**ऐहिकेत्यादिना** ।

—६ **सर्वव्यवहारातीतं**–लौकिकवैदिकव्यापारानर्हम् । **एतत्**–अविषयत्वादिकम् ।

—७ समाधत्ते पूर्वपक्षी–**तर्हीति** । अयं भावः । ब्रह्मणो मनोवागविषयतापि वेदादेव ज्ञायते तदर्थं ब्रह्मणोप्रमेयत्वज्ञानार्थं वेदान्ता विचारयितव्या इति चेदेतादृशविचारेण किं भवेयत्सर्वप्रमाणाविषयं तद्वेदान्तस्याविषयमिति ज्ञानं भवेदेवं चान्यैः प्रमाणैर्यज्ज्ञायते तदेव वेदान्तविचारस्याप्यज्ञेयत्वरूपं फलं भवेत्ततश्च बाधितार्थप्रतिपादकत्वान्न विचारयितव्या वेदान्ता इति फलितम् । यदर्थं ब्रह्मज्ञानार्थं प्रवृत्तिर्वेदान्तानां स एवार्थो बाधितः ।

—८ सिद्धान्तमाहुः–**उच्यत इत्यादिना** ।

—१० सूत्रार्थमाहुः–**न विद्यत इति** । वाच्यतासंबन्धेन न विद्यत इत्यर्थः ।

—११ ब्रह्मणः शब्दाप्रतिपाद्यत्व ईक्षतिधातोर्हेतुत्वसिद्ध्यर्थं विषयवाक्यान्याहुः–**सदेवेत्यादि** । सदेवेत्यादीनि छान्दोग्यैतरेयप्रश्नोपनिषद्गतानि त्रीणि ।

—१४ **मिषत्**–व्यापारं कुर्वत् ।

—१७ **ईक्षा प्रतीयत इति** । सदेवेत्यादिवेदान्तवाक्येभ्यो ब्रह्मकर्तृका एवं जगत्करिष्यामीति निश्चयात्मिकेक्षा प्रतीयते तेन जगद्रूपसत्कार्येण तस्या अनुमानं ततश्च नासद्विषयकः शाब्दबोधः किंतु सद्विषयकः ।

—१८ ननुच प्रतीयतामीक्षा तेन पूर्वोक्तविरोधः कथं परिह्रियत इति शङ्कते—**किमत इति** । समादधते—**एवमिति** । **सर्वव्यवहारेत्यादि** । भगवानिति शेषः । सृष्टेः पूर्वं भगवानव्यवहार्यः । सृष्ट्यनन्तरमिच्छया व्यवहार्यः । एवंच व्यवहार्यत्वमव्यवहार्यत्वं चेत्युभयं श्रुत्यैव प्रतिपाद्यते विरुद्धधर्माश्रयत्वं तु ब्रह्मणो भूषणायेति पूर्वमेवोक्तम् । एवंच श्रुतिप्रतिपादितव्यवहार्यत्वाव्यवहार्यत्वयोरेकतरबाधस्यानुचितत्वेन वेदान्तवाक्यानां विचार्यत्वमिति भावः ।

—२० **उक्तवानिति** । तत्तेजोऽसृजत स प्राणमसृजतेति वाक्येष्विति शेषः । तथा तथेति वीप्सा सर्वेषां सृष्टिवाक्यानां संग्राहिका । पूर्वं वेदवाक्यैः कर्तृत्वादिमाहात्म्यविशिष्टब्रह्मविषयकं परोक्षं ज्ञानमुत्पद्यते ततो मननिदिध्यासनादिद्वारापरोक्षब्रह्मसाक्षात्कारो भवतीति तात्पर्यम् । एवंकृतिकथनयोः प्रयोजनमाहुः— **पूर्वरूपमिति** । स्वांशा जीवास्तदुपयोगिपुरुषार्थत्वं तेजःप्रभृतीनां भवत्वितीच्छया पूर्वं रूपं प्रजादिशब्दवाच्यं शरीरं फलरूपं स्वर्गादिलोकात्मकं च सृष्टम् । तथा चैतेषां लोकादीनां पुरुषार्थत्वेन जीवाशास्यत्वायैवं कृत्वा तत्कर्तृत्वेन तत्फलदातृत्वेन च स्वस्य व्यवहार्यत्वं कृतवानिति तत्संपादनं प्रयोजनमित्यर्थः ।

अत्र विवरणकाराः पाठान्तरमङ्गीकुर्वते तदेव श्रेयो मन्वते च । तथाहि—क्वचित्पुस्तकेपरोऽपि पाठः प्रतिभाति । तथाहि पूर्वरूपं फलरूपं च सृष्टस्वांशपुरुषार्थत्वायेत्येकमेव वाक्यम् । अस्यार्थस्तु वेदोक्तकर्मादीनां प्रयोजनमाहुः-**पूर्वरूपमिति** । पूर्वरूपं साधनमपरं फलरूपम् । एवंच साधनरूपं यज्ञयागादि श्रवणमननादीनि फलं स्वर्गादिपुरुषार्थो मोक्षश्चोक्तवानिति पूर्वेणान्वयः । तथाच भगवान् प्रमाणातीतोऽपीच्छया व्यवहारासिद्ध्यर्थं यथा यथा कृतवांस्तथा तथोक्तवान्-स ऐक्षत लोकान्नु सृजै-इति। स प्राणमसृजत। इत्यादिवाक्येषु। ननु सर्वव्यवहारः सिद्ध एव परंतु यज्ञयागादिकं पूर्वरूपं फलरूपं च स्वर्गो मोक्षश्चोक्तस्तस्य किं प्रयोजनमित्याशङ्कायामाहुः—**सृष्टस्वांशेत्यादि** । सृष्टा ये स्वांशा जीवास्तेषां पुरुषार्थत्वाय वेद उक्तवानिति समुदितार्थ इति भावः । मम त्वयमेव पाठः समीचीनः प्रतिभाति । कुतो यद्यत्कृतं तत्सर्वं वेदे दिवं च पृथिवीं चान्तरिक्षमथो स्वः । द्यावाभूमी जनयन् देव एक इत्यादिषु वाक्येषु चतुर्दशभुवनात्मकं प्रपञ्चजातं स्वस्य व्यवहारसिद्ध्यर्थमुक्तं परंतु पूर्वकाण्डे यज्ञादिकमुत्तरकाण्डे श्रवणादिकं ब्रह्मध्यानोपासनादिकं सर्वं खल्विदं ब्रह्मे-

त्यादिवाक्येषूक्तं तस्य किं प्रयोजनमित्याकाङ्क्षा तदवस्थैव स्याद्यदि पूर्वरूपं साधनं फलरूपं स्वर्गमोक्षादि सृष्टस्वांशपुरुषार्थत्वाय वेद उक्तवानित्यर्थबोधकपाठो न स्यात् । तस्मादयमेव श्रीमदाचार्यप्रभुचरणानामाशय इति मन्तव्यम् । अत एव पूर्वमुक्तम् । साधनं च फलं चैव सर्वस्याह श्रुतिः स्फुटम् इति । सर्वस्य जीवस्येत्यर्थः । अत एवाग्र आनन्दमयाधिकरणे जीवस्य साधनफले निरूपयन्त्याः श्रुतेरित्युक्तं पूर्वरूपमित्यस्य फलस्य पूर्वरूपं साधनमित्येवार्थ इति दिक् । चकारेण यद्यत्कृतं तदुक्तमित्यस्यापि समुच्चय इति ।

—२१ एवंच सिद्धमाहुः-**ततश्चेति** ।

—२२ **कथमिति** । सर्वप्रमाणानां तुल्यत्वादित्यर्थः ।

१९-१समादधते-**भ्रमानुत्पत्तिप्रसङ्गादिति** । यदि प्रत्यक्षादिसर्वप्रमाणानां तुल्यत्वं स्यात्तर्हि शुक्तिरजतादिविषयकचाक्षुषज्ञाने भ्रमो न स्यात् । हेतुषु चाभासता न स्यात् । एवंच चक्षुरादीनां प्रामाण्यमन्याधीनं तदेवान्यमुखनिरीक्षकत्वेनेत्यनेनोक्तम् । यदधीनमन्यप्रमाणानां प्रामाण्यं तत्सत् । तस्य भावः सत्त्वं सत्त्वगुणः प्रकाशकः । एवं प्रकाशकसत्त्वगुणसाहितानामेव चक्षुरादीनां प्रामाण्यं रजस्तमोभ्यामभिभूतसत्त्वगुणानां तेषां चक्षुरादीनामप्रामाण्यं तदाहुः-**सत्त्वसहितानामेवेति** ।

—२ सत्त्वशुद्धिर्वेदोदितसाधनैर्भवत्यतोन्यप्रमाणानां चक्षुरादीनां प्रामाण्यलाभाय वेदस्यापेक्षा । वेदस्तु स्वतन्त्रतया नान्यप्रमाणापेक्षीत्याहुः-**निरपेक्षा एवेति** । **प्रमाणमिति** । शाब्दबोधविषयत्वे प्रमाणमित्यर्थः । ननु वेदः शब्दरूपः शब्दस्य च बोधकता संकेतग्रहाधीना स च संकेतो बालवृद्धव्यवहाराधीनः । ब्रह्म त्वव्यवहार्यं तत्र संबन्धग्रहो दुर्घटस्तेन बोधकताया अभावेन वेदबोध्यत्वं न घटत इत्याशङ्कां निरस्यन्ति-**संकेतग्रहस्त्विति** ।

—३ **वैदिक एवेति** । अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति श्रुत्या प्रथमतो वेदप्रतिपाद्य एव संकेतग्रहो वेदविद्भिर्ब्रह्मादिभिर्भगवत्प्रेरणया भगवदिच्छया वा कृतः । तथाच श्रीमद्भागवत एकादशस्कन्धे-

कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ।
मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः ॥

इति । **आकृतीत्यादि** । जातावेव वैदिकः शक्तिग्रहः । जात्याकृतिविशिष्टव्यक्तौ शक्तिस्वीकारे गौरवात् । व्यक्त्याकृतीनां तु लोकतोपि ग्रह

इत्यर्थः । जात्यंश एव शब्दः प्रमाणमिति व्यवस्थापयन्ति । **अनधिगतार्थेति** । व्यक्त्याकृती लोकादपि ज्ञातुं शक्येते जातिस्तु लोकतो ज्ञातुं न शक्यते । तेनानधिगतार्थगन्तृत्वं तस्याम् । अनधिगतार्थगन्तृ–इत्यस्यं विवरणम् । अनधिगतोऽज्ञात एतादृशो योर्थस्तत्र गन्तृ प्रसरणशीलं प्रमाणमित्यर्थः । एवंच जातौ शक्तिः । सा च जातिर्व्यक्तिं विना न तिष्ठतीति व्यक्तिराक्षेपलभ्या । आकृतिश्चार्थापत्तिप्रमाणलभ्या । तेन व्यक्त्याकृत्योः शब्दप्रमाणप्रसरो न भविष्यति ।

—५ **सिद्धमेवेति** । उभयमतसिद्धमित्यर्थः । नन्वीक्षतेर्नाशब्दमिति सूत्रे सूत्रकृताशब्दमिति प्रोच्यते नावेदमिति तेनेक्षाहेतोर्ब्रह्म वेदाप्रतिपाद्यं नेत्यर्थो न करणीयः किंतु शब्दाप्रतिपाद्यं नेत्यर्थः कर्तव्य. । शब्दाप्रतिपाद्यमित्यस्यार्थः–लौकिकवैदिकशब्दाप्रतिपाद्यं न किंतु लौकिकवैदिकशब्दप्रतिपाद्यमित्यर्थः स्यात्तदर्थमाहुः–**लौकिक** इति । **संनिपातरूपत्वादिति** । अहंताममतायुक्तबुद्धिः संनिपातः । एवंच लौकिकव्यवहारस्याहंताममतायुक्तबुद्धिजन्यत्वेन संनिपातकार्यत्वेन मिथ्यात्वादित्यर्थः । तथाच श्रीमद्भागवत एकादशस्कन्धे भगवतैवोक्तम्–

> संनिपातस्त्वहमिति ममेत्युद्धव या मतिः ।
> व्यवहारः संनिपातो मनोमात्रेन्द्रियासुभि ।

इति ।

—६ ननु तथापीक्षतेर्नावेदमित्यनुक्त्वेक्षतेर्नाशब्दमिति सामान्यतः किमर्थमुक्तं सूत्रकृतेति शङ्कते–**तर्हीति** । समादधते–**वेदेत्यादि** । अस्य महतो भूतस्य निःश्वसिनमेतद्यदृग्वेदो यजुर्वेदः सामवेदोथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानीति मैत्रेयीब्राह्मणे श्रावणाद्वेदव्याख्यातृवाचामपि निःश्वासभूतत्वेन ब्रह्मणस्तद्विषयत्वमपि सूत्रकाराभिमतं तेन सामान्यतः शब्दशब्दग्रहणमित्यर्थः ।

—७ सिद्धमाहुः–**एतेनेति** । मननैव कामनारहितेनेत्यध्याहारः । एवंच पूर्वोक्तरीत्या शब्दप्रतिपाद्यत्वे सिद्ध शब्देन च परोक्षज्ञाने जाते मननेन मानसिकं ज्ञानं साक्षात्कारः कस्यचिद्भवति । इत्यपीत्यत्रापिशब्देन कश्चिद्धीरः प्रत्यगात्मानमैक्षदित्यादीनां संग्रहः । सिद्धान्तमुपसंहरन्ति–**तस्मादिति** । सृष्टिद्वारा प्रमाणव्यवहार्यो भविष्यामीतीक्षाश्रवणात् ।

—८ **साक्षादिति** । शक्तिद्वारैवेत्यर्थः । **सिद्धमिति** । ब्रह्मणो लौकिकप्रमाणगम्यत्वेन वेदान्तानां ब्रह्मप्रतिपादकत्वं सिद्धमित्यर्थः ।

**सूत्रार्थः**– ईक्षाश्रवणाद्ब्रह्म सर्ववेदान्ताद्यप्रतिपाद्यं न भवतीति ॥ ४ ॥

## गौणश्चेन्नात्मशब्दात् १।१।५

—९ अग्रिमं सूत्रमवतारयन्ति-स्यादेतदिति। कर्तृत्वमकर्तृत्वं चेति। चकारेणोपादानत्वमनुपादानत्वं च ग्राह्यम्। कर्तृत्वबोधकं वाक्यमाहुः- **यतो वा इमानीति।**

—१० उपादानबोधकं वाक्यमाहुः- **स आत्मानमित्यादि।**

—११ अकर्तृत्वबोधकं वाक्यमाहुः- **निष्कलमिति।**

—१२ अनुपादानत्वबोधकश्रुतिमाहुः- **असङ्गो हीति।**

—१४ **अन्यतरबाधादिति।** निष्क्रियमित्यादिश्रुत्यनुरोधात्कर्तृत्वादीनां बाधादथवा यतो वा इति श्रुत्या कर्तृत्वादिस्वीकारेणाकर्तृत्वादेर्बाधात्। **जघन्यत्वात्-** तुच्छत्वात्।

—१५ **ईक्षत्यादिकं त्विति।** स ऐक्षतेति श्रुत्या ब्रह्मणो यदीक्षाकर्तृत्वं प्रतिपाद्यते तत्तु प्रकृतिगुणसंबन्धविशिष्टं यच्छबलं ब्रह्म तन्निष्ठतयेति भावः।

—१७ **एतदिति।** शबलं ब्रह्मेत्यर्थः। प्रकृतिगुणसंबन्धवत्त्वम्।

—२१ स ऐक्षतेति श्रुतेरुपक्रमपूर्वकं स्थलनिर्देशं कुर्वन्ति-**आत्मा वा इदमित्यादिना।** अस्यां श्रुतौ स ऐक्षतेति शब्दोल्लेखः। तच्छब्दस्य पूर्वपरामर्शकत्वेनात्मनो ग्रहणं भविष्यतीति भावः।

—२३ नन्वात्मापि गौणो गृहीतुं शक्यतेत आहुः- **आत्मशब्द इति।**

२०-१ शङ्कन्ते- **नन्विति।**

—२ समादधते-**न युक्त इति। स्वातन्त्र्याभावेनेति।** मायाशबलस्य मायाधीनत्वेन स्वातन्त्र्याभाव इत्यर्थः। **कर्तृत्वायोगादिति।** स्वतन्त्रः कर्तेति पाणिनिस्मृतेः स्वातन्त्र्याभावेन कर्तृत्वाभाव इत्यर्थः। ननु सगुणनिर्गुणश्रुतीनां मध्येऽन्यतरपक्षश्रुतिबाधेनैवोपपत्तौ किमर्थं विरुद्धधर्माश्रयत्वमङ्गीकृत्य निर्गुणस्य कर्तृत्वमुच्यत आहुः-**वेदाश्चेति।**

—३ **प्रमाणभूता इति।** निरपेक्षत्वान्निःश्वासरूपत्वाच्च स्वतःप्रमाणभूता इत्यर्थः। तथा चान्यतरपक्षबोधकश्रुतिबाध एकदेशाप्रामाण्येन सर्वस्यैव वेदस्याप्रामाण्यं स्यादित्यर्थः। फलितमाहुः-**तत इति।** ततः-वेदेष्वक्षरमात्रस्याप्यबाधितत्वात्। **श्रुतिबललभ्यामिति।** श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपेषु षट्स्तु प्रमाणेषु प्रत्यक्षश्रुतिबलसिद्धामित्यर्थः। प्रत्यक्षश्रुतिश्च सदेव सोम्येदमग्र आसीदिति वाक्यस्थ एवकारः। तेन च शुद्धस्यैव कर्तृत्वं साध्यते।

—४ अत्राथ लोकप्रतीतिं साधकान्तरमाहुः-**किंचेति**।

—५ **कार्यत्वादिति**। कारणगुणाः कार्यगुणानारभन्त इति न्यायेन कारणगुणानामेव कार्ये संक्रमो भवति। लोके च कुलालादौ कार्यभूते कर्तृत्वमनुभूयते तद्ब्रह्मरूपकारणगतमेवास्ति। एवंच कार्यद्वारा लोके ब्रह्मगतकर्तृत्वमनुभूयत इति भावः। उपसंहरन्ति-**तस्मादिति**। **आत्मशब्दप्रयोगादिति**। आत्मा वा इदमित्यादिश्रुतावीक्षणकर्तर्यात्मशब्दप्रयोगात्।

**सूत्रार्थः**—ईक्षत्यादिगुणयुक्तो गौणात्मा न। आत्मा वा इति श्रुतावात्मशब्दप्रयोगादिति॥ ५॥

## तन्निष्ठस्य मोक्षोपदेशात् १।१।६

—६ अग्रिमं सूत्रमवतारयन्ति-**नन्विति**। लोकवदित्यस्यैव व्याख्यानं लोके हीति। **पृष्ट इति**। यज्ञदत्तस्य तव च कः संबन्ध इति पृष्ट इत्यर्थः।

—७ **अत्रेति**। एवंच यज्ञदत्तो ममात्मेत्यात्मशब्दो यथौपचारिकतया गौण एवमत्रत्यात्मशब्दस्यापि गौणत्वमङ्गीकार्यं तथा चेक्षणकर्तरि न शुद्धात्मनो ग्रहणमिति पूर्वपक्ष्याशयः।

—९ समादधते-**तन्निष्ठस्येति**।

—१० **असद्वा इदमिति**। **असत्**-नामरूपाभ्यामव्याकृतम्। **ततः** नामरूपव्याकरणानन्तरम्।

—११ **एषः**- साधकः। **अदृश्ये**- नामरूपशून्ये। **अनात्म्ये**-आत्मन इदमात्म्यं शरीरंतद्रहिते।

—१२ **अनिरुक्ते**-विदिताविदिताभ्यां परत्वेन निर्वक्तुमशक्ये। **प्रतिष्ठां**-यत्र नान्यत्पश्यतीत्यादिरूपां स्थितिम्। **अथ**-तदनन्तरमेव। **सः**-साधकः। **अभयं गतः**-मुक्तिं गतः।

—१३ संक्षेपेण श्रुतिसिद्धमर्थमाहुः-**प्रापञ्चिकेत्यादि**।

—१४ सूत्रनिर्णीतमर्थमाहुः- **तत्रेति**। ब्रह्मणः सगुणत्वे सगुणोपासनया साधकस्य फलं संसारान्तःपात्येव भवेन्न तु मोक्षाख्यम्। एवंच मोक्षफलान्यथानुपपत्त्या लौकिकदृष्टान्तवदौपचारिक आत्मा गृहीतुमशक्य इति भावः।

**सूत्रार्थः**- तन्निष्ठस्य मोक्षप्राप्तिकथनाद्गौण आत्मशब्दो गृहीतुं न शक्यत इति॥ ६॥

## हेयत्वावचनाच्च १।१।७

—१६ अग्रिमसूत्रमवतारयन्ति— **किं चेति** ।

—१८ **इतोपीति** । बृहदारण्यके ब्रह्मज्ञानोपदेशप्रसङ्गे पुत्रैषणादीनां त्यागो यथोक्तस्तथा जगत्कर्तुस्त्यागो नोक्तः किंतूपास्यत्वेन तस्य ग्रहणमिति भावः ।

—१९ एवंच सिद्धमर्थमुपपत्तिद्वाराहुः— **यदीति** ।

—२० **पुत्रादिवदिति** । आदिपदेन दारादीनां ग्रहणम् ।

—२१ एतत्सूत्रस्थचकारः समुच्चयद्योतकस्तदाहुः— **सूत्रत्रयस्येति** ।
**सूत्रार्थः**— त्याज्यत्वाकथनादपि निर्गुण आत्मा जगतः कर्तेति ॥ ७ ॥

## स्वाप्ययात् १।१।८

—२४ सूत्रत्रयमवतारयन्ति— **अतः परमिति** । **स्वतन्त्रहेतूनिति** । वेदान्तवाक्यानां ब्रह्मपरतायाः प्रतिपादकान् ।

२१–१ सूत्रत्रयस्य वैयर्थ्यमाशङ्कन्ते— **नन्विति** । किमेते हेतवः साधका असाधका वेति विकल्प्योभयथाप्यसिद्धिमाहुः । तत्राद्ये दोषमाहुः— **साधकत्व इति** ।

—२ द्वितीय आहुः— **असाधकत्व इति** । समादधते— **मैवमिति** । **रूपभेदार्थमिति** । रूपाविशेषज्ञापनार्थम् । यथा नानाविधान्नभोजनेन तृप्त्यातिशय एवं नानाद्वारैर्ब्रह्मणो व्यवहार्यत्वं प्रदर्श्यते । यथा सृष्टिर्ब्रह्मणो व्यवहार्यत्वे द्वारमेवं लयादयोपि ।

—३ **तद्यथेत्यादि** । आत्मशब्दादिति स्वरूपपरता निर्दिश्यते । तन्निष्ठस्य मोक्षोपदेशात् । हेयत्वावचनाच्चेति कार्यपरता प्रदर्श्यते । स्वाप्ययादित्यग्रेतनत्रिसूत्र्यामपि कार्यपरता ।

—६ किमिति पुनः कार्यान्तरपरता निर्दिश्यते तदाहुः— **कार्यस्य पुनरिति** । **विधिनिषेधभेदादिति** । तन्निष्ठस्य मोक्षोपदेशादिति सूत्रं मोक्षोपदेशविधिपरं हेयत्वावचनाच्चेति वचनाभावबोधकत्वान्निषेधपरम् । **द्विरूपतेतीति** । इतिर्हेत्वर्थे । अत एव हेत्वन्तराण्युच्यन्त इत्यर्थः ।

—७ सूत्रत्रयसंगतिमुक्त्वा विशिष्यास्यैव संगतिमाहुः— **तत्रेति** ।

—१० स्वाप्ययादिति विगृह्णन्ति । **स्वस्मिन्निति** । अप्ययो लयः ।

—११ **उच्यत इति** । लय इति शेषः । **श्रूयत इति** । छान्दोग्ये श्वेतकेतूपाख्याने श्रूयते ।

—१४ श्रुत्यर्थमाहुः- **स्वपितीति**। स्वपितिशब्दो न क्रियापदभूतः किंतु जीववाचीति बोधयन्ति-न **क्रियापदमित्यादिना**।

—१५ स्वपितिशब्दार्थमाहुः- **सतीति**। **सति**- सच्छब्दवाच्ये निर्गुण आत्मनि। स्वशब्दवाच्य इत्यनेन जीवाभेदः सूचितः। अस्मिन् विग्रहे स्वपितिशब्दस्य साधुत्वं तु पृषोदरादित्वाज्ज्ञेयम्। एवंप्रकारब्रह्मसंपत्तेः प्रयोजनमाहुः- **अहरहरिति**। **अहरहः**- प्रत्यहम्।

—१६ **ततः**- ब्रह्मणः। **बलाद्यधिष्ठानं**- बलादिरूपं सर्वव्यवहारोपयोगि यदधिष्ठानम्। बलं विना कस्यापि व्यवहारस्यासंभव इति भावः। **समायातिः**- जाग्रदवस्थायामिति शेषः। पुनः प्रत्यावर्तने हेतुमाहुः- **वासनाशेषादिति**।

—१७ **अभेद इति**। **स्वाप्ययादिति** स्वशब्देन स्वपितीतिश्रुतिस्थसच्छब्देनेत्यर्थः। ननु स्वं ह्यपीतो भवतीति श्रुतौ स्वशब्दो द्वितीयान्तः। सता सोम्य तदेति श्रुतौ च सच्छब्दस्तृतीयान्तस्तयोः सामानाधिकरण्यं कथमत आहुः- **अर्थत इति**। उपक्रमे स छब्दस्यैव निर्देशेनार्थतः सच्छब्दस्वशब्दयोः सामानाधिकरण्यम्। **निर्गुणत्वमिति**। सच्चिदानन्दरूपस्य निर्गुणस्य श्रुतिस्थसच्छब्दवाच्यत्वेन निर्गुणस्यैव व्यवहार्यत्वं श्रुत्याभिमतमित्यपि प्रकृते प्रयोजनमागतमिति भावः।

—१८ ननु सूत्रे प्रलयः प्रोच्यते विषयवाक्ये तु सुषुप्तिः प्रदर्श्यत इति विषमतेत्याशङ्कते- **नन्विति**। समादधते- **मोक्षेति**। यद्यपि मोक्षातिरिक्तासु सर्वासु दशासु स्वप्नजाग्रत्सुषुप्तिप्रलयाख्यासु चतसृषु कर्मसंबन्धस्तथापि सर्वत्र समानो न किंतु स्वप्नजाग्रतोः प्रत्यक्षतयेतरयोर्द्वयोः सुषुप्तिप्रलययोर्वासनारूपेण। एवंच वासनामात्रेण कर्मसंबन्धवत्त्वसाम्याल्लयसूत्रे सुषुप्तिबोधकविषयवाक्यस्य ग्रहणमिति ब्रूमः।

सूत्रार्थः-स्वशब्दवाच्ये जीवस्य लयकथनाद्ब्रह्मणो न सर्वव्यवहारातीतत्वमिति ॥ ८ ॥

## गतिसामान्यात् १।१।९

—२० सूत्रान्तरमवतारयन्ति- **मुक्तीत्यादि**। **आहेति**। ब्रह्मपरतामिति शेषः।

—२२ **गतिर्मोक्ष इति**। सा काष्ठा सा परा गतिरित्यादिषु गतिशब्दस्य मोक्षार्थपरतया दृष्टत्वात्।

—२३ **श्रूयत इति**। बृहदारण्यके मैत्रेयीब्राह्मणे।

—२५ **दृष्टान्तार्थे**– लयाधिकरणदृष्टान्तार्थम्। **सैन्धवखिल्यः**– सैन्धवखण्डः।

२२–३ **प्रतिपाद्येति**। मुक्त्यनन्तरं भोक्तृत्वादिनिवृत्त्या जीवादिसंज्ञाराहित्यं प्रतिपाद्य। **तन्निरूपणार्थे**–जीवादिसंज्ञाराहित्यनिरूपणार्थम्।

—४ **सर्वस्य**–जडप्रपञ्चस्य जीवस्य च। **दर्शितमिति**। सद्रूपकार्यस्य सद्रूपे ब्रह्मणि लयः। चिदंशस्य जीवस्य चिद्रूपे ब्रह्मणि लय इति शुद्धब्रह्मत्वं सर्वस्य श्रुतौ प्रदर्शितमित्यर्थः।

—५ एतावता प्रकृते किमायातमित्याहुः– **आदीति**। मैत्रेयीब्राह्मण आदावमृतत्वलिङ्गेन मध्य आत्मदर्शनादिनावसाने सर्वस्यात्मभावकथनेन शुद्धब्रह्मण एवोपादानं क्रियते।

—६ **ब्रह्मसमन्वय इति**। ब्रह्मणि तात्पर्येणान्वयः।

**सूत्रार्थः**—मोक्षे सर्वस्यापि भगवता तुल्यत्वाद्ब्रह्मणो न सर्वव्यवहारातीतत्वमिति ॥ ९ ॥

## श्रुतत्वाच्च १।१।१०

—७ सूत्रान्तरमवतारयन्ति–**किंचेति**।

—९ विषयवाक्यमाहुः–**पूर्णमद इति**। एतद्वाक्यं बृहदारण्यके द्वितीयवंशब्राह्मणानन्तरं परिशिष्टलक्षणखिलकाण्डारम्भे वर्तते। **अदः**– परोक्षं ब्रह्म। **पूर्णं**– व्यापकम्। **इदं**–नामरूपात्मकव्यवहारविषयत्वेन दृश्यमानम्। एवंचाव्यवहार्यं व्यवहार्यं चेत्युभयमपि ब्रह्म पूर्णमित्यर्थः। तत्कार्यस्यापि पूर्णतामाह– **पूर्णादिति**। पूर्णाद्ब्रह्मणः कार्यरूपं पूर्णमुदच्यत उद्गच्छति। अञ्चु गतिपूजनयोरित्यस्य रूपम्। प्रलयदशायामपि पूर्णतामाह–पूर्णस्य ब्रह्मणः पूर्णमेकरसत्वमादाय पूर्णमव्यवहार्यं सदवशिष्यते।

—१० **सर्वकार्यत्वमिति**। पूर्णस्यैव ब्रह्मणः पूर्वमव्यवहार्यत्वामिच्छया सृष्ट्यनन्तरं व्यवहार्यत्वं प्रलये चाव्यवहार्यत्वम्। एवंच सर्वेषां कार्याणां ब्रह्मरूपत्वमुपादेयत्वेनेत्यर्थः। एवंच सर्वव्यवहारातीतत्वमनपाकृत्यैव ब्रह्मणः सर्वव्यवहारविषयत्वम्।

—११ **पदं**– पदनीयं प्राप्तव्यम्। **आमनन्तीति**। एवं चाभिधावृत्त्यापि सर्वे शब्दा ब्रह्मवाचका अतः सर्वेषां वेदान्तानामाभिधेयतया तात्पर्येण च ब्रह्मणि समन्वय इत्यर्थः।

—१२ सूत्रगतचकारस्य प्रयोजनमाहुः– **चकार इति**।

—१३ ईक्षत्याधिकरणप्रयोजनमाहुः- एवमिति । एवंच सर्वो वेदो ब्रह्मवाचकस्तेनावाच्यत्वशङ्का न कार्या । वेदार्थविचारपूर्वकं मननादिना साक्षात्कारः संपादनीय इति सूच्यते। अवाच्यमपीच्छया वाच्यं भवति ब्रह्मेति न काप्यनुपपत्तिः ।

सूत्रार्थः- पूर्णमद इति श्रुत्यैव ब्रह्मणो न सर्वव्यवहारविषयातीतत्वमिति ॥ १० ॥

इति चतुर्थाधिकरणम्।

---

## आनन्दमयोऽभ्यासात् १।१।११

—१६ अग्रिमाधिकरणप्रयोजनं कथयन्ति- अतः परमिति । आनन्दरूपस्येति। एतावता ग्रन्थेन सच्चिद्वाक्यानां कारणत्वं बोधितमतः परमानन्दरूपबोधकवाक्यानां तद्बोध्यते । एवंचावसरसंगतिरियमित्यर्थः। तद्वाक्यानां- आनन्दप्रतिपादकवाक्यानाम् । ब्रह्मभृगुप्रपाठकद्वयेनेति। अस्य पूर्ववाक्यगतेनोपपाद्यत इति पदेन संबन्धः ।

—१८ अधिकरणारम्भोपयोगि संदेहबीजं प्रदर्शयन्ति-तत्रानन्दमय इत्यादिना। तत्र- ब्रह्मप्रपाठके।

—२० नन्वानन्दमयाधिकरणेऽष्टावेव सूत्राणि कथं तदाहुः- षडिन्द्रियेत्यादि। अय भावः। ज्ञानेन्द्रियाणि षट् जीवात्मपरमात्मस्वरूपद्वयं च। एवंचैतैरष्टभिरानन्दस्वरूपानुभवस्य संभवादानन्दस्याष्टविधत्वं तदर्थं चाष्टसूत्राणि ।

—२१ आनन्दमयस्याब्रह्मपरत्वेऽपि प्रपाठकस्य ब्रह्मपरत्वं स्यादिति मन्वानो वादी शङ्कते- नन्विति। संदेहः- आनन्दमयस्य ब्रह्मत्वसंदेहः ।

—२२ समादधते- उच्यत इति। संशयादिकमुपपादयन्ति- ब्रह्मविद् इत्यादिना। प्रतिज्ञायेति। ब्रह्मविदाप्नोति परमिति वाक्य इति शेषः। ततः परं तद्ब्रह्म कीदृशमित्याकाङ्क्षायां सत्यं ज्ञानमनन्तं ब्रह्मेति स्वरूपलक्षणप्रतिपादकं वाक्यं पठितम्। तत्र विचारमाहुः- ज्ञेयांश इति। कारणत्वाय- आनन्दांशस्य कारणत्वाय। अप्रवेश्येति। ज्ञेयांश आनन्दांशमप्रवेश्येत्यर्थः। अक्षरब्रह्मज्ञानविषयीभूतं यद्ब्रह्म तज्ज्ञेयमित्युच्यते । तादृशज्ञेयस्यांशे सत्यं ज्ञानमिति स्वरूपलक्षण आनन्दांशस्य जगत्कारणत्वबोधनार्थमानन्दांशप्रवेशमकृत्वेत्यर्थः। अयं भावः। फलस्वरूपभूत आन-

न्दांशो जगत्कारणमिति तस्माद्वा इत्यादिवाक्येन प्रतिपाद्यते न तु ज्ञेयं ब्रह्म जगत्कारणत्वेन प्रतिपाद्यते ।

—२३ जडत्वपरिहारायेति । सांख्यादिशास्त्रेषु जगत्कारणत्वेन प्रसिद्धानां प्रकृत्यादीनां परिहारायेत्यर्थः । सर्वज्ञानन्दरूपमिति । सोऽश्नुते सर्वान्कामान्सह । ब्रह्मणा विपश्चितेति वाक्ये विपश्चिद्ब्रह्मशब्दयोर्निर्देशात्सर्वज्ञानन्दरूपं फलमुपपाद्यते ।

—२४ तत्र- सोऽश्नुते सर्वान्कामानित्यस्यामृचि । वाक्यादेव-परप्राप्तिसाधनं ज्ञानमिति स्वरूपलक्षणघटितवाक्यादेव ।

२३-१ प्रतिपादनीयमिति । सोऽश्नुते सर्वान् कामान्सहेति फलवाक्ये ब्रह्मणेति तृतीयान्तं ब्रह्मपदम् । ब्रह्मविदाप्नोति परमिति प्रतिज्ञावाक्ये द्वितीयान्तं परपदम् । तेनोभयोः सामानाधिकरण्याभावात्परपदार्थविषयकसंशयानिवृत्तेस्तद्व्याख्यानभूतेनाखिलप्रपाठकेन जगत्कारणत्वेन परपदार्थ ब्रह्मत्वं प्रतिपादनीयम् । एवं प्रपाठकार्थं संप्रदर्श्य संशयं विवृण्वन्ति- तत्रेति । तत्र प्रपाठके । अब्रह्मान्नमयेति । ब्रह्मभिन्नान्नमयादय इत्यर्थः ।

—२ ब्रह्मत्वप्रतिपादनार्थत्वादिति । प्रपाठकेन तस्माद्वा इत्यादिवाक्यैरानन्दमयस्य ब्रह्मत्वप्रतिपादनादित्यर्थः । तदभावे- आनन्दांशस्य ब्रह्मत्वाभावे ।

—३ नन्वात्मा वा इदमेक एवाग्र आसीदिति वाक्ये यथा चिदंशस्य कारणता प्रतिपादिता तथात्रापि प्रपाठके तस्माद्वा एतस्मादात्मन इत्यात्मशब्दस्वारस्याच्चिदंशस्यैव कारणता प्रतिपाद्यते नत्वानन्दांशस्येत्यत आहुः- फलस्येति । नैकट्यप्रतिपादनायेति । यथा लङ्कास्थं सुवर्णमतिदूरस्थत्वाद्दुष्प्रापं तथा नैतदिति द्योतयितुमानन्दशब्दमपहाय केवलात्मपदप्रयोगः । तस्माद्वा एतस्मादिति तदेतत्पदसमभिव्याहारात्तद्वाक्य आत्मपदेन पूर्ववाक्यगतमेव फलं प्रतिपाद्यते ।

—४ फलरूपेण- आनन्दरूपेण ।

—५ सर्वान्तरत्वमिति । यथा प्राणमयस्यान्नमयान्तरत्वमेवं सर्वान्तरत्वमानन्दमयस्येत्यर्थः । न केवलं मध्य एवापि त्वन्तेपीति द्योतयितुमाहुः- अन्ते चेति । अन्ते प्रपाठकान्ते ।

—७ आदिमध्यरूपे इति । आदौ तस्माद्वा एतस्मादिति वाक्य आनन्दांशस्य जगत्कारणत्वरूपं मध्ये तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मानन्दमय इति वाक्ये तस्यैव सर्वान्तरत्वरूपम् । ततः परमन्त एतमानन्दम-

यमात्मानमुपसंक्रामतीति वाक्य एतामिति पदेनादिमध्यस्थमनूद्य संक्रामतीति फलनिर्देशः कृतः । एवंचान्नमयादिकारणीभूतः सर्वान्तरो यो भगवान् स एवानन्दमयः फलात्मेति भावः। तन्निरूपकस्यापीति। आनन्दमयोपासनाप्रयोजकस्यान्नमयादेरपीत्यर्थः ।

—८ तत्तुल्यफलत्वं- तत्पदेनानन्दमयोपासनाजन्यं फलं ग्राह्यं तत्तुल्यफलत्वमन्नमयादीनामुपासनाया अपीत्यर्थः ।

—९ एवं चान्नमयाद्युपासना यथा केवलमानन्दमयोपासनातुल्यफलं जनयेन्न त्वन्नमयादीनां ब्रह्मरूपत्वं तथानन्दमयस्यापि न स्याद्ब्रह्मत्वमित्याशयेन पूर्वपक्षमाह- तत्रेति ।

—११ उत्तरयति- सूत्रेण ।

—१२ अभ्यासादिति। आर्थिकानन्दाभ्यासादित्यर्थः ।

—१४ पूर्वतन्त्रसिद्धमिति। पूर्वतन्त्रं जैमिनीयं मीमांसाशास्त्रम्। तत्र द्वितीयाध्याये सिद्धमित्यर्थः। तत्रहि शब्दान्तरं १ अभ्यासः २ संख्या ३ गुणाः ४ प्रक्रिया ५ नामधेयं ६ चेति षट् कर्मभेदकानि तेषां प्रत्येकमुदाहरणानि तु तत एव ज्ञेयानि । पूर्ववैलक्षण्यमिति । पूर्वेभ्योन्नमयादिभ्यो वैलक्षण्यं भेदः ।

—१६ अतुल्यत्वात्- अन्नमयादितुल्यत्वाभावात् । श्रूयत इति । अस्मिन्नेव प्रपाठक इति शेषः। अन्यादिति। अन् बलप्राणनयोः। अयमेव धातुरुभयत्रान्यात्प्राण्यादित्यनयोः। अन्यात्- बलं लभेत ।

—१७ प्राण्यात्- विशिष्य जीवेत् । आनन्दयातीति । आनन्दयतीत्यर्थः । अर्थतोभ्यासः । आनन्दशब्दोयमानन्दमयार्थकस्तेनानन्दशब्दाभ्यासोर्थत आनन्दमयशब्दाभ्यास एव ।

—१८ ननु पूर्वमानन्दमय इति पदं तेन मयडर्थविशिष्टत्वेन प्रचुरानन्द इत्यर्थः। स्तुतिवाक्ये तु मयट्प्रत्ययरहितं केवलमानन्द इति पदं तेनार्थभेदात्कथमर्थतोभ्यास उच्यत इत्यत आहुः- स्तुत्येति। यद्वा स्तुत्येत्यनन्तरं मयडर्थत्वमिति बोध्यत इति वाक्यं भाष्यग्रन्थे शेषीकर्तव्यम् । तेन चायमर्थोवगम्यते यत् यतः स्तुतिवाक्यगतमानन्द इति पदं ततो मयडर्थो यः प्राचुर्यप्राशस्त्यरूपः सोपि लब्ध इति । एवंच स्तुतिः परब्रह्मणः तच्च प्रचुरानन्दरूपमेवेति तात्पर्यवशादस्यार्थस्य लाभः । ननु स्तुतिवाक्ये प्राचुर्यबोधकप्रत्ययाभावाच्छन्दसाम्यं नास्तीत्यत आहुः- प्रकृतिस्त्विति । आनन्दरूपा प्रकृतिरित्यर्थः। यद्यपि स्तुतिवाक्ये मयट्प्रत्ययाभावेन प्रत्य-

यान्तशब्दसादृश्यं नास्ति तथापि वाक्यद्वयेप्यानन्दरूपप्रकृतेस्तुल्यत्वाच्छब्द-साम्यमस्तीति भावः। प्रकाशे मयडर्थत्वप्रकृतिरिति पाठो व्याख्यातः। **पुनर्वचनेनेति** । स्तुतिवाक्यद्वय आनन्दशब्दस्य पुनर्वचनेनेत्यर्थः।

—१९ **प्रवाहादिति** । अन्नमयादिचतुष्कोशरूपप्रवाहात् । भेदे- वैलक्षण्ये। नन्वानन्दमयस्य ब्रह्मत्वे तस्य प्रियमेव शिर इति वाक्ये षष्ठ्या संबन्धत्वे बोधिते संबन्धस्य च द्विनिष्ठत्वेन ब्रह्मद्वयापत्तिरित्यत आहुः- **न तु द्वयापत्तिरिति** । तत्र साधकमाहुः- **उत्तरस्येति** । अतः परं-यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते- इत्यादिवाक्यमस्ति तत्र ब्रह्मणि भेददर्शनस्य निषेधादित्यर्थः।

—२० **साधकत्वात्**- भेदाभावसाधकत्वात् । तस्य प्रियमेव शिर इत्यत्रत्यषष्ठी तु राहोः शिर इतिवदभेदार्थिका । उपसंहरन्ति- **तस्मादिति** ।

—२१ अखण्डब्रह्मवादमाश्रित्य वर्णकान्तरमाहुः-**अथवेति** । अस्य सूत्रस्येदं वर्णकं तथा तृतीयाध्यायद्वितीयपादस्थस्थानविशेषात्प्रकाशादिवदिति सूत्रमारभ्य चतुर्थाध्यायसमाप्तिपर्यन्तं श्रीविठ्ठलेशप्रभुचरणानां भाष्यम् । पूर्ववर्णकेन्नमयादीनि ब्रह्मकार्याणि आनन्दमयः फलभूतस्तेनास्य पूर्वेषां च भेदः। ब्रह्मज्ञानं साधनं तत्र फलवैलक्षण्यार्थं ज्ञानविषयीभूतब्रह्मणः स्वरूपलक्षण आनन्दांशनिवेशोपि कृतः। अत्र तु कार्यं कारणं साधनं फलं च सर्वं ब्रह्मैवेत्यभेदः प्रतिपाद्यते । साधनशेषब्रह्मस्वरूपलक्षण आनन्दनिवेशोपि क्रियते। भेदस्त्वाधिदैविकवादमाश्रित्य प्रतिपाद्यते। तत्र पूर्वमखण्डब्रह्मवादस्वरूपं सप्रमाणं निरूपयन्ति- **स नैवेत्यादिना** ।

—२२ **एष उ एवेतीति** । एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषत इत्यादिश्रुतिवाक्यम् ।

२४-२ **वैदिकैरिति** । उपनिषद्भागैरित्यर्थः ।

—३ **काण्डद्वये**- पूर्वोत्तरकाण्डद्वये । विपक्षे बाधकमाहुः **अन्यथेति** । **अन्यथा**- भगवतः सर्वजगद्रूपत्वाभावे ।

—४ **न ब्रह्मपरत्वमिति** । एवंच सर्वे वेदा यत्पदमामनन्तीति श्रुतिविरोध आपतेदिति भावः ।

—५ **नापेयादिति** । जीवशेषत्वं जीवाङ्गत्वं न गच्छेत् । श्रुत्यर्थस्य जीवपरतापत्तिरित्यर्थः। विषयवाक्यमवतारयन्ति- **एवं सतीति** । पूर्वोक्तदोषपरिहाराय श्रुतीनां ब्रह्मपरत्वे सतीत्यर्थः।

—७ **सामान्यतः**- संक्षेपेण अत्र- ब्रह्मविदाप्नोति परमिति वाक्ये ।

—९ पूर्वपरत्व इति । ज्ञानविषयीभूतब्रह्मपरत्व इत्यर्थः । तदित्येव वदेदिति । ब्रह्मविदाप्नोति तदित्येव वदेत् ।

—१० तत एव– अक्षरब्रह्मणः । परं– उत्कृष्टम् ।

—१२ नन्वक्षरापेक्षयान्यदुत्कृष्टं नास्ति मोक्षरूपत्वात्तदेव परंपदेन गृह्यत इत्याहुः– किंचेति । प्रतिवादिना– अक्षरमेव परमिति स्वीकर्त्रा ।

—१३ असंगत इति । पुनरुक्तिदोषघटित इत्यर्थः । साधनसाध्यभावव्याहतिश्चेति । साधनसाध्ययोरेकत्वेनात्माश्रयदोषघटितत्वात्कार्यकारणभावभङ्गप्रसंग इत्यर्थः ।

—१५ अतः परमिति । ब्रह्मवित्परं पुरुषोत्तमं प्राप्नोतीति सामान्यकथनानन्तरम् । विशेषतः– स्वरूपलक्षणकथनात्मकविशेषरूपेण ।

—१६ अन्यमुखेन– ब्रह्मविन्मुखेन । तदेषेति । तदिति तदर्थमित्यस्मिन्नर्थेऽव्ययम् । तदर्थं ब्रह्मविदाप्नोति परमित्यस्यार्थपरिज्ञानार्थम् । एषा ऋगुक्ताभिहितेत्यर्थः ।

—१७ अन्यथा– व्याख्यातार्थाभावे । एवं– अन्यमुखेन ।

—२२ सत्यं ज्ञानमित्यृचं विवृण्वन्ति– सोपपत्तिकमित्यादिना । अग्रे– फलनिरूपणावसरे ।

—२३ उक्तवतीति । सत्यज्ञानपदाभ्यां सच्चिदंशावुक्तौ । अनन्तपदेन ज्ञेयब्रह्मणोपरिच्छिन्नत्वं च कथितवतीत्यर्थः ।

—२४ अनन्तशब्दस्यार्थान्तरं वक्तुं वर्णकान्तरमाहुः– अथवेति । तस्य अक्षरब्रह्मणः । परिच्छिन्नत्वादिति । ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्द इति श्रुतेरक्षरब्रह्मानन्दस्य परिगणितत्वादित्यर्थः ।

—२५ यदपरिगणितं तदेव परमफलमिति व्याप्तिं मनसि कृत्याहुः– अपरिच्छिन्नत्वमेवेत्यादि ।

२५–१ तद्धर्मपुरःसरं– अपरिच्छिन्नत्वधर्मपुरःसरम् । अनन्तरूपमित्यादिश्रुत्यनुरोधादत्राप्यनन्तपदं रूपानन्त्यवाचकं स्यान्नतु परमानन्दबोधकमित्याशङ्क्य पक्षान्तरमाहुः– सत्यमित्यादि ।

—४ नोक्त इति । सत्यं ज्ञानमित्यादिस्वरूपलक्षण इति शेषः । एवंच पूर्ववर्णकेऽक्षरब्रह्मणो वेद्यत्वमस्मिन् वर्णके परमानन्दस्य वेद्यत्वमिति द्वयोर्वैलक्षण्यं बोध्यम् ।

—५ **अथ**– वेद्यनिरूपणानन्तरम् । ननु प्रकरणद्वयेनाक्षरब्रह्मपरमानन्दरूपं द्विविधं वेद्यं कुत उक्तमित्यत आहुः– **अत्रेदमिति** । **अत्र**– ऋचि । **इदं**– वक्ष्यमाणम् । **आकूतं**– तात्पर्यम् । **नायमिति** । रूढ्या प्रवचनपदं वेदवाचकम् ।

—६ **मेधा**– धारणावती बुद्धिः । धीर्धारणावती मेधेत्यमरः । **श्रुतं**– वेदाध्ययनम् ।

—८ **एवं सतीति** । ब्रह्मविदाप्नोति परमिति श्रुत्या ज्ञानमाध्यस्त्वमात्मनो बोध्यते । नायमात्मेति श्रुत्या वरणेतरसाधनासाध्यत्वमात्मनो बोध्यते । एवं श्रुतिद्वयविरोध इति भावः । विरोधपरिहारायेत्यस्य व्यवहितेन निर्णीयत इत्यनेन संबन्धः ।

—९ **प्राकृतधर्मराहित्येनेति** । सत्त्वरजस्तमांसि प्राकृतधर्मास्तद्राहित्येन ।

—१० **तादृशे जीवे**– ज्ञानेन परब्रह्मप्राप्तौ स्वरूपयोग्यतासंपन्ने जीवे ।

—११ **सहकारियोग्यतासपत्त्येति** । सहकारियोग्यतयोः संपत्त्येति । एवं च साधनान्तरराहित्येन वरणाभाव ज्ञानमार्गरीत्या ज्ञानप्रधानतया ब्रह्मज्ञानम् । वरणे तु भक्तिमार्गरीत्या परमानन्दप्राधान्येन ब्रह्मज्ञानं तेन परप्राप्तिरिति वेद्यस्य द्वैविध्येनाविर्भाव एव द्विविधव्याख्याने बीजमित्यर्थः ।

—१२ इयमेव ऋक् निर्णायिकेत्यत्र गमकमाहुः– **तदैवेति** । **तदैव**– भगवद्वरणेन भक्तिभावसमकालमेव । व्योम्नः परमत्वं स्पष्टयितुं परमशब्दस्य व्युत्पत्तिमाहुः– **परो मीयत इति** । व्योम चिदाकाशं तस्मिन्परमत्वं लीलाविशिष्टत्वेन भगवत्संबन्धित्वेन च । एवंच भक्तहृदये परमव्योमाविर्भावेन भगवत्साक्षात्कार एवाक्षरब्रह्मज्ञानम् । अत एव गुहायां निहितं यो वेदेति श्रुतावुक्तं तदग्रेपि सोऽश्नुत इत्यनेन पुरुषोत्तमप्राप्तिरूपं फलमुक्तम् ।

—१३ ननु ज्ञानमार्गीयाणामीदृशाक्षरब्रह्मज्ञानं कथमित्याहुः– **ज्ञानमार्गीयेत्यादि** । ज्ञानमार्गीयजीवेन ज्ञेयं ज्ञानविषयीभूतं सत्यज्ञानानन्तरूपं यद्ब्रह्म तत्प्रकारको यो भगवत्साक्षात्कारस्तद्धेतोरित्यर्थः । **तद्वैशिष्ट्येन**– भगवत्संबन्धित्वेन । **अपीति** । अपिना हेतोः समुच्चयः । **तथेति** । **व्योम्नि** परमत्वमित्यर्थः । व्योमपदेन भूताकाशं न ग्राह्यं किंत्वलौकिकं चिदाकाशमिति बोधयितुमेव श्रुतौ व्योमनीति वक्तव्ये व्योमेति वैदिकः प्रयोगः कृत इत्याहुः– **परमव्योम्नोत्यलौकिकत्वेत्यादि** । ननु वरणपदेन रूढ्याङ्गीकारार्थो गृह्यते ततश्च श्रुतिविरोधपरिहारार्थं भक्तिपक्षाश्रयः क्रियते तदपेक्षया लक्षणास्वीकारेण वरणपदस्य ज्ञापनमित्यर्थो गृह्यतां तेन विरोधपरिहारयोः प्रसंग एव न ।

—१५ एवंच विरोधपरिहारप्रसंगहानलाघवादत्र रूढिस्त्याज्येति चेन्न स्मृतेरसांगत्यापत्तेरित्यत आहुः- **भक्त्येत्यादि** । **अनन्ययेति** । यमेवैष वृणुते-इत्यादिश्रुतितात्पर्यबोधिन्येवानन्ययेति स्मृतिरित्यर्थः ।

—१६ विपक्षे बाधकमाहुः- **अन्यथेति** । **अन्यथा-** भक्तिनिवेशेन श्रुतितात्पर्यानङ्गीकारे ।

—१७ ननु ज्ञानमार्गिणां परप्राप्तिरिष्टैवेतीष्टापत्तिं वारयन्ति- **न त्वेवमिति** ।

—१८ तत्र प्रमाणमाहुः-**मुक्तानामित्यादि** ।

२६-२ विपश्चिच्छब्दस्य व्युत्पत्तिमाहुः- **विविधं पश्यदिति** । पश्यच्छब्दावयवयकारलोपसाधकमाहुः- **पृषोदरादित्वादित्यादि** । पृषोदरादीनि यथोपदिष्टमिति पाणिनिसूत्रम् । तदर्थश्च पृषोदरादीनि शब्दस्वरूपाणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः । तत्र साधनिकासूत्रविचारो न कर्तव्य इत्यर्थः । पृषोदरादेराकृतिगणत्वाद्विपश्चिच्छब्दस्य तदन्तर्गतत्वम् ।

—४ **एतेन-** सोऽश्नुत इत्याद्युत्तरार्धेन ।

—५ **अस्य भक्तस्येति** । अङ्गीकृतस्येत्यर्थः ।

—६ **सहभावोक्त्येति** । ब्रह्मणा विपश्चितेति वाक्ये सहभावकथनेनेत्यर्थः । **गौणत्वमिति** । सहयुक्तेऽप्रधाने (२।३।१९) इति पाणिनिसूत्रेणाप्रधाने तृतीयाविधानात् । इममर्थं स्मृत्योपष्टम्भन्ति- **अत एवेति** ।

—९ अनुत्पत्तिमुद्भाव्य परिहरन्ति- **यद्यपीति** ।

—१० **विकरणभेदात्पदभेदादिति** । अश् भोजने धातुः श्नाविकरणः परस्मैपदी । अशू व्याप्तौ धातुः श्नुविकरण आत्मनेपदीति भेदादित्यर्थः ।

—११ स्पष्टयन्ति- **तथाहीति** ।

—१४ आद्यमर्थं दूषयन्ति-**नहीति** । **कामवदिति** । तत्र तस्येव (५।१।११६) इति पाणिनिसूत्रेण सप्तम्यर्थे वतिः । यथा कामे जीवकर्तृकव्यापनकर्मत्वं संभवति तथा ब्रह्मणि न संभवतीत्यर्थः ।

—१५ **अतिमहत्त्वादिति** ।

एकः शुद्धोऽक्षरो नित्यः सर्वव्यापी तथा पुमान् ।
सोऽप्यंशः सर्वभूतस्य मैत्रेय परमात्मनः ॥

इति वाक्यात् । द्वितीयं दूषयन्ति- **व्यापनं चेति** ।

—१६ **तथात्वं**– स्वाधीनीकरणत्वम् । **भोगशेषत्वात्**– भोगाङ्गत्वात् । **पूर्वोक्तेत्यादि** । ब्रह्मविदाप्नोति परमित्यस्य वाक्यस्य व्याख्यारूपं सोऽश्नुत इत्यादिवाक्यं तेनाश्नुत इत्यस्य तथा कामप्राप्तिरूपोऽर्थोऽनुपपन्नः । परप्राप्तिव्याख्यानप्रसङ्गे कामप्राप्तिवर्णनमसङ्गतमित्यर्थः ।

—१७ सिद्धमाहुः– **तेनेति** ।

—१८ **अर्थस्य**– परेण सह भोगरूपार्थस्य । **अलौकिकः प्रयोग इति** । छान्दस इत्यर्थः ।

—१९ तत्साधनिकामाहुः– **व्यत्ययो बहुलमिति** । **तद्विधानात्**– व्यत्ययस्य विधानात् ।

—२० **जाते इति** । प्रथमाद्विवचनं चैतत् । श्नुप्रत्ययश्चात्मनेपदं च जातमित्यर्थः ।

—२१ अस्मिन्नर्थे श्रुत्यन्तरं संवादयन्ति– **एवमेवेति** । **एवं**–व्यत्ययेन । अस्थूलादिलक्षणं ब्रह्म न कमपि भुङ्क्ते कोऽपि ब्रह्म न भुङ्क्त इत्यर्थः श्रुतेः ।

—२२ **प्रत्ययमात्रेति** । श्नास्थाने श्नुप्रत्ययरूपो व्यत्ययः । मात्रपदेन परस्मैपदव्यत्ययो नेति सूचितम् ।

—२३ **अन्यथा**– अयमश्नोतीति प्रयोगोऽशू व्याप्ताविति धातोरिति स्वीकारे । **तन्निषेधः**– व्याप्तिनिषेधः ।

—२४ ब्रह्मविदाप्नोति परमिति वाक्ये परप्राप्तिर्भोगरूपा व्याख्यायते चेत्परस्य सोपाधिकत्वं ब्रह्मवित्पदबोध्यस्य च सकामोपासकत्वमागतमिति शङ्कते– **नन्विति** । एवंच व्यर्थः पूर्वोक्तविचार इति प्रश्नाशयः ।

२७–३ समादधते– **नैवमिति** । तदेषाभ्युक्तेत्यस्यार्थः । तत्तस्मिन्नर्थे निर्गुणरूप एषा ऋगभिहितेति ।

—४ एवंच तच्छब्दस्य पूर्वपरामर्शकत्वात्पूर्वं निर्गुणस्य यद्वर्णनं तदेवात्रापि न सगुणस्येति द्योतयन्ति– **पूर्ववाक्योक्तार्थेत्यादिना** ।

—५ **तथा सति**– ब्रह्मज्ञानानन्तरं गुणसंबन्धे स्वीकृते सति ।

—६ **वेद्यस्य**– अक्षरस्य । **उत्तरस्य**– परस्य ।

—७ **साधनशेषभूतस्य**– अक्षरस्य । **तत्फलस्य**– अक्षरज्ञानफलस्य परस्य ।

—८ असंगततरत्वं प्रतिपादयन्ति– **यद्धीति** । निर्गुणाः साधकाः सगुणं लभन्त इत्यसंगतम् ।

—१० द्वितीयमनुवदन्ति- यच्चोक्तमिति।

—११ समादधते- तत्रापीति।

—१५ किमायातमिति । श्रुतिविरोधाभावात्किं दूषणमायातमिति काक्वुक्तिः। धर्मविशिष्टस्य पुरुषस्य प्रपञ्चातीतत्वे पुरुषसूक्तमन्त्रं प्रामाण्येन दर्शयन्ति-पुरुष एवेदमिति।

—१७ एतावान्- प्रपञ्चविशिष्टाक्षररूपः।

—१८ अनुपपन्नमिति। प्रपञ्चाज्ज्यायस्त्वकथनेन प्रपञ्चातीतत्वं बोध्यतेतो नानुपपत्तिरित्यर्थः।

—१९ उत्तरदशा- वरणोत्तरभक्तादशा।

—२० सुस्थमिति। श्रुतिद्वयविरोधाभावेन सुस्थमित्यर्थः। ननु शाखाभेदेन पूर्वोत्तरदशावैपरीत्यमपि संभवेदतः शाखान्तरसंमतिमाहुः- छान्दोग्येपीति।

—२१ भूमस्वरूपं- पुरुषोत्तमस्वरूपम्।

२८-१ एतच्चेति। एतच्छान्दोग्यवाक्यम्।

—३ छान्दोग्यार्थैकवाक्यतायै प्रथमवर्णकानुसारेण पक्षान्तरमाहुः- अथवेति। ब्रह्मविदाप्नोति परमिति साधनग्रन्थः। तस्य विवरणं 'यो वेद निहितं गुहायां' इत्यन्तो ग्रन्थः। आनन्दस्य फलभूतस्य निवेशो मा भूत्साधनेतस्तन्निवेशो न कृतः।

—७ भक्तेर्द्वारतामाहुः- तत इति।

—११ एवमृक्तात्पर्यमुक्त्वाशादिभूतानि प्राकृतानि न किंतु विभूतिरूपाणीति वक्तुमाधिदैविकवादं स्वीकृत्याग्रिमो ग्रन्थ इति बोधयन्ति- अथेति।

—१३ आविर्भूत इति। भगवांस्तुमुन्प्रत्ययान्तबोधितानि सर्वाणि कार्याणि कर्तुमाविर्भूत इत्यर्थः।

—१४ कर्तृत्वमिति । एतेनाकाशादीनां कृतत्वं न किंतु विभूतिरूपत्वमेवेति बोध्यते। भगवतोत्यन्तरङ्गत्वं विशदयन्ति- अग्र इत्यादिना।

—१६ मयटो विकारार्थकत्वमङ्गीकृत्यानन्दमयपदेन जीवो ग्राह्य इति व्याख्यातुर्मायावादिनो मतमनूद्य दूषयन्ति- कश्चिदिति । एतानि- अन्नमयादीनि। प्राकृतानि- प्रकृतिविकारभूतानि।

—१८ प्रत्युत्तरयन्ति- प्रतिवक्तव्य इति । प्रतिवक्तव्यः- प्रत्युत्तरार्हः कर्तव्यः।

२२ ननु विकारार्थे मयटः स्मरणादिमान्यन्नमयादीनि प्राकृतानि भवेयुरित्याशङ्कां निराकुर्वन्ति-तथा चेत्यादिना।

**२९-३ तदतिरिक्तमिति** । भगवान् समर्थोऽपि जलकार्यं हस्तप्रक्षालनादिकं जलेनैव करोति न वान्हिना । **तथैवेति** । यतस्तल्लीला तथैवेत्यन्वयः । **तल्लीला**-भगवल्लीला । अयं भावः । यथा लौकिकः पुरुषः कार्यमिदमेवं करिष्यामीति पूर्वं संकल्प्य तथैव तत्कार्यं करोति तद्वद्भगवतापि पूर्वं संकल्प्य नीचोच्चभावसृष्टिलीला कृता । ननु भगवता कथं संकल्पितं तदाहुः-**तथा चेति** । **अन्नमयादिरूपैरिति** । आदिपदेन प्राणमयादीनां ग्रहणम् । एवंच ब्रह्मदृष्ट्यान्नोपासकायाहं क्षुद्रमन्नप्राप्तिरूपं फलं दास्यामीति भगवता सृष्टेः प्राक् संकल्पः कृत इति भावः ।

—६ **तज्ज्ञानमपि तथेति** । अन्नादिरूपक्षुद्रफलदमित्यर्थः । यदि सृष्टिः समाना स्यात्तर्हि लीला न सिध्येदतस्तस्यां नीचोच्चभावः कृत इति भावः । एवं विभूतिज्ञानरूपं फलमुक्त्वानन्दमयस्याधिदैविकत्वं बोधयितुं पूर्वोक्तं स्मारयन्ति-**तथेति** । **तेनैव रूपेणेति** । पक्षिरूपेणेत्यर्थः । एवंच प्रवेशार्थं पक्षिरूप स्वीकृतेऽप्याध्यात्मिकपुरुषात्तस्य भेदो नेत्यर्थः ।

—८ अत्रार्थे संमतिमाहुः-**तदुक्तमिति** ।

—९ **पुरः**-शरीराणि । **द्विपदः**-द्विपदप्राणिनः । **चतुष्पदः**-चतुष्पदप्राणिनः ।

—११ ननु भौतिकशरीराणां प्राकृतत्वात्तत्राप्राकृतस्य प्रवेशोनुपपन्न इत्याशङ्क्य समादधते-**प्राकृतीष्विति** ।

—१२ **विविधासु**-द्विपाच्चतुष्पाद्रूपासु । **एकविधस्येति** । अन्नमयशरीरेऽन्नमयः । प्राणमयशरीरे प्राणमय इत्येकविधस्येत्यर्थः ।

—१३ **गतिप्रतिबन्धकमिति** । द्विपाच्चतुष्पात्त्वादिक भौतिकशरीरसमानाकारं सर्वत्र गतौ प्रतिबन्धकं तदुल्लङ्घ्येत्यर्थः । **अलौकिकयेति** । पक्षिगत्या । यत्र द्विपदां चतुष्पदां च गतिर्नास्ति तत्रापि पक्षिणां गतिः संभवत्यतोऽलौकिकयेति गतेर्विशेषणम् ।

—१४ **तादृश इति** । स पक्षी तादृशो गतिप्रतिबन्धमुल्लङ्घ्य सर्वत्रेष्टदेशे प्रवेष्टुं समर्थ इत्यर्थः । **अत एवेति** । अलौकिकगत्या प्रवेशसामर्थ्याभावं द्योतयितुं द्विपदश्चतुष्पद इत्युक्तमिति भावः ।

—१५ नन्वाधिदैविकविचारः कुतो न कृत इत्यत आहुः-**आधिदैविक इति** । आधिदैविक आनन्दमयः ।

—१६ एवं श्रुत्यर्थं निर्णीयाधिकरणावतरणाय पूर्वपक्षमाहुः–नन्विति। एवमुक्तेरिति। यः पूर्वस्येत्युक्तेरित्यर्थः। आनन्दमयेपि–विभूतिरूपानन्दमयेपि।

—१९ अन्यथा–विभूतिरूपत्वानङ्गीकारे।

—२१ सर्वश्रुतिविरुद्धमिति। यद्यानन्दमयकोशे ब्रह्मत्वं स्वीक्रियते तर्हि तद्भिन्न आत्मत्वं सर्वश्रुतिविरुद्धम्। स्वान्यात्मवत्त्वमित्यस्यार्थः। स्वमानन्दमयस्तदन्यो यः कोपि पदार्थस्तत्रात्मयुक्तत्वम्। स्वाभिन्ने स्वत्ववत्त्वं युक्तिविधुरमित्यर्थः।

३०–५ सिद्धान्तिन आशयमाशङ्क्य परिहरति–नन्वित्यादिना। एवंच मायावादिवन्मयटो विकारार्थत्वमनङ्गीकृत्यापि–अन्नमयादिवदानन्दमयस्यापि विभूतिरूपत्वं प्रायपाठान्न तु तस्य परब्रह्मत्वमिति पूर्वपक्षाशयः।

—७ सूत्रग्रहणपूर्वकं समादधते–उच्यत इति। तत्र मानाभावं खण्डयन्ति–नहीत्यादिना। मन्तव्यमित्यन्तेन। सर्वेषामिति। ईश्वरमन्तरेण सर्वेषामन्नयादीनामेक आत्मा नान्यः कश्चिद्भवितुमर्हति। यतोऽन्नमयाभिमानी कश्चित्पूर्वं नोपक्रान्तः किंतु जगत्कर्तैवोपक्रान्तस्तस्यैव सर्वसंबन्धित्वेन पुनः पुनरभ्यासः समाम्नायते तस्यैष एव शारीर आत्मेत्यादिना श्रुताविति भावः।

—१२ ननु जगत्कर्तान्तरात्मा चैकः सर्वेषामिति सिद्धेप्यानन्दमयः परमात्मेत्यत्र किं मानमित्यत्राहुः–एवं सतीति। तद्वाच्येव–परब्रह्मवाच्येव।

—१३ बाधकतर्कं निरस्यन्ति–अन्यथेति। अन्यथा–आनन्दमयस्य परब्रह्मवाचकतानङ्गीकारे। पूर्वपक्षी शङ्कते–नन्विति।

—१४ उक्तरीत्येति। सर्वात्मत्वमन्यत्रासंभवीत्युक्तरीत्या।

—१५ अत्रार्थे श्रुतिमुपष्टम्भयन्ति–अत एवेति।

—१९ ननु यद्यपि भृगोर्ब्रह्मज्ञानार्थं प्रवृत्तिस्तथापि तादृशजिज्ञासाया आनन्दज्ञानेन निवृत्तिर्न त्वानन्दमयज्ञानेनातो नोक्तानन्दमयश्रुतिरुपष्टम्भिकेत्यरुचेराहुः– किंचेति। ब्रह्मविदाप्नोति परमित्यादिप्रपाठकोपक्रमादिविचारे कृत आनन्दप्रतिपादक एवायं प्रपाठको न त्वानन्दमयप्रतिपादक इति भावः।

३१–१ भवितव्यत्वादिति। उपक्रमोपसंहारयोरैक्यनियमात्।

—३ आनन्दमयस्य परमफलत्वाभावं वादी शङ्कते- नन्विति । **न तथेतीति** । परवस्तुनोतिक्रमणासंभवादानन्दमयः परवस्तु नेत्यर्थः । समादधते- **हन्तैवमिति** । हन्तेति खेदे । उपसंक्रमशब्दस्यातिक्रमणार्थस्त्वया गृहीतः परं सोर्थोसंगत इत्यर्थः ।

—४ **श्रूयत इति** । तत्र प्रमाणमाहुः- **अत एवेति** ।

—५ **उच्यते**- कार्मुकं तु परित्यज्य झषं संक्रमते रविः-इत्यादिवाक्येषु तथोच्यत इत्यर्थः । ननु कार्मुकं तु परित्यज्येत्यादिवाक्येषु संक्रमशब्दोत्र तूपसंक्रमशब्दस्तर्हि तस्य कथं प्राप्त्यर्थकत्वमिति चेदुपोपसर्गः प्राप्त्यर्थविघातक इति कस्मादागतम् । ननु प्राप्तिपर्यायोयमुपसंक्रमः किमर्थमिति चेद्भेदेन स्थित्वा भोगार्थ इति गृहाण । ऋचि तथैव प्रतिपादितत्वात्तत्प्रतिपादकग्रन्थेपि तथैव सिद्धेरावश्यकत्वात् । भेदे सत्यस्याः परममुक्तित्वं न स्यादित्याहुः- **न चेति** ।

—६ **अस्माल्लोकादिति** । एवंच शरीरत्यागकथनादियं परममुक्तिरेव न जीवन्मुक्तिः । तस्याः परममुक्तित्वे साधकमाहुः-**अत एवेति** ।

—८ **उक्तवतीति** । लोकवेदकालादिभयाभावः परममुक्तिं विना न सिध्यति । एतदेव परममुक्तेर्लिङ्गमित्यर्थः । **अन्यथा**- परममुक्तित्वाभावे ।

—९ **वदेदिति** । एवंच मनोवागविषयानन्दवेदनमपि परममुक्तेरेव लिङ्गमित्यर्थः । सिद्धमाहुः- **एवं सतीति** । एवं सति-आनन्दमयप्राप्तेः परममुक्तित्वे सति ।

—११ **विवृतामिति** । यतो वाचो निवर्तन्त इति मन्त्रेणेति शेषः ।

—१२ **कामभोगासंभवश्चेति** । देहाभावादेव हेतोः । साधकान्तरमाहुः-**अत एवेति** ।

—१३ **एतेन**- विवरणमन्त्रोक्तफलभोगस्यालौकिकदेहं विना लौकिकदेहद्वारा संभवाभावेन ।

—१६ **आद्यविभूतिरूपमिति** । अन्नमयविभूतिरूपमित्यर्थः । **द्वितीयं**- प्राणमयविभूतिरूपम् । **तृतीयं**- मनोमयविभूतिरूपम् । **सर्वेन्द्रियसंबन्धित्वेनेति** । मनसः सर्वेन्द्रियनियामकत्वान्मनोमयस्य सर्वेन्द्रियसंबन्धित्वम् ।

—१८ **तुरीयं**- विज्ञानमयविभूतिरूपम् । एतद्बुद्धिरूपान्तःकरणवृत्त्यात्मकं भवेदिति शङ्कां वारयितुमाहुः- **जीवतत्त्वात्मकमिति** । जीवस्य यत्तत्त्वं स्वरूपसहकारियोग्यतासंपत्तिस्तदात्मकमित्यर्थः । तत्र विनिगमकमाहुः- **यत्रेति** ।

—२० वाक्यैकवाक्यतयेति । उपसंक्रमणवेदनभयाभावादिप्रतिपादकवाक्यैर्विवरणात्मकैः सहैकवाक्यतयेत्यर्थः । वाजसनेयके पुरुषस्य पक्षिरूपेण प्रवेशः कथितः । तैत्तिरीयके चान्नमयादीनां विभूतिरूपाणां पञ्चानां कोशानां पक्षिरूपेण पुरः प्रवेशः कथ्यते ।

—२२ अयं चेदृशप्रवेशोग्रिमलीलासंपादनार्थ एवेति तच्छ्रुत्यर्थविचारे तस्य ज्ञानं स्पष्टतया न भवेदतः पक्षिप्रवेशबोधकश्रुतिविचारं प्रतिज्ञाय तद्विचारबीजं वक्तुं प्रथमतो विषयवाक्यमाहुः–अथेदमिति ।

—२४ तथैव-पक्षिरूपेणैव । पूर्वपक्षमाहुः एवं सति चेदित्यन्तेन ग्रन्थेन । एवं सति–अन्नमयादिषु पञ्चसु पूर्वैरन्नमयादिपञ्चविभूतिरूपाणां पक्षिणां प्रवेशस्य प्राप्तत्वे सति । एकस्यां–पञ्चानां मध्य एकस्याम् । तेषां–विभूतिरूपपञ्चपक्षिणाम् । तथा–एकैकस्य प्रवेशः ।

३२–१ अप्रवेश इति । यथा प्राणमयादीनां चतुर्णामन्नमयादिषु प्रवेशः संभवति । अन्तर आत्मेति श्रुतिवाक्यात्तथान्नमयस्याभ्यन्तरप्रवेशो न संभवति तदन्तरस्याश्रवणात् । किंच द्विपात्त्वलिङ्गस्य स्थूलपूर्वैव संभवात्तत्रैवान्नमयादीनां प्रवेशः संभवेन्न तु प्राणमयादीनां स्थूललिङ्गाभावादित्यप्रवेश इत्यर्थः । समादधते–अत्रेदमिति ।

—२ इदंशब्दप्रयोगादिति ।

इदमस्तु संनिकृष्टे समीपतरवर्ति चैतदो रूपम् ।
अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयात् ॥

इति वचनप्रामाण्यादित्यर्थः ।

—३ प्रपञ्चं– समीपस्थम् ।

—४ तत्प्राप्त्यैव–गुणातीतभगवल्लीलोपयोगिदेहप्राप्त्यैव । पूर्वमिति । भगवत्संयोगात्मकरसलाभादिति शेषः ।

—५ तत्तद्रूपं– अन्नमयादिपञ्चात्मकपक्षिरूपम् । तेषु तेष्विति । अन्नमयेन्नमयं प्राणमये प्राणमयमित्यादि ब्रह्मात्मकं पक्षिरूपं प्रविष्टं न स्यादित्यर्थः ।

—६ ननु जीवस्य नित्यत्वेन नाशासंभवात्स लीलारसानुभवं स्वप्रकाशचैतन्येन करिष्यतीत्यत आहुः–जीवस्येति ।

—७ तेषां– अलौकिकशरीरघटकानां पञ्चानां कोशानाम् ।

—८ नन्वन्येषामन्यत्र प्रवेशेपि जीवस्य नित्यत्वान्निष्प्रयोजनत्वात्तत्रानन्दमयप्रवेशोयोग्य इत्यत आहुः–जीवे त्विति । प्रविशतीति । रसानु-

भवायेति शेषः । इतिशब्दो हेत्वर्थे । एवंच जीवेष्यानन्दमयप्रवेशः सप्रयोजनः ।

—११ वेदाद्भयाभाव इति । एवंच परप्राप्तानां पूर्वपुण्यपुञ्जवतां वेदाद्व वेदविहिताकरणाद्वेदनिषिद्धकरणाच्च भयं न भवतीत्यर्थः ।

—१२ पूर्ष्टं बोधयन्ति– शरीरप्राणेत्यादि ।

—१६ एवं सर्वेषां प्रवेशं समर्थयित्वा लीलौपयिकप्रवेशार्थमप्राकृतविभूतिस्वरूपमाहुः–अत्रेति । अत्र–मुक्तशरीरे । भगवच्चरणेत्यादि । एतच्च–या वै लसच्छ्रीतुलसीविमिश्रपादाब्जरेण्वभ्यधिकाम्–इत्यादि श्रीमद्भागवतप्रथमस्कन्धश्लोकसुबोधिनीटीकायां प्रसिद्धम् ।

—१७ तदेवाहुः– ब्रह्मशरीरत्वमिति । प्रवेशं विभजन्ते– तत्रेति ।अन्नमयतत्प्रवेशेनेति । अन्नमयं यत्तद्ब्रह्म तत्प्रवेशेनेत्यर्थः ।

—१८ तथा– लीलानुभवयोग्यम् ।

—२१ विशेषतो वक्तुमशक्यमिति । मनोवागविषयत्वादित्यर्थः । एवं च तस्यैष एवेत्यत्र शब्द एव पूर्वतुल्यो नार्थः । अत्राभेदषष्ठीस्वीकारात् । एवं चायमर्थः । यः पूर्वस्य शारीर आत्मा जगत्कर्तृत्वेनोपक्रमे परपदार्थ उक्तस्तदभिन्न एषः । एवमभेदषष्ठीस्वीकारे गमकं तु अग्रे तदन्तरस्यात्मन उक्त्यभाव एव ।

—२२ आनन्दमयस्य पक्षित्वोक्तिप्रयोजनमाहुः–शरीरेति ।

—२३ एवं सतीति । हेमत्वामिवेति । संबन्धमात्रे दृष्टान्तः । न तु प्रवेशे ।

३३-१ आश्रयाणाम् । अन्नमयादीनाम् । तत्तदात्मकत्वमिति । अन्नमयादिब्रह्मशरीरत्वमित्यर्थः । यथा स्पर्शमणिसंघर्षे सति जायमानं सुवर्णपात्रं पूर्वपात्रसदृशाकारमेव जायते तद्वदन्नमयादिशरीरमपि ब्रह्मरूपं भवत्यानन्दमयप्रवेशेनेति भावः । एवमनेन ग्रन्थेन वास्तवं पक्षिरूपमादृत्य श्रुत्यन्तरानुसारेण प्रकृतश्रुत्यर्थो निर्णीतः ।

—२ अधुना स्वाभिमतपरोक्षवादेन श्रुत्यर्थमाहुः– वस्तुतस्त्विति । परोक्षवादे प्रमाणं– परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः– इति श्रुतिः ।

वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे ।
परोक्षवादा ऋषयः परोक्षं च मम प्रियम् ॥

इति श्रीमद्भागवतैकादशस्कन्धीयवचनं च । तदेवोपपादयन्ति– तथाहीति ।

—१२ **प्रियस्येति** । प्रियस्वरूपस्येत्यर्थः । तेन तस्य प्रियमेवेति श्रुतौ नपुंसकलिङ्गमुपपन्नम् । **प्रधानाङ्गत्वमुच्यत इति** । कल्पनयोपदिश्यत इत्यर्थः । कल्पनोपदेशस्यायं प्रकारः । अत्र प्रकाशः । आनन्दमयानुभवे निरुपधिप्रीतिरेव मुख्या । भक्त्याहमेकया ग्राह्य इति वचनेन तस्या एवानुभवजनकत्वात् । नान्यत्साधनमिति ज्ञापनाय प्रियस्य प्रीतिविषयस्थानन्दस्वरूपस्य प्रधानाङ्गत्वं शिरस्त्वमुच्यते । शिरसाभिज्ञायते सोयमिति । तथा निरुपधिप्रीत्या भगवानिति शिरःशब्दे तत्सिद्धिनिबन्धना गौणी । यथा पक्षाभ्यामुड्डीयाभीष्टदेशं प्राप्नोति पक्षी तथा भक्तोपि दर्शनस्पर्शजनिताभ्यां भावाभ्यां भगवन्तं प्राप्नोति । एवं पक्षयोरपि गौणी लक्षणा स्थायिभावस्येत्यादि । अनेनात्मशब्दे गौणी लक्षणा । परप्राप्तीत्यादिना पुच्छशब्दे पूर्वेषामानन्दानां प्रशंसानिबन्धना सा गौणी लक्षणा । एवं सर्वेष्ववयवेषु परोक्षवादो बोध्यः । एवं स्वर्णधर्मानुवाके ब्रह्मणा ज्ञातं परप्रकाशकमानन्दरूपं परमेश्वरस्य स्वरूपं परोक्षवादेन बोध्यते ।

—१५ **स्थायिभावस्य**–आनन्दस्य । **एकरूपत्वात्**–सर्वदा विद्यमानत्वात् ।

—१६ **ततः**–स्थायिभावतः । **विभावादिभिरिति** । आदिपदेनानुभावसंचारिभावौ ग्राह्यौ ।

—१७ ब्रह्म पुच्छं प्रतिष्ठेति वाक्यस्य तात्पर्यमाहुः–**परप्राप्तीति** । पूर्वं–ब्रह्मप्राप्तेः पूर्वम् । गणितानन्द इत्यस्य भातीत्यनेनान्वयः ।

—१८ **इष्टगतावसाधनत्वेनेति** । यथा पक्षयोरिष्टदेशप्राप्तौ साधनत्वं तथा पुच्छस्य नास्तीत्यर्थः । **स्वरूपत इति** । अयमक्षरानन्दो गणितानन्दः स च पुरुषोत्तमानन्द इति स्वरूपत इत्यर्थः ।

—१९ **पृष्ठभागादपीति** । मोदप्रमोदौ पक्षरूपौ तयोः पृष्ठे स्थितिः । अक्षरस्य तु ततोपि दूरस्थितिः पुच्छरूपत्वात् ।

—२० इममर्थमसन्नेव स भवतीति श्लोकव्याख्यया द्रढयन्ति–**एवं सतीति** ।

—२१ **असंभावनेति** । भक्तो ब्रह्मणा सह क्रीडतीत्युक्ते स्वतन्त्रस्य जगत्कर्तुर्भक्तेन सह क्रीडायामस्वातन्त्र्यमुत्पद्येत ततोन्योयं कश्चिदित्यसंभावनेत्यर्थः । **विपरीतभावनेति** । ब्रह्म क्रीडतीति ब्रह्मपदोपादानाद्ब्रह्मैव क्रीडति परं सहभाववचनात्स्वयं साक्षादानन्दमयविग्रहेण न क्रीडत्यपि त्वन्यरूपेण । भक्तस्य तु तथानन्दाभास इति विपरीतभावनेत्यर्थः ।

—२२ उक्तमिति। भावनाद्वयनिवारकं वाक्यद्वयमित्यर्थः।

—२४ अवददिति। श्रुतिरिति शेषः।

३४–४ अतः परमपि वेदान्तार्थविचारे परोक्षवाद एवादर्तव्य इति स्वकारिकयाहुः–एवमिति। विचारचातुर्यवद्भिः–विचारे यच्चातुर्यं परोक्षवादेन ज्ञानं तद्युक्तैः।

—५ आनन्दसंदोहाय–संपूर्णानन्दावाप्तये। अवधार्येत इति। एवंच सतामवधारणमनुसृत्यान्यैरपि तथैवार्थो निश्चेय इति तात्पर्यम्। एवंचानेन वर्णकेनानन्दमयस्य ब्रह्मरूपत्वं ज्ञेयकोटिनिवेशे तदनिवेशे वा निर्बाधमिति संसिद्धम्।

सूत्रार्थः–आनन्दमयः परमात्मा। पुनः पुनः कीर्तनरूपादभ्यासादिति॥ ११॥

## विकारशब्दान्नेति चेन्न प्राचुर्यात् १।१।१२

—६ इतः परमग्रिमं सूत्रमवतारयन्ति–नन्विति। विकाराधिकारविहितत्वादिति। मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः (पा. सू. ४।३।१४३) इति सूत्रेण लोके मयटो विकारार्थे बोधनादित्यर्थः। एवमाशङ्क्य सूत्रेणैव समाधीयते।

—९ अनेन–विकारवाचकमयटो निराकरणेन। पूर्वसूत्रार्थः–आनन्दमयो ब्रह्मेत्येवंरूपः। सूत्रार्थं द्योतयितुं विकारशब्दादिति पदं विगृह्णन्ति–विकारवाचीत्यादि।

—१० तच्छब्दवाच्यं–आनन्दमयशब्दवाच्यम्।

—११ समादधते–नेत्यादि। प्राचुर्यादिति। एतत्प्रथमान्तं न तु पञ्चम्यन्तमिति बोधयितुं विगृण्हन्ति–प्राचुर्यमततीति। आनन्दमयशब्दः प्राचुर्यमतति। एवंच प्राचुर्यबोधकमयट्प्रत्ययान्तोयमानन्दमयशब्दः।

—१२ मयटः प्राचुर्यार्थत्वे प्रमाणमाहुः–तथा चेति। तत्प्रकृतेत्यादिसूत्रार्थमाहुः–प्राचुर्येणेत्यादिना। अयं भावः। अस्य सूत्रस्यार्थः कैश्चिद्भिन्न एवाङ्गीकृतः स चासंगत इति द्योतयितुं तत्प्रकृतं तेन प्रकृतं तेन प्राचुर्येण प्रकृतं प्रस्तुतं, उच्यत इति वचनम्। एवंच प्राचुर्येण प्रस्तुतस्य वचने मयडित्यर्थः कृतः।

—१५ प्राचुर्येण यत्र प्रस्तुतं तद्वाक्यनिर्देशं करोति। को ह्येवान्यादित्यादि।

—१६ पूर्वापेक्षयेति । अन्नमयादिचतुष्टयापेक्षया । ननु प्राचुर्येण प्रकृतेर्थे विहितो मयट्ट प्राचुर्यार्थबोधकः कथमित्याशङ्कायामाहुः—एकदेशनिर्देशेनेति ।

—१७ भीमसेनैकदेशभूतं भीमपदं सत्यभामैकदेशभूतं सत्येतिपदं भीमसेनसत्यभामार्थबोधकं तद्वदत्रैकदेशनिर्देशोर्थबोधक इति वक्तुमशक्यम् । यतो नाम्नामेकदेशो विशिष्टार्थबोधकः । आनन्दमयमित्यत्र तु प्रत्ययो न नामैकदेशस्तेनैकदेशस्य वाचकत्वं स्वार्थवृत्त्या न स्यादत आहुः—तदर्थलक्षणयेति । लक्षणाकल्पनापेक्षया वरं पञ्चम्यन्तत्वस्वीकार एवं मनसिकृत्य पक्षान्तरमाहुः—प्राचुर्येणेत्यादि ।

—१८ आनन्दमयशब्दे विकारार्थे मयट्ट न संभवतीत्यत्र प्रमाणमाहुः—छन्दसीति । द्व्यचश्छन्दसि ( पा. सू. ४।३।१५० ) इति सूत्रे द्व्यज्ग्रहणाद्बह्वच आनन्दशब्दाद्विकारार्थकमयटोसंभवादित्यर्थः ।

—१९ अर्थनिर्णायकमिति । उक्तसूत्राद्बह्वच आनन्दशब्दाज्जायमानो मयट्ट न विकारार्थबोधकोपितु प्राचुर्यार्थबोधक इति निर्णायकमित्यर्थः ।

—२१ कथमवोचदिति । विज्ञानमयानन्दमयशब्दौ वैदिकौ पश्यन् पाणिनिर्द्व्यचश्छन्दसीति सूत्रं न प्रणयेदित्यर्थः ।

—२२ शाङ्करमतमधिक्षिपन्ति—अत्र केचिदिति । अत्र—आनन्दमयशब्दस्थमयट्प्रत्यये । सर्वविप्लववादिनः—सर्वं मायिकं न तु परमार्थभूतं विवर्तवादेन भासमानत्वादिति वादिनः । श्रुतिसूत्रादीनामिति । विषयवाक्यघटिता आकरश्रुतयः । सूत्राणि—तन्निर्णायकानि व्याससूत्राणि मयाड्विधायकानि व्याकरणसूत्राणि च । आदिपदेन उक्त्यादीनां ग्रहणम् ।

—२३ तत्—विकारार्थत्वकथनम् । नवमावतारकार्यमिति । नवमावतारस्य बुद्धस्य कार्यं वेददूषणरूपम् ।

—२४ अवोचामेति । मयटः प्राचुर्यरूपोर्थो व्याकरणस्मृतिसिद्धोस्माभिरुक्त इत्यर्थः ।

सूत्रार्थः—विकारवाचिमयट्प्रत्ययान्तत्वादानन्दमयो ब्रह्म नेति चेन्न । आनन्दमयशब्दस्य प्राचुर्यवाचकमयट्प्रत्ययान्तत्वस्वीकारादिति ॥ १२ ॥

## तद्धेतुव्यपदेशाच्च १।१।१३

३५–१ सूत्रमवतारयन्ति—शब्दबलेत्यादि । तामिन्द्रो मध्यतोपरोध्य व्याकरोदिति तैत्तिरीयश्रुत्या— मुखं व्याकरणं स्मृतमिति शिक्षास्मृत्या च व्याकरणरूपः शब्दोर्थनिर्णायक इति तत्सहायको विचारः प्रथमः कृतः ।

अधुना शब्दापेक्षयार्थस्य बलीयस्त्वाच्छब्दशेषित्वाच्च तद्विचारोनेन सूत्रेण प्रस्तूयत इत्यर्थः।

—५ व्यपदेशवाक्यमाहुः–एष ह्येवेति।

—७ **कारणत्वात्**–पूर्वोक्तसकलानन्दकारणत्वात्। **अन्यथा**–अस्य पूर्वानन्दान्प्रत्यहेतुत्वे।

—८ **तद्वाक्यं**–एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति वाक्यम्। **समुच्चयं**–शब्दार्थोभयद्वारा विकारित्वसमुच्चयम्।

—९ **मध्ये**– अधिकरणमध्ये। इत्याहेत्यत्र कर्तृपदं चकार इति।

**सूत्रार्थः**—तस्य सर्वस्य विकारभूतस्यानन्दस्यायमेव हेतुरिति श्रुतौ कथनादिति॥ १३॥

## मान्त्रवर्णिकमेव च गम्यते १।१।१४

–१० सूत्रान्तरमवतारयन्ति–**नन्विति**। **सूत्रत्रयेण**–पूर्वसूत्रत्रयेण। **एवं**–आनन्दमयस्य परब्रह्मत्वम्। **उपासनापरत्वेनापीति**। आनन्दमयस्य फलत्वास्वीकारेणोपासनार्थकत्वकथनेनापीत्यर्थः। एवं प्रकरणबलं सूचितम्।

—११ लिङ्गबलमाहुः–**पक्षपुच्छादित्वेनेति**। **उक्तत्वाच्चेति**। मोदप्रमोदादीनां लिङ्गानां पक्षपुच्छादित्वेनोपासनार्थमुक्तत्वाच्चेत्यर्थः।

—१२ **साधितमिति**। आनन्दमयपदमिति शेषः। न ब्रह्मपरमिति पाठः। ब्रह्मपरत्वमिति पाठेऽहतीति पदं त्रुटितं बोध्यम्।

—१५ मन्त्रमाहुः–**सत्यं ज्ञानमिति**।

—१७ अभिधया वृत्त्येत्यनेन लक्षणाव्युदासः। आभिधावृत्तिमेवोपपादयन्ति– **तदुपपादनग्रन्थ इति**। सर्वास्मिन् प्रपाठक इत्यर्थः।

—१८ तत्रोपपत्तिमाहुः–**तत्रेति**। ननु संदिग्धं व्याख्यायते। ब्रह्मणः फलत्वांशे संदेहाभावात्कथं व्याख्यानमित्यत आहुः–**उपपादनीयमिति**।

—१९ संदिग्धत्वं स्फुटयन्ति– **तत्रेत्यादिना**। ननु सर्वज्ञब्रह्मणि कस्मिन्नंशे संदेहस्तदाहुः–**तस्य हीति**।

—२० **वाक्ये**– मन्त्रे। एवंच ब्रह्मविदाप्नोति परमिति ब्राह्मणवाक्ये द्वितीयया परस्य फलत्वं बोध्यते। सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति व्याख्यानग्रन्थे द्वितीयया कामानां फलत्वं बोध्यते ब्रह्मणस्तु ब्रह्मणा सहेति तृतीयानिर्देशः। तथा च–सहयुक्तेऽप्रधाने (पा. सू. २।३।१९) इति सूत्राद्ब्रह्मणो गौणत्वम्। एवंच तस्य फलत्वांशे संदेह इत्यर्थः। तस्य हि फल-

त्वमित्यत्र हिशब्द एवार्थकः। तस्यैव ब्रह्मण एव फलत्वमित्यर्थः। तर्हि कथं तस्य फलत्वमुपपाद्यत इत्याहुः- **फलं त्विति**। **सर्वैरिति**। प्रकारैरित्यर्थः। प्रकाराश्च-अभ्याससर्वान्तरत्वसर्वाधिकत्वादयो बोध्यास्तेषामेवोपलक्षणमभ्यासादिति। ननु प्रचुरानन्दरूपेण फलत्वमभीष्टं स्याच्चेत्तर्ह्यमूर्तस्यैव तत्तथोक्तं स्यात्किमिति शिरःपाण्यादिकल्पना।

—२१ एवंच शिरःपाण्यादिकल्पनयोपासनार्थत्वं भवेदत आहुः-**शिरःपाण्यादीति**। ननु कथं शिरःपाण्यादेः स्तुतित्वं तदाहुः-**पुरुषविधत्वायेति**। सर्वेषामन्नमयादीनां पुरुषविधत्वाय पुरुषाकारत्वायेत्यर्थः। अयमर्थः। यद्यात्मा स्वयं पुरुषविधो न स्यात्तर्हि तदुपरितना आनन्दमयान्ताः केपि पुरुषाकारा न भवेयुः। इदं च-तस्य पुरुषविधतामन्वयं पुरुषविधः-इति श्रुतिवाक्याज्ज्ञायते। आनन्दमयस्य पुरुषाकारतामनु सर्वे पुरुषाकारा भवन्तीत्यत्र लौकिकयुक्तिमाहुः- **लोके हीति**। **अन्तर्भूतमिति**। मूषानिषिक्तप्रतिमादावन्तर्भूतस्य तदाकारता लोके दृष्टा। अत्र श्रुतौ तु तस्माद्वा एतस्मादन्नमयादन्योन्तर आत्मा प्राणमय इत्यादिना प्राणमयस्य पुरुषविधतामुक्त्वा तेन पूर्णत्वमन्नमयस्योक्तं लोकवद्बोध्यम्।

—२३ नन्वेवमपि स्तुतिः कथं सिध्यतीत्यत आहुः-**जीवोत्रेति**। **अत्र**-शास्त्रप्रवृत्तौ। **मुख्यः**- फलभोगकर्तृत्वेन मुख्यः। **व्यपदेशादिति**। सोऽश्नुते सर्वान् कामान् सहेति श्रुतौ स इत्यनेन जीवस्यैव कर्तृत्वेन व्यपदेशात्। **स च**- जीवश्च। **वस्तुतो हंसरूप इति**। द्वा सुपर्णा सयुजा सखाया इति श्रुतावुभयोर्जीवेशयोर्हंसरूपत्वेन निर्देशाद्वास्तविकं जीवस्य हंसरूपत्वमित्यर्थः।

—२४ ननु तथापि जीवस्य शास्त्रप्रवृत्तौ मुख्यता कथमित्याहुः- **पुरुषाधिकारकमिति**। शास्त्रप्रवृत्तिर्जीवस्य ब्रह्मज्ञानार्थं तच्च ज्ञानं तस्य पुरुषाकारत्वे संभवेद्यतः शास्त्रफलमुपदेशस्तत्र च पुरुषस्यैवाधिकारः। अतो जीवस्य हंसाकारत्वेपि पुरुषाकारत्वं ततो ज्ञानसंपत्तिरित्यर्थः। एवंच ब्रह्मणा सह तस्य सर्वकामोपभोगकर्तृत्वं संपद्यते तेन च जीवस्य मुख्यत्वमित्यर्थः। **तेन**- तस्मात्। **तदाकारः**- हंसाकारः। एवंच जीवः पुरुषशरीरे हंसाकारः सन्नखिलफलभाग् भवतीत्यर्थः।

—२५ **पुरुषं**- परमात्मानम्। **अनुवर्णयतीति**। श्रुतिरिति शेषः। ग्वं च परमात्मा हंसरूपे जीवे प्रविशति हंसाकारः सन्। समतां विना फलानुभवासंभवात्। ततश्च पुरुषवेष्टनेन जीवस्यापि पुरुषाकारत्वं तेन च सर्वफलभोक्तृत्वं सिध्यति। परमात्मा हंसाकारेण हंसाकारं जीवमखिल फल-

मनुभावयतीत्यर्थः । एवंच लोके सामान्यजनस्योपयोगार्थं राज्ञा कस्मिंश्चिद्व्यापारे कृते यथा तस्य स्तुतिरेवं परमात्मातिमहानपि जीवस्य फलभोगार्थमेवं करोतीति भगवतः स्तुतिरेषेत्यर्थः । नन्वेवं चेज्जीवार्थमानन्दमयस्यैवैकस्य पुरुषविधत्वमस्तु किमिति पञ्चानामत आहुः-**पञ्चस्वपीति** । पञ्चसु फलरूपासु विभूतिष्वित्यर्थः ।

**३६-१ एक एवेति** । फलभोक्ता जीव एक एवेत्यर्थः । एवंच ब्रह्मज्ञानिजीवः पञ्चकोशेभ्य उत्क्रम्य क्रमेण फलरूपविभूतिषु पञ्चसु भोगार्थं प्रविश्यान्त आनन्दरूपो भवतीत्ययमर्थः प्रपाठकेनानेन वर्ण्यते । ततश्च मान्त्रवर्णिक आनन्द एवेति सिद्धं भवति । अत एव श्रीमद्भागवतेपि-आनन्दमानन्दमयावसाने-इत्युक्तम् । भक्तजीवविषये त्वेवं- बहिश्चेत्प्रकटः स्वात्मा वह्निवत्प्रविशेयदीत्युक्तेः प्राकट्योस्मिन्देह एव सर्वविभूतीनां भोगः प्राकट्यं नो चेदेतच्छरीरत्यागानन्तरमलौकिकदेहप्राप्त्या क्रमेण सर्वोपभोगानन्तरमानन्दमयो भवतीति ज्ञेयम् । विस्तरस्तु श्रीपुरुषोत्तमकृतप्रकाशादवगन्तव्यः । ननु यथा प्राणमयादीनां चतुर्णां व्याख्याने तस्यैष एव शारीर आत्मेत्युच्यत एवमन्नमये कुतो नोक्तमत आहुः- **तत्रेति** । एवं चान्नमयकोशे स्वयं प्रत्यक्षत्वाद्विभूतावपि तस्य तथैव प्रत्यक्षत्वमिति भावः । ततश्च योन्नमयः प्रत्यक्षसिद्धः स भोक्ता जीवः सर्वत्रास्तीति सर्वत्र यः पूर्वस्येति वाक्येनोच्यते ।

—२ इतः परं पञ्चावयवत्वं विचारयन्ति-**द्वितीयादीति** । **प्रथमोक्तं**-अन्नमय उक्तं पञ्चावयवत्वम् । यद्यपि तत्र तत्र पञ्चावयवा भिन्नास्तथापि पञ्चावयवत्वरूपसाम्यालिङ्गादतिदेश इत्यर्थः । अतिदेशमेव विवृण्वन्ति-**तत्रेति** । **तत्र**-पञ्चसु फलरूपविभूतिषु । **प्रदर्शयन्निवेति** । वदतीति शेषः । यः पूर्वस्येति वेदभागो हस्तेन प्रदर्शयन्निव वदतीत्यर्थः । एवंच फलरूपे विभूतिभूतेन्नमय एत एवावयवा बोध्याः ।

—३ प्राणमये विशेषमाहुः- **तदन्तर इति** ।

—४ प्राणव्यानोदानानां शिरोदक्षिणोत्तरपक्षभूतानां कार्यमाहुः- **बलेत्यादि** । तत्र यथासंख्यं ज्ञेयम् । बलं प्राणस्य कार्यम् । भोजनं व्यानस्य । विसर्ग उदानस्य । **तस्येति** । **तस्य**- प्राणमयकोशस्य संचारो हृदये । तस्य विभूतेस्तु संचार आकाशे । **परिनिष्ठित इति** । स आकाशस्तु देहे स्थितः । अयं विभूतिरूपस्तु सर्वस्यां पृथिव्यां स्थित इत्यर्थः ।

—५ **बाह्याभ्यन्तरभेदेन द्वयमिति** । अन्नमयेन बाह्यो लौकिकव्यवहारः । प्राणमयेनान्तरो यो लौकिकव्यवहारस्तत्सिध्यर्थमन्नमयप्राण-

मयेति विभूतिद्वयमित्यर्थः। लौकिकव्यवहारोपयोगिकोशद्वयनिरूपणानन्तरं वैदिकव्यवहारोपयोगिकोशद्वयनिरूपणमित्याहुः-तदन्विति। एवं चाद्यकोशद्वयेन शरीरपाटवे सति वैदिकव्यवहारप्रवृत्तिरित्यर्थः।

—६ आदेशः-वेदत्रयी। **कर्मचोदनेति**। **चोदना**-विधिवाक्यम्।

—७ **सशेषाणीति**। **अर्थवादसंहितानि**-अतिदिष्टवाक्यसहितानीत्यर्थः। तेषामात्मत्वं प्रवर्तकत्वेन प्राधान्यात्। **अथर्वाङ्गिरसे**-अथर्ववेदे। अथर्ववेदे पुच्छत्वं साधयन्ति-**ब्रह्मकर्मत्वादिति**। अथर्ववेदो हि कृताकृतावेक्षणरूपब्रह्मकर्म यत्तद्द्वारा शान्तिकपौष्टिककर्मभिर्यागोपयुक्तर्त्विगादिरक्षणसंपादनेन यागोपयोगी भवत्यतः पुच्छत्वम्। तथा च वेदचतुष्टयात्मकोयं मनोमयो विभूतिरूपो नानावृत्तिकान्मनोमयकोशाद्भिन्न एवेतिभावः। स एव जीवो विवरप्रसूतिः-इत्यादिना श्रीमद्भागवतेयमेव स्पष्टतयोक्तः। अतः परं नानाविधयागसाध्यं पारलौकिकफलोपयोगिनं चतुर्थमाहुः। तदन्विति।

—८ **विज्ञानमय इति**। **प्राचुर्ये मयट्**। विज्ञानप्रचुर इत्यर्थः। **तृतीयाध्याय इति**। रंहत्यधिकरण इत्यर्थः।

—९ **यथोक्तकर्तृत्वादिति**। अन्नमयाद्युपासनाकर्तृत्वादित्यर्थः। एतेनोपासनाकथनस्य प्रयोजनमपि ज्ञापितम्। एवंच श्रद्धादयोर्थाः पूर्वसिद्धास्तैरेवैतदवयवाः पूर्णाः। ततश्च जीवस्य क्रमिको भोगः। एतेन संशयादिनानावृत्तिकाद्विज्ञानमयकोशादस्य भिन्नत्वं दर्शितम्। एवंचैतत्सिद्धम्। अन्नब्रह्मोपासनया सर्वान्नप्राप्त्या लौकिको बाह्यो भोगः संपद्यते ततः प्राणमयोपासने सर्वायुःप्राप्तिरूप आन्तरो भोगः संपद्यते ततो मनोमयोपासने ब्रह्मानन्दज्ञानाद्भयाभावे सति वैदिको भोगः संपद्यते। ततः परं प्रमादराहित्ये सति पापनाशकसर्वकामाप्तिरूपो भोगः संपद्यते।

—१० अन्यावयवस्वरूपमाहुः-**ऋतसत्याविति**। प्रमीयमाणो ज्ञायमानः। अनुष्ठीयमानः क्रियमाणश्च।

—११ **तादृशस्येति**। श्रद्धाहोमेन पूर्वजन्मनि निष्कामयज्ञकर्तुर्ज्ञानरहितस्य पुरुषस्य श्रद्धादिक्रमेण महर्लोकं प्राप्तस्येत्यर्थः। ततः-महर्लोकात्। एतादृशस्य ज्ञानप्राप्त्या मुख्यं फलमिति बोधयन्ति-ततोपीति।

—१४ **साधनरूपत्वादिति**। ज्ञेयत्वेन साधनाङ्गतया साधनरूपत्वमित्यर्थः। एवंचानन्दरूपो भगवानन्नमयादिपञ्चविभूतिरूपो भूत्वा जीवमनुप्रविष्टः पुरुषविध एव लौकिकशरीर आनन्दमयादारभ्यान्नमयान्त-

कोशान्मूषानिषिक्तप्रतिमान्यायेन प्रतिशरीरं संपादयति। तत्र ते ये विभूतिरूपा लोके हीत्यादिना वर्णयतीत्यन्तेन संक्षेपेणोक्तास्त एव पञ्चस्वित्यादिना विस्तरेणोक्ताः । तत्र ब्रह्मज्ञानी भक्तो वा जीवः परप्राप्त्यनन्तरं सर्वान् कामान् भुङ्क्त इत्यत्र कथितो भोगो विभूतीनामेव। परं वस्तु विपश्चिदानन्दमय एवेति सिद्धम् । उपनिषदि पञ्चविभूत्यनन्तरमुक्तानां चतुर्णां श्लोकानां मध्ये ।

—१५ प्रथमयोः द्वयोः श्लोकयोः प्रयोजनमाहुः-श्लोकौ त्विति ।

— १६ ततः परश्लोकयोः प्रयोजनमाहुः- अपरौ त्विति । भीषास्मादित्यादिना वाग्गोचरस्य माहात्म्यं द्योतयति यतो वाच इत्यादिना वागगोचरस्य माहात्म्यं द्योतयतीत्याहुः-वाग्गोचरेत्यादि ।

—१७ अवान्तरानन्दाः- गणितानन्दाः । तदुत्कर्षत्वेति । अगणितानन्दोत्कर्षेत्यर्थः । उपसंहरन्ति-तस्मादिति ।

—१८ मान्त्रवर्णिकमेवेति । आनन्दमयमेवेत्यर्थः । तथोक्तं श्रीमद्भागवते वेदस्तुतौ- पुरुषविधोन्वयोत्र चरम इति । चरमः-आनन्दमयः ।

—१९ चकारः- सौत्रचकारः ।

**सूत्रार्थः**- आनन्दमयं मान्त्रवर्णिकमेव मन्त्रेभिधया वृत्त्या कथितमेव ज्ञायत इति ॥ १४ ॥

## नेतरोनुपपत्तेः १।१।१५

—२१ सूत्रान्तरमवतारयन्ति-निषेधमुखेनेति। सुदृढत्वायेति । स्थूणानिखननन्यायेनेत्यर्थः ।

—२२ आकूतं-अभिप्रायः । आनन्दमयेपि तस्यैष एव शारीर आत्मेति वचनादिति भावः ।

—२३ सोश्नुत इति मान्त्रवर्णिकविरोधं परिहरन्ति-स ब्रह्मविदिति । ब्रह्मवित्सर्वान् कामानश्नुते विपश्चिता ब्रह्मणा सहानन्दमयो भवतीत्यर्थकरणे पूर्वोक्तमान्त्रवर्णिकविरोधाभावः । एवंच यथा जीवस्य स्वर्गसुखं फलभूतमेवं मुक्तावस्यालौकिकं रूपमपि फलभूतमित्यर्थः ।

३७-१ तथा सति-जीवस्यानन्दमयत्वे सति ।

—२ निरूपणमिति । ब्रह्मणो निरूपणमित्यर्थः । जीवस्यानन्दमयत्वे तस्माद्वा एतस्मादात्मन आकाशः संभूतः-इति माहात्म्यं जीवे गच्छेदिति ब्रह्ममाहात्म्यश्रुत्यनुपपत्तिरिति भावः । उपसंहरन्ति-अत इति ।

**सूत्रार्थः**–इतरो जीव आनन्दमयो न । अत्यलौकिकमाहात्म्यवत्त्वस्य ब्रह्मणि निरूपणानुपपत्तेरिति ॥ १५ ॥

## भेदव्यपदेशाच्चान्यः १।१।१६

—५ सूत्रान्तरमवतारयन्ति–**इत इति** ।

—६ दण्डी पुरुष इत्यत्र यथा दण्डपुरुषयोर्भेद एवमानन्दीत्यत्रानन्दतद्वतोर्भेद इत्यपि कारणं जीवस्यानन्दमयत्वाभाव इति द्योतयितुमाहुः–**आनन्दोस्यास्तीति** ।

—७ सूत्रस्थचकारप्रयोजनमाहुः–**चकारादिति** ।

—८ **नानन्दमय इति** । कस्यामप्यवस्थायामिति शेषः ।

**सूत्रार्थः**–रसᳪं ह्येवायं लब्ध्वानन्दीभवति–इति श्रुतौ प्राप्यप्रापकभेदकथनादपि जीव आनन्दमयो नेति ॥ १६ ॥

## कामाच्च नानुमानापेक्षा १।१।१७

—९ सूत्रद्वयमवतारयन्ति–**तर्हि जड इति** । जडो द्विविधः कार्यरूपः कारणरूपश्च । आनन्दस्यान्तरत्वात्कार्यरूपो जडो न संभवतीति समादधते–**स स्वमत इत्यादिना** । सर्वत्र स्वमतशब्देन वैदिकमेव मतं ग्राह्यम् ।

—१२ ननु वैदिकमते तदभावेपि सांख्योक्तं तत्कुतो नाङ्गीक्रियते तन्निवारयन्ति सूत्रेणैव–**कामाच्चेति** ।

—१३ **अथैतदिति** । तस्य प्रियमेव शिरः–इत्यवयववाक्यान्यथानुपपत्त्या तथा च मुख्य आत्मपदार्थो गृहीतश्चेत्तत्रावयवा न संभवेयुरतो गौणं तं स्वीकृत्यानन्दस्य सुखात्मकत्वेन सत्त्वधर्मत्वात्सत्त्वपरिणामरूपा कार्यरूपा सा प्रकृतिः कल्प्येत ।

—१४ **सा कल्पना**–तथा कल्पना ।

—१६ सौत्रचकारप्रयोजनमाहुः–**चकारादिति** । तपो विचारः सोपि चेतनधर्मः ।

—१८ **न तिष्ठतीति** । अर्थावबोधक्षमं वाक्यमनुमितिपर्यन्तं स्वार्थावबोधमकृत्वा न तिष्ठतीत्यर्थः । अयमर्थः । आनन्दमयपदवाच्यं जडप्रकृतिरूपसत्त्वपरिणामाभेदः प्रियाद्यवयववत्वात् यथा लौकिकसुखमेवमनुमानं कर्तव्यम् । एवमनुमानोपयोगि व्याप्तिज्ञानं जायते तावत्पर्यन्तं वाक्यश्रवणेनैवानन्दचैतन्यविषयकशाब्दबोधो भवेत् ।

**सूत्रार्थः**-प्रकृतिकल्पना नोपपद्यते । सोऽकामयतेति कामात् । कामो हि चेतनधर्मस्तेन चेतनस्यैव कामनास्वीकारेण वाक्यार्थस्यावसितत्वात्-आनन्दमयवाच्या, सत्त्वपरिणामा प्रकृतिः, आनन्दविकारत्वाल्लौकिकसुखवत् इत्यनुमितिपर्यन्तं श्रुतिवाक्यार्थो न तिष्ठतीति ॥ १७ ॥

## अस्मिन्नस्य च तद्योगं शास्ति १।१।१८

—२१ तेन रूपेण-आनन्दमयरूपेण ।

३८-१ अस्याप्यर्थ इति । आनन्दमय एव सन्नानन्दमयं प्रविशतीत्यर्थः ।

—३ शाङ्करमतं दूषयन्ति-ये पुनरिति । अयमर्थः । प्रायपाठविरोधाद्यापत्तिभिरानन्दमयपदस्य ब्रह्मपरत्वानङ्गीकारेण-इदं त्विह वक्तव्यं-इत्यादिना शाङ्करभाष्येऽधिकरणभङ्गः कृतः । अज्ञानमेव-श्रुत्यर्थाज्ञानमेव ।

—४ वक्तव्यमिति । उत्तरं वक्तव्यमित्यर्थः । एतदुत्तरं नोक्तं तेन श्रुत्यर्थाज्ञानमित्यर्थः । ब्रह्म आनन्दमयपदवाच्यं नेति चेत्तदतिरिक्तं जीवजडात्मकं वस्तुद्वयं संभवति तत्र जीवो नानन्दमयपदवाच्य इति दूषयन्ति-न तावज्जीव इति । तस्येति । तस्येत्यस्य व्यवहितेनानन्दमयस्येत्यनेन संबन्धः । एवंच ब्रह्मणा विपश्चितेति मन्त्रेणानन्दमयस्य तस्य ब्रह्मज्ञानफलत्वेनोक्तत्वादिति वाक्ययोजना । तस्य-जीवत्वेन भवदभिमतस्य । ब्रह्मज्ञानफलत्वेनेति । ब्रह्मविदाप्नोति परमिति परपदवाच्यानन्दमयस्य ब्रह्मज्ञानफलत्वेनोक्तत्वादित्यर्थः । द्वितीयं पक्षं दूषयितुमाहुः-अथेति । अथ-पक्षान्तरे । अथ-जडस्यानन्दमयत्वस्वीकारे ।

—६ वक्तव्यमिति । यथा जडं स्वर्गसुखं चेतनजीवाश्रयि तथायं किमाश्रित इति वक्तव्यमित्यर्थः । स्यादिति । यथा स्वर्गादिकं कर्मफलत्वेनानित्यत्वात्क्षायि तद्वदिदमप्यनित्यत्वात् क्षायि स्यादित्यर्थः ।

—७ ननु नेदं कर्मफलं किंतु ज्ञानफलमित्याशङ्कते-ज्ञानस्यापीति । अवान्तरफलमिति । आनन्दमयः फलमित्यर्थः । समादधते-नेति ।

—८ फलमिति । मुख्यमिति शेषः । ननु जडचिद्रूपयोरन्यतरज्ज्ञानस्य फलमस्तु को दोष इति चेत्तत्राहुः-जडचिद्रूपताया इति । पूर्वमेवेति । ज्ञानात्पूर्वमेवेत्यर्थः । एवंच ज्ञानात्पूर्वं विद्यमानस्य जडरूपस्य चिद्रूपस्य वा ज्ञानफलत्वं न संभवतीति भावः । दूषणान्तरमाहुः-अस्यैवेति ।

—९ श्रुतिविरोधश्चेति । स एको ब्रह्मण आनन्दः-इत्यस्य व्याख्याने-एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति-इति श्रुतिरुपन्यस्ता । आनन्दमयस्य विकारत्वे तु ब्रह्मानन्दैकदेशत्वाभावात् स्फुट एव तद्विरोधः ।

—१० कारणान्तरेणाधिकरणभङ्गः कृत इत्याशङ्क्य खण्डयन्ति–पुच्छत्वेनेति। अथातो ब्रह्मजिज्ञासा (ब्र. सू. १-१-१) इत्यादिना मुख्यं जिज्ञास्यं ब्रह्म यदि पुच्छत्वेनाप्राधान्येन निर्दिश्येत तदा गौणता समायातीति प्रद्वेषादधिकरणभङ्ग इति पूर्वपक्ष्याशयः। निराकुर्वन्ति–तर्हीति। यथा पुच्छत्ववचनं गौणतया द्वेषजनकं तथा तस्य प्रियमेव शिर इति भेददर्शिका षष्ठी कुतो न द्वेषजनिकेति भावः।

—१२ पूर्वोक्तदूषणानि स्मारयन्ति–उपक्रमेत्यादि। ननु नास्माभिराधिकरणभङ्गः क्रियते किंतु तत्समर्थनं प्रकारान्तरेण क्रियत इति चेत्तदप्यसंगतमित्याहुः–यद्यपीत्यादिना। शाङ्करमतेनाधिकरणरचना–ब्रह्म पुच्छं प्रतिष्ठेत्यत्र किमानन्दमयस्यावयवत्वेन ब्रह्म विवक्ष्यते स्वप्रधानत्वेन वेति संशयः। पुच्छशब्दादवयवत्वेन ब्रह्म विवक्ष्यत इति पूर्वपक्षः। सूत्रेण समाधानम्। आनन्दमयोऽभ्यासादिति। आनन्दमय आत्मा पूर्ववाक्ये स्वप्रधानत्वेनोच्यते। असन्नेव स भवतीति निगमनश्लोके केवलस्य ब्रह्मणोऽभ्यस्यमानत्वात्।

—१३ एवमधिकरणरचनायां दूषणमाहुः– तत्रेति।

—१४ यदि पुच्छस्य ब्रह्मत्वं पूर्ववाक्ये प्रतिपाद्येत तर्हि पूर्वं ज्ञेयत्वेन लक्षितस्वप्रधानब्रह्मरूपत्वं पुच्छस्य कथमिति शङ्का स्यात्तदेव न प्रतिपाद्यते तेन शङ्कोत्थानाभावात्समाधानमेवानुपपन्नमित्याहुः– येनेत्यादिना। एवंच न शङ्का न चोत्तरमिति भावः। पूर्वन्यायेनेति। समिधो यजतीति न्यायेनेत्यर्थः। तथाहि यथा– समिधो यजति– इत्यादिपञ्चप्रयाजविधायकवाक्येषु यजतीत्यभ्यासेन यागभेद एव प्रतिपाद्यते न तु यजतिपदसमभिव्याहृतपदार्थानां बाधस्तत्राप्यसन्नेव स भवतीत्यादिवाक्येषु ब्रह्मपदाभ्यासेन तत्समभिव्याहृतपुच्छप्रतिष्ठापदार्थयोर्भेद एव प्रतिपाद्यते न तु तयोर्बाधः।

—१५ अतो ब्रह्मणोवयवश्रुतिबाधोऽनया रीत्या सर्ववेदपाठिना ब्रह्मणापि कर्तुमशक्य इत्याहुः– तत्रेत्यादि। दूषणान्तरमाहुः– मौर्ख्यमिति। एतत्– अधिकरणस्यान्यथा रचनम्। चकारादधिकरणभङ्गोऽपि ग्राह्यः।

—१६ स्यादिति। तदुद्भावितानां दोषाणां पूर्वमेव निराकरणादिति भावः। आनन्दमयस्याब्रह्मत्वे दूषणमाहुः– आनन्दमयस्येति।

—१८ ननु विषयनिरूपितं ब्रह्मणो मुख्यत्वं पूर्वं निरूपितं किंतु फलनिरूपितं मुख्यत्वं तस्य नास्तीत्यत आहुः– विषयफलयोरिति।

—१९ **पूर्वभावित्वायेति** । परप्राप्तेः पूर्वं ज्ञातत्वबोधनाय । यथा गृहस्थितं पुरुषं कश्चिद् द्वारमप्राप्य न प्राप्नोति तथेत्यर्थः । तत्र गमकमाहुः—**अत एवेति** । आनन्दमयस्य तत्र स्थितौ गमकमाहुः— **प्रतिष्ठेत्यादि** ।

—२० नन्वेवमवयावित्वे द्वैतापत्तिरिति चेत्तत्राहुः— **अत्रेति** । भाक्तो गौण औपचारिक इत्यर्थः ।

—२१ ननु भाक्तत्वे तस्य हंसाकारता किमर्थमुक्तेत्यत आहुः **प्राणमयादीनामपीति** । प्राणमयादीनां जीवानामित्यर्थः । **तथात्वात्** । हंसाकारत्वात् । **अन्तःस्थितस्येति** । आनन्दमयस्येति शेषः । **बाह्यानुरोधेनेति** । बाह्यो जीवस्तदनुरोधेनेत्यर्थः । तथात्वं— हंसाकारत्वम् ।

**सूत्रार्थः—** अस्मिन्नानन्दमयेस्य जीवस्य तद्रूपेण योगं फलत्वेन कथयत्यतोपि जड आनन्दमयो नेति ॥ १८ ॥

इति पञ्चमाधिकरणम् ॥ ५ ॥

---

## अन्तस्तद्धर्मोपदेशात् १।१।१९

३९–१ आनन्दमयाधिकरणे ब्रह्मत्वेन प्रतिपाद्यमान आनन्द आदित्येपि स्यात्–यश्चासावादित्ये–इति श्रुत्या तथोक्तत्वादिति संशयनिरासार्थमन्तस्तद्धर्मोपदेशादित्यधिकरणं रचयन्ति ।

—२ छान्दोग्यस्थं विषयवाक्यमुदाहरन्ति– **अथ य एष इत्यादि** ।

—३ **कप्यासमिति** । रक्तवर्णमित्यर्थः ।

—८ संशयं वदन्ति– **तत्रेति** । अत्र त्रिकोटिकः संशयः संभवति तदाहुः **किमित्यादि** ।

—९ **तदर्थमिति** । त्रिविधसंशयोत्पत्त्यर्थं संशयबीजं विचार्यते । प्रथमकोटौ बीजमाहुः– **सुवर्णेत्यादि** ।

—१० द्वितीयकोटौ तृतीयकोटौ च बीजमाहुः– **आहोस्वित्प्रकाशसाम्येनेति** । पूर्वाधिकरणसंगतिमाहुः–**ब्रह्मविदित्यादि विचारारम्भ इत्यन्तेन** ।

—१४ **नोपपद्यत इति** । ब्रह्मज्ञानस्यैव फलजनकत्वादिति भावः । एवं च हेतुतागर्भः प्रसंगोत्र संगतिरित्यर्थः ।

—१५ पूर्वपक्षमाहुः–**तत्रेति** । **विकारवाचीति** । द्व्यच्कतानिमित्तकविकारार्थकमयट्प्रत्ययान्त इत्यर्थः ।

—१७ परिच्छेदश्चेति। अन्तरादित्य इति श्रुत्योक्तस्तदन्तर्वर्तित्वकृतः परिच्छेदस्तथा 'इत्यधिदैवतम्' इति श्रुत्योक्तमाधिदैविकवचनं च बाधकम्। परिच्छेद इत्यनेन संबन्धप्रसङ्गे बाधक इति लिङ्गविपरिणामेन योजना कार्या। आधिदैविकादीत्यनेनाध्यात्मिकोपि ग्राह्यः।

आध्यात्मिकस्तु यः प्रोक्तः सोसावेवाधिदैविकः।

इति स्मृत्याध्यात्मिकाधिदैविकयोरभेदकथनात्। आध्यात्मिकस्य जीवत्वेन तद्वचनं ब्रह्मत्वबाधकमित्यर्थः। आधिदैविकादीत्यत्रादिपदेन य एषोन्तराक्षिणि अथाध्यात्मम्—इत्यादिनोक्ता अक्षिपुरुषधर्माः संग्राह्याः। आक्षिपुरुषविचारोपि—स यश्चायं पुरुषे—इति श्रुत्यर्थनिर्णयार्थमिति ज्ञेयम्।

—१८ तच्छरीरं—अधिष्ठातृदेवताशरीरम्। मन्तव्यमिति युक्तिभिर्निश्चेयमित्यर्थः। चाक्षुषत्वादिति मन्तव्यमित्यत्र हेतुः। एवं देहसाधनेन देहित्वं संसाध्येन्द्रियवत्त्वं साधयन्ति—इन्द्रियवत्त्वं चेति।

—१९ कपेरास इति। 'आसु उपवेशने' इति धातोर्घञन्तस्य रूपम्।

—२२ ननु सूर्यमण्डलस्थो जीवो गृह्यते चेत्तदा तदुपासनया फलाभाव इत्यत आहुः—फलमिति। तैत्तिरीये अम्भस्यपारे इति प्रपाठकस्थादित्यो वा एतन्मण्डलमित्यनुवाकप्रामाण्यादेवं वक्तुं शक्यते यद्भगवदाज्ञैवैतादृशी यन्मदीयाधिकारिद्वारा सायुज्यमुपासकानां भवत्विति। एवमधिष्ठातृदेवताशरीरकोटिं साधयित्वा ब्रह्मशरीरकोटिं साधयति पूर्वपक्षी—अथेति। उच्येत—सिद्धान्तिनेति शेषः। एष सर्वेभ्यः पाप्मभ्यः—इति श्रुत्यासाधारणब्रह्मधर्मश्रवणादयं ब्रह्मैवेत्युच्येतेत्यर्थः।

—२३ तद् दूषयन्ति—अपहतपाप्मत्वादीति। पूर्वदोषस्य—शरीरेन्द्रियकेशादिमत्त्वदोषस्य।

—२४ केनचिन्निमित्तेनेति। भक्तानुग्रहार्थमित्यर्थः।

भक्तस्यानुग्रहार्थं हि ब्रह्मणो रूपकल्पना।

इत्युक्तेः।

४०—३ स्थावरस्य—पुण्डरीकस्य। ननु स्थावरोपमानं जङ्गमस्यानुचितं न तु तद्विपरीतमित्यत आहुः—सर्वब्रह्मभावायेति। श्रुत्युक्तत्वात्—सर्वं खल्विदं ब्रह्मेतिश्रुत्युक्तत्वात्।

—५ सूत्रेण समादधते—अन्तस्तद्धर्मोपदेशादिति। सर्वपाप्मोदितादीनां सर्वेषां धर्माणां ा कथनात्।

—९ ननु सर्वपाप्मोदितत्वरूपमेकं साधकं केशश्मश्र्वादिरूपाणि बहूनि बाधकानि तेन कथं पक्षसिद्धिः सत्येकस्मिन्बाधके साधकसहस्रस्याप्यकिंचित्करत्वादिति न्यायादित्यत आहुः–अयमाशय इति । स्थितमिति । पूर्वाधिकरणेषु निर्णीतमित्यर्थः ।

—१० कारणासाधारणधर्मा इति । तन्तुत्वादयः कारणासाधारणधर्माः पटे न समायान्तीत्यर्थः । एवंच कार्यकारणयोः परस्परधर्माणां परस्परयोरसंक्रमात्तयोर्भेदसिद्धिः ।

—११ नन्वेतेन प्रकृते किमायातं तदाहुः–तत्रेति ।

—१२ ननु कारणधर्माणां बलिष्ठत्वेप्यपहतपाप्मत्वादयो जीवेपि संभवेयुः कदाचित्तत आहुः–नामतुल्यतेति । जीवेपहतपाप्मत्वं पापनाशानन्तरं संभवेद्ब्रह्मणि तु तत् त्रैकालिकमेवंच केवलं कादाचित्कं नामसादृश्यम् । उभयेषां–कार्यकारणानामपि ।

—१३ ते–अपहतपाप्मत्वाहिरण्यश्मश्रुत्वादयो धर्माः । श्रुत्येकसमधिगम्या इति । एवंच श्रुतिप्रतिपाद्यत्वात्तेषां ब्रह्मधर्मत्वमेव । प्रमाणान्तरमिति । अनुमानादिप्रमाणान्तरमित्यर्थः ।

—१४ अतः–श्रुतिप्रतिपाद्यत्वात् । अस्थूलादिवाक्येषु–अस्थूलमनण्विति बृहदारण्यकवाक्येषु । कारणधर्मा एवेति । एवंच निषेधवाक्यानुरोधान्निषिध्यमानधर्माणां लौकिकत्वमेव यत्र निषेधो नास्ति तत्रालौकिका ब्रह्मधर्मा एवेति भावः ।

—१६ निर्गलितार्थमाहुः–अत एकोपीति ।

—१९ तथैवेति । लोके प्रत्यक्षेण क्वचिदनुमानेन वा यत्र यादृशमवगम्यते तत्तथैव सर्वं खल्विदं ब्रह्मेति श्रुतिवाक्यात्तथैव ज्ञेयमित्यर्थः । नन्वेवं चेद्ब्रह्मणो नानात्वापत्त्यैकमेवाद्वितीयमिति श्रुतिविरोध इत्यत आहुः–अनन्तमिति । सत्यं ज्ञानमित्यादिश्रुत्यैकस्यानन्तमूर्तित्वोक्त्या न पूर्वोक्तश्रुतिविरोध इत्यर्थः ।

—२० वैपरीत्ये बाधकमाहुः–अन्यथेति । अयं भावः । यदि ब्रह्मणोनन्तमूर्तित्वं न स्यात्तर्ह्येकस्य सर्वव्यापकस्य गुहायामपि पूर्वमेव सत्त्वाद्गुहायां निहितमित्यनुपपन्नं भवेत् । तस्मादिति । अनन्तमूर्तियुक्तं वेदगम्यं ब्रह्मेति भावः ।

—२१ एवमधिष्ठातृदेवतापक्षं निराकृत्य ब्रह्मशरीरमिति पक्षं निराकुर्वन्ति–ब्रह्मण एवेति । सर्वकर्तुरिति । शरीरं विनापि सर्वकार्यसंपादनसमर्थस्येत्यर्थः ।

—२३ अन्यथा-शरीरवत्। नटवदिति।

यथा मत्स्यादिरूपाणि धत्त जह्याद्यथा नटः।

इति श्रीमद्भागवतप्रथमस्कन्धोक्तेः।

४१-२ ननु हिरण्मय इत्यत्र मयटो विकारवाचकत्वात्कथं हिरण्मय इत्यस्य ब्रह्मवाचकत्वमत आहुः-प्रकृतेपीति।

—३ न ह्यजिति। तेन द्व्यच्कत्वाभावाद्विकारार्थकमयटोसंभव इत्यर्थः। ननु ब्रह्मण आनन्दरूपत्वं श्रुतिसिद्धं तथापि हिरण्यशब्दस्य ब्रह्मवाचकत्वं नास्तीत्याहुः-हिरण्यशब्द इति।

—८ वपुः स्वरूपमिति। एतस्य ब्रह्मस्वरूपमिति मन्तव्यमित्यनेनान्वयः। हिरण्यवपुरित्यत्र वपुःपदेन शरीरं न ग्राह्यं किंतु वं सुखं पुष्णातीति वपुरिति व्युत्पत्त्या ब्रह्मैव। अत एव स्मृत्यन्तरे

आदित्यमण्डलासीनं रुक्माभं पुरुषं परम्।
ध्यात्वा जपेत्तादित्येतान्निष्कामो मुच्यते द्विजः॥
आदित्यमण्डलान्तःस्थं परं ब्रह्माधिदैवतम्।
छन्दोनिवृत्स्याद्गायत्री मया दृष्टा सनातनी॥

इत्यत्र वपुःपदं नोच्यते।

—९ नन्वेवं वपुःपदेन शरीराग्रहणे माया ह्येषेत्यादिना भारते प्रतिपादितेन सशरीरत्वेन विरोध इत्यत आहुः-मायेत्यादि। एवं चैषा मया माया सृष्टेति प्रतिपादनादनेन वाक्येन न विरोध इति भावः।

—१० ननु शरीरे बाधकं किमत आहुः-शरीरे सतीति। शरीरे सति तदभिमानित्वाज्जीवत्वं स्यादित्यर्थः। शरीराभिमानित्वं जीवत्वमिति लक्षणात्।

—११ उपसंहरन्ति-अत इति।

सूत्रार्थः-अन्तर्दृश्यमानः परमात्मैव। स एष सर्वेभ्यः पाप्मभ्य उदित इति श्रुत्या ब्रह्मणो धर्माणां सर्वपाप्मोदितादीनां दर्शनादिति॥ १९॥

## भेदव्यपदेशाच्चान्यः १।१।२०

—१६ पूर्वसूत्राद्विशेषमाहुः-यद्यपीति।

—१९ चतुर्ष्वर्थेषु प्रथममाहुः-सर्वत्रेति। आदित्यादिषु तिष्ठन् परमात्मा तद्धर्मैर्न संबध्यते।

—२० द्वितीयमाहुः-सर्वमुक्तीति। यद्यभिमानी तं जानीयात्ततो मुक्तः स्यादेवं च सर्वमुक्तिः संभवेदतस्तां परिहर्तुमाहुः-स्वधर्मैरिति। स्वासाधा-

रणैर्ज्ञानित्वापहतपाप्मत्वादिधर्मैः कर्तृभूतैस्तदधिष्ठानम्। अभिमानि वस्तु न बध्यते न व्याप्यते। एवंच।

यदादित्यगतं तेजो जगद्भासयतेखिलम्।

सैषा त्रय्येव विद्या तपतीति स्मृतिगतैः श्रुतिगतैश्च ज्ञानित्वादिधर्मैर्मण्डलमेव व्याप्यते न तदभिमानी तेन न तस्य मुक्तिरिति भावः। एवंच मण्डलाज्जीवाच्च भेदसिद्धिरिति भावः। तृतीयार्थमाहुः–स्वलीलेति। जगद्भानेन स्वस्वधर्मप्रवृत्तिरूपिणी लीला तस्याः सिद्ध्यर्थमित्यर्थः।

—२१ चतुर्थमाहुः–तस्येति। तस्य–मण्डलाभिमानिनः। तदर्थे–लीलासिद्ध्यर्थम्। भीषास्मादिति श्रुत्युक्तरीत्या यदि मण्डलाभिमानिनं न नियमयेत्तदा प्रवृत्तिरूपिणी लीला न सिध्येदित्यर्थः। चकारादिति। सौत्रचकारात्पूर्वसूत्रोक्तधर्माः समुच्चीयन्ते। एवंच हेतुभेदेपि साध्यैक्यान्नाधिकरणभेदः।

—२२ नन्वत्रान्यस्य साध्यत्वादधिकरणभेदोस्त्विति चेत्त्राहुः–उपचारव्यावृत्त्यर्थमिति। एवंचारोपनिवृत्त्यर्थं यथा पूर्वाधिकरणं नेतरोनुपपत्तेरित्यनेन निषेधमुखेन विचारितमेवमत्रापि तन्निवृत्त्यर्थमन्यपदेनोपसंहारः।

—२३ ननु य एवं वेदेत्युपासनाकथनात्तदर्थमारोप एव कुतो न स्वीक्रियत इत्यत आहुः–ब्रह्मत्व इति।

—२४ विशेष इति। ज्ञाने चोपासनायां च मनोव्यापारस्य तौल्यादित्यर्थः। नन्वतस्मिंस्तद्धर्मानारोप्य तत्त्वेन चिन्तनमुपासना तस्य तत्त्वानिश्चयो ज्ञानमिति स्वरूपभेदाद्विशेषो नेति कथमित्यत आहुः–कारण इति। अस्तु पूर्वोक्तो विशेषस्तथाप्युत्कृष्टधर्माणां निकृष्ट आरोपं कृत्वोपासना लोके वेदे च दृश्यते न वैपरीत्यम्।

—२५ कारणमुत्कृष्टं कार्यं निकृष्टमिति मत्वाहुः–कारणे कार्यधर्मारोप इति। अभेदादिति। कार्यकारणयोरभेदादित्यर्थः।

सूत्रार्थः–य आदित्ये तिष्ठन्नित्यादिश्रुतौ सूर्यजीवाभ्यां भिन्नत्वकथनात्सूर्यमण्डलस्थः परमात्मैवेति॥ २०॥

इति षष्ठाधिकरणम्।

---

## आकाशस्तल्लिङ्गात् १।१।२१

४२–३ पूर्वाधिकरणद्वयेन विकारे प्राचुर्ये वा मयडिति प्रत्ययनिर्णयः कृतोधुनानेनाधिकरणेन प्रकृतिनिर्णयः क्रियत एवमधिकरणसंगतिः। विषयवाक्यमाहुः–अस्य लोकस्येति।

—९ प्रकरणं संदेहस्य निवारकमित्याहुः–आकाशव्योमशब्दा इत्यादि। आकाश आनन्दो न स्यादिति ब्रह्मप्रकरणम्। आत्मन आकाशः संभूत इति कार्यप्रकरणम्।

—१० संदिग्धनिर्णय इति। संदेहाविषयीभूतस्य शब्दार्थस्य निर्णये सतीत्यर्थः। ननु ब्रह्मणो जगज्जन्मादिहेतुत्वसिद्ध्यर्थमिदं सूत्रमिति चेत्त-ज्जन्माद्यस्य यत इत्यनेनैव गतार्थमित्याहुः–जन्मादिलक्षणसूत्रेणेति।

—११ अन्यथा–प्रकरणस्य संदेहानिवारकत्वे। महाभूतेति। बृहत्त्वादा-काशमपि ब्रह्मशब्दस्य वाचकं भवेदित्यर्थः।

—१३ संदिग्धमिति। ब्रह्मवाचकं महाभूतवाचकं चेत्युभयविधमप्या-काशपदमेकस्मिन्नेव प्रकरणे पठितं तेनैतत्प्रकरणं ब्रह्मपरं वा महाभूतपरं वेति संशययुक्तमित्यर्थः।

—१४ एवं संशयमुक्त्वा पूर्वपक्षमाहुः– अवान्तरेति। यथा संवर्ग-विद्यायां जानश्रुत्युपाख्यानं पर्यवसितमेवमत्राप्याकाशशब्दस्य भूताकाशे पर्यवसानमित्यर्थः। लोकभाष्यन्यायेनेति। लोके भाष्यते येन पदेन योर्थ इत्यर्थः। एवंच न्यायस्वरूपमेतत्।

लोकेवगतसामर्थ्यः शब्दो वेदेपि बोधकः।

इति। तथा चाकाशशब्दो लोके महाभूतवचनस्तेनात्रापि भूताकाशमेव ग्राह्यमित्यर्थः। भूताकाशं ब्रह्मत्वेनोपासितं फलाय भविष्यतीति पूर्व-पक्षिण आशयः।

—१६ उत्तरयन्ति सूत्रेण–आकाश इत्यादिना।

—१७ श्रुतिलिङ्गादय इति। श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याना-मित्यादिजैमिनिसूत्रोक्ता इत्यर्थः। नियामकत्वेन– अर्थविशेषानिश्चाय-कत्वेन। पूर्वतन्त्रम्– पूर्वमीमांसा। एकवाक्यता–समन्वयरूपैकवाक्यता। एवंच तल्लिङ्गादित्यस्यार्थः श्रुतिसामर्थ्यात्तात्पर्यनिर्णयलिङ्गाच्चेति।

—१९ सर्वशब्दवाच्यत्वामिति। सर्वशब्देन विषयवाक्यस्य ग्रह-णम्। एवंच सर्वाणि ह वा इमानीति वाक्यबोध्यत्वं ब्रह्मण्येवेत्यर्थः। अथवा सर्वे वेदा यत्पदमामनन्तीति वाक्योक्तरीत्यौपनिषदसर्वशब्द-वाच्यत्वं ब्रह्मणि।

—२० सर्वगतित्वादिरिति। सर्वेषां भूतानां गतिराश्रय इत्यर्थः। वाक्यार्थान्यथानुपपत्त्येति। अयं भावः। सर्वभूतानि ब्रह्मण एवोत्पद्यन्ते तत्रैव तिष्ठन्ति तत्रैव लीयन्ते चेति सर्ववेदान्तवाक्यानामर्थः। अत्र चाका-शादेव सर्वोत्पत्तिस्थितिलया उच्यन्ते। यद्याकाशपदेन ब्रह्म न गृह्येत

चेत्तर्हि सर्वेषां वाक्यानामनुपपत्तिर्भवेदतस्तदनुपपत्त्याकाशं ब्रह्मवाचक-मङ्गीकर्तव्यम् ।

—२१ ननु लोक आकाशपदस्य भूताकाशवाचकत्वात्तस्य ब्रह्मवाचकतायां लक्षणाङ्गीकर्तव्या भवेदत आहुः- **सर्वशब्दवाच्यत्वाच्चेति । मुख्यत्वादिति** । मुख्यार्थत्वादित्यर्थः । **मुख्यपरत्वं**- ब्रह्मपरत्वम् । **मर्यादा**-शास्त्रस्थितिः ।

—२३ **तस्मादिति** । वाक्यार्थान्यथानुपपत्त्याकाशपदस्य ब्रह्मपरकत्वादित्यर्थः ।

**सूत्रार्थः**- आकाशः परमात्मैव । तस्य लिङ्गात् । लिङ्गं श्रुतिसामर्थ्यमिति ॥ २१ ॥

इति सप्तमाधिकरणम् ।

---

## अतएव प्राणः १।१।२२

४३–३ पूर्वाधिकरणातिदेशेनैवात्रापि विचार इत्यधिकरणसंगतिः । छान्दोग्यस्थमेव विषयवाक्यमुदाहरन्ति-**प्रस्तोतर्येति** । **प्रस्तावः**-सामोपासनाविशेषः । **अन्वायत्ता**-अनुगता ।

—६ अस्मिन् वाक्ये प्राणपदमन्नादित्याभ्यां सह प्रयुज्यते तेनेदं ब्रह्मणः प्रकरणं न । प्राणस्य प्राणामिति श्रुत्येदं ब्रह्मप्रकरणं भाति तेन संशय इत्याहुः- **तत्रेति । आसन्य इति** । आस्ये भव आसन्य इति मुख्यः प्राणः ।

—७ **आतिदिशतीति** । अत एवेति पदेन । ननु पूर्ववदेव चेत्पूर्वोत्तरौ पक्षौ तर्ह्यधिकरणवैयर्थ्यमिति शङ्कते-**नन्विति** ।

—८ **सर्वत्रेति** । यत्र यत्र ब्रह्मासाधारणधर्मो दृश्येत तत्र ब्रह्मत्वमिति सर्वाधिकरणन्यायः प्राप्स्यतीत्यर्थः । **समादधते**- **उच्यत इति । तत्रेति** । तत्र प्राणविद्यावाक्ये पुरुषस्वापप्रयुक्तो भूतलयस्तत्प्रबोधप्रयुक्ता च भूतोत्पत्तिरुच्यते न तु स्वतन्त्रतयातो यथा न प्राणविद्याया ब्रह्मपरत्वमेवमस्यापि वाक्यस्य न ब्रह्मपरत्वं स्यायदि श्रुतिसामर्थ्यरूपे हेतौ स्वातन्त्र्यपारतन्त्र्यविवेको न क्रियेतातः प्राणविद्यासाधारण्यस्य बाधकस्य सत्त्वात्तेन न्यायेनास्य ब्रह्मपरत्वं न प्राप्नोतीत्यर्थः ।

—१२ अतिदेशफलमाहुः-**अनेनेति** ।

—१३ अतिरिक्तन्यायस्वरूपमाहुः-**यत्रैवेति** ।

—१४ न त्वन्यस्मिन्संभव इति। न तु संभवान्तरे सतीत्यर्थः। एवंच सिद्धं सूत्रार्थमाहुः- अत एवेति। बाधकरहितात्पूर्वोक्ताल्लिङ्गादित्यर्थः।

सूत्रार्थः— तल्लिङ्गादिति हेतोरेव प्राणशब्दवाच्यमपि ब्रह्मैवेति ॥ २२ ॥

इत्यष्टमाधिकरणम्।

---

## ज्योतिश्चरणाभिधानात् १।१।२३

—१९ यत्र ब्रह्मणोसाधारणधर्माः स्पष्टा न सन्ति श्रुतिसामर्थ्यमपि नास्ति तत्र ब्रह्मपरत्वबोधनायेदमाधिकरणमित्यधिकरणसंगतिः। विषयवाक्यमाहुः- इदमिति।

—२० संशयमाहुः- तत्रेति। प्राकृतं- जठराग्निरूपम्।

—२१ असाधारणब्रह्मेति। ज्योतिषामपि तज्ज्योतिरितिवदसाधारण-ब्रह्मधर्माणामत्र श्रुतिवाक्येनुक्तिरिति।

—२२ चरणस्य ब्रह्मधर्मत्वप्रसिद्धिमाहुः- तावानस्येति।

—२४ पूर्ववाक्यमिति। एकवाक्यताप्रदर्शनार्थं पूर्ववाक्यमित्युक्तिः। एवंचान्यवाक्ये चरणानां ब्रह्मधर्मत्वकथनात्तदेकवाक्यतयात्रापि चरणानां तद्धर्मत्वेन ज्योतिषो ब्रह्मत्वं बोध्यमिति भावः। एकवाक्यतामुपपादयन्ति- गायत्री वा इति।

४४-१ उक्तमिति। एवंच ब्रह्मणश्चरणाभिधानेनैतस्य ब्रह्मप्रकरणत्वासि-द्धिस्ततश्च तत्रैव ज्योतिःशब्दस्य पाठात्तस्य ब्रह्मवाचकत्वं सिद्धमिति भावः। अन्यत्रापि ब्रह्मणश्चतुष्पात्त्वसिद्धिमाहुः- पुरुषसूक्तेपीति। आश्रमचतुष्ट-यस्था इति। त्रिपादूर्ध्व इत्यत्राश्रमचतुष्टयवतां जीवानां पादत्वेनोक्तिः। यदि ब्रह्मणः पादा एव न संभवेयुस्तर्हि कथमियमुक्तिरिति भावः। श्रीमद्-भागवतद्वितीयस्कन्धे पुरुषसूक्तविवरणे चैतत् स्पष्टम्। तथाहि।

पादास्त्रयो बहिश्चासन्न प्रजानां य आश्रमाः।
अन्तस्त्रिलोक्यास्त्वपरो गृहमेधो बृहद्व्रतः ॥

इति।

—२ अन्यत्रापि ब्रह्मणश्चतुष्पात्त्वमुक्तमित्याहुः- तथेति। प्रणवब्रह्म-विद्यायां-माण्डूक्ये। तद्विष्णोः परमिति काठके। ब्रह्म पुच्छमिति तैत्तिरीये।

—४ स्पष्टा एवेति। कथाप्रसंगेन जाबालं प्रति ब्रह्मणश्चत्वारः पादा निरूपिता इत्यर्थः।

—५ ननु ब्रह्मणो निरंशत्वादंशकल्पना कथमित्याहुः- अत इति अतः सर्वोपनिषत्सु ब्रह्मपादानामुक्तत्वादित्यर्थः।

—६ चतूरूपत्वमिति । जन्माद्यधिकरणेषु सिद्धमिति शेषः । एवंच ब्रह्मणो विरुद्धधर्माश्रयत्वमंशित्वं च स्वीक्रियत इति भावः । अत एव

ममैवांशो जीवलोके जीवभूतः सनातनः ।

इति गीतायामुक्तम् । नन्वेतावता प्रकृते किमायातमित्याहुः– तत्रेति । तत्र– अंशेषु केवलानां सच्चिदानन्दांशानां कार्यत्वमेव जडजीवान्तर्यामिरूपेणेति शेषः । तथा चोक्तं निबन्धे सुबोधिन्यां च श्रीमदाचार्यैः ।

जडो जीवोन्तरात्मेति व्यवहारस्त्रिधा मतः ।

इत्यादि । भगवदंशस्य कार्यरूपत्वं कथमिति शङ्कानिरासोपि–आवरणभङ्गादिषु–प्रतिपादित इति तत एव ज्ञेयः । चतुर्थपादस्येति । सच्चिदानन्द रूपस्येत्यर्थः । एवंच ब्रह्मणश्चतुष्पात्त्वसिद्ध्या ज्योतिःपदस्य ब्रह्मवाचकत्वमिति प्रकृते समायातमिति भावः ।

—७ विषयवाक्ये चतुर्थपादस्य ब्रह्मत्वं वक्तुं तस्य च षड्विधत्वं निरूपयितुं गायत्री वावेत्यादेः संपूर्णविषयवाक्यस्यैकवाक्यतां प्रतिपादयन्ति– तत्रापीति । षड्विधत्वप्रतिज्ञानादिति । सैषा चतुष्पदा षड्विध गायत्रीति प्रतिज्ञानादनन्तरमित्यर्थः । भूतपृथिवीति । विषयवाक्ये वाग्भूतपृथिवीशरीरहृदयप्राणानां गायत्रीरूपब्रह्मणः षड्विधत्वमुक्तम् । परिचायकत्वेन–उपलक्षणत्वेन । प्रतिपादनादिति । ल्यब्लोप पञ्चमी । प्रतिपादनं कृत्वेत्यर्थः । अतः–अनेन प्रकारेण । तृतीयार्थे तसिः ।

—१५ सिद्धमिति । पूर्वोक्तरीत्यैकवाक्यतया सिद्धम् । अत इति । एवमृग्वाक्ययोः परस्पराकाङ्क्षित्वेन पादानां ब्रह्मधर्मत्वाज्ज्योतिषो ब्रह्मत्वं सिद्धमित्यर्थः ।

—१६ ननु तद्धर्मोपदेशादित्यनेन गतार्थत्वमस्याधिकरणस्येति शङ्कां वारयन्ति–ब्रह्मधर्मनिर्णयार्थमिति । एवंच ब्रह्मचरणस्य ब्रह्मधर्मत्वमस्ति न वेति संशयनिवारणार्थमिदमधिकरणं तेन च हेतोः साध्यता तत्र तु हेतोः सिद्धतेति भेदान्न गतार्थत्वम् ।

—१७ चरणानां ब्रह्मधर्मत्वानिर्णये फलान्तरमप्यस्तीत्याहुः–एतादिति । प्रणवादीत्यत्रादिपदेन सर्वासां पादवर्तीनां विद्यानां ग्रहणम् । पादनिर्णयेन पादवर्तीनां प्रणवादिविद्यानां निर्णयः स्यादित्यर्थमस्याधिकरणस्यावश्यकतेत्यर्थः ।

सूत्रार्थः–ज्योतिःशब्देन ब्रह्मैव गृह्यते । तावानस्य महिमेति पूर्वश्रुतिवाक्ये चरणानां कथनादिति ॥ २३ ॥

## छन्दोभिधानान्नेति चेन्न तथा चेतोर्पण-निगदात्तथाहि दर्शनम् १।१।२४

—२० सूत्रस्थपूर्वपक्षांशं व्याकुर्वन्ति-नन्विति।

४५-२ गायत्र्यामिति। शब्दरूपायामित्यर्थः। **अकस्मात्**-तात्पर्यलिङ्गाद्याश्रयं विना।

—३ नन्वेतत्प्रकरणगतब्रह्मपदेन तथा निर्णयो भविष्यतीत्याहुः-**यद्वैतदिति**। **तत्परमेवेति**। गायत्रीरूपशब्दपरमेवेत्यर्थः।

—४ **ब्रह्मवाचकत्वसिद्धेरिति**। गायत्रीशब्दस्य ब्रह्मपर्यायत्वसिद्धेरित्यर्थः। यथा घटशब्दस्य घटवाचककलशापरपर्यायत्वं तथात्रापीत्यर्थः। ब्रह्मशब्दोन्यत्रापि शब्दपरो दृष्ट इत्याहुः-**ब्रह्मोपनिषदितिवदिति**। नन्वत्र ब्रह्माभिन्नोपनिषदित्यर्थो नाङ्गीक्रियते किंतु ब्रह्मवाचिकोपनिषदित्यरुचेराहुः-**शब्दब्रह्मेति**। चकारात्-शब्दब्रह्मणि निष्णातः-इत्यादिप्रयोगा ज्ञेयाः।

—५ समादधते- **नैष दोष इति**।

—६ **तेनेति**। ब्रह्मप्रतिपादकगायत्रीमन्त्रोपासनया ब्रह्मणि चेतसः प्रवेशो ब्रह्मप्राप्तिरित्यर्थः। **निगद्यते**-वेदे कथ्यते।

—७ तमेव मन्त्रमाहुः-**गायत्री वा इदमिति**।

—८ **अनुपचारेण**-मुख्यतया। उपचारो लक्षणा। वाग्रूपायां गायत्र्यां लक्षणां विना सर्वशब्दस्यासंभवादित्यर्थः। ब्रह्मणि बुद्धिप्रवेशे दृष्टान्तमाहुः-**यथेति**।

—९ तथाहीत्यादिसूत्रांशं व्याकर्तुमाहुः-**कुत इत्यादि**।

—११ **आहत्यैव**-अकस्मादेव। सर्वासां मन्त्रोपासनानां ब्रह्मणि बुद्धिप्रवेश एव फलमित्याहुः-**एतेनेति**।

**सूत्रार्थः**-गायत्रीछन्दसः कथनात्पादा ब्रह्मधर्मा नेति चेन्न। तेन द्वारेण चेतसोर्पणस्य कथनात्। तेनैव प्रकारेण ज्ञानं भवतीति॥ २४॥

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् १।१।२५

—१८ चेतोर्पणनिगदादिति पूर्वसूत्रगतहेतुनास्य गतार्थत्वमिति शङ्कां वारयन्ति-**अयमर्थ इति**।

—२२ **तद्वाचकत्वेन**-ब्रह्मवाचकत्वेन। **उपचारेण**-लक्षणया। **उपसंहारः**-सैषा चतुष्पदेत्यनेनोक्तः। **अर्थाः**-भूतादयः।

**सूत्रार्थः**- अत्र भूतादयः पादत्वेन कथ्यन्ते तच्च कथनं पादानां ब्रह्मपादत्व एवोपपद्यते नान्यथा। तेन पादा ब्रह्मधर्मा एवेति॥ २५॥

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् १।१।२६

—२५ अस्य सूत्रस्य द्विधार्थः प्रतिपादितः।

—२६ सूत्रं व्याख्यातुं प्रथमतो मन्त्रं व्याकुर्वन्ति-पादोस्येति।

—२७ एकोर्थः-प्रथमोर्थः।

४६-१ श्रीमद्भागवतद्वितीयस्कन्धानुसारेण द्वितीयार्थमाहुः-पादेष्विति। श्लोकार्थः- स्थितिपदः पुंसः पादेषु सर्वभूतानि विदुः। त्रिमूर्ध्नो मूर्धस्वभयं क्षेमममृतमधायीत्यन्वयः। स्थितिपदवाच्या भूरादयो लोकाः पादा यस्य तस्य पुंसः परमेश्वरस्य पादेषु सर्वाणि भूतानि विदुः। त्रयाणां भूर्भुवःस्वर्लोकानां मूर्धा महर्लोकस्तस्य मूर्धसूपरितनजनस्तपःसत्यलोकादिषु भगवतामृतमभयं क्षेममिति त्रयमधायि स्थापितम्। एवंच भूरादिचतुष्केनित्यं सुखं ततः परं जन इत्यादिषु नित्यमिति भावः।

—३ अपरः द्वितीयोर्थः। ननु व्याख्यानसापेक्षो द्वितीयोर्थः किमिति गृह्यते स्पष्टेन पूर्वेणैवालमित्यत आहुः-पुरुषसूक्तानुरोध इति। श्रीमद्भागवतद्वितीयस्कन्धीयपुरुषसूक्तविवरणानुरोधेनेत्यर्थः। एवकारोप्यर्थे। द्वितीयोपीत्यर्थः।

—५ पूर्वोक्तपरामर्शाभावादिति। पञ्चम्यन्तेन सप्तम्यन्तस्य परामर्शाभावादित्यर्थः। सर्वत्रेति। सर्वतः पृष्ठेष्वित्यादिना सर्वत्र विद्यमानत्वमुच्यते।

—८ अतःशब्देनेति। अत इति ल्यब्लोपे पञ्चमी स्वीकर्तव्या। तेनात आरभ्येत्यर्थः।

—९ न विरुद्ध इति। एवंच वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येन इति विभक्तिभेदेपि यथा प्रत्यभिज्ञा तद्वदत्रापि ब्रह्मभानमविरुद्धमिति भावः। अत्र ब्राह्मणे।

—१० उपदेशभेदादिति। मन्त्रे लोकात्मकः पादः। ब्राह्मणे तु हृदयमुपक्रम्य पठितमिति हृदयः पाद इत्युपदेशभेदः। चतुर्थश्चेति। ब्रह्मणीति शेषः। तृतीयं भेदकमाहुः-अतः शब्दादिति। इदंशब्दस्य पूर्वपरामर्शकत्वात्सर्वस्माद्भेद इत्यर्थः।

—११ अत इति। एवं प्रकारत्रयेण मन्त्रब्राह्मणयोर्भिन्नार्थकत्वेन प्रतिपाद्यवस्तुभेदादित्यर्थः। सूत्रस्थहेतुः स्वरूपासिद्धिघटित इत्याहुः-अस्मिंश्चेति।

—१२ समादधते-नैष दोष इति।

—१३ एकार्थत्वात्-ब्रह्मरूपैकार्थत्वात्।

—१४ विपक्षे बाधकमाहुः–अन्यथेति । अन्यथा–गायत्रीपरत्वेन व्याख्याने। वैजात्यमिति । गायत्र्याः शब्दत्वेन पादानामर्थत्वेनांशांशिभावस्वीकारे पादानां विजातीयत्वं संपद्येतेत्यर्थः। परिच्छेदश्चेति । गायत्री परिच्छिन्ना शब्दात्मकत्वात् । विरोधश्चेति । गायत्र्याः परिच्छिन्नत्वं सर्वतः पृष्ठेष्विस्यनेन ब्रह्मणोपरिच्छिन्नत्वमित्युभयोर्विरोध इत्यर्थः ।

—१५ अतः–एकवाक्यस्य सिद्धत्वात् ।

सूत्रार्थः–अर्थद्वयम् । १ अमृतं दिवीति मन्त्रे सप्तमीनिर्देशः । अतः परो दिवो ज्योतिरिति मन्त्रे पञ्चमीनिर्देशः । एवंच सप्तमीपञ्चमीनिर्देशेनोपदेशभेदात्पूर्वपरामर्शाभावाज्ज्योतिषो ब्रह्मत्वं नेति चेन्न । उभयनिर्देशेप्यविरोधादिति । २ मन्त्रेमृतपदमत्र ज्योतिःपदमेवमुपदेशभेदाज्ज्योतिःशब्देन ब्रह्मणो न ग्रहणमिति चेन्न । उपदेशभेदेप्युभयशब्दयोर्ब्रह्मरूपार्थे विरोधाभावादिति ॥ २६ ॥

इति नवमाधिकरणम् ॥

---

## प्राणस्तथानुगमात् १।१।२७

—१९ छान्दोग्यस्थप्रस्तोतया देवतंत्यादिविषयवाक्यस्थप्राणशब्दस्य कौषीतकीब्राह्मणस्थेन्द्रप्रतर्दनसंवादगतप्राणशब्दस्य च भेदं साधयितुमिदमधिकरणमित्यधिकरणसंगतिः । कौषीतकीब्राह्मणपञ्चमाध्यायस्थं विषयवाक्यं प्रदर्शयन्ति– अस्तीत्यादिना । संपूर्णः पञ्चमाध्यायो विषयवाक्यम् । अत्र– अथ खलु प्राण एव इति वाक्येन भासमानः १ प्राणो वा मामेव विजानीहीति वाक्येन भासमानो २ देवतात्मा वा वक्तारं विद्यादिति वाक्येन भासमानो ३ जीवो वा– आनन्दोजरोमृतः– इति वाक्येन भासमानं ४ ब्रह्म वा ग्राह्यमिति चतुष्कोटिकः संशयः सर्वैर्व्याख्याकारैराहृतः ।

४७–१ तन्निराकर्तुमाहुः– तत्र संदेह इति । प्राणो ह्येवामुष्मिँल्लोक इत्यनेनोभयोरेव लिङ्गप्राबल्याद् द्विकोटिक एव संशयो युक्त इत्यर्थः ।

—३ ननु चतुष्कोटिकसंशये गृह्यमाणे पूर्वाधिकरणेनागतार्थताधुना तु गतार्थता स्यात्तेन च वैयर्थ्यमस्याधिकरणस्येत्यत आहुः–अत एवेति । पूर्वाधिकरणे विषयवाक्ये ब्रह्मलिङ्गस्य विद्यमानत्वात्प्राणशब्दः प्रयुक्त इति प्राणशब्दमात्रे संदेह । अत्र तु प्राणे प्रज्ञात्मत्वकथनादायुष्ट्वोपपादनाच्चासन्यो वा जीवो वेति प्राणशब्दार्थे संदेह इत्यर्थः ।

—४ वर्तत इति । जीवमुख्यप्राणलिङ्गादिकं च बाधकं वर्तते । एतदधिकरणगतानां चतुर्णां सूत्राणां विषयविभागमाहुः–तत्रेति

—७ अनुगमादिति । प्राणपदस्य ब्रह्मपरत्वे विषयगतवाक्यानां ब्रह्मणि समन्वयादित्यर्थः ।

—८ तदेवोपपादयन्ति–तथाहीति ।

—१० उपचिक्षेप–दानार्थं प्रतिज्ञातवान् ।

—१४ तस्यैव–न तु प्राणस्येत्येवकारयोत्योर्थः ।

—१५ संभवतीति । ब्रह्मण एव चिद्रूपत्वादिति शेषः । उपसंहारे–उपसंहारवाक्ये । एवंचोपक्रमोपसंहारयोरैक्यात्प्राणो ब्रह्मैवेत्यर्थः ।

—१६ सर्वत्रेति । आदौ मध्ये तथा चान्त इत्यर्थः ।

सूत्रार्थः– कौषीतकीब्राह्मणस्थप्राणशब्देन ब्रह्म ग्राह्यमुपक्रमादिसमन्वयेन तथैवान्वयादिति ॥ २७ ॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसंबन्धभूमा ह्यस्मिन् १।१।२८

—१८ साधकसूत्रं व्याख्याय बाधकनिराकरणसूत्राणि क्रमेणाह–न वक्तुरित्यादि ।

—२० बाधकमाहेति । व्यासः सूत्रांशेनेति शेषः ।

—२१ उपदिशति–इन्द्रो मामित्यहंकारत्वेनोपादिशति ।

—२४ वाचो धेनुत्वोपासनवदिति । वाचं धेनुमुपासीतेत्यत्र यथा लक्षणया वाचि धेनुत्वकथनं तथैव बलवत्त्वगुणसामान्यादिन्द्रे प्राणपदप्रयोगः संभवेदित्यर्थः ।

—२५ ब्रह्मधर्माः–अमृतत्वादयः । अस्य–इन्द्रप्रतर्दनसंवादरूपस्य ।

४८–१ अध्यात्मसंबन्धभूमा–अध्यात्मधर्मबाहुल्यम् ।

—२ नन्वात्मपदं जीववाचकमप्यस्तीत्यत आहुः–ब्रह्मवाचीति । एवं चेत्स्पष्टतया ब्रह्मपदमेव कुतो नोक्तमत आहुः–वस्तुत इति । ऐकात्म्यवादेन जीवस्य ब्रह्मत्वं बोधयितुमात्मपदमित्यर्थः ।

—३ संबन्ध इति । सम्यग् बन्धो यस्यासौ संबन्धः । एवंच जीवात्मनः सकाशात्परमात्मानमधिकं कृत्वा तस्य परमात्मनो धर्माणां बाहुल्यमस्मिन् प्रकरणे प्रतीयते । अतोत्र प्राणः परमात्मा । बहूनामनुग्रहस्य न्याय्यत्वात् ।

—४ ननु किमर्थमेवमाग्रह इत्यत आहुः– यावदित्यादि । एवंच पूर्वसूत्रे साधकहेतुकथनादनन्तरमत्र सूत्रे हिशब्दकथनात्सर्वे वेदा यत्पदमामनन्तीति श्रुत्यनुरोधात्तथा निर्बन्ध इत्यर्थः ।

—८ प्रज्ञामात्राः– ज्ञानेन्द्रियांशाः ।

—९ **कर्मणेत्यादि** । नो साधुना कर्मणा भूयान् । नो एवासाधुना कर्मणा कनीयान् एष ह्येव साधुकर्म कारयतीत्यादि ।

—११ उपसंहरन्ति— **तस्मादिति** ।

**सूत्रार्थः**— प्राणो ब्रह्मेति यदुक्तं तन्न मामेव विजानीहीत्यनेन वक्तुरात्मोपदेशादिति कथमस्य ब्रह्मोपादानत्वमिति चेन्न । अस्मिन्प्रकरणे ब्रह्मधर्माणां बाहुल्येन प्रतीतेरस्य ब्रह्मोपाख्यानत्वादिति ॥ २८ ॥

## शास्त्रदृष्ट्या तूपदेशो वामदेववत् १।१।२९

—१३ अग्रिमं सूत्रमवतारयन्ति— **तर्हीति** । **तर्हि**— प्रकरणस्य ब्रह्मपरत्वाङ्गीकारे । **बाधकस्य**— आत्मोपदेशरूपबाधकस्य । **का गतिरिति** । कथमुद्धरणमित्यर्थः ।

—१५ तुशब्दप्रयोजनमाहुः— **पूर्वसूत्रेणेति** । **अयं दोषः**— स्वात्मोपदेशरूपो दोषः ।

—१६ **आर्षेण दर्शनेनेति** । ऋषिर्वेदस्तद्गततत्त्वमस्यादिवाक्यश्रवणमननादिना जायमानं दर्शनम् । एवंच स्वात्मानं सर्वव्यापिब्रह्मात्मकं ज्ञात्वेन्द्रेणैवमुपदेशः कृत एवंच ब्रह्मण एवोपदेशोयं तेनान्यथा संभावना नेत्यर्थः । सूत्रगतं दृष्टान्तमवतारयन्ति— **नन्विति** ।

—१८ **प्रत्यधिकारं**— अधिकारं लक्ष्यीकृत्य । एवंच शुद्धान्तःकरणवान् जीवोधिकारी स ब्रह्मत्वेन वाच्यः । त्वं ब्रह्मासीति । ततश्च प्रतर्दनो यदि शुद्धान्तःकरणवत्त्वेनेन्द्रस्याभिमतः स्यात्तर्हि तेनेन्द्रेण हे प्रतर्दन त्वं ब्रह्मरूपोसीत्येवं ग्राहयितव्यः । न तु मामात्मानं विजानीहीति ।

—२० एवंच शास्त्रदृष्टिरपि नैवंविधेन्द्रजीवस्य ब्रह्मबोधनपरेत्यर्थः । ननु जीवमात्रस्य ब्रह्मत्वावगतिस्तत्त्वमस्यादिवाक्येषु दृश्यत इत्याहुः—**केवलस्येति** । सर्वज्ञत्वाकिंचिज्ज्ञत्वादिधर्माणां परस्परविरोधाज्जहदजहल्लक्षणया निर्विशेषचैतन्यमात्रजीवस्य निर्विशेषचैतन्यमात्रब्रह्मण्यैक्यावगतिस्तत्त्वमस्यादिवाक्यार्थ इति निश्चीयते ।

—२१ आनन्दाजरामरत्वादयस्तु धर्मा नैक्यज्ञानविरोधिनस्तेन जीवे वक्तुं न शक्यन्त इत्याहुः— **न तु ब्रह्मधर्मा इति** ।

—२२ इमामाशङ्कां परिहरन्ति— **वामदेववदिति** । **तद्धैतदिति** । बृहदारण्यके पुरुषविधब्राह्मणस्थं वाक्यमेतत् ।

**४९–१ एकमेव**— ब्रह्मैव । **कारणलय इति** । कारणे ब्रह्मणि लये जाते सत्येवेत्यर्थः ।

—२ अवयुत्य– पृथक्कृत्य । अनुपपन्न इति । ब्रह्मभावानन्तरं पृथक्स्थितत्वभावान्मन्वादिभवनमनुपपन्नमित्यर्थः । तर्हि मन्वादिभावेनानुवादः कथमित्यत आहुः– तत्रेति । ब्रह्मावेशादिति । सर्वधर्मेत्यादि । सर्वेषां मनुत्वसूर्यत्वादिधर्माणां स्फूर्तिः ।

—३ एवाहमिति । अत्रापि स्वस्य पृथक्त्वेन ज्ञानमिति भावः । ब्रह्मावेशादिति । जीवस्य ब्रह्माभिन्नत्वं सदा वर्तत एव तथापि तदावेशो भगवदनुग्रहाधीन इति भावः । उपदेश इति । एवंच शिष्यं प्रति शास्त्रदृष्ट्योपदेशो द्विधा । मां ब्रह्म जानीहीत्याकारक एकः । त्वं ब्रह्मासीत्याकारको द्वितीयः । ननु त्वाष्ट्रवधादय इन्द्रजीवधर्मा न तु ब्रह्मधर्मा इत्यत आहुः– दवाष्ट्रवधादय इति ।

—४ तदावेशेन–ब्रह्मावेशेन । आगामिसूत्रविरोधमाशङ्कते–नन्विति । एवमिति । सुषुप्तिसमाध्यतिरिक्त इन्द्रप्रतर्दनसंवादकाले कथमित्यर्थः ।

—९ समादधते–मैवमिति । उक्तसूत्रयोः सुषुप्तिसमाध्योरेव ब्रह्मात्मभावो नियत इत्यर्थो नाङ्गीकार्य इत्यर्थः ।

—१० अङ्गीकर्तव्यमिति । तथा च संपत्पदमुत्तमाधिकारिविषयस्याप्युपलक्षणम् । तेन सूत्रे न न्यूनतेति भावः । उपदेशभावनादिष्वित्यत्रादिपदेन एतत्साम गायन्नास्त इत्यादिश्रुतीनां कस्याश्चित्पूतनायन्त्या इत्यादिवाक्यानां च संग्रहः ।

—११ ननु पूर्णज्ञाने सति–अहं मनुरभवमित्यादिकं ज्ञानं जायते । इन्द्रस्य तूपदेशकालिकः कादाचित्कः सर्वात्मभावस्तेन पूर्णज्ञानित्वरूपसामान्यधर्माभावात्कथं वामदेवदृष्टान्तः सूत्रे प्रादायीत्यत आहुः–इहैवेति ।

—१२ आविर्भावापेक्षमिति । तथा च ब्रह्मैव सन्नित्यनेनाविर्भावः कथ्यते । एवंच सद्योमुक्तावप्याविर्भावापेक्षेत्यर्थः । ब्रह्मधर्माविर्भावपूर्वकब्रह्मस्फूर्तिरूपो ब्रह्माविर्भाव एवाविर्भावपदेन गृह्यते । स चाविर्भावो ज्ञानकाले मोक्षदशायां चास्ति । ततश्च वामदेव इन्द्रे च ब्रह्मधर्माविर्भावात्स्वरूपधर्मसाम्याद् दृष्टान्तः सुसंगत इति भावः । ननु प्रतर्दनोपदेशकालेहं प्राण इत्याविर्भावस्य साधनत्वमुक्तं न फलत्वं तत्कुत इत्याहुः– तस्येति । प्राप्तत्वात् । उपदेशकाल एव सत्त्वात् । आह–सूत्रकार इति शेषः । सार्वदिकब्रह्माविर्भावोपि साधनमेवेत्यङ्गीकृत्याहुः–जीवन्मुक्तानामपीति । एवंच प्रायिकाविर्भावस्य साधनत्वमस्ति फलत्वं न । सार्वकालिकाविर्भावस्य यद्यपि फलत्वं तथापि परमफलत्वं नेत्युभयोर्विशेष इति भावः ।

—१३ ननु ब्रह्माविर्भावकाले वागादीन्द्रियाणां लयादिन्द्र उपदेशकर्तृत्वमनुपपन्नमत आहुः- असंप्रज्ञातेति। सत्यं, आविर्भावदशायां वागादीन्द्रियाभावः। दधीच्यादिविषये पुराणे तथा वर्णितः। तथापि प्रकृते दधीचिवदसंप्रज्ञातसमाध्यभावाद्वागादीनां लयो न। सच वागादिलयः ब्रह्माविर्भावदशायां शरीरवियोगे च भवति परं तत्र विनियोजकः कामाभावः। अत्र प्रमाणं-अथाकामयमानः- इति पदमेतद्विषयवाक्यगतमेव। अत्र तु कामाभावाभावादर्थादुपदेशरूपकामनासत्त्वाद्वागादीनां लयो न तेनोपदेशकर्तृत्वमुपपन्नमिति भावः। अत्र पुरुषोत्तमाचार्यैर्द्वितीयोप्यर्थोऽङ्गीकृतः स तत एव ज्ञेयः।

—१४ ननु सर्वत्रोच्यमानाविर्भावपूर्वकालीनार्चिरादिगतिरिन्द्रे कुतो नोच्यते तदाहुः-तस्य चेति। तस्य-ब्रह्मभावस्य।

—१५ ननु सूत्रगीतादिषु तथा कुतो नोच्यत इत्याहुः-तथापीति। प्रायिकत्वात्-अनियतत्वात्। ननु सगुणोपासकस्यार्चिरादिगतिर्निर्गुणपरस्य सा नेति व्यवस्था कैश्चिदाद्रियमाणा कुतो नाङ्गीक्रियते तदाहुः-सगुणेत्यादि।

—१६ अप्रामाणिकमेवेति। सगुणत्वेन निर्गुणत्वेन ब्रह्मणो भेदाभावात्तदुपासकानां भेदोऽप्रामाणिक एवेत्यर्थः। ननु सांख्यैर्गुणानामङ्गीकारादत्र सगुणनिर्गुणत्वे स्यातामत आहुः-ब्रह्मवाद इति। व्यासेनात्र सांख्यवद्गुणा नाङ्गीक्रियन्ते।

—१७ तस्मात्- आर्षज्ञानेन ब्रह्मावेशात्।

सूत्रार्थः-अहं ब्रह्मेत्यार्षेण दर्शनेनोपदेशः। यथा वामदेवः-अहं मनुरभवमित्यादिरीत्या ब्रह्मात्मतयावोचत्तद्वदयमुपदेश इति॥ २९॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्॥ १।१।३०॥

—२० बाधकद्वयमिति। जीवलिङ्गं मुख्यप्राणलिङ्गं चेति बाधकद्वयम्।

—२१ सन्तीति। एवंच जीवलिङ्गं ब्रह्मप्रकरणस्य बाधकं ब्रह्मलिङ्गं च जीवप्रकरणस्य बाधकमेवं सुन्दोपसुन्दन्यायेनोभयोरप्यसिद्धिरिति भावः। जीवलिङ्गबोधकमाहुः-न वाचमिति।

—२३ प्राणलिङ्गबोधकमाहुः-अथेति।

५०-१ मुख्यप्राणधर्म इति।

—२ तत्र प्रमाणमाहुः-मा मोहमिति। एतद्वाणमिति। एतच्छरीरं वाति गच्छतीति वानं बवयोरभेदाद्बाणमास्थिरमित्यर्थः। अवष्टभ्य-आश्रित्य।

—३ **सा प्रज्ञेति** । प्रज्ञा-जीवः ।

—४ ननु श्रुतावमृतत्वादीनि ब्रह्मलिङ्गान्यपि वर्तन्ते तेषां का गतिरित्यत आहुः-**प्रज्ञाप्राणयोरि**ति ।

—५ **सहवृत्तित्वादिति** । शरीरावच्छेदेन सामानाधिकरण्यादित्यर्थः । एवंच प्राणो जीव एव भवितुमर्हति न ब्रह्मातः श्रुतौ विद्यमानानाममृतत्वादिब्रह्मलिङ्गानां जीव उपासनार्थं लक्षणया कल्पनमुचितमिति जीवप्रकरणमेवेदमिति भावः । हेत्वन्तरमाहुः-**उत्क्रान्तिश्चेति** । उत्क्रान्तिरपीत्यर्थः । स यदास्माच्छरीरादुत्क्रामतीति श्रुतावुत्क्रान्तिरुक्ता । तेनापि जीवप्रकरणमिदमिति भावः । **सर्वथा विलक्षणस्येति** । सर्वव्यापित्वादुत्क्रान्तिमतो जीवाद्वैलक्षण्यं ब्रह्मणस्तथा चेतनत्वान्मुख्यप्राणाद्वैलक्षण्यं तस्य ।

—६ **तस्मादिति** । बाधकद्वयसत्त्वादित्यर्थः ।

—७ समादधते-**उपासात्रैविध्यादिति** । उपासाया उपासनस्य त्रैविध्यात् त्रिप्रकारकत्वात् यथाश्रुतरीत्येदं समाधानं न घटतेतः पूर्वपक्षस्य विकल्पत्रयं कृत्वा द्वितीयपक्ष इदं दूषणं संभवतीति बोधयितुमाहुः-**अयमर्थ इति** । **अत्र**-विषयवाक्ये । पक्षत्रयमाहुः-**जीवमुख्येत्यादि** । जीवमुख्यप्राणलिङ्गादिति हेतुः पक्षत्रयेप्यनुवर्तनीयः ।

—९ **परिहृत इति** । न वक्तुरात्मोपदेशादिति सूत्रे ब्रह्मधर्मबाहुल्यहेतुना बहूनामनुग्रहो न्याय्य इत्युक्त्वा च परिहृतः ।

—१० **शक्या इति** । लक्षणां विनेति शेषः । बहुषु लक्षणाङ्गीकर्तव्या तदपेक्षयाल्पस्य ब्रह्मपरत्वं योग्यमिति भावः । **द्वितीय इति** । लक्षणादोषवैधुर्यात् त्रयाणां स्वतन्त्रतयानेन विषयवाक्येन प्रतिपाद्यत्वाङ्गीकार इत्यर्थः ।

—११ **वाक्यभेदप्रसंगादिति** । मामेव विजानीहीत्यत्र विजानीहीत्यस्यावृत्तिः कर्तव्या । विधेयभेदे विधेरावृत्तेर्गले पतितत्वात्तथाच मामित्यस्यार्थत्रयं कल्पनीयं ततश्चान्ययोगव्यवच्छेदरूपैवकारार्थविरोधश्चेत्यर्थः ।

—१२ तृतीये-ब्रह्मधर्मत्वोपपादनपक्षे । **उच्यत इति** । अस्य पक्षस्य स्वीकृतत्वादिति शेषः ।

—१३ **तद्धर्माः**- जीवधर्माः ।

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।

इति गीतावाक्यात् ब्रह्म जीवाधारभूतं ततश्च परंपरया जीवधर्माधारभूतमपीति भावः ।

—१४ उभयत्र संबन्ध इति। देहलीदीपन्यायेन। देहल्यां स्थितो दीपो गृहान्तर्भागं गृहबहिर्भागं च प्रकाशयति। इति न्यायस्वरूपम्। एवंचेह जीव आश्रितत्वादिह प्राणे तद्योगादित्युभयत्र संबन्धः। मायावादिमते जीवब्रह्मणोरभेदोस्ति। आश्रयाश्रयिभावोवयवावयविभावश्च नास्तीत्यत उक्तं- ब्रह्मवाद इति।

—१५ एवं जीव उपपत्तिमुक्त्वा मुख्यप्राणे तमाहुः-मुख्यप्राणे त्विति।

—१६ भगवत्संबन्धादिति। भगवतः प्राणानां च नियन्तृनियम्यत्वसंबन्धोस्ति तस्मादित्यर्थः। एवंच

न प्राणेन नापानेन मर्त्यो जीवति कश्चन।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ।

इति तत्सामर्थ्यस्य भगवदधीनत्वात्तद्धर्माणामपि परम्परया भगवद्धर्मत्वमेवेति भावः।

—१७ नन्वस्मिन्पक्षे परम्परया भगवद्धर्मत्वम्। एवंच लक्षणा स्वीकर्तव्या भवतीत्यतः पक्षान्तरमाहुः- अथवेति। ब्रह्मधर्माः- साक्षाद् ब्रह्मधर्माः।

—१८ परात्त्विति। व्याससूत्रमेतत् कर्तृत्वं ब्रह्मधर्म एव। ततः सकाशात्तज्जीवे समायाति। यमधो निनीषति। सर्वकर्ता सर्वभोक्तेति श्रुतिभ्य इत्यस्य सूत्रस्यार्थः।

—१९ तथेति। जीववत्प्राणधर्मा एवेत्यर्थः। नन्वेवं प्राणस्य जीवसाम्य आश्रितत्वहेतुनैव गतार्थत्वे तद्योगादिति हेत्वन्तरं व्यर्थमत आहुः- स्वाप्ययसंपत्त्योरिति। तादात्म्यात्संयोगाभाव इत्यर्थः। एवंच संयोगासंयोगरूपभेदाद्धेतुद्वयं सार्थकमिति भावः।

—२० सिद्धमाहुः- तस्मादिति।

—२१ सर्वे धर्माः-कौषीतकीब्राह्मणोक्ताः। ननु यद्यपि सर्वे धर्मा युज्यन्ते तथापि-सहैवास्मिन् शरीरे वसतः सहैवोत्क्रामतः-इत्येकत्वव्यापकत्वविरुद्धं सहोत्क्रमणं न घटत इत्यत आहुः- सहोत्क्रम इति। एवंच हस्तोत्क्षेपणस्य धर्मशरीरत्वेपि यथा शरीराभिन्नत्वं न तथा सहोत्क्रमस्यापि भगवद्भिन्नत्वं शक्तिशक्तिमतोरभेदाद्। एवंच सोपि भगवद्धर्मस्तेन नैकत्वव्यापकत्वहानिरिति भावः। क्रियाज्ञानशक्त्योरिति। प्राणजीवयोरित्यर्थः।

—२२ सहोत्क्रमणमितीति। एतेन सर्वस्यापि व्यवहारस्य जीवप्राणाधीनत्वेन भगवदधीनत्वं सूचितमित्यर्थः।

—२३ प्राणस्तथानुगमादिति सूत्रविरोधं शङ्कते- नन्विति। एवंच धर्मधर्मिभावो न वक्तव्य इति शङ्काकृदाशयः।

—२४ समादधते-अत्र धर्मेति। अत्र-श्रुतिवाक्ये। एवंच धर्मधर्मिणोः पृथक्त्वापृथक्त्वयोर्निर्देशान्न पूर्वापरविरोधः।

५१-८ धर्ममात्रत्वनिराकरणायेति। वैशेषिका ज्ञानमात्मगुण इति वदन्ति तथा तत्केवलं भगवद्धर्मो न। अपि तु भगवानेवेत्यर्थः।

—१० एवं भगवतो जगत्स्वरूपं प्रतिपाद्याधुना ततोप्याधिक्यं प्रतिपाद्यते-तदग्रिमेति। विषयभूतभूतेति। विषयस्वरूपभूतमात्रारूपजगत इत्यर्थः।

महावाक्यार्थः सिद्ध इति। अयं भावः। यद्यज्जनकं तत्तद्धर्मकं यद्यद्धर्मकं तत्तदविनाभूतमिति व्याप्त्या भूतमात्राप्रज्ञामात्रात्मकस्य सर्वस्य जगतः प्रज्ञाविनाभावेन तदात्मकत्वे सिद्धे तस्या अपि स्वरूपं निर्णेतुमानन्दोजरोमर इत्यादिब्रह्मधर्मैरुपसंहरन्ति-अतश्चात्र प्रज्ञात्मकजीवस्वरूपादधिकस्य ब्रह्मणः सर्वात्मकत्वसर्वाधिकत्वज्ञानार्थमैक्येनोपासना विहिता। तस्मात्साध्वसाधुकारित्वेन प्राप्तस्य वैषम्यादिदोषस्य परिहाराद् ब्रह्मजडजीवात्मकतया सर्वोपादानत्वेन सर्वात्मकमित्येष महावाक्यार्थः सिद्धः। एवंचास्मिन्नधिकरणे पूर्वोक्तस्य सर्वार्थस्य विनिगमनं बोध्यम्। तथाहि प्रथममथातो ब्रह्मजिज्ञासेति सूत्रेण शास्त्रारम्भे जिज्ञासोक्ता। तस्याश्च सर्वदा कर्तव्यत्वं ततो जन्माद्यस्येति द्वितीयसूत्रेण ब्रह्मणः सर्वकर्तृत्वम्। तत्तु समन्वयादिति तृतीयसूत्रेण ब्रह्मणः सर्वोपादानत्वम्। ईक्षत्यधिकरणे प्रज्ञात्मत्वमानन्दमयाधिकरणआनन्दमयत्वं ततः परमन्तराद्यधिकरणैस्तद्धर्मोपदेशादित्यादिहेतुभिस्तत्तच्छब्दवाच्यत्वं ब्रह्मणः प्रतिपादितमिति।

सूत्रार्थः—जीवमुख्यप्राणालिङ्गान्नेदं ब्रह्मप्रकरणमिति चेन्न। तथा सत्युपासनात्रैविध्यं स्यात्ततश्च वाक्यभेददोषस्य संभवः। जीवलिङ्गं तु तस्य ब्रह्माधारत्वाद्ब्रह्माश्रितत्वादेव। तथा मुख्यप्राणालिङ्गं भगवता सह योगात्। एवं च प्राणस्य भगवत्संबन्धात्तद्धर्माणामपि भगवत्संबन्ध इति ॥ ३० ॥

इति दशमाधिकरणम्।

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालबोधिन्यां प्रथमाध्यायस्य प्रथमः पादः ॥१।१

---

# प्रथमाध्याये द्वितीयः पादः ॥ १।२ ॥

## सर्वत्र प्रसिद्धोपदेशात् १।२।१

—२० प्रथमाद्वितीयपादयोः संगतिं द्योतयितुं प्रथमपादगतमेवार्थं मन्दबुद्धीनामनुग्रहार्थं संक्षेपेण कथयन्ति-समन्वय इत्यादिना संदेहो निवा-

रित इत्यन्तेन। समन्वय इति । सर्ववेदान्तसमन्वयप्रतिपादकत्वात्समन्वयाभिख्यया प्रसिद्धे। समन्वयः-एकार्थप्रतिपादकत्वरूपः। वक्तव्य इति। परप्राप्तिरूपफलसाधनार्थं तत्साधनीभूतब्रह्मज्ञानार्थं चेति शेषः।

—२१ नन्वनन्तशाखागतानन्तोपनिषदामेकवाक्यत्वरूपः समन्वयोऽशक्य इति चेन्न। प्रकारविशेषण सर्वोपनिषदामेकवाक्यनोपपत्तेरित्याशयेनाहुः-तत्रेति। तत्र-उपनिषत्सु । उद्गीथादीति। उद्गीथमुपासीतेत्यादीनां प्रणवाद्युपासनावाक्यानाम्। मुख्यवाक्येषु-फलसंबन्धबोधकेषु कारणप्रतितिपादकवाक्येषु । फलोपकार्यङ्गत्वमिति । एवंचादित्यादिषु प्रणवेन ब्रह्मोपासनोद्गीथोपासना। तद्धर्मोपदेशाधिकरणे विषयवाक्योक्ता। तत्तदुपासनानां फलबोधकवाक्यैर्भगवान् लोकोत्तरफलदातेति ज्ञायते ततश्च माहात्म्यज्ञानं जायते । आत्मेत्येवोपासीतेति वाक्योक्तब्रह्माभेदोपासनया यथात्मनि प्रीतिस्तथा भगवति स्वाभाविकी प्रीतिरुत्पद्यते। इयमेव माहात्म्यज्ञानपूर्वकं जायमाना स्वाभाविकी प्रीतिर्भक्तिरित्यभिधीयते। एवं चेदृशभक्तिरेव परब्रह्मप्राप्तिरूपफलोपकारिणीत्युच्यते । एवंरीत्योपासनावाक्यानां फलोपकार्यङ्गत्वमिति भावः । एवमुपासनावाक्यानां ब्रह्मणि समन्वयं परम्परया साधयित्वा केषांचिद्वाक्यानां साक्षात्समन्वयं साधयन्ति-ब्रह्मवाक्यानामिति।

—२२ संदिग्धानीति। ईक्षत्यधिकरणारम्भे यानि चतुर्विधानि संदिग्धानि वाक्यान्युक्तानि तान्येव प्राणाकाशादिशब्दतो गायत्र्यादीनामर्थतो द्विविधानीत्यर्थः। एवंच सिद्धसाधनदोषो न । निःसंदिग्धब्रह्मवाक्यभिन्नानां सर्वेषां वेदान्तवाक्यानां ब्रह्मणि समन्वयः प्रथमाध्याये साधित इति भावः।

५२-१ एवं प्रथमाध्यायार्थमुक्त्वा प्रथमपादार्थं वक्तुं तत्रस्थाधिकरणानां प्रयोजनं निरूपयन्तः प्रथमं प्रथमाधिकरणस्य प्रयोजनमाहुः- तदर्थमित्यादि। तृप्तिवदित्यन्तेन। तदर्थं- समन्वयार्थम्। विचारितमिति। ईक्षत्यधिकरण इति शेषः।

—२ नन्वीक्षत्यधिकरणस्य चतुर्थत्वात्प्रथमसूत्रस्थापित इति कथमिति चेत् स्थापनस्य प्रतिज्ञारूपत्वादिति गृहाण। यद्यपि विचारश्चतुर्थे तथापि प्रतिज्ञारूपिणी स्थापना प्रथमसूत्र इत्यर्थः। तदेवोक्तं-प्रथमसूत्र एवेत्यादिना। ननु मनोवागव्यवहार्यस्य व्यवहार्यत्वं कथमत आहुः- यत इत्यादि। यथा घटादय इदमित्थंतयेयत्तया वा निरूपितुं शक्यन्ते तथा ब्रह्म निरूपयितुं न शक्यत इत्येवं निरूपणानिषेध एव यतो वाच इत्यादिश्रुतिभिः प्रतिपाद्यते। अनुभवैकवेद्यवस्तुनो वाचा वक्तुमशक्यत्वादिति भावः।

—४ एतच्छ्रुतेरेवंतात्पर्यकत्वे गमकमाहुः– **एवमेवेति** । एवमेव-श्रुतिरूपवाग्विषयत्वाङ्गीकार एव । **कार्यसिद्धेः**– कार्यस्य श्रवणादिकस्य सिद्धेः । ततश्च श्रवणादिद्वारा ब्रह्मविदाप्नोति परमिति श्रुत्युक्तरीत्या पर-प्राप्तिरूपकार्यसिद्धिरिति भावः । **चतुर्लक्षण्येति** । चतुरध्याय्येत्यर्थः ।

—५ समन्वयाविरोधसाधनफलानि क्रमेण चतुर्णामध्यायानां विषयाः । तेषां मीमांसया मननस्योपपत्तिमाहुः– **श्रुतस्येति** ।

—६ **पूर्वस्थितानामिति** । ब्रह्मवाक्यस्थानामित्यर्थः । **उद्वापः**– प्रकृत-परत्वेन प्रतीयमानस्यान्यपरत्वापादनरूपस्त्यागः ।

—७ **आवापः**– अन्यपरत्वेन प्रतीयमानस्य प्रकृतपरत्वापादनरूपं ग्रह-णम् । **निर्धारणे**– उपनिषत्तात्पर्यभूतो ब्रह्मातिरिक्तोन्योर्थो नास्तीति निश्चिते सति मननयुक्तिभिर्ब्रह्मण एवानुचिन्तनं भवतीत्यर्थः । **ततोप्येवमिति** । मननानन्तरमभ्यासेन मननस्य दार्ढ्ये प्रारब्धवशाज्जायमानस्य विक्षेपस्य विनाशनार्थं मननदार्ढ्यमपेक्ष्यत इति भावः । **ध्यानादीति** । निदिध्यासन-रूपमित्यस्याग्रे ज्ञानमिति शेषः । अथवा रूपपदरहितः पाठो ज्ञेयः । अत्र पक्षेयमर्थः । ध्यानादिसमाध्यन्तानिदिध्यासनात्मकं यन्मनस्तस्मिन्सर्वतो बाह्यविषयेभ्यो निवृत्तव्यापारे सतीत्यर्थः । आदौ मननदार्ढ्यं ततो ध्यान-दार्ढ्यं ततः समाधिः । अस्यैवैकतानतेति व्यवहारः । एतस्यामेकतानताव-स्थायां मनसः संकल्पविकल्पव्यवहारा बाह्यविषयव्यापाराश्च निवर्तन्ते ततः शुद्धिः संपद्यते । एवं निदिध्यासनदार्ढ्यं भवतीति भावः ।

—८ अधुना– आत्मा वारे द्रष्टव्यः–इत्यादिश्रुत्या श्रवणादिजन्यं यादृशं दर्शनं प्रतिपादितं तादृशमाहुः– **स्वयमिति** । स्वयमितिपदेन तिरोधाननि-वृत्तिर्ध्वन्यते । निजेति पदेनातिसामीप्यम् ।

—९ **अनुभवरूपमिति** । साक्षात्काररूपमित्यर्थः । तथैव स्वयमिति पदेन सत्त्वं सुखमिति पदेनानन्दत्वं अनुभवेति पदेन चित्त्वमेवं सच्चिदानन्द-रूपं ब्रह्मेत्यर्थः । **इदं**– ब्रह्मस्वभावजन्यम् । **अविषयत्वं**– वक्तुमशक्यत्वम् ।

—१० अत्रार्थे दृष्टान्तमाहुः–**पाकभोजनेति** । एवंचैतत्सर्वमनुसंधाय जिज्ञासासूत्रप्रणयनाद्व्यवहारस्थापनं प्रथमाधिकरणार्थ इत्यर्थः । एवं प्रथ-माधिकरणार्थमुक्त्वा द्वितीयाधिकरणार्थमाहुः–**अत इत्यादि कर्मेत्यन्तम्** । **अतः**–ब्रह्मणि व्यवहारस्थापनेन श्रवणविषयत्वे सिद्धे तत्स्वरूपादिविचारस्या-वश्यकत्वात् ।

—१२ **वैपरीत्यमिति** । अपरं संसाररूपं फलमित्यर्थः । **दिव्यधर्मेति** । जगत्कारणत्वरूपो दिव्यधर्मः ।

—१३ **विचारित इति**। विचारस्वरूपमाहुः—**वेदा एवेति**।

—१४ अग्रिमाधिकरणार्थमाहुः—**तत इति**। **पूर्णालौकिकत्वायेति**। अयं भावः। यथासंख्यं समन्वयाधिकरणे ब्रह्मणः सर्वत्र समन्वयेन पूर्णत्वमीक्षत्यधिकरण ईक्षत्या जगन्निर्माणकर्तृत्वेनालौकिकत्वं प्रतिपाद्यते।

—१५ ततोवशिष्टप्रथमपादार्थमाहुः—**तदन्विति**। **निश्चितार्थे इति**। पूर्वाधिकरणैः प्रतिपादिते निश्चयविषयीभूते ब्रह्मरूपार्थ इत्यर्थः।

—१६ **प्रत्ययसंदेह इति**। मयट्प्रत्ययसंदेह इत्यर्थः। **द्वयेन**—आनन्दमयाधिकरणद्वयेन। **प्रकृतिसंबन्ध इति**। प्रकृतौ संबन्धो यस्येति व्यधिकरणपदो बहुव्रीहिः। प्रकृतिसंबन्धी संशय इत्यर्थः।

—१७ दशमाधिकरणप्रयोजनमाहुः—**पुनरिति**। **संश्लेषनिराकरणायेति**। संश्लेषः प्राणजीवब्रह्मधर्माणामेकत्र कथनं तन्निराकरणं ब्रह्मधर्मत्वेनोपपादनं तदर्थमित्यर्थः।

—१८ **निवारित इति**। षडधिकरण्येति शेषः। एवंचेयतैव ग्रन्थेन शाब्दसंदेहनिवृत्त्या कार्यसिद्धेश्च संभवान्न्यूनाधिकरणाङ्गीकारो न युक्त इत्यर्थः।

—१९ इदानीं केचित्पूर्वोक्तरीत्या यतो वाच इत्यादिश्रुतेः संकोचं नाङ्गीकुर्वन्ति सर्वथा ब्रह्म वागगोचरमिति स्वीकुर्वन्ति। श्रोतव्यो मन्तव्य इत्यादिश्रुत्यन्यथानुपपत्त्या ब्रह्मणः सगुणत्वमपि स्वीकुर्वन्ति तन्मतं दूषयितुमनूद्याहुः—**ये पुनरिति**।

—२० कथमनधिकारबोधनमित्याहुः—ब्रह्मवाद इति। सांख्यमते यथा सत्त्वादिगुणानामङ्गीकारस्तथा ब्रह्मवादे नेत्यर्थः। एतत्सांख्यमतमग्रे दूषयिष्यत एव।

—२१ नन्वेवं गुणानङ्गीकारे—प्रधानक्षेत्रज्ञपतिर्गुणेशः—इति श्वेताश्वतरोपनिषद्विरोध इत्यत आहुः—**भौतिकगुणानामिति**। नतु नित्याधिदैविकगुणानामित्यर्थः। श्वेताश्वतरोक्तास्तु नित्याधिदैविकगुणास्तेन न विरोधः। **अध्यायारम्भ इति**। मायावादसिद्धान्तां गुणानामसंबन्धार्थमेवाध्यायारम्भ इत्यर्थः। तेन मायावादिकृता यतो वाच इत्यादिश्रुतिव्यवस्था न संगच्छते। वैपरीत्ये बाधकमाहुः—**अन्यथेति**। **अन्यथा**—ब्रह्मणि जगज्जनकत्वाद्याधिदैविकगुणानामनङ्गीकारे। **सर्वस्यापि**—कार्यमात्रस्यापि।

—२२ **तत्कारणत्वेन**—ब्रह्मकारणकत्वेन। **तत्संबन्धस्य**—जनकत्वसंबन्धस्य। **अन्यनिराकरणेनेति**। प्रजापतिजगत रणतानिराकरणेनेत्यर्थः।

—२३ **तत्प्रतिपादकत्वेति**। ब्रह्म सर्वकार्याणि प्रति कारणामिति प्रतिपादकानामधिकरणानाम्। **वैयर्थ्यमिति**। सगुणकारणत्वनिराकरणपूर्वकनिर्गुणकारणत्वस्थापनवैयर्थ्यम्। जनकतासंबन्धेन परब्रह्मणोपि गुणसंबन्धादिति भावः।

—२४ एवं प्रासङ्गिकं खण्डयित्वा प्रकृतमाहुः-**अर्थसंदेहेति**।

—२५ **त्रिविध इति**। जीवात्मको जडात्मको जीवजडात्मकश्चेति त्रैविध्यम्। एवं त्रिधार्थानां यथासंख्यमस्याध्यायस्यावशिष्टे पादत्रये संदेहनिराकरणम्। प्रकृतपदार्थमाहुः- **तत्रेति**।

**५३-१** प्रथमाधिकरणं प्रतिपादयितुं विषयवाक्यमाहुः-**इदमाम्नायत इति**। छान्दोग्यपञ्चमप्रपाठकस्थमेतद्वाक्यम्।

—४ **वाक्योपक्रमे**-वाक्यारम्भे।

—५ **तज्जलानिति**। तस्माद्ब्रह्मणो जायत इति तज्जं तस्मिंल्लीयत इति तल्लं तेनानितीति तदन्। जगदुत्पत्तिस्थितिलयकर्तृगुणविशिष्टमित्यर्थः। **तत्त्वेन**-ब्रह्मत्वेन।

—६ ननूपासनार्थमत्र शमं कुर्वीतेति शमविधिः कुतो नाङ्गीक्रियत इत्यत आहुः-**न चेति**। पूर्वोक्तशमविधेः सर्वं खल्विदं ब्रह्मेति वाक्यार्थज्ञानानन्तरं संभवः। एवं वाक्यार्थे लक्षणाप्रसंग इत्यर्थः।

—७ ननु वाक्यलक्षणावादिनां मीमांसकानां मते सेष्टैवेत्यत आहुः-**कारणत्वेनेति**। **सामान्यत इति**। शान्तो दान्तः। आत्मन्येवात्मानं पश्येदिति वाक्यात्सामान्यतः शमब्रह्मज्ञानयोः कार्यकारणभावे ज्ञाते ब्रह्मज्ञानार्थं शमस्य सिद्धत्वात्पुनर्ब्रह्मज्ञानसाधनीभूतोपासनार्थं शमसाधनापेक्षा नेति भावः। सिद्धत्वाच्चेति चकारेण क्रतुकरणानुवादोप्यसंगत इति द्योत्यते तस्याग्रे वक्ष्यमाणत्वात्। एवंच शमाविधिरूपः पूर्वपक्षोनुचित इत्यर्थः।

—८ अन्यनिराकरणसिद्धमाहुः- **अत इति**। उपबृंहणमाहुः-**इदमिति**। **उपासनमिति**। एतदेवोपासनं प्रकारभेदेन-पातालमेतस्य हि पादमूलमित्यादिना पुराणेनोक्तम्। प्रस्तुतमाहुः- **अतः परमिति**।

—९ संदेहं प्रकटयन्ति-**क्रतुर्धर्म इति**। धर्मः- यज्ञत्वम्। ननु यज्ञस्य स्वरूपं द्रव्यदेवते ते चात्रानुक्ते। एवंच यज्ञत्वं कथमत आहुः- **तस्येति**। एवंच द्रव्यादिरहितोयं ज्ञानयज्ञ इत्यर्थः।

—१० ननु-प्रस्य भूयांसो यज्ञक्रतवः-इति तैत्तिरीये तृतीयाष्टकप्रथमप्रपाठकोक्तत्व।यत्राङ्गोपाङ्गसहितहविस्त्यागरूपा क्रिया स एव क्रतुरिति

प्रसिद्धत्वेनात्र मानसस्यास्य क्रतुत्वं कथमत आहुः- **उपासनेति**। उपासनायाः क्रतुत्वं क्रियत इति क्रतुरिति व्युत्पत्त्या ज्ञेयम्। प्रकरणबलादत्र योगाद्रूढिर्बलीयसीति वचनस्यानादरः।

—११ **वेद इति**। तस्य यजुरेव शिरः-इति श्रुत्या-स एष जीवो विवरप्रसूतिः-इति श्रीमद्भागवतैकादशस्कन्धस्थभगवद्वचनसंदर्भेण वेदस्य मनोमयत्वं बोध्यम्। **कार्यकरणयोः**- प्राणवेदयोः।

—१२ ननु वेदविषयस्य स्पष्टत्वेन कथं वाक्यार्थे संदेहोत आहुः- **अग्र इति**। **सत्यसंकल्पादीति**। सत्यसंकल्पो ब्रह्मधर्मः। आदिपदेन-एष म आत्मा-इति जीवधर्मः। एवं धर्मवचनादित्यस्य धर्मद्वयवचनादित्यर्थः।

—१३ **पुराणेष्विति**। केचित्स्वदेहान्तर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम्-इत्यादिवाक्येन। एवं संशयमुक्त्वा पूर्वपक्षमाहुः-**तत्रेति**।

—१४ **उक्तत्वादिति**। सर्वपदेनेति शेषः।

—१५ **आहत्य**-अकस्मात्। प्रबलहेतुं विनेत्यर्थः। जीवो ब्रह्मत्वेनोपास्य इत्यत्र तैत्तिरीयोपनिषत्संमतिमाहुः- **विज्ञानमिति**।

—१६ सिद्धं पूर्वपक्षमाहुः- **तस्मादिति**।

—१७ समादधते-**उच्यत इति**।

—१९ **कुर्वीत**- मननात्मकं क्रतुं कुर्वीत। यद्यप्युपासीतेति विधिघटितं पदं वर्तते तथाप्युपासनाधिकारिविशेषणकोटिनिविष्टा तेन तस्योपासीतेति पदस्य गौणत्वमित्याशयेन समर्थयन्ति—**तत्रेति**।

—२० **शुद्धान्तःकरणस्येति**। अधिकारिण इति शेषः। एवंच ब्रह्मविषयकमननोपदेशत्वादस्य ब्रह्मवाक्यत्वमिति भावः।

—२२ शाखान्तरस्थवचनव्यवस्थामाहुः- **शाखान्तर इति**। तथा-जीववाक्यत्वम्।

—२३ एवं शाखान्तरीयवाक्यव्यवस्थामुक्त्वा सिद्धमाहुः-**तस्मादिति**। **आनन्दरूप इति**। मनसैवानुद्रष्टव्यमिति श्रुत्या साक्षात्कारानन्तरं मनसोप्यानन्दरूपत्वात्प्राचुर्यार्थकमयट्प्रत्ययेन मनोमय इत्यस्यानन्दरूप इत्यर्थः। **प्राणशरीर इति**। अन्तर्यामीत्यर्थः।

**सूत्रार्थः**— अथ खल्वित्यादिब्रह्मवाक्यमेव। यतः सर्ववेदान्तप्रसिद्धब्रह्मोपदेशो मननरूप एव युक्तः। न तु जीवस्योपासना युक्तेति॥ १॥

## विवक्षितगुणोपपत्तेश्च १।२।२

५४-१ सूत्रान्तरमवतारयन्ति- **नन्विति**। **क्रतुमय इति**। तदारभ्य।

**यथासंकल्पं**- मनोवासनानुसारम् । **अग्रिमदेहकथनादिति** । अग्रिमदेहो लोकान्तरभावी देहः । एवंच जघन्यफलार्था देहान्तरप्राप्तिर्ब्रह्मफलार्था भवितुं नार्हतीति भावः ।

—२ **युक्तेति** । जीवोपासनैव युक्तेत्यर्थः । **युक्तमिति** । ब्रह्मप्राप्तिरेव ब्रह्मज्ञानस्य फलं युक्तम् ।

—५ इमामाशङ्कां निराकर्तुं सूत्रकारः समाधानमाह- **विवक्षितेत्यादि** । **विवक्षिता**-उपादेयत्वेनाभिप्रेता । **तादृशरूपप्राप्तिः**-संकल्पानुरूपदेहप्राप्तिः । **प्रकृतेपि**-ब्रह्मज्ञानपक्षेपि । तामुपपत्तिं दर्शयन्ति- **भगवदिति** । भगवत्स्वरूपस्य ब्राह्मदेहस्य परप्राप्तिरूपस्य वा लाभात् ।

—६ भगवत्स्वरूपप्राप्त्या भगवद्गुणानुवादरसो न लभ्येतास्माकं तु स एवेष्टो मास्तु तत्स्वरूपप्राप्तिरित्यभिनिविष्टान् प्रति प्राहुः-**सारूप्यलाभाद्वेति** । भगवत्सदृशदेहवन्तोपि पुनरावर्तन्ते तेन ते न प्राकृता इति भावः । ननु देहित्वप्राकृतत्वयोर्व्याप्यव्यापकभावादसंगतमेतादिति चेत्तत्राहुः- **नेति** । दोहित्वप्राकृतत्वयोर्व्याप्तिः कुत्रापि नोक्ता । अस्मिन् विषयवाक्ये तु यथाक्रतुरित्यामुष्मिकदेहत्वसंकल्पानुरूपत्वयोर्व्याप्तिरुक्तातोधमदेहप्राप्त्युपायभूता जीवोपासना न युक्तेत्यर्थः । न च संकल्पानुरूपदेहप्राप्तिकथनाद्ब्रह्मस्वरूपप्राप्तिः कथमिति वाच्यम् । सर्वब्रह्मोपासनापूर्वकमननक्रतुना शुद्धसंकल्पस्योदयाद्ब्रह्मशरीरप्राप्तेरप्रतिबन्धात् ।

—७ चकारसूचितहेत्वन्तरमाहुः- **सत्येति** । सत्यसंकल्पत्वं केवलं ब्रह्मधर्म एव । तेन विषयवाक्यस्य जीवविषयत्वं शङ्कितुमपि न शक्यत इति भावः ।

**सूत्रार्थः**— अभीप्सितामुष्मिकदेहप्राप्तेरुपपत्तेर्ब्रह्मोपासनैव युक्तेति ॥२॥

## अनुपपत्तेस्तु न शारीरः १।२।३

—८ सूत्रान्तरमवतारयन्ति- **नन्विति** । **एतावतापि**- सूत्रद्वयोक्तोपपत्त्यापि । **नैकान्ततः**- केवलं निश्चयेनेति यावत् । **तुल्यत्वादिति** । आत्मानं चेद्विजानीयादयमस्मीति पुरुषः- इत्यादौ ज्ञेयतया प्रसिद्धत्वेन जीवस्य मन्तव्यत्वोपदेशः । लोकान्तरे विवक्षितदेहप्राप्तिः । न वै क्वचिन्मे मनसो मृषा गतिः- इति वाक्यात्सत्यसंकल्पत्वं व्यापकत्वादाकाशात्मकत्वं पर्यायेण सर्वाहंमानितया वा सर्वकर्मत्वादिकं हिरण्यगर्भे जीवे संगच्छत इति तस्य बाधराहित्येन तुल्यत्वादित्यर्थः ।

—११ अनुपपत्तिमाहुः- **न चेति** । **प्राणशरीररूपः**- आनन्दाकारः । प्राणशब्दस्यानन्दवाचकत्वमनुगमाधिकरणे स्फुटीकृतमेव । **निराकारत्वात्**- आनन्दाकारत्वाभावात् ।

—१२ **अध्यासेनेति**। सच्चिदानन्दरूपोहमित्यारोपजन्यानिरन्तराध्यासेन। **तथात्वे**– प्राणशरीरत्वे। **अनुपास्यत्वमेवेति**। अध्यासस्याविद्याजन्यत्वादिति भावः। अन्यद्दूषणमाहुः– **इदानीमिति**। **इदानीं**– उपासनाकाले।

—१३ **तथात्वात्**– अध्यासकृतप्राणशरीरत्वात्। एवं चाध्यासं विनोपासनाया असंभवाज्जीवे सच्चिदानन्दरूपत्वं तस्य च फलस्य साधनभूतोपासनाकाल एव सत्त्वात्तस्या वैयर्थ्यमिति भावः। **उपदेशानर्थक्यप्रसंगादिति**। प्राणशब्देन लौकिकप्राण एव यदि गृह्यते तर्हि तस्य प्राणशरीरस्याधुनापि विद्यमानत्वात्तदर्थं मननोपदेशो निरर्थक इति भावः।

—१४ तुशब्दं व्याकुर्वन्ति– **पूर्वपक्षस्येति**।

—१५ नन्वत्र पूर्वपक्षनिवृत्तिः कथं यतः पञ्चकोशप्रकरणगतविज्ञानमयवाक्यस्य ब्रह्मवाक्यत्वं स्यात्। विज्ञानमानन्दं ब्रह्मेति वाक्याद्विज्ञानशब्दो ब्रह्मवाचक इति निरूपणादद्यापि पूर्वपक्षस्योपशमाभावादित्यत आहुः–**विज्ञानमये त्विति**। **प्राप्ताप्राप्तेति**। तत्र विज्ञानमयस्य–तस्य श्रद्धैव शिरः–इत्यनेन श्रद्धादिधर्मत्वाज्जीवत्वं प्राप्तमानन्दमयस्येव सर्वान्तर्यामित्वाभावात् मुख्यत्वाभावेनानन्दरूपत्वमप्राप्तं तत्र किं ग्राह्यमिति विचारे प्राप्ताप्राप्तविवेकेनाप्राप्तापेक्षया प्राप्तस्यैव बलवत्त्वाद्धर्मस्य जीवस्यैवोपासनेति न ब्रह्मवाक्यत्वमिति पूर्वपक्षोपशम इत्यर्थः। यथाग्नेर्विस्फुलिङ्गाः–इत्यादिश्रुत्या जीवस्य भगवद्धर्मत्वं निर्बाधम्।

**सूत्रार्थः**– अत्र विषयवाक्ये शारीरो जीवो गृहीतुं न शक्यते। अनुपपत्तेरिति॥ ३॥

## कर्मकर्तृव्यपदेशाच्च १।२।४

—१६ अग्रिमसूत्रमवतारयन्ति–**नन्विति**। **प्राप्तव्येति**। जीवेनेति शेषः। **तादृशरूपेति**। प्राणशरीररूपेत्यर्थः। अयं भावः। यदि तत्र प्राप्ताप्राप्तविवेकेन जीवोपासना प्राप्तस्य बलवत्त्वात्तर्ह्यत्रापि–क्रतुमयः पुरुषः–इत्यत्र जीवत्वस्य प्राप्तत्वेन ब्रह्मत्वस्य चाप्राप्तत्वेन प्राप्तस्य प्राबल्याज्जीवोपासनैव युक्ता। युक्तेः साम्यात्। आनन्दरूपप्राणशरीरेत्यादिवचनाविरोधोपि नाशङ्क्यः। तद्वचनस्य जीवप्राप्तव्यतादृशरूपफलाभिप्रायकत्वात्। जीवेनानन्दरूपप्राणशरीरात्मकरूपफलं प्राप्यत इति यावत्।

—१८ कर्मकर्तृव्यपदेशं विशदयन्ति–**एतमिति**। एतं प्राणशरीरं भगवन्तमितो लोकात्प्रेत्याभिसंभवितास्मि प्राप्तास्मि यस्य साधकस्य अद्धा प्रत्यक्षं स्यात्तस्य विचिकित्सा कर्तव्यं नास्ति।

—२१ शारीरं-जीवम् । एवं चैकैकस्यैव कर्तृत्वकर्मत्वयोरसंभवाज्जीवब्रह्मणोरेकत्र प्राप्त्यभावादत्र प्राप्ताप्राप्तन्यायो न प्रसरति तेनेदं ब्रह्मवाक्यं न जीववाक्यमिति भावः । ननूक्तं प्राणशरीर इति वाक्यं फलपरमत आहुः-न चेति । यथाक्रतुरित्यादिवाक्येन भजनीयप्राप्तव्ययोरैकरूप्यस्योक्तत्वात्प्राणशरीर इत्यादि फलवाक्यं न । एवंच विषयवाक्यं ब्रह्मपरमेवेत्यर्थः ।

—२२ केचिदेतदधिकरणमष्टसूत्रात्मकमिति वदन्ति तन्मतनिरासाय चकारस्य प्रयोजनमाहुः-अधिकरणेति ।

सूत्रार्थः-कर्तृत्वेन जीवस्य कथनात्कर्मत्वेन ब्रह्मणः कथनादेतद्विषयवाक्यं न जीववाक्यमिति ॥ ४ ॥

इति प्रथमाधिकरणम् ।

---

## शब्दविशेषात् १।२।५

५५-३ इदमधिकरणं पूर्वाधिकरणेनान्तस्तद्धर्मादित्यधिकरणेन वा गतार्थं नेति सूचयितुं शब्दविशेषाधिकरणं रचयतीत्यधिकरणसंगतिः । विषयवाक्यं द्योतयन्ति-इदमित्यादिना । आम्नायत इति । वाजिशाखायामिति शेषः । यथेति । पूर्वाधिकरणे मनोमयस्य पक्षत्वमत्र हिरण्मयस्य तत् ।

—५ एवंच पक्षभेदप्रयुक्तोधिकरणभेद इति सूचयितुं संशयाकारमाहुः-तत्र संदेह इति । अन्तस्तद्धर्माधिकरणे हिरण्मयस्य ब्रह्मत्वमुक्तं तेन गतार्थत्वमस्याधिकरणस्येत्यत आहुः-उपक्रम इति । विषयवाक्ये प्रथममेव हिरण्मयस्योपदेशाद्व्रीह्यादिसादृश्येन जीवः ।

—६ उपसंहारेति । ननु प्रथमावगतत्वादुपक्रमस्यासंजातविरोधित्वेन च प्राबल्यात्कथमुभयोस्तुल्यबलत्वमत आहुः-यत्रेति । यत्रेत्यादेरयमर्थः । यस्मिन्वाक्य उभयोर्मध्य एकस्येतरपदार्थान्वयेनैकवाक्यत्वं संभवति तस्य बलीयस्त्वमिति । एतदेव प्राबल्ये प्रयोजकं न प्राथम्यम् ।

—७ पूर्वतन्त्रे-जैमिनीये । एवं चेतरपदार्थान्वयसहकृतैकवाक्यत्वप्रयोजकत्वं प्रबलत्वं तच्च कुत्रचिद्वाक्य उपक्रमस्य कुत्रचिद्वाक्य उपसंहारस्य संभवतीति भावः । एवं चान्तस्तद्धर्मोपदेशाधिकरणेन साम्याभावादिदं भिन्नमधिकरणमिति हृदयम् । पूर्वपक्षमाह-तत्रेति । भूतानां चातुर्विध्यं जरायुजाण्डजस्वेदजोद्भिज्जभेदेन । छान्दोग्ये त्रिविधानां कथनमत्र चतुर्थस्याधिकस्य वर्णनम् । आराग्रमात्रस्येति । तोत्रायःशलाकाग्रं, आराग्रं तत्परिमाणस्येत्यर्थः ।

—८ **प्रतिपादकमिति** । व्रीह्यादिदृष्टान्तचतुष्टयेन जीवस्यैव प्रतिपादनमित्यर्थः । **फलत इति** । मोक्षरूपावस्थायाम् ।

—९ **आभासमानत्वमिति** । आभासा व्रीह्यादयस्तुच्छपदार्थास्तैस्तत्समानत्वम् ।

—११ **हिरण्मयः पुरुष इति** । हिरण्मयस्यानन्दमयत्वमन्तस्तद्धर्माधिकरणे सिद्धम् । आनन्दमयाधिकरणे च तत्प्राप्तेरेव फलत्वमतो हिरण्मयो जीवस्य फलमपि भवितुं नार्हति तेन तद्विरोधादेतस्य जीववाक्यत्वं शङ्कितुमपि न शक्यत इत्यर्थः ।

—१२ ननु पूर्वाधिकरणे तत्क्रतुन्यायस्य सिद्धत्वात्तथोपासने स्वरूपसारूप्यैकतरलाभो भवतीति भाष्येप्यङ्गीकृतत्वात्कथं तस्य फलत्वं नेत्यत आहुः–**नापीति** । अत्र प्रमाणं तैत्तिरीयश्रुतिः । तथाहि-ब्रह्मणः सायुज्यं सलोकतामाप्नोत्येतासामेव देवतानां सायुज्यꣳ सार्ष्टिताꣳ सलोकतामाप्नोति य एवं वेद–इत्युपनिषत् । **शब्देनैवेति** । सूत्रे शब्देनैवोक्तो विशेषः शब्दविशेष इति विग्रहः ।

—१३ **उक्तत्वादिति** । उक्तश्रुतिप्रामाण्याद्धिरण्मयशब्देनैवाधिकारविशेषमादाय तत्र लयानियमस्य सूचितत्वान्न हिरण्मयः पुरुषो जीवः । तथा चात्राधिकरणेणुत्वबोधकव्रीह्यादिदृष्टान्तैरनात्मनि वर्तमानस्य जीवत्वं प्रतीयत इति युक्त्या पूर्वाधिकरणसंगतिमाक्षिप्योपसंहारबलीयस्त्वेन तत्खण्डयित्वा पूर्वोक्तं दृढीक्रियते । एवं चेदमधिकरणं पूर्वाधिकरणस्यैव विशेषरूपम् ।

**सूत्रार्थः**–शब्देनैव विशेषस्योक्तत्वाद्धिरण्मयः पुरुषो न जीव इति ॥ ५॥

## स्मृतेश्च १।२।६

—१४ सूत्रान्तरमवतारयन्ति–**नन्विति** । **विद्यमानत्वादिति** । लिङ्गाभिमानी जीव एव । एवंच श्रुतेः संदिग्धत्वेपि लिङ्गाज्जीववाक्यत्वं युक्तमित्यर्थः । **अभिमान्येवेति** । एवकारो भिन्नक्रमः । अभिमानी जीव एवेति योजना ।

—१६ **ईश्वर इति** । भगवद्गीतास्थं वाक्यमेतत् ।

—१७ सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।

इत्यादिवाक्यादुपनिषत्सारभूता गीता साक्षाद्भगवतोक्ता तस्याः स्मृतित्वं कथमिति शङ्कते–**नन्विति** । **यन्निःश्वासत्वमिति** । सर्वे वेदा यस्य निःश्वासभूता इत्यर्थः ।

—१८ **औपनिषदमिति** । उपनिषदि दृष्ट औपनिषदः ।

—१९ **प्रमाणान्तरवेद्यमिति** । प्रमाणान्तरेण गीतादिना वेद्यम् । **शिष्यरूपेण**–शिक्षणीयरूपेण ।

—२० **प्रपन्नस्येति** । शिष्यस्तेहं शाधि मां त्वां प्रपन्नम् ।

इति गीतावाक्यात्। अर्जुनस्य पुष्टिभाक्तित्वाभावे विनिगमकमाहुः-**भगवद्वाक्य इति** ।विचिकित्सा तु संशय इति कोशान्निर्विचिकित्सं निःसंशयं विश्वासस्तद्भावात् ।अपरं भवतो जन्मेत्यादिना भगवदुक्तावर्जुनेन संशयो दर्शितः।अत्र विवरणकाराः–भक्तौ पुष्टित्वं नाम माहात्म्यज्ञानाद्युपाधिरहितत्वे सति साक्षाद्धर्मिस्वरूपपर्यवसायित्वे सति सुदृढत्वे सति ज्ञानादिसर्वानपनोद्यत्वे सति सर्वतोधिकत्वे सत्यगणितानन्दरूपत्वे सत्यतुल्यातिशयित्वं तच्च यत्र स्नेहरूपभक्तौ सैव पुष्टिभक्तिपदवाच्या सा च गोपीनां गोपालानामेवेति । अर्जुनस्य तु माहात्म्यज्ञानोपाधिसद्भावान्न पुष्टिभक्तित्वमत एवोक्तं विश्वरूपदर्शनानन्तरमर्जुनेन। अजानता महिमानं तवेत्यादिना सत्कारानिवेदनं च संगच्छते। अत एव गोवर्धनोद्धरणानन्तरं स्वस्थाने स्थापनानन्तरं गोपालैर्गोपीभिश्च भगवदुपरि जलं भ्रामयित्वा दध्ना तिलकः कृत इति स्नेहकार्यमेव कृतं न तु माहात्म्यदर्शने नमनविज्ञापनादिकं कृतमिति तेषां तासां च पुष्टिभक्तत्वमिति । इदं श्रीमत्प्रभुचरणैः पुष्टिमर्यादाविवरणे स्पष्टमेवोक्तमित्याद्युक्तवन्तः । नन्वर्जुनस्य पुष्टिभक्तत्वाभावेन तन्मार्गरीत्योपदेशाभावेपि मर्यादामार्गेणोपनिषद्द्वारोपदेशः कुतो न कृत इत्याहुः–**रथित्वेनेति** । भगवतार्जुनस्य रथित्वेनैव स्थापनं कृतमत उपनिषद्द्वारोपदेशोपि तस्य न संभवति । यतः कृताचमनप्राणायामादेः पुरुषस्य दर्भासनोपविष्टस्यैवोपनिषदुपदेशः कर्तव्यो न तु रथे स्थितस्येति मर्यादा । स्मृत्युपदेशस्तु रथे स्थितस्यापि भवतीति भगवता स एव कृत इति भावः । एवंच मर्यादायां विधिरेव नियामकः पुष्टिमार्गे तु विधिर्गौणः स्नेह एव नियामक इति विवरणे स्पष्टम् ।

—२१ अत एवाहुः– **तादृशायेति** । **तादृशाय**–साहङ्काराय । **तादृशदेशकालयोरिति** । संग्रामरूपदेशे युद्धकाले चेत्यर्थः । **अवक्तव्यत्वादिति**। शूद्रजातिसेवकानामत्यन्तसांनिध्यादप्यवक्तव्यत्वं बोध्यम् ।

—२२ नन्वेतत्सर्वं गीतायाः स्मृतित्वे संभवेत्ततस्तस्याः स्मृतित्वं साधयन्ति–**गुरुरूपेति** । विधातुर्गुरुरूपं यत्तादृशं रूपं विधातृजनकं स्वस्यादिमं रूपमित्यर्थः । अयमर्थः । उपनिषद्वक्ता गीतावक्ता च यद्येक एव स्यात्तर्हि वक्तृभेदाभावाद्गीतायाः स्मृतित्वं न स्यादतो वक्तरि कश्चनावस्थाभेदः स्वरूपभेदो वा वक्तव्यः । तत्रानन्तरूपमिति श्रुतिदर्शनेन रूपभेदः शीघ्रं बुद्ध्यावारोहति । तेन मर्यादाप्रतिपादकं वेदवक्त्रक्षरात्मकरूपं वेदार्थं तत्तात्पर्यं च स्मृत्वा तत उत्तमोपि भगवांस्तादृशवाक्यान्युक्तवानतः स्मृतिवाक्यत्वं तेषां

गीतावाक्यानामुपपन्नामाते। **वेदोद्गमजनकमिति**। अत्र प्रमाणमाहुः- यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै-इति।

—२४ ननु तं त्वौपनिषदमित्यादिश्रुतिप्रामाण्यादुपनिषद्द्वारैव ब्रह्मप्रतिपादनं कर्तव्यं तत्र गीतावाक्यानां क उपयोग इत्याहुः- **तत इति**। **ततः**- उपनिषदर्थप्रतिपादकत्वात्। अधुना ब्रह्मवियाविचारवान्भक्तः शरणागतश्चाधिकारीति भगवदाशयं स्फुटयितुं ब्रह्मवियायास्तदङ्गत्वं वदन्ति-**पुनश्चेति**। पुनश्चेत्यस्य स्वकृपालुतयेत्यनेन संबन्धः।

—२५ **भक्तिप्रपत्ती इति**। मन्मना भव मद्भक्त इत्यादिना भक्तिः। प्रपत्तिर्नाम शरणगमनं तच्च सर्वधर्मान्परित्यज्येत्यादिनोक्तम्।

—२६ **अत इति**। प्रधानस्यान्ते निरूपणीयत्वात्।

५६-२ **निःश्वासः**-वेदः। तथाहि-तैत्तिरीयोपनिषदि हृदयं चाप्यधोमुखमित्युपक्रम्य।

तस्यान्ते सुषिरं सूक्ष्मं तस्मिन्सर्वं प्रतिष्ठितम्।

इति। ननु गीताविषयेस्त्वेवं तथापि व्यासेन कुत्राचित्स्वकृतपुराणवाक्यान्यप्युदाहृत्य सूत्राणि चिन्त्यन्ते तत्कथं तत्राहुः- **व्यासस्यापीति**। **अदोष इति**। पुराणवाक्यानां सूत्रमूलभूतत्वे न दोष इत्यर्थः।

**सूत्रार्थः**-स्मृतेरप्येतद्विषयवाक्यं न जीवपरमिति॥ ६॥

## अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च १।२।७

—४ सूत्रमवतारयन्ति-**उपक्रमेति**। अयुक्तमिति लिङ्गविपरिणामेनान्वयः। एवंच न परमात्मा विषयवाक्यार्थो जीवधर्मस्यात्पत्वस्य स्फुटं प्रतीयमानत्वादिति शङ्कितुराशयः।

—१० **तदायतनत्वेन**-हृदयायतनत्वेन। **प्रतिपाद्यत इति**। एवंच वस्तुतो हृदयमेव तदायतनमिति नास्तीति भावः।

—११ **तदन्तःकरणे**- जीवान्तःकरणे। ज्ञानमार्गरीत्या हृदयोपलब्धिमुक्त्वा भक्तिमार्गरीत्या सर्वत्रोपलब्धिरित्याहुः- **भक्तौ त्विति**।

—१२ **बहिरपीति**। अपिनान्तःकरणस्यापि संग्रहः। अतएव तैत्तिरीयश्रुतावुक्तम्।

अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः।

इति। **द्वितीयमिति**। व्रीह्यादिपरिमाणरूपं दूषणम्।

—१३ **चतुर्विधेति**। जरायुजाण्डजस्वेदजोद्भिज्जादिभेदैर्भूतानां चातुर्विध्यम्। अत्यन्तसूक्ष्मस्यैव सर्वभूतान्तरव्याप्तत्वमित्यर्थः। दृष्टान्तं स्पष्टयन्ति-

**यथेति** । उपरवाः सोमयागीयवेद्यां सदोमण्डपात्पुरतो हविर्धानमस्ति तत्र दक्षिणभागे शकटात्पुरतश्चत्वारः प्रादेशमात्रा बिलविशेषाः ।

—१४ दार्ष्टान्तिकं स्पष्टयन्ति-**तथेति** । यथोपरवाख्यचतुर्विधबिलेषु व्यापकाकाशस्य प्रादेशपरिमाणत्वेन ज्ञानं तथा चतुर्विधभूतहृदयेषु व्रीह्यादिसाम्येन व्यापकस्य परब्रह्मणः कथनमिति भावः ।

—१५ **तत्स्वरूपं**-व्रीहितुल्यस्वरूपम् । चकारद्वयप्रयोजनमाहुः-**पूर्वपक्षेति** । **एतादृशवाक्यान्तरे**-तैत्तिरीयोपनिषद्गते-आदित्यो वा एष एतन्मण्डलम्-इति वाक्यान्तरे ।

१६—**आधिक्य इत्यादि** । आधिक्ये पूर्वापेक्षया वैलक्षण्ये योपपत्तिः पूर्वपक्षसमाधानरूपा तत्समुच्चयार्थमित्यर्थः । एवंच चकारद्वयेन वाक्यान्तरेण सूच्यमानमधिकरणान्तरमपीष्टमित्याहुः- **तेनेति** ।

**सूत्रार्थः**- अल्पस्थानस्थितत्वेन व्रीह्यादिभावेन च कथनादत्र परमात्मा प्रतिपाद्यो नेति चेन्न । निदिध्यासनानन्तरं हृदये साक्षात्क्रियमाणत्वादल्पस्थानस्थितत्वेन निर्देशसंभवात् । एवं व्रीह्यादितुल्यत्वस्यापि गतिसंभवात् । तथाहि यथोपरवचतुर्विधबिलेषु व्यापकीभूताकाशस्य प्रादेशमात्रत्वज्ञानं तथा चतुर्विधभूतहृदयेषु व्रीह्यादितुल्यत्वेन व्यापकीभूतस्य परब्रह्मणः प्रतिपादनमिति ॥ ७ ॥

## संभोगप्राप्तिरिति चेन्न वैशेष्यात् १।२।८

—१८ **बाधकमिति** । संभोगप्राप्तिमत्त्वेन जीवतुल्यत्वमिति बाधकम् ।

—२१ संभोगपदे सम्यग् भोगः संभोग इति कर्मधारय इति मनसिकृत्य बाधकमाहुः- **सुखदुःखेति** । सम्यग् भोगो यस्मादिति बहुव्रीहिसमासं मनसिकृत्य बाधकमाहुः- **तत्साधनेति** । तत्पदेन सुखदुःखयोर्ग्रहणम् ।

—२२ **स्वकर्तृत्वमिति** । स्वस्वरूपभूतस्य जगतः कर्तृत्वम् । **तद्विशेषः** । जीवाद्विशेषः ।

५७-१ **अग्रिमेति** । चराचराधिकरणम् ।

—२ अपेक्षितभोग एव वर्तत इत्यत्र दृष्टान्तमुखेनानुमानप्रमाणमाहुः- **यथेति** । चक्षुषा शोभनमशोभनं च रूपं गृहीतुं शक्यते तथापि चक्षुराधिष्ठातृदेवतायाः शोभनरूपस्यैवापेक्षा । एवंच शोभनरूपस्यैवाभिनिवेशपूर्वकं णं तथा चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमिति श्रुत्या सर्वाधिष्ठातुर्ब्रह्मणोपेक्षानुरं भोगवत्त्वमनुमीयते । अनुमानस्वरूपं तु ब्रह्म, अपेक्षितभोगवत् । धिष्ठातृत्वात् । यत्र यत्राधिष्ठातृत्वं तत्र तत्रापेक्षितभोगवत्त्वम् । यथेन्द्रिधिष्ठातृदेवताः । **तथात्वे**- ब्रह्मत्वे ।

—३ **तद्वदेव**- परब्रह्मवदेव । **भविष्यति**- अपेक्षितभोगवत्त्वं भविष्यति। तत्त्वमसीत्यनेन ब्रह्मवत्त्वाभावात्प्रागविद्यावशत्वात्पुण्यादिसाधनेनैवापेक्षितभोगवत्त्वं भविष्यतीति सर्वमविरुद्धम् ।

सूत्रार्थः- यदि भगवान् जीववत्सर्वेषां हृदये तिष्ठेत्तर्हि तस्य सुखदुःखभोगप्राप्तिः स्यादिति चेन्न। ब्रह्मणि सर्वरूपत्वानन्दरूपत्वादीनां विशिष्टधर्माणां सत्त्वात्। एवंच तादृग्विशिष्टधर्मवत्त्वाभावाज्जीवस्यैव भोगो न ब्रह्मण इति॥ ८॥

इति द्वितीयाधिकरणम्।

---

## अत्ता चराचरग्रहणात् १।२।९

पूर्वाधिकरणे ब्रह्मणः सुखदुःखप्राप्तिराशङ्क्य परिहृता। परं चायं परिहारः कदा संभवेद्यदा तस्य भोगः संभवेदतस्तादृशभोगमनेनाधिकरणेन व्युत्पादयतीत्येवमधिकरणसंगतिः।

—६ विषयवाक्यमाहुः-कठवल्लीष्विति। तत्र-द्वितीयवल्लीसमाप्तौ।

—७ उपसेचनमिति। ओदनादिभक्ष्यद्रव्ये रुच्युत्पादनार्थमार्द्रीकरणार्थं च मिश्र्यमाणं दध्यादिद्रव्यमुपसेचनपदेन बोध्यते।

—१० सिद्धमिति। सर्वं खल्विदं ब्रह्मेति वाक्ये सद्रूपत्वं सत्यसंकल्पेति वाक्ये चिद्रूपत्वं नित्यपदेनानन्दत्वं हृदये सर्वोपास्यत्वं च सिद्धमित्यर्थः। साधयतीति। प्रसंगसंगत्येति भावः। अधिकरणवैयर्थ्यं शङ्कते-ब्रह्मक्षत्रयोरिति।

—१२ अज्ञातस्थानकस्वधर्मो जीवस्यैव न ब्रह्मण इति प्रतिपादयन्ति-नहीति।

—१४ तर्हि संदेहः कथमत आहुः-अलौकिकेति। मृत्यूपसेचनयुतं ब्रह्मक्षत्रभक्षणमलौकिको धर्मो ब्रह्मण्येव संभवतीति भावः।

—१७ उपासनोपचितेति। उपासनयोपचितं लब्धमित्यर्थः। महादेवादिरित्यत्रादिपदेनाग्निर्गृह्यते।

—२० सूत्रे चराचरशब्दः श्रुतौ च ब्रह्मक्षत्रेति शब्दः। तयोरेकार्थत्वं लक्षणां विना न संभवतीति कैश्चिल्लक्षणाङ्गीक्रियते तदसंगतं वाच्यवृत्त्यैवैकार्थत्वसंभवादिति बोधयन्ति-चरमिति। चरतीति चरमिति व्युत्पत्तिं दर्शयितुमाहुः-परिभ्रमन्निति।

—२१ अचाल्यमिति। ब्रह्मक्षत्रयोः प्रवाहनित्यत्वादचाल्यत्वमिति पूर्वमीमांसायामुक्तम्। नन्वेवं जीवस्याग्रहणे मृत्युञ्जयस्य रुद्रस्य कुतो न ग्रहणमित्याहुः-यत्रापीति। अयमर्थः। यत्रापि प्रधानादौ प्रजापालनादिरूपबुद्धिसौष्टवजन्योतिशयो दृष्टः स स्वार्थस्य स्वस्य राज्ञः सार्वभौमत्वादिरूपस्यातिलङ्घनं न करोति। यथामात्यस्य प्रजापालनादिरूपोर्थो राज्ञः सार्वभौमत्वादिकं नातिलङ्घते किंतु तावत्पर्यन्तमेव तस्याधिकारस्य प्रसरस्तथा परमेश्वरगतस्य सर्वभोक्तृत्वस्यानतिलङ्घनेन रुद्रस्य प्रधानस्थानीयस्यात्तृत्वम्।

—२२ उपसेचनादिमद्भोजनकर्तृत्वं लौकिकवत्किमित्युक्तं तदाहुः–**अस्मदादीति**। भगवताप्युपसेचनविशिष्टं भोजनं क्रियत इति जीवस्य ज्ञानार्थमिति भावः।

—२३ ननु भगवता ब्रह्मक्षत्रभक्षणमयुक्तमित्याहुः–**प्रलय इति**। प्रलयकाले युक्तायुक्तविचारणायां प्रलय एव न संभवेदिति भावः। ननु भगवतः स्थानाज्ञानं चेन्नृसिंहोत्र स्तम्भे वर्तत इति प्रन्हादेन कथमुक्तमित्यत आहुः–**सर्वत्रेति**।

—२४ **फलत इति**। यद्यपि स्थानविषयकं परोक्षज्ञानं नास्ति तथापि भगवतश्चाक्षुषत्वं नास्तीति पर्यवसानादित्यर्थः। नन्वेवमपि क्लिष्टकर्मत्वं कथं निवर्ततेत्यत आहुः–**ब्रह्मक्षत्रयोरिति**।

५८–१ **योग्यरूपमेवेति**। मोक्षापेक्षिणो ह्यत्र भक्ष्यत्वेन प्रतीयन्ते तेषां देहनिवृत्त्या मुक्तिः सेत्स्यति न तु सदेहत्वे। अतो यथा तण्डुलानामग्निसंबन्धेनावयवशैथिल्येनौदनत्वमेवं मोक्षमपेक्षमाणानां ब्रह्मक्षत्राणां भोक्तरि भगवति प्रवेशार्थं कथंचिन्मृत्युसंबन्धमात्रेण योग्यरूपत्वमेवौदनत्वम्। यथा कंसादीनां कुरुपाण्डवसैन्यानां च। तदेव–

तदेव रूपं दुरवापमाप।

यास्यन्त्यदर्शनमलं बलभीमपार्थव्याजाव्हयेन हरिणा निलयं तदीयम्।

इत्यादिवाक्यैः प्रतिपाद्यते। एवमोदनादिभावे सिद्धे भगवतस्तदत्तृत्वेनाक्लिष्टकर्मत्वमपि बोध्यम्। **समवलयादिति**। न तस्य प्राणा उत्क्रामन्ति। इहैव समवलीयन्ते–इति श्रुतेः।

**सूत्रार्थः**–यस्य ब्रह्म चेत्यादिवाक्ये योत्ता प्रतिपाद्यते तद्ब्रह्मैव न जीवः। भक्ष्यत्वेन चरस्य मृत्योरचरयोर्ब्रह्मक्षत्रयोर्ग्रहणादिति ॥ ९ ॥

## प्रकरणाच्च १।२।१०

—५ सूत्रान्तरमवतारयन्ति–**नन्विति**। **पूर्वपक्षन्यायेनेति**। निषिद्धत्वादीनां भगवत्यनौचित्यादित्यर्थः। **यमोन्यो वेति**। यमो देवतारूपं मृत्युं वशीकृत्य। अन्यो मृत्यू रोगरूपं मृत्युं साधनीकृत्येत्यर्थः।

—१२ **अन्यथेति**। ब्रह्मपरत्वाभाव इत्यर्थः। **प्रकृतहानेति**। ब्रह्मप्रकरणं प्रकृतं तस्य हानं त्यागः। जीवप्रकरणमप्रकृतं तस्य ग्रहणमिति दोषद्वयं स्यादित्यर्थः। अयमर्थश्चकारेण सूच्यत इत्याहुः–**चकारार्थ इति**।

**सूत्रार्थः**–ब्रह्मणः प्रकरणादिदं ब्रह्मवाक्यं न जीववाक्यमिति ॥ १० ॥

इति तृतीयाधिकरणम्।

---

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् १।२।११

पूर्वाधिकरणोक्ता अन्तर्वर्तिनो धर्मा अन्तर्वर्तिनो जीवस्य स्युर्न व्यापकस्य ब्रह्मण इति ब्रह्मणोन्तर्वर्तित्वं साधयत्यनेनाधिकरणेनेत्याधिकरणसंगतिः।

—१६ विषयवाक्यमाहुः–तस्यैवेति। पूर्वाधिकरणविषयवाक्यस्यैवाग्रेतनमेतद्वाक्यम्। ऋतं–कर्मफलम्। पिबन्ताविति। तत्रैकस्य परमात्मनः पानकर्तृत्वाभावेपि छत्रिन्यायेन तथोक्तिः। गुहां–हृदयगुहाम्।

—१७ छायातपौ–छायातपवद्विलक्षणौ। पञ्चाग्नयः– पञ्च अग्नय उपास्यत्वेन येषाम्। त्रिणाचिकेताः– त्रिर्नाचिकेतोग्निश्चितो यैः। अयं स्फुटतया भासमानः श्रुत्यर्थः। इष्टमर्थं भाष्यकृतः स्वयं वक्षन्त्येव।

—१९ उत्तरशेषत्व इति। यः सेतुरीजानानाम्– इत्युत्तरवाक्याङ्गत्व इत्यर्थः।

—२० ननु वल्लीसमाप्त्या पूर्वप्रकरणस्य समाप्तत्वेनोत्तरप्रकरणस्थत्वस्य स्फुटमेव तत्र संदेहस्य कुतोवसर इत्याहुः– मध्ये पाठादिति। मध्यमणिन्यायेन।

स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते॥

इति पूर्वतन्त्रकारिकायामुक्तत्वात्कथमपि पूर्वशेषत्वेन संगतिसंभवात्।

—२१ नन्वर्थविचारेण संशयनिरासः स्यादत आहुः– अर्थविचारे त्विति। द्विवचननिर्देशादिति। हन्ता चेन्मन्यते हन्तुं– इत्यनेन बद्ध उक्तः। मत्वा धीरो न शोचति– इत्यनेन मुक्त उक्तः पूर्ववाक्ये। ततः परं द्विवचनोक्त्या पूर्वगतयोस्तयोरेव बद्धमुक्तयोर्ग्रहणं संपतेन्न तु जीवपरमात्मनोः।

—२२ इन्द्रियमनसी इति। यस्त्वविज्ञानवान् भवतीत्यग्रेतनवाक्ये तयोरेव निरूपणादिति भावः। उभयथेति। अर्थविचारदृष्ट्या पूर्वशेषत्वोत्तरशेषत्वयोरित्यर्थः। अत्र कैश्चिदेवं समाधानं कृतं यत्– येयं प्रेते विचिकित्सास्तीत्यनेन जीवप्रश्नः कृतः। अन्यत्र धर्मादन्यत्राधर्मादित्यादिना परमात्मप्रश्नः कृतस्तयोः समाधानत्वेन पूर्वशेषत्वाङ्गीकारे जीवपरमात्मनोरुभयोरपि ग्रहणं भवेदिति तन्निराकर्तुमाहुः– द्वयोरिति। जीवब्रह्मणोरित्यर्थः।

—२३ न प्रयोजनसिद्धिरिति। तं त्वौपनिषदं पुरुषं पृच्छामीति प्रश्नस्योत्तरत्वेन केवलमुख्यब्रह्मपरं वाक्यं वक्तव्यं तद्यदि जीवब्रह्मपरं भवेत्तर्हि केवलब्रह्मपरत्वाभावेनासंभावनादिनिवर्तकत्वाभावान्मननाद्यसिद्ध्या मोक्षरूपप्रयोजनाभाव इत्यर्थः। जीवब्रह्मणोरैक्याद्ब्रह्मपरत्वं संभवेत्तेन च मोक्षप्रयोजनासिद्धिरित्यत आहुः– अथेति। मन्यत इति। एकदेशीति शेषः।

—२४ अनिर्धारादिति। अस्य वाक्यस्य। एवं चोभयोरप्यृतपानकर्तृत्वस्योपनिषद्येव निश्चय इति भावः।

५९–१ एकदेशिमतं दूषयन्ति– तथापीति।

—२ **संदिग्धत्वादिति** । अर्थे प्रकरणे च संदिग्धत्वादित्यर्थः । एवमेकदेशिमतदूषणेन विचारमाक्षिप्य तं समर्थयन्ति– **उच्यत इति** । **उच्यते**– विचारे युक्तत्वमुच्यते ।

—३ **शास्त्रं**—व्याससूत्रम् । **संदेहवारकं**– श्रौतवाक्यस्थसंशयनिवारकम् । एवं संशयाकारे संभवति निर्णयार्थं व्याससूत्रप्रवृत्तिः । अतः पूर्वं संशयाकारस्य निर्णयः कार्यः । तदभावे समाधानमसंगतं भवेत् । ननूभयोरपि संदिग्धत्वान्निर्णयः कथं भवेदत आहुः– **पदशक्त्येति** । **निर्णय इति** । संदेहाकारस्य ।

—४ कस्य पदस्य शक्त्येत्याहुः– **उत्कर्षशब्देनेति** । जीवं प्राप्योत्कर्षबोधको यः शब्दस्तेनेत्यर्थः । **द्वयोरिति** । जीवद्वयपक्षो जीवपरमात्मद्वयेतिपक्षयोः संग्रह इत्यर्थः । **वाक्ये**– विषयवाक्ये । **न क्षतिरिति** । एवंच पक्षद्वयसंग्रहः सुकरस्तेन च विचारः कर्तव्य इति भावः ।

—५ जीवादुत्कर्षशब्दः क इत्यपेक्षायामाहुः– **गुहातपेति** । ननु यः सेतुरीजानानामिति वाक्यमपि प्रकरणद्वयमध्यपठितं कुतो न विचार्यत इत्याहुः– **ऋतमिति** । तत्राक्षरब्रह्मणः स्फुटं श्रवणात्संदेहाभावात्तन्न विचार्यते किंत्वत्र संशयादिदमेव विचार्यत इत्याहुः– **इत्यत्रैवेति** ।

—६ पूर्वपक्षमाह– **तत्रेति** । अन्यत्र धर्मादित्यारभ्याशब्दमित्यन्तं ब्रह्मप्रकरणस्य समानत्वादित्यर्थः । एवंच तन्मध्यपाति–ऋतं पिबन्तौ–इति वाक्यं द्विवचनघटितमवान्तरविशेषप्रकरणस्य द्योतकं विशेषं सामान्यतो बलवद्भवतीति न्यायेन बद्धमुक्तजीवनिर्देशकं वक्तव्यमिति भावः ।

—७ अत्रोपष्टम्भकमाहुः– **यस्त्विति** ।

—८ मन्त्रवर्णसंगतिरप्येवमित्याहुः– **मन्त्रेपीति** । **विद्वदविद्वतोरिति** । अयं पाठश्चिन्त्यः । विद्वच्छब्दस्य वस्वन्तत्वाद्विद्वदविदुषोरित्यपेक्ष्यते । विच्छब्दाज्ज्ञानवाचकान्मतुप्प्रत्ययमादृत्य कृता प्रकाशस्था सिद्धिरपि चिन्त्या । मादुपधायाश्चेत्यादि पाणिनिसूत्रेण तत्र वत्वस्याप्राप्तेः ।

—८ बद्धमुक्तोपभोग्यसुखमृतशब्देनोच्यत इत्याहुः– **स्वर्गापवर्गेति** ।

—९ **मार्गद्वयस्यापीति** । प्रवृत्तिनिवृत्त्यात्मकं मार्गद्वयम् । **सुकृतलोकत्वमिति** । पूर्वोक्तमार्गद्वयस्यापि विहितत्वात्सुकृतत्वेन तज्जन्यस्य शरीरस्य लोकत्वम् । एवंच सुकृतलोकपदेन सुकृतजन्यशरीरं ग्राह्यम् । परव्योम गुहाशब्दार्थः । तच्च केवलब्रह्मण एव स्थानं न जीवस्येति शङ्कां वारयितुं गुहाशब्दस्यार्थान्तरमाहुः– **गुहेति** । गुहावद्गहनत्वात्तत्त्वविचारो गुहाशब्दवाच्योग्निर्माणवक इतिवल्लक्षणयाङ्गीकार्यः ।

—१० ननु लक्षणास्वीकारो दोष इत्यत आहुः– **हृदयं वेति** । हृदयाकाशं वेत्यर्थः । ननु जीवद्वयप्रवेशार्थं हृदयद्वयं वक्तव्यं तेन द्विवचनं स्यादत्र

तु गुहामित्येकवचनमत आहुः- **जातीति**। हृदयत्वरूपजात्यपेक्षयैकवचनमित्यर्थः। **परमपरार्ध्यमिति**। परो ब्रह्मा मीयते यस्मिंस्तादृशं परार्धमुत्तमस्थानं तदाहुः- **सत्यलोक इति**।

—११ **उभयोरिति**। शतजन्मजसुकृतशुद्धबुद्धेः कर्मिणो वेदान्तविज्ञानसुनिश्चितार्थस्य संन्यासिनश्च भोगादिति भावः। स्वपक्षे छायातपशब्दयोर्विनियोगमाहुः-**अविद्ययेति**। पञ्चाग्नयो दक्षिणाग्निगार्हपत्याहवनीयावसथ्यसभ्याख्याः पञ्चाग्नयो भवन्त्युपास्यत्वेन येषामित्याग्निहोत्रिण इत्यर्थः। तꣳ हैतमेके पशुबन्ध एवोत्तरवेद्यां चिन्वते-इति तैत्तिरीयाष्टकब्राह्मणोक्तस्य नाचिकेतनामकचयनविशिष्टसोमयागस्य त्रिवारं संपादकास्त्रिणाचिकेताः।

—१४ **वाक्यार्थसंगतिरिति**। सर्वोपनिषदां चेतने ब्रह्मणि तात्पर्यं तेन तद्वाक्यानां ब्रह्मण्येव वाक्यार्थसंगतिरिति सिद्धान्तः। एवं चोपनिषदुक्तानां केषांचिद्विशेषणानां ब्रह्मण्यसंभवात्तन्निर्णयार्थं शास्त्रप्रवृत्तिः। इन्द्रियमनसोस्त्वचेतनत्वेन संशयाभावात्सति कुड्ये चित्रमिति न्यायेन शास्त्रप्रवृत्तिरेव न भविष्यतीति भावः। एतदेवाहुः- **वाक्यार्थयोग इति**। **निर्णय इति** कर्तव्य इति शेषः। एवंच निर्णयोपयोगिवाक्यार्थयोग एव नास्तीत्यर्थः।

—१७ **एकस्मिन्**- एकदा। सूत्रस्थहिशब्दः प्रसिद्धिद्योतकः।

—१८ तदर्थं श्रुतिप्रसिद्धमाहुः- **अनेनेति**। **अनेन**- जीवेन। अनुप्रविश्येत्यस्याग्रे नामरूपे व्याकरवाणीति श्रुतिवचनम्। अनेनेत्येकवचनं जीवद्वयव्यावृत्त्यर्थम्।

—१९ **अर्हतीति**। नामरूपव्याकरणार्थमेकस्यैव प्रवेश उचित इति भावः। सिद्धान्तोपयोगिनं मन्त्रार्थमाहुः- **अर्थस्त्विति**।

—२० **प्रकारान्तरेणापीति**। एतस्मात्प्राक् तथेत्यध्याहार्यं तेन च यथा पूर्वाधिकरणेभिलषितभोगो भगवति साधितस्तथा जीवेन सहाभिलाषितभोगमस्मिन्नधिकरणे साधयतीति योजना।

—२१ इमं प्रकारं स्फुटयन्ति- **ऋतामिति**।

—२३ **स एवेति**। तदेवेति वक्तव्ये- शैत्यं हि यत्सा प्रकृतिर्जलस्य- इतिवद्विधेयप्राधान्यात्पुंल्लिङ्गत्वम्। **उपचारादिति**। उपचारो लक्षणा। राहोः शिर इतिवदभेदेपि भेदमारोप्य लक्षणा कृतेत्यर्थः। ननु लक्षणा न युक्तेत्यरुचेः प्रकारान्तरमाहुः- **अक्षरं वेति**। **परमपराध्योपरीति**। परव्योमात्मकसत्यलोकादुपरीत्यर्थः। परमे परार्ध इति सप्तमी वृक्षाग्रे श्येन इतिवदौपश्लेषिकसामीप्ये। तेन लक्षणाया अभावेप्यक्षरमेव लोक इत्यर्थः संपद्यते। **तत्रत्यानामिति**। अक्षरात्मकभगवल्लोकस्थानां ब्रह्मादीनामित्यर्थः।

—२४ छायाशब्दार्थमाहुः-**प्रतिसारूप्यमिति**। प्रतिकूलं सारूप्यं प्रतिसारूप्यं विरुद्धदिशि भासमानं सारूप्यं प्रतिबिम्बमित्यर्थः। **जीवब्रह्मणो-**

बिम्बप्रतिबिम्बभावस्यापि स्वीकारात् । अथवा स्वमतेन प्रतिसारूप्यं– भगवत्सरूपरूपवत्त्वम् ।

६०-१ ननु स्वमते जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावो नास्ति तथा च बद्धावस्थायां सादृश्यमपि नास्ति तेन कथमिदं संगच्छेतेत्यत आहुः– **तथात्वादिति** । तथात्वात्– भगवत्सदृशत्वात् । छायापेक्षयातपे विशेषमाहुः– **ततोपीति** । प्रकटानन्दत्वाद् ब्रह्म आतप इति योजना । आतपपदप्रयोगस्य प्रयोजनमाहुः– **परोक्षवाद इति** ।

–२ **तद्वादः**-परोक्षवादः । परोक्षवादो वेदोयमिति वचनात् । **त्रयाणामिति** । ब्रह्मविद इत्यनेन ज्ञानिनां पञ्चाग्नय इत्यनेनोपासकानां त्रिणाचिकेता इत्यनेन कर्मिणां चेति त्रयाणां ग्रहणम् । सूत्रस्थहिशब्दार्थमाहुः– **अत इति** । यत एवं मन्त्रार्थोतोयं गुहाप्रविष्टात्मरूपो हेतुर्ऋतपानकारिणो जीवपरमात्मत्वसाधने युक्त इति हिशब्दार्थः । प्रकरणं हेतुलिङ्गसाधकमिति नियमान्निर्णयस्य प्रकरणबहिर्भूतत्वात् ।

—३ **तद्दर्शनात्** । तयोर्जीवब्रह्मणोः प्रकरणस्य दर्शनात् ।

—९ **तुल्यत्वेनेति** । न जायते म्रियते वा विपश्चिदित्यनेन तुल्यत्वम् । **महाभोगमिति** । ब्रह्म च क्षत्रं चेत्यनेन । **स्वरूपमिति** । ऋतं पिबन्तावित्यनेन ।

—१० **सिद्धमिति** । जीवपरमात्मनिरूपणस्य प्रकरणबहिर्भूतत्वाभावादिदं ब्रह्मवाक्यं सिद्धमित्यर्थः ।

**सूत्रार्थः**– गुहा हृदयाकाशस्तत्र प्रविष्टौ जीवपरमात्मानावेव । तयोर्जीवब्रह्मणोः प्रकरणस्य दर्शनादिति ॥ ११ ॥

## विशेषणाच्च १।२।१२

—१२ पूर्वोक्तानि द्रष्टृद्रष्टव्यत्वप्रसन्नप्रसादार्हत्ववरणैकलभ्यत्ववरणीयत्वादीनि । नन्वेतस्योत्तरशेषत्वमुक्तं तेन पूर्वप्रकरणस्थानि विशेषणानि नोपयुज्यन्तेत आहुः– **अग्रिमं वेति** ।

—१४ **उभयोः**-जीवब्रह्मणोः । **सर्वव्यावृत्त्या**-शरीरादिसर्वजडव्यावृत्त्या ।

—१५ केचिन्मुण्डके श्वेताश्वतरोपनिषदि द्वा सुपर्णेति मन्त्रे चेदमधिकरणं योजयन्ति । तद्दूषयन्ति– **द्वेति** ।

—१६ **निःसंदिग्धमिति** । एवंच संदेहाभावाद्विचारस्यानुपयोगेनाधिकरणयोजना न युक्तेत्यर्थः ।

**सूत्रार्थः**– पूर्वोक्तविशेषणानि जीवब्रह्मणोरेव संगतानि । अतोपीदं ब्रह्मवाक्यमेवेति ॥ १२ ॥

इति चतुर्थाधिकरणम् ।

---

# अन्तर उपपत्तेः १।२।१३

—१९ पूर्वेषु त्रिष्वधिकरणेषु प्रथमे वैशेष्येण लौकिकभोगसाधकं रूपं परिहृतं द्वितीये चराचरग्रहणात्संपद्यमानदशास्थो भोगः साधितः। तृतीय उभयप्रवेशान्मोक्षदशास्थो भोगः साधितः। अधुना संसारदशायां किं वैशिष्ट्यमिति निर्णेतुमधिकरणमित्यधिकरणसंगतिः। छान्दोग्यषष्ठप्रपाठक उपकोसलविद्यायां श्रूयमाणं विषयवाक्यमाहुः— य एष इति। यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं न श्लिष्यते— इति फलम्। तत्र पापाश्लेषे दृष्टान्तमाह श्रुतिस्तद्यद्यपीति। यद्यप्यस्मिन्नक्षिपुरुषस्थाने घृतमुदकं वा धारया पातयति तद्वर्त्मनी अक्ष्ण आवरणभूते पक्ष्मणी एव गच्छति। ते एव च स्निग्धे भवतो न त्वक्षि। एवं च यत्स्थानस्येदृशं माहात्म्यं तस्य ज्ञाने पापसंश्लेषो न भवेदिति किं वक्तव्यमित्यर्थः।

—२२ संशयबीजमाहुः— विरुद्धार्थेति। दृश्यत इति अमृतमिति चेति दर्शनामृतत्वरूपविरुद्धार्थवाचकपदद्वयदर्शनादित्यर्थः। तत्सिद्ध्यर्थे— प्रकरणसमाप्तावुपसंहारासिद्ध्यर्थम्।

६१—१ अविरोधे हीति। अत्र तु दर्शनगुणो विरुद्धः। ननु त्वन्मतेप्यमृतत्वं विरुद्धमायातीत्यत आहुः— उपास्यत्वेनेति। अमृतत्वादयो ब्रह्मधर्माः।

—४ आर्षमिति। भक्त्यादिसाधनविशेषजन्यमित्यर्थः। भगवद्दर्शनं दक्षिणेक्षाणि भवतीत्यृषिभिरुक्तत्वादार्षम्। पश्यन्निति। कश्चिद्धीरः प्रत्यगात्मानमैक्षदिति श्रुतेः। सर्वत्र ब्रह्म पश्यन्निति योजना। बहिःसंनिधान इति। परकीयभूतं यच्चक्षुषस्तद्बहिःशब्देनोच्यते। तस्य चक्षुषः संनिधाने।

—५ उत्कृष्टत्वादिति। जलघृतासंश्लेषेण तस्य माहात्म्यबोधकत्वात्। प्रकरणमप्यस्य ब्रह्मवाक्यत्वे निर्णायकमित्याहुः— लोकमिति।

—६ महदुपक्रमादिति। महत आत्मविद्यागतिकथनस्यैवोपक्रमात्। ननु प्रकरणस्य श्रुत्यपेक्षया दुर्बलत्वं पूर्वतन्त्रे सिद्धं तेन प्रकरणेन दर्शनश्रुतिसंकोचस्यानुचितत्वात्प्रतिबिम्बपुरुष एवात्राङ्गीकार्य इत्यत आहुः— प्रतिबिम्बमात्रस्येति। सत्यम्। श्रुत्या बाधः प्रकरणेनानुचितः स्याद्यदि दर्शनविषयस्य प्रतिबिम्बस्य पुरुषत्वं नियतं भवेत्तदेव तु न नियतम्। अन्येषामपि प्रतिबिम्बसत्त्वात्। अतो विषयवशेन दर्शनश्रुतिसंकोचो गले पतितः। प्रकरणविरोधश्चाधिक इति न प्रतिबिम्बपुरुषोपासनाविधायकमिदं वाक्यं किंतु ब्रह्मवाक्यमेव।

सूत्रार्थः— अक्षिमध्ये दृश्यत इत्युक्तः परमात्मैव। तस्यैवार्षदर्शनोपपत्तेरिति॥ १३॥

## स्थानादिव्यपदेशाच्च १।२।१४

—९ **एतं**— अक्षिपुरुषम् । **संयद्वाम इति** । संयन्ति लीनानि भवन्ति वामानि कर्मफलानि यस्मिन्निति संयद्वामः ।

—१५ **स्थानादीति** । सर्वेषां कर्मफलानामाश्रय इत्यर्थः ।

—१६ **इन्द्रेति** । अयं च संवादश्छान्दोग्यदशमप्रपाठके ।

—१७ ननु तत्राप्यथ योयमित्यादिना छायापुरुषस्यैव कथनमित्यत आहुः– **आसुरमिति** । आसुरस्य विरोचनस्येदम् । य एषोक्षणीति दैवम् । यतस्तदिन्द्रस्येत्यर्थः ।

**सूत्रार्थः**—एतं संयद्वामेति श्रुत्या तमेवाक्षिपुरुषं निर्दिश्य स्थानादयो व्यपदिश्यन्तेतोपि ब्रह्मवाक्यमेवैतदिति ॥ १४ ॥

## सुखविशिष्टाभिधानादेव च १।२।१५

६२–२ **सदादिभिरिति** । आनन्दसहभूतैः सच्चिदादिभिरित्यर्थः ।

**सूत्रार्थः**—अमृतपदेन सुखविशिष्टमेवाभिधीयतेतो वाक्यमिदं ब्रह्मपरमेवेति ॥ १५ ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ।१।२।१६

—५ **निर्णीय**—सच्चिदानन्दरूपाभिधानत्वेन ब्रह्मवाक्यत्वं निर्णीय । **फलत इति** । फलमपि तात्पर्यलिङ्गमिति भावः । फलं तु न पुनरावर्तत इति ।

—७ फलबोधिकां श्रुतिमाहुः—**अथेति** । अथशब्दः प्रतिज्ञायाम् । एतादृशं फलं भवतीति प्रतिज्ञा । **अस्मिन्**–अक्षिपुरुषविदि । निमित्तार्थे सप्तमी । अक्षिपुरुषोपासके मृते तन्निमित्तमित्यर्थः । **शव्यं**–शवसंबन्धि कर्म प्रेतसंस्कारः । **यदि च नेति** । पुत्रादयो न कुर्वन्तीत्यर्थः ।

—८ **तत्पुरुषः**— ब्रह्मसंबन्धी पुरुषः । **अमानवः**— मनुसृष्टावनुत्पन्नः ।

—९ **ब्रह्मपथः**—प्राप्यब्रह्ममार्गः

—१० **आवर्तं**—आवृत्तिजनकं प्रवाहम् ।

**सूत्रार्थः**—विज्ञातब्रह्मविद्येन प्राप्यमाणैव देवयानगतिरनेनाक्षिपुरुषोपासकेन लभ्यत इति कथनादप्येतद्वाक्यं ब्रह्मवाक्यमेवेति ॥ १६ ॥

## अनवस्थितेरसंभवाच्च नेतरः १।२।१७

—१३ **विचारयति**–सिद्धान्तदार्ढ्यार्थं प्रकारान्तरेण पुनर्विचारयति ।

—१५ **व्यपदेशिवद्भावेनेति** । विशिष्टोपदेशो व्यपदेशो मुख्यो व्यवहारः स यस्यास्तीति व्यपदेशी तत्सदृशो भावो व्यपदेशिवद्भावः । अयंच लोक-

सिद्धो न्यायः। यथैकपुत्रो देवदत्तस्तमेव पुत्रमुद्दिश्य वदति-अयमेव मे ज्येष्ठः कनिष्ठो मध्यम इति। एवममुख्ये मुख्यव्यवहारकल्पनया सर्वोपपत्तयः सेत्स्यन्तीति भावः।

—१६ उपदेशकेति। य एष उपदेशकर्त्रा बोध्यते ततश्च प्रतिबिम्बं वक्तृनेत्रगतमेवोपदिष्टं स्यात्ततश्च स्वनेत्रगतं प्रतिबिम्बं स्वयं द्रष्टुं न शक्यते। ततश्चाचार्येणायोग्यमुक्तं स्यात्तेन चाचार्यस्यानाप्तत्वं भवेत्। आप्तस्तु यथार्थवक्तेत्याप्तलक्षणाभावात्। एवं चाचार्यप्रतिपादितप्रतिबिम्बपुरुषस्यास्थिरत्वमिति भावः।

—१७ यदा चाचार्येण शिष्यं प्रत्येवमुच्यते यन्मच्चक्षुषि त्वया दृश्यते तदुपास्स्वेति तदापि दूषणान्तरमाहुः—द्रष्टुरिति। यदा द्रष्टा शिष्यः स्थानान्तरं गच्छति तदा प्रतिबिम्बपुरुषस्यापगमादस्थिरत्वमिति भावः।

—१८ ननूपदेशकाले शिष्येण साकं द्वितीयपुरुषो भवेत्ततश्च द्रष्टुः शिष्यस्यापगमेपि प्रतिबिम्बं स्थिरं भवेदत आहुः-सद्वितीये त्विति। सद्वितीये द्रष्टरि प्रतिबिम्बमपि सद्वितीयं भवेदित्यर्थः। तथाचोपदेशकाले द्वितीयपुरुषस्यावश्यकत्व आचार्यचक्षुषि प्रतिबिम्बद्वयापत्त्या श्रुतिगतं पुरुषो दृश्यत इत्येकवचनमनुपपन्नं भवेदिति भावः। दूषणान्तरमाहुः-उपसनाकाले चेति।

—१९ ननु यागे श्रौतविध्यन्यथानुपपत्त्या सपत्नीकत्वमङ्गीक्रियते तद्वदत्रापि प्रतिबिम्बोपासनाविध्यन्यथानुपपत्त्या सद्वितीयत्वं स्वीकार्यमित्याहुः-सद्वितीयेति। श्रवणमननयोरिति। प्रतिबिम्बं साद्वितीयं मा भवत्वेतदर्थं श्रवण एकस्यैव शिष्यस्य स्थितिरपेक्षिता मनने च साद्वितीयत्वमेवंच श्रवणमननयोर्भिन्नविषयत्वेन वैरूप्यादस्थिरत्वमित्यर्थः। ननु गुरुणोपदेशं कृत्वोपासितुः पुरतः स्थेयं नियमेनेत्यत आहुः-वक्तुरेवेति।

—२० गुरोर्निर्बन्धो दुःखजननादत्यन्तासंगत इत्यत आहुः—सुतरामिति। चित्तवृत्तिनिरोधलक्षणो योगोप्युपासनाङ्गं तादृशयोगश्च नेत्रार्धमीलनं विना न संभवति। अतस्तदर्थं नेत्रार्धमीलनं कर्तव्यं ततश्च प्रतिबिम्ब एव न संभवेदित्यर्थः।

—२१ एवमनवस्थितेरिति हेतुं व्याख्यायासंभवादिति हेतुं व्युत्पादयन्ति-किंचेति। तत्र-मनोव्यापारे। असंभव एवेति। चक्षुषैव प्रतिबिम्बो दृश्यते नतु मनसा तेन प्रतिबिम्बदर्शनासंभव इत्यर्थः। एवंच प्रतिबिम्बसामीप्याभाव उपासनाया असंभव इति भावः। तादृशधर्मवत्त्वमिति। आत्मत्वामृतत्वादिधर्मवत्त्वं च प्रतिबिम्बस्य न संभवेत्।

—२२ आसुरत्वं चेति। यथा विरोचनस्योदशरावगतप्रतिबिम्बज्ञाने-नासुरत्वं तथा शिष्यस्याप्यक्षिपुरुषोपासनेन भवेत्।

--२३ सहज इति। स्वाभाविको नतु कस्यचित्पुरुषस्य प्रतिबिम्बभूतः कृत्रिम इत्यर्थः।

—२४ ननु व्यापकस्य भगवतः सूक्ष्मे स्थाने कथं स्थितिरित्यत आहुः-व्यापकेति। सर्वतः पाणिपादान्तत्वेन व्यापकस्यापि भगवतः सूक्ष्मे स्थाने स्थितिर्भवतीत्यध्याहारपूर्वं योज्यम्।

--२४ आनन्दमूर्तिरिति। बहु स्यामितीच्छयैव भगवान् सर्वत्र व्याप्नोति। एवंच स्वल्पस्थानास्थित्याऽपि तस्यानन्द इत्यर्थः। भगवानेवेति। तादृशो भगवानेव नतु प्रतिबिम्बपुरुषः। ननु सगुणमुपाधिविशिष्टं ब्रह्म सूक्ष्मे स्थाने तिष्ठतीति समाधानं क्रियत इत्यत आहुः-ब्रह्मवादे त्विति। सर्वं खल्विदं ब्रह्मेति श्रुत्या ब्रह्मैव सर्वमिति वादो ब्रह्मवादः। अस्मिन्वादे निर्गुणस्यैव भगवतः सर्वतः पाणिपादान्तत्वेन सर्वत्र स्थितिर्नतु सगुणनिर्गुण-ब्रह्मकल्पनया सगुणवाक्यानि सगुणब्रह्मपराणि निर्गुणवाक्यानि निर्गुणब्रह्म-पराणीति मर्यादा। द्विधा ब्रह्मकल्पनं मायावादेस्ति।

—२५ ननु मायावादः कथमुत्पन्न इत्यत आहुः-सगुणवाद इति। ब्रह्म-वादाज्ञानादिति। प्रवृत्त इति शेषः। तस्य च जघन्याधिकारिणः प्रति प्रवृत्तत्वादस्माभिर्व्यासमतानुवर्तिभिरनादरणीयत्वमिति भावः।

सूत्रार्थः-इतरच्छायापुरुषो विषयवाक्यविषयो न। अस्थिरत्वात्। यत्रो-पासनं कर्तव्यं तत्र मनस्यसंभवाच्चेति॥ १७॥

इति पञ्चममधिकरणम्।

---

## अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् १।२।१८

६३-३ पूर्वाधिकरणद्वयेन्तर्गुहास्थिते पुरुषेक्षिपुरुषेच भोगवैलक्षण्य-साधकं वैशिष्ट्यमुक्तम्। अतः परं तदेव वैशिष्ट्यं सृष्टिदशायां सर्वहृदय-देशवर्तिनि भगवत्यस्तीति बोधयितुमिदमधिकरणमित्यधिकरणसंगतिः।अथवा पूर्वाधिकरणे योन्तर्याम्यक्षिपुरुष उक्तः स एवाधिदैवादिष्वस्तीत्यनेनाधि-करणेन बोध्यत इत्यधिकरणसंगतिः। बृहदारण्यके वाजसनेयिशाखायामन्त-र्यामिब्राह्मण इदं विषयवाक्यम्। य इमं चेति।

—७ एवं संशयास्पदीभूतं वाक्यमुक्त्वा संशयाकारं तद्बीजं चाहुः—अत्र संशय इति।

—९ नन्वन्तर्यामिणः पृथिव्याद्यन्तर्वर्तित्वं कथितमन्तर्वर्तिनश्च ब्रह्मत्वमन्तस्तद्धर्मोपदेशादित्यत्र साधितं तेन च संदेह एव न संभवति। अतः किमर्थमधिकरणारम्भ इत्याकाङ्क्षायामभ्युपगमपूर्वकं संदेहं समर्थयन्ति–सामान्यत इति।

—१० तथा शब्दभेदात्–अधिदैवादिशब्दभेदात्। एवं संदेहबीजमुक्त्वा संदेहाकारमाहुः—अधिदैवादीति।

—११ षड्भेदा इति। अधिदैवानां दश भेदाः। अध्यात्मानां दश-भेदाश्चत्वारोधिलोकादय एवं चतुर्विंशतिर्भेदाः षण्णामेवावान्तरभेदाः। एते सर्वेप्याधारधर्माः। षण्णामाधारधर्मत्वं कथमिति चेत्तदुच्यते। अधिदैवमित्यत्र देवानां समूहो दैवम्। दैव इत्यधिदैवमित्येवमधिकरणरूपविभक्त्यर्थकाव्ययीभावनिष्पन्ना एते शब्दा योगेन तांस्तानाधारानभिदधति। एवंच तैरधिदैवादिभिन्ना आधारा बोध्यन्ते तथा चाधारधर्मा अधिदैवत्वादयो लक्षणया भगवति शब्दतः संनिहितेन्तर्यामिणि बोध्यन्ते। नन्वाधारस्य धर्मत्वं कथमिति चेन्न पूर्वोत्तरमीमांसयोः पदानां धर्मे शक्तिरिति सिद्धान्तात्। एवमेका कोटिः। कोट्यन्तरमाहुः—अथवेति। तत्तदधिकारे वर्तमाना ये देवास्तेषां समूहो दैवम्। तत्तदधिकाराभिमानी जीवसमुदायः। तत्र वर्तमाना या अधिदैवादिसंज्ञास्ताद्विशिष्टाः। अन्येभिमानिनः कल्पनीया यद्धर्मा भगवत्युपचाराद्भवेयुरित्यपरा कोटिः। एवंचास्मिन्वाक्ये प्रतिपाद्योधिदैवत्वाद्युपचरितोन्तर्यामी वा ताद्विशिष्टा अन्येभिमानिनो जीवा वेति संशयाकार इत्यर्थः।

—१२ अभिमानिपरत्वपक्षमादृत्य पूर्वपक्षमाह–तत्रेति। तत्तत्पृथिव्यादिकमधिकरणमधिकृत्य तत्तदधिकारं प्राप्य यो जीवोहमदकाधिकारीत्यभिमानेन वर्तते तस्य जीवस्य योगवृत्त्या वाचकस्तादृशोधिदैवादिशब्दप्रयोगः।

—१३ एवमधिदैवादिशब्दानां यौगिकत्वं प्रदर्श्याधिलोकशब्दस्य यौगिकत्वे वैदिकप्रसिद्धिमाहुः–अधिलोकेति। शाखान्तर इति। तैत्तिरीयोपनिषदि शिक्षाध्याये। अन्यत्रैव–लोकादिष्वधिकरणेषु पञ्चसु। यौगिकाः–योगवृत्त्या वाचकाः। न भगवतीति। एवंच यौगिकशब्दानामौपचारिकत्वाभावाद्भगवत्युपचारो न संभवतीति भावः।

—१५ ननु मास्तु भगवति वृत्तिरन्येष्वभिमानिषु सा कुतो नेत्यत आहुः–नापीति। कल्पनीयाः–संज्ञित्वेन कल्पनीयाः।

—१६ तत्र बाधकमाहुः–कल्प्यमानस्येति । बहूनां कल्पनापेक्षयैकस्यैव कल्पनं वरमिति न्यायेन सर्वानुस्यूतमेकं कल्पनीयं तच्च भगवद्व्यतिरिक्तं न भवत्यतो ब्रह्मैव कल्पनीयं तस्य चासंभव एव यतस्तत्र यौगिकशब्दानामुपचारेण प्रयोगाभाव इत्यर्थः ।

—१८ ननु यं पृथिवी न वेदेत्यज्ञानकथनेन निन्दैव प्रतीयते न स्तुतिरित्यत आहुः—अज्ञानं चेति । तैत्तिरीयशाखायां द्वितीयाष्टके ब्राह्मणेन्तिम प्रपाठक उक्तेषु । सो अङ्ग वेद यदि वा न वेद–इत्यादिष्वसंदेहेपि यथा कल्पनया संदेहोक्तिस्तथा ज्ञानेज्ञानकल्पनामिति कृत्वा श्रुत्युपपत्तिः कर्तव्येत्यर्थः ।

—१९ ननु ज्ञानेज्ञानं कुत्राप्यदृष्टं कथं कल्पनीयमतोरुचेर्हेत्वन्तरमाहुः–देहोसव इत्यादि । षष्ठस्कन्धे दक्षस्तुतावेवमुच्यते । श्लोकः–

देहोसवोक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत् ।
सर्वं पुमान्वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनन्तमीडे ॥

आसवः–प्राणाः । मनवः–अन्तःकरणानि । निखिलश्लोकार्थ एवम् । देहप्राणेन्द्रियान्तःकरणभूतमात्रा आत्मानं दृश्यं स्वस्वरूपभूतं तथान्यमिन्द्रियवर्गदेवतारूपं च न विदुः । परं पुमान् जीवो देहादिकमेतत्सर्वं सत्त्वादिगुणांश्च वेद । एतादृशः पूर्वोक्तसर्वज्ञोपि जीवो यमितोप्यधिकं सर्वज्ञं न वेद तमनन्तं भगवन्तमहं स्तौमि । अत्र देहादीनां जडत्वाज्ज्ञानासंभव एव । एवंच तज्ज्ञाननिषेधः शशशृङ्गज्ञाननिषेधवन्नित्यानुवादो यथा तथात्रापि पृथिव्यादिपदैर्जडपरामर्शाज्जडानामेषां ज्ञानं नेति नित्यानुवादो बोध्यः । एवं चानयोपपत्त्या निर्वाहे न पूर्वोक्तदोषावकाश इत्यर्थः । नन्वेवं क्लिष्टकल्पनापेक्षयाधिदैवादयो भगवत्संज्ञा एवेति कुतो न स्वीक्रियन्त इत्यत आहुः–नत्विति । निषिद्धा–निकृष्टा । एवंच संज्ञायां निकृष्टत्वेन पूर्वोक्तकल्पनैव वरमिति भावः ।

—२१ तादृश इति । एक एवेति सर्वत्रैकत्वस्य भावो भगवत्येव संभवति । नान्यत्र । अन्येषां नानात्वादिति भावः ।

—२३ तेषां–पृथिव्यादीनां तदभिमानिनां च । धर्माः–भूतधारकत्वादयः। तत्प्रयुक्तिबोधका इति । तत्प्रयुक्तेः कार्यव्यापारावेशस्य बोधका इत्यर्थः । तत्प्रयुक्तबोधका इति वा पाठः । अस्मिन्पक्षेयमर्थः । येधिदैवत्वादयो धर्मास्ते सर्वेपि भगवत्प्रयुक्ता न तु स्वत इति बोधकाः सन्तो भगवति व्यपदिश्यन्ते व्यवह्रियन्ते । नतु भगवत इयमधिदैवादिसंज्ञेत्यर्थः ।

६४–१ एतस्यैव व्याख्यानं–सर्वेषामिति । सामर्थ्यमिति । चोप्यर्थे । सामर्थ्यमपीत्यर्थः ।

—२ **एवं सतीति**। अन्तर्यामिणो ब्रह्मत्वे सिद्धे सति । **अन्यत्सर्वमिति**। नान्योतोस्ति द्रष्टेत्यादि सर्वं ब्रह्मवाक्यमित्यर्थः । अत्र केचिदन्यथैवाधिकरणं रचयन्ति तथाहि-अन्तर्यामी अधिदैवाद्यभिमानी देवतात्मा परमात्मा वेति संशयः। देवतात्मेति पूर्वपक्षः । अमृतत्वादीनां निर्देशात्परमात्मेति सिद्धान्तः ।

—३ एवंभूतमधिकरणं दूषयन्ति-**अन्यथेति** । **गतार्थत्वादिति** । तत्राप्यन्तस्तद्धर्माधिकरणेमृतत्वादिधर्माणां निर्देशात्तत्तुल्यत्वादयुक्तेत्यर्थः ।

**सूत्रार्थः**-अन्तर्याम्यधिदैवादिषु भगवानेव । पृथिव्यादीनां तदभिमानिनां च ये धर्मा भूतधारकत्वादयस्तदधिष्ठातृत्वादयश्च तेषां नियमयितृत्वरूपेण विशेषतो भगवति व्यपदेशादिति ॥ १८ ॥

## न च स्मार्तमतद्धर्माभिलापात् १।२।१९

—६ **ब्रह्मवादे**-सर्वं खल्विदं ब्रह्मेति श्रुतिसिद्धे ब्रह्मवादे। **न प्रसिद्ध इति**। कार्यरूपेण कारणरूपेण वा न प्रसिद्धः। तत्र च कारणरूपेण ब्रह्म प्रसिद्धं कार्यरूपेण जडजीवावुभौ प्रसिद्धौ ।

—७ **सांख्यपरिकल्पितस्येति** । सांख्यमते सगुणं ब्रह्मान्तर्यामीति प्रसिद्धम्। तत्स्वमते स्वीकर्तुं न शक्यते सगुणत्वात्तस्य ।

—८ **भवेदिति**। सगुणब्रह्मत्वेङ्गीकृते पुरुषार्थ एव न सेत्स्यतीत्यर्थः । **प्रकृतिधर्मारूढं**-सत्त्वादयः प्रकृतिधर्मास्तदवच्छिन्नम् । **मन्यन्त इति** । वेदान्तिन इति शेषः । मन्यन्ते केपि इति क्वचित्पाठस्तत्रापि केपीत्यस्य वेदान्तिन इत्यर्थो ग्राह्यः ।

—९ वेदान्तिनस्तथा कुतो न मन्यन्त इत्याहुः-**तादृशस्येति** । सगुणस्येत्यर्थः । **अभावात्**-उपनिषत्स्वनुपलम्भात् । एवंचोपनिषत्सु सगुणेश्वरस्याभावेन श्रुतिविरोधान्न कोपि पुरुषार्थः सिध्येत् ।

—९ नन्वन्तर्यामि ब्राह्मणं तर्हि किंपरमित्याहुः-**पूर्वपक्षन्यायेनेति** । अतः पूर्वपक्षन्यायेनान्तर्यामिब्राह्मणस्य प्रकृत्याभिमानिस्तावकत्वं सांख्यमतस्य श्रौतत्वं वाङ्गीकार्यमिति भावः।

—१२ स्मार्तमिति नपुंसकलिङ्गघटितविशेषणानुकूलं विशेष्यमाहुः-**अन्तर्यामिरूपमिति** ।

—१३ अतद्धर्माभिलापादिति हेतुं द्विधा व्याकुर्वन्ति-**तद्धर्माणामित्यादि**।

—१४ **तत्कार्यमिति**। सत्त्वरजस्तमसां कार्यं सर्वोपि प्रपञ्चः। के ते विरुद्धधर्मा इत्याहुः-**तद्विरुद्धाश्चेति**।

**सूत्रार्थः**-सांख्यमतप्रसिद्धप्रधानविशिष्टमन्तर्यामिरूपमत्र भवितुं नार्हति प्रधानधर्माणामकथनात्तद्विरुद्धधर्माणां कथनाच्चेति ॥ १९ ॥

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते १।२।२०

—१९ **उक्तन्यायेन**-संवर्गविद्यान्यायेन। तथाहि ब्रह्मत्वेन जीवोपासना संवर्गविद्यायामस्ति तेन सा यथा ब्रह्मविद्याङ्गमेवमन्तर्यामिब्राह्मणे देवतास्तुतिरस्त्यतस्तदपि ब्रह्मविद्याङ्गमेवं जीवोऽन्तर्याम्यस्त्वित्यर्थः।

—२१ **अनुवर्तत इति**। न च स्मार्तमित्यतो नेत्यस्यानुवृत्तिः।

—२३ **ततोऽपि**-अभिमानिदेवतातोऽपि। **निःसंदेहार्थमिति**। विज्ञानपदेन बुद्धिर्गृह्यत इति संशयं निराकर्तुमित्यर्थः।

६५-३ नन्वतति व्याप्नोतीति व्युत्पत्त्या दिगाकाशाद्यन्यतमः कश्चिदात्मशब्दवाच्यः स्यादत आहुः-**अन्येषामिति**।

**सूत्रार्थः**-शारीरो जीवोऽन्तर्यामिब्राह्मणे न प्रतिपाद्यः। यत उभयेऽपि शाखिनः काण्वा माध्यन्दिनाश्चेमं जीवमन्तर्यामिभिन्नतया पठन्तीति ॥ २० ॥

इति षष्ठमधिकरणम्।

---

## अदृश्यत्वादिगुणको धर्मोक्तेः १।२।२१

—७ पूर्वाधिकरणविषयवाक्येऽदृष्टो द्रष्टेत्युक्तं तत्कथमित्याकाङ्क्षां पूरयितुमदृश्याधिकरणमित्यधिकरणसंगतिः।

—८ **पृष्ट इति**। शौनकेनेति शेषः। **आहेति**। अङ्गिरा इति शेषः। **तत्र**-उत्तरे। **परा चेति**। एवंच परापरे द्वे विद्ये सर्वविज्ञानार्थमिति ज्ञेयम्।

—१० तत्र कस्मिन्नंशे संदेह इत्यतो विवृण्वन्ति-**तत्रेत्यादि**।

—११ संदेहबीजमाहुः-**सांख्यधर्मेति**। सांख्यधर्माभिलापमाहुः-**अथेत्यादि सृष्टिमाहेत्यन्तम्**।

—१२ **अदृश्यं**-ज्ञानेन्द्रियैः। **अग्राह्यं**-कर्मेन्द्रियैः। **अगोत्रं**-कुलरहितम्। **अग्रे**-द्वितीयमुण्डके। प्रथममुण्डकेऽदृश्यत्वादिगुणकस्य भूतयोनित्वं कथितं तादृशमेव प्रधानं सांख्यैरङ्गीक्रियत एवंचोभयत्रापि सांख्यमतं भासत इति संदेहबीजमित्यर्थः।

—१८ पूर्वपक्षमाह-**तत्रेति**। मुण्डकत्रय एकमेव मतं प्रतिपादितं तेन वाक्यानामितरेतरसमाकाङ्क्षत्वैकप्रकरणत्वात्सर्वस्यैकवाक्यता वक्तव्येत्यर्थः।

ननु सा तर्ह्येकवाक्यतोपक्रमस्यासंजातविरोधित्वेन प्रबलत्वाद्ब्रह्मवाक्यत्वेनैव भवतु-इत्यत आहुः-**तत्राक्षरेत्यादि**। **प्रतीयत इति**। अक्षरात्परतः पर इति वाक्ये। **सृष्टिः**-एतस्माज्जायते प्राण इत्यादिरूपा सृष्टिः।

—१९ **न संगच्छत इति**। बाधकोपपत्तेरुपक्रमापेक्षया बलीयस्त्वादिति भावः।

—२१ ननु सांख्यमते केवलप्रकृतेरेव स्रष्टृत्व न तु पुरुषस्य तर्हि कथं तन्मतसिद्धिरित्यत आहुः-**तिरोहितेति**। सच्चिदानन्दात्मकरूपस्य विषयवाक्येनुक्तत्वेनेत्यर्थः।

—२२ ननु मुण्डके ब्रह्मविद्येति पदं वर्तते तस्य का गतिरित्यत आहुः-**ब्रह्मविद्येति**। ब्रह्मपदं वेदवाचकमिति भावः। ननु विद्ययोः परापरत्वेन विभागोत्रोपानिषदि कथ्यते तेनेयं वेदविद्या न संभवतीत्यत आहुः-**उपचाराद्वेति**। लक्षणया वेत्यर्थः।

—२४ **ब्रह्मविज्ञानेनैवेति**। एवकार इतरयोगव्यवच्छेदकः। तेन प्रधानस्य व्यवच्छेदः।

—२५ **तत एव**-ब्रह्मप्रतिपादकत्वादेव। नन्वेवं चेदेकविज्ञानेनेत्यसंगतम्। विद्यायामक्षरपुरुषयोरपि कथनादित्यत आहुः-**अक्षरस्यापीति**।

६६-२ विश्वोत्पत्तिजनकत्वं ब्रह्मधर्मस्तत्र युक्तिमाहुः-**इयं चेति**।

—३ नन्वेवमक्षरात्परतः पर इति परापरविभागस्यासंगतिरत आहुः-**ईषदिति**। एवं चावस्थाभेदमादायेदं भेदकथनं वस्तुतस्त्वभेद एवातो न ब्रह्मवादस्य व्याघात इत्यर्थः। एतेनाक्षरं प्रकृतिरिति सांख्यमतं निरस्तं वेदितव्यम्।

—४ ननु पूर्वं त्ववस्थाभेदो नाङ्गीकृतोधुनात्राङ्गीक्रियते। एवंच प्रतिज्ञाभेदात्मकं निग्रहस्थानमापतेदित्यत आहुः-**ब्रह्मविदिति**। एवंच पूर्वमप्यवस्थाभेदोङ्गीकृतस्तेन न प्रतिज्ञाभेद इत्यर्थः।

—५ **निर्णयादिति**। अयं च निर्णय आनन्दमयस्य द्वितीयवर्णक उपपादितः।

**सूत्रार्थः**-अदृश्यादिगुणकः परमात्मैव। अक्षरात्संभवतीह विश्वमिति परमात्मधर्माणां कथनादिति॥ २१॥

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ १।२।२२

—८ **पूर्वपक्षन्यायेनेति**। अक्षरशब्देन प्रधानं ग्राह्यमिति पूर्वपक्षन्यायः। **ब्रह्मविद्यैवेति**। स्मृतेरेवेयं संज्ञास्त्वित्यर्थः। नन्वेवं संज्ञायामङ्गीकृतायां

कास्मिन् विज्ञात इत्यस्य कोर्थ इति चेत्कस्मिन्नित्यस्य कस्मिन्मत इत्यर्थे सति सांख्यमते विज्ञाते सर्वज्ञत्वमित्यर्थ इति गृहाण ।

—९ ननु प्रकृतेर्ब्रह्मपदवाच्यता कुत्र कथिता येन स्मृतेर्ब्रह्मविद्यात्वं भवेदित्यत आहुः–**द्वे ब्रह्मणी इति** ।

—१२ हेतुद्वये प्रथमं हेतुं व्युत्पादयन्ति–**अदृश्यत्वाद्य इति** ।

—१३ **सर्वस्यापि**–घटपटादेः ।

—१४ ननु प्रपञ्चो ब्रह्मरूपस्ततस्तद्दर्शनेन ब्रह्मदर्शनं भविष्यतीत्यदृश्यत्वं ब्रह्मणि कथमत आहुः–**ब्रह्मवाद इति** । ब्रह्मणो विरुद्धधर्माश्रयत्वं त्वस्माभिर्बहुश उक्तम् । ननु भवद्भिर्यथा ब्रह्मणि विरुद्धधर्माश्रयत्वमङ्गीक्रियते तथैवास्माभिः प्रधानेपि तत्स्वीक्रियत इत्यत आहुः–**नहीति** । प्रधानमिति शेषः । सांख्याः प्रधानस्य नित्यत्वादिगुणानाङ्गीकुर्वन्तीति भावः ।

—१५ ननु तदपि स्वीक्रियत इत्यत आहुः–**सर्वब्रह्मेति** ।

—१६ एवंच सर्वेषां ब्रह्मधर्माणां स्वीकारे प्रधानमिति ब्रह्मणो नामान्तरं भवेन्नत्वतिरिक्तः पदार्थ एवं प्रतिज्ञासंन्यासरूपं निग्रहस्थानम् । अयं भावः । पूर्वं प्रधानमस्तीति सांख्यैः प्रतिज्ञा कृता ततः परं तत्प्रधानं ब्रह्मण एव नामेति प्रतिज्ञात्यागश्च कृतः । एवंच प्रतिज्ञात्यागरूपनिग्रहस्थानेन पराजितास्ते ब्रह्मवादिभिरित्याहुः–**जितमिति** । अन्यं विशेषणभेदमाहुः–**य इति** ।

—१७ ननु प्रकृतिविशेषणाभावेपि पुरुषविशेषणानीमानि भवन्त्वित्यत आहुः–**व्यवधानाच्चेति** । प्रथममुण्डकेदृश्यत्वादयो धर्मा द्वितीयमुण्डके पुरुषनिरूपणमिति व्यवधानम् ।

—१८ पुनर्विशेषणान्तरमाहुः–**अक्षरेति** । एवं चाक्षरनिरूपणे पुरुषविशेषणदर्शनादक्षरात्मकः पुरुषोभिप्रेतः न प्रधानमिति भावः ।

—२० पुरुषविशेषणानां सांख्याङ्गीकृतपुरुषे सत्त्वे बाधकमाहुः–**नहीति** । **पुरुषस्य**-सांख्याभिमतपुरुषस्य ।

—२१ ननु बहुषु पुरुषेषु कश्चित्तादृशोप्यङ्गीक्रियतामित्यत आहुः–**नहीति** । क्वचित्तन्मतेपि पुरुषभेदोङ्गीक्रियत इत्यत आहुः–**जीवब्रह्मवदिति** । सांख्यमते पुरुषभेदो यद्यप्यङ्गीक्रियते तथापि तेषां समानत्वमेव नतु जीवब्रह्मवन्नियाम्यानियामकभाव इति भावः । ननु दिव्यत्वमलौकिकत्वमेकत्वं जात्यपेक्षयेत्यादय उपपत्तयस्तन्मतेपि कथंचित्संभवेयुरत आहुः–**नचेति** ।

—२२ **नहीति** । महदादिक्रमेण सांख्यमते सृष्टिर्नतु तस्माज्जायते प्राण इत्यादिक्रमेणेति भावः ।

—२४ **व्यपदेशः**–संज्ञा ।

—२६ अन्त इति। एवं चादौ मध्ये तथा चान्ते ब्रह्मविद्यामित्येव संज्ञाव्यवहारो न सांख्यविद्यामिति।

—२७ चकारसूचितं हेतुमाहुः-ब्रह्मेति। एवंच वेदाध्यापनयोग्यतायां स्मृत्यध्यापनं न योग्यमित्यर्थः।

**सूत्रार्थः**-इतरौ प्रकृतिपुरुषौ विषयवाक्यार्थौ न। विशेषणभेदात्। यः सर्वज्ञ इत्यादिना प्रदर्शितानि सर्वज्ञादिविशेषणानि प्रकृतेर्न संभवन्ति। यद्यपि पुरुषस्य संभवन्ति तथापि न सांख्यकल्पितपुरुषस्य। तथा ब्रह्मविद्यैवैषेति व्यपदेशस्य सांख्यमतेसंभवादिति॥ २२॥

## रूपोपन्यासाच्च १।२।२३

६७-३ सूत्रविभागादिति। सूत्रकृता विशेषणभेदव्यपदेशरूपोपन्यासेभ्य इति नैकं सूत्रं प्रणीतं यतो रूपोपन्यासरूपा योपपत्तिः सा प्रधानभूतोपपत्तिर्विशेषणभेदव्यपदेशरूपा तु गौणीति शिष्येभ्यो दर्शनीयम्।

—४ चकारेणेति। सांख्यमते गृहीते सत्येकोहं बहु स्यां प्रजायेयेति श्रुतेर्विरोधः। यतस्तन्मते प्रकृतिसकाशात्सृष्टेर्वर्णनम्, सर्ववेदान्तवाक्यैकवाक्यताभङ्गश्चेति दोषद्वयं संभवेद्ब्रह्मवादे तु नेति भावः।

**सूत्रार्थः**-अग्निर्मूर्धेत्यादिना यद्रूपं कथ्यते तद्विश्वकायस्यैव न तु प्रकृतिपुरुषयोरन्यतरस्येत्यतोपि विषयवाक्ये ब्रह्मैव ग्राह्यं न प्रकृतिपुरुषाविति॥ २३॥

इति सप्तममधिकरणम्।

---

## वैश्वानरः साधारणशब्दविशेषात् १।२।२४

—९ पूर्वाधिकरणैः संगतिमाहुः-अधिकरणत्रयेणेति। अधिकरणत्रयेण-चराचराद्यधिकरणत्रयेण।

—११ को न आत्मेति। छान्दोग्ये सप्तमप्रपाठक इदं विषयवाक्यम्। प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलनामानः पञ्चापि श्रुताध्ययनसंपन्ना ऋषयः क्वचित्प्रदेशे समेत्य मीमांसां चक्रुः। को न आत्मा किं ब्रह्मेति। अत्रास्मदुपास्य आत्मा कः किं ब्रह्म तदेकदेशो वेति संशयो विचारबीजम्। मीमांसाफलं त्वग्रे स्पष्टमेव। ततो विचारयमाणास्ते पञ्चापि निश्चयमलब्ध्वा वैश्वानरोपासकमन्यमुद्दालकनामानं गताः सोपि तद्विषयेनिश्चितस्तैः सह केकयराजसमीपं गतः। ततो राज्ञा प्रलोभिता अपि ते धनादिकं न जगृहुः। आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहीत्युक्तवन्तः। तदा राजा तदधिकारपरीक्षार्थं प्रातर्वः प्रतिवक्तास्मीत्युक्त्वान्तःपुरं प्रविष्टः।

ततो द्वितीयदिने समिद्धारपाणीन् स्वसमीपमागतांस्तान् ऋषीन्दृष्ट्वा राजा मनस्यचिन्तयत् । यदेते धनविद्याप्रतिष्ठावन्तोपि स्वाभिमानं परित्यज्य जिज्ञासवः सन्त एवं समागता अतोधिकारिणः सन्तीति । ततः प्रतिभापरीक्षणाय प्रत्येकं पप्रच्छ । कं त्वमात्मानमुपास्स इति तदा तैः क्रमेण द्युसूर्यादयः स्वस्वोपास्यात्मत्वेनोक्ताः । तत्र एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्स इत्यादिना द्युसूर्यवाय्वाकाशवारिपृथिवीनां क्रमेण सुतेजस्त्वविश्वरूपत्वपृथग्वर्त्मात्मत्वबहुलत्वरयित्वप्रतिष्ठात्वगुणयोगं मूर्धविपातान्धत्वप्राणोत्क्रमणदेहविशरणबस्तिभेदपादविम्लानिकथनरूपयैकैकोपासननिन्दया च मूर्धचक्षुःप्राणदेहमध्यभागबस्तिपादभावमुपदिश्याग्र आम्नायत इति–उपदिश्याम्नायत इत्यन्तग्रन्थस्य तात्पर्यम् ।

—१३ **यस्त्वेतमिति** । एतं भवत्पृष्टम् । एवमुक्तप्रकारेणावयवविशिष्टं प्रादेशमात्रं प्रादेशपरिमाणम् । मूर्धचिबुकान्तराले प्रतिष्ठितमिति श्रुतौ वर्णनात् ।

—१४ **अभिविमानं**–तादृशपरिमाणवत्त्वेपि अभितो विगतं मानं प्रमाणं यस्मात्तादृशम् । **वैश्वानरं**–विश्वान्नरान्नयतीति यास्केन निरुक्तम् । **उपास्ते**–स्वप्रापकत्वेन चिन्तयति ।

—१५ **अन्नमत्तीति**–सर्वात्मभूतः सन् तत्तदेकदेशाभिमानिनो निरस्य तद्बुद्धिवृत्तिभिस्तदिन्द्रियैश्च तद्भोग्यं स्वयं भुङ्क्ते ।

—१६ **पृथग्वर्त्मा**–आवहोद्वहादिभेदवान्वायुः । **संदेहः**–देहमध्यभागः । **बहुलः**–सर्वगतत्वादाकाशः । **बस्तिः**–नाभेरधोभागः । **रयिः**–अन्नोत्पत्तिद्वारा धनसाधका आपः ।

—१७ **अन्वाहार्यपचनः**–दक्षिणाग्निः ।

—१८ संशयाकारमाहुः–**किमिति** ।

—१९ संशयबीजमाहुः–**अर्थस्येति** ।

—२० **ब्रह्मात्मपदप्रयोग इति** । को न आत्मा किं ब्रह्मेति प्रयोगः । तत्र किंपदस्यावृत्त्या वाक्यभेदज्ञाने जाते विशेषणविशेष्यभावाभावाद् द्वयोः प्रकरणित्वं प्रतीयते । **नान्यत्किंचिदिति** । अन्यतरस्य प्रकरणित्वबोधकं किंचिदपि नास्ति । एवंचोपक्रमस्य संदिग्धत्वादर्थस्यातिसंदिग्धत्वम् । **उपपादने त्विति** । तथा चोपपादनग्रन्थे–तस्य ह वा एतस्य मूर्धैव सुतेजाः–इत्यादिकथनाद्वैश्वानरशब्दस्य ब्रह्मभिन्नाग्निवाचकत्वान्मूर्धाद्यवयवरूपाणामब्रह्मधर्माणां च विद्यमानत्वात्संदेहदार्ढ्यमित्यर्थः । **अतद्धर्मा इति** । शिरआद्यवयववत्त्वादयोऽब्रह्मधर्मा इत्यर्थः ।

—२१ **लोकन्यायेनेति**। भूरादिलोकानां यथाब्रह्मत्वं तथात्रापीति भावः। **प्रसिद्ध इति**। अग्निर्वैश्वानरो वन्हिरिति कोशात्।

—२२ **पूर्वकाण्डसिद्धत्वादिति**। वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः-इति पूर्वकाण्डस्थमन्त्रसिद्धत्वात्। **देवतात्मपरिग्रह इति**। देवतारूप आत्मात्र परिग्राह्य इत्यर्थः। ननु यद्यपि पूर्वकाण्ड एवं तथाप्युत्तरकाण्डे किमायातं तदाहुः-**तत इति**।

६८-१ **श्रुतेरिति**। एवं चोत्तरकाण्डे संवत्सररूपदेवता वैश्वानरपदेन ग्राह्येति तात्पर्यम्। **प्रजापतित्वाच्चेति**। प्रजापतिः संवत्सरः-इति नारायणीयश्रुतेः। **अन्नभोजनत्वमिति**। अन्नभोजनकर्तृत्वम्। नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः (पा. सू. ३।१।१३४) इति पाणिनिसूत्रेण नन्यादित्वाल्ल्युः। अन्नभोजनमिति पाठो विवरणसंमतः।

—३ ननु जीवोणुरूपस्तस्य प्रादेशमात्रत्वं कथमत आहुः-**प्रादेशमात्रत्वमिति**।

—८ **विशेषः**-आधिक्यम्।

—९ **तत्स्फुटयन्ति**-प्रादेशेत्यादि।

—११ समासान्तरं प्रदर्श्य प्रकारान्तरमाहुः-**साधारणादिति**। एवंच शब्दे विशेषः शब्दविशेषः। वाक्योक्तात्साधारणाद् द्युमूर्धत्वादेर्धर्माद्वाक्यरूपे शब्द एव यो विशेषो विरुद्धधर्माधारत्वलक्षणस्तस्मादित्यर्थः। **विशेषादित्येवेति**। वैश्वानरो विशेषादित्येव सूत्रे कर्तव्य इत्यर्थः।

—१२ **साधारणशब्दशब्दाविति**। प्रादेशमात्रवाक्यरूपः शब्दः साधारणशब्दः। तथा च द्युमूर्धादिवाक्यरूपो विशेषशब्द इत्येतौ शब्दावित्यर्थः।

—१३ **समासेनेति**। सूत्रे साधारणशब्दं निवेश्य ततो ल्यब्लोपे पञ्चमीति ल्यब्लोपं कृत्वा समासेन सामानाधिकरण्यं साधारणशब्दौ द्योतयतः। एवंच साधारणाद्धर्मादपेक्ष्य शब्दविशेषः साधारणशब्दविशेषस्तस्मादिति समासेपेक्ष्येति ल्यबन्तपदेन यथा पुरुष एतादृग्गुणापेक्षयेदृग्गुणवत्त्वं विशेष इति साधारणविशेषगुणवत्त्वं तत्रैव पुरुषे ज्ञायत एवं ब्रह्मण्यपि विरुद्धधर्मोभयवत्त्वं व्यञ्जनया द्योत्यत इति भावः। **अन्यथा**-सामानाधिकरण्याभावे।

—१४ ननु द्युमूर्धत्वं विराड्रूपे हिरण्यगर्भे श्रूयत इत्यत आहुः-**यदपीति**।

—१५ तत्र हेतुमाहुः-**पुरुषत्वादिति**। यदि हिरण्यगर्भस्य द्युमूर्धत्वरूपो धर्मः स्यात्तर्हि भगवत्प्रतिपादकपुरुषसूक्ते पुरुषपदोपादानं न स्यादिति

भावः। ननु पुरुषशब्दस्य भगवद्वाचकत्वेपि वैश्वानरशब्दस्य तथात्वं कथमत आहुः-विश्वस्येति । योगरूढ्येत्यर्थः। जडस्य-चतुर्दशभुवनात्मकब्रह्माण्डस्य । जीवस्य-तदन्तर्गतहिरण्यगर्भस्य। भगवदंशत्वेनेति । विश्वो वैश्वानरः प्रथमः पादः। तैजसो हिरण्यगर्भो द्वितीयः पाद इति श्रुत्या भगवदंशत्वेनेत्यर्थः।

—१८ भगवदंशत्वादिति। अन्यत्र-हिरण्यगर्भादौ । एवंच जातिनिबन्धनया प्रशंसानिबन्धनया वा गौणलक्षणया पुरुषपदवद्वैश्वानरपदस्याप्यन्यत्र प्रयोगः।

—१९ सिद्धमाहुः-तस्मादिति । उक्तरीत्या विशेषात्सर्वेषां पदवाक्यानां परमात्मानुगुणत्वाच्चेत्यर्थः।

सूत्रार्थः— वैश्वानरः परमात्मैव। पूर्वपक्षे हिरण्यगर्भपरतया ये सामान्यशब्दा उक्तास्तेभ्यो विशेषकथनादिति॥ २४॥

## स्मर्यमाणमनुमानं स्यादिति ॥ १।२।२५ ॥

-२१ सूत्रारम्भप्रयोजनमाहुः- व्याख्यानेनेति । पूर्वोक्तविषयवाक्यं व्याख्यानेन भगवत्परं प्रतीयते न तु स्वारस्येनेत्याग्रहवादिशङ्कां निरासितुमनुमानप्रमाणान्तरसूचकसूत्रमारभ्यत इत्यर्थः।

—२२ स्मर्यमाणमाहुः-केचिदिति।

—२३ कञ्जरथाङ्गशङ्खगदाधरामिति। कञ्जं-कमलम्। रथाङ्गं-चक्रम्।

—२६ ननु स्मर्यमाणमनुमितिजनकं कथमत आहुः-स्मरणं हीति । श्रुतिवाक्येभ्य इति ।श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। इति स्मरणात्।

६९-२ नोपपद्येतेति। श्रुत्यभावे स्मरणं नोपपद्येत। एवंच प्रादेशमात्रत्वस्मरणं प्रादेशमात्रत्वस्य श्रुत्यर्थत्वानुमापकमित्यर्थः। एतेन

अनन्तशाखासापेक्षे वैदिकार्थस्य निर्णये।
स्वबुद्धिकल्पितादर्थाद्वलीयानुपबृंहितः॥

इति बोधितम्।

सूत्रार्थः- प्रादेशमात्रवैश्वानरस्य ब्रह्मत्वे स्मर्यमाणं रूपमनुमानं भवेदिति हेतोः प्रादेशमात्रवैश्वानरो भगवानेवेति॥ २५॥

**यथा शब्दादिभ्योन्तःप्रतिष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ॥ १।२।२६ ॥**

—१२ **यथाकथंचिदिति**। समृद्ध उपाध्यायो राजा संवृत्त इतिवदुपचाराद् द्युमूर्धत्वादिधर्माणां जाठराग्नावसंभवतां तत्राहं वैश्वानर इत्यादिना भगवद्विभूतित्वायोजना क्रियत इत्यर्थः। वाक्यस्य भगवत्परत्वे विरुद्धधर्मरूपं बाधकमाहुः-**नन्विति**।

—१३ **वाक्यस्येति**। वक्तुं न शक्यत इति शेषः। **अग्निरिति**। बृहदारण्यके वैश्वानरविद्यायां य एषोग्निर्वैश्वानर इति वाक्यं श्रूयते।

—१४ **तत्**-तस्मात्कारणात्। **अग्निसाहचर्यात्**-जठराग्निवाचकाग्निपदसामानाधिकरण्यात्। **अग्निरेव भवेदिति**। एवंच विषयवाक्ये वैश्वानरशब्देन जठराग्निरेव गृह्येतेति भावः।

—१५ ननु त्रेताग्निकल्पनाया उभयत्र साम्याज्जठराग्नेरेव ग्रहणं कुत इत्यत आहुः- **प्राणो हीति**। प्राणो देवता तयद्भक्तमित्यादिना पठ्यत इत्यर्थः। एवं चाग्निमवाक्ये स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति श्रुतेः प्राणस्य चतुर्थ्यन्तत्वेन देवतात्वात्तस्य जठराग्निरेव मुखं भवति तस्यैव त्रेताग्निकल्पनेति भावः।

—१७ **तत्**-तस्मात्। **हेतुभ्य इति**। न भगवत्परत्वं वाक्यस्येति शेषः। **न भगवद्धर्म इति**। वाजिशाखायामुक्तोन्तःप्रतिष्ठितत्वरूपो धर्मो जठराग्नेरेव न व्यापकस्य ब्रह्मण इत्यर्थः। ननु सूत्रे पूर्वपक्षांशे शब्दादिभ्योन्तःप्रतिष्ठानादिति हेतुद्वयसमुच्चायकश्चकारोपेक्ष्यत इत्यत आहुः-**पुरुषेन्तरिति**।

—१८ **भिन्नहेतुरिति**। शब्दादिभ्य इत्यस्माद्भिन्नो हेतुरित्यर्थः। **हेतुहेतुरिति**। हेतोर्हेतुरिति षष्ठीतत्पुरुषः। शब्दादिभ्य इति हेतोरन्तःप्रतिष्ठानं हेतुरित्यर्थः। नन्वस्य शब्दादिहेतुत्वं कथमिति चेदित्थम्। वैश्वानरविद्यायां य एषोग्निर्वैश्वानर इति शब्देग्निपदसामानाधिकरण्याज्जठराग्निवाचकत्वं यद्यप्यस्ति तथापि-अहं वैश्वानरो भूत्वा-इत्यत्राहंपदसामानाधिकरण्याद्ब्रह्मवाचकत्वमपि स्यादित्यतोन्तःप्रतिष्ठितत्वं तु जठराग्नेरेव न ब्रह्मण इत्येवं रीत्या जठराग्निसाधकशब्दादिभ्य इति हेतोरन्तःप्रतिष्ठितत्वं हेतुः। अत्रत्यो ग्रन्थो हेतुत्रयघटितो युक्तः। क्वचित्पुस्तक एकहेतुघटितः पाठः। क्वचिद्धेतुद्वयघटितोपि दृश्यते।

—२० **तथादृष्ट्युपदेशादिति**। **तथादृष्टिः**-जाठरदृष्टिः।

—२२ **स्मृत्यनुरोधादिति**। अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः। इति गीतास्मृत्यनुरोधात्। एवंच जठराग्निपरमेवेदंवाक्यमिति शङ्कायां **सूत्रकारः** समाधत्ते-**असंभवादिति**।

७०-१ पाठान्तर इति । सूत्रे पुरुषमित्यस्य स्थाने पुरुषविधमिति पाठे । अत्र विवरणकाराः पाठान्तर इत्यस्यार्थमुत्तरपाठमिति कल्पयन्ति लापयन्ति चान्यथा। तथाहि-स य एष इति मन्त्र एव पाठद्वयं स य एषोग्नि-र्वैश्वानरो यत्पुरुष इति पूर्वपाठः । पूर्वपाठे पुरुष इति पदमुत्तरपाठे पुरुष-विधमिति पदम् ।

—२ अन्यकल्पनेति । उपासनार्थमग्नौ पुरुषत्वादिकल्पनेत्यर्थः ।

—३ न युक्तेति । सर्वे वेदा यत्पदमामनन्ति-इति श्रुतिविरोधात् ।

सूत्रार्थः-विरुद्धधर्माणां शब्दादीनां विद्यमानत्वादन्तःप्रतिष्ठानत्वाच्च भगवान् वैश्वानरो नेति चेन्न भगवतः सर्वभोक्तृत्वं वक्तुं तथादृष्टेरुपदेशात् । ननु स्मृत्यनुरोधात्कार्यवाक्यमेवास्त्विति चेन्न द्युमूर्धत्वादिधर्माणां कार्ये-संभवात् । उपासनार्थं परिकल्पनं भविष्यतीति चेन्न यतो वाजसनेयिन एनं पुरुषमप्यधीयत इति ॥ २६ ॥

## अत एव देवता भूतं च ॥ १।२।२७ ॥

—५ इत्यादिमन्त्रैरिति । आदिपदेन वैश्वानरं केतुमन्हां-वैश्वानरं द्वादशकपालं निर्वपेत् - इत्यादीनां ग्रहणम् ।

सूत्रार्थः-पूर्वसूत्रोक्तहेतोर्वैश्वानरपदेन देवता महाभूताग्निर्वा न ग्राह्य इति ॥ २७ ॥

## साक्षादप्यविरोधं जैमिनिः ॥ १।२।२८ ॥

—९ अतः परं पञ्चसूत्र्यां मन्यत इत्यध्याहारः ।

—१० अस्मिन्-प्रादेशमात्रत्वे । पूर्वोक्तं-भगवतोसाधारणधर्मरूपं विरुद्ध-धर्माश्रयत्वम् ।

—११ शब्दबलविचारका इति । शब्दस्य यदुच्चारणक्रमादि तात्पर्यरूपं बलं तद्विचारद्वारार्थविचारकाः ।

—१२ आचार्याः- व्यासपादाः । एतदेवाचार्याणामाचार्यत्वं यदुच्चारण-क्रमेणार्थनिर्णयः ।

—१३ ऋषिनामग्रहणप्रयोजनमाहुः-आचार्यः पुनरिति ।

—१४ दोषं पश्यन्निति । नैषा तर्केण मतिरापनेयेति काल्पनिकाति-विचारे दोषः । तत्त्वेव भयं विदुषोमन्वानस्य-इत्यविचारे दोषश्च । विचार-मपि वदन्निति । सोन्वेष्टव्यः स विजिज्ञासितव्यः- इति श्रुतिप्रामाण्यात् ।

—१७ अविरोधमुपपादयन्ति- आकाशवदिति । यद्यपि श्रुतौ प्रादेश-मात्रमभिविमानमिति प्रथमं प्रादेशमात्रत्वग्रहणं पश्चाद्व्यापकत्वस्य तथापि पाठक्रमादर्थक्रमो बलीयानिति न्यायेन व्यापकत्वस्य प्रथमग्रहणम् । अत्रार्थे श्रौतो दृष्टान्तः । अग्निहोत्रं जुहोति यवागूं पचतीति । यवागूपाकं विनाग्नि-

होत्रहोमस्यानुपपत्त्या यथा तत्र पाठक्रमापेक्षयार्थक्रमस्य बलीयस्त्वमङ्गीक्रियत एवं व्यापकस्यैव प्रादेशमात्रत्वं सर्वतः पाणिपादान्तत्वं संभवतीति व्यापकत्वस्य प्रथमं ग्रहणम्।

—१८ **अत एव**-सर्वत इत्यस्य श्रौतत्वादेव। **स्वेच्छयेति**। बहु स्यामिति श्रुतौ स्वेच्छया।

यद्यद्धिया त उरुगाय विभावयन्ति।
तत्तद्वपुः प्रणयसे सदनुग्रहाय।

इति श्रीमद्भागवते परेच्छया। आकाशवत्सर्वगतश्च नित्यः। सर्वतः पाणिपादान्तमित्यादिश्रुतौ स्वभावतः।

—१९ **विभक्तमिवेति**। सिद्धमिति शेषः। **त्रयोपीति**। पुरुष आकाशवत्परममहत्परिमाणः। पुरुषविधो विराड्रूपः। पुरुषेन्तःप्रतिष्ठितः प्रादेशमात्रपरिमाणः। इति त्रयोपि नियतपरिमाणा एव। ननु समो मशकेन समो नागेन-इति श्रुतावनियतपरिमाणत्वमप्युक्तं तेन विरोध इत्यत आहुः-**अनियत परिमाणा इति**। घटाकाशमठाकाशवत्परिच्छेद्या इत्यर्थः।

—२० **तद्वृद्धिह्रासाभ्यामिति**। तेषां परिच्छेदकानां नागमशकादीनां वृद्धिह्रासाभ्यां यथा शरीरं तथापरिमाणा भवन्तीत्यर्थः। पूर्वोक्तरूपत्रये स्मृतिं प्रमाणयन्ति-**स्मृतावपीति**।

—२१ **त्रीणीति**। पुरुषेः पुरुषविधः। पुरुषेन्तःप्रतिष्ठित इति वैश्वानरस्यैव त्रीणि रूपाणीत्यर्थः।

७१-१ तृतीयस्यानन्तरूपत्वं नियतपरिमाणत्वं चाहुः-**भूतेष्वित्यादिना**। **पञ्चधेति**। ध्यानार्थं प्रादेशमात्र आश्रयार्थमङ्गुष्ठमात्रः स्वामित्वार्थमक्षिस्थितः फलार्थं सर्वदेहस्थित आनन्दमयो वैश्वानरः शिरसि प्रतिष्ठितः सर्वार्थ इति निबन्धोक्तपञ्चकार्यार्थं पञ्चभिः प्रकारैः। **अङ्गुष्ठमात्र इति**। अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति-इति श्रुतेः। स चोदरे शरीरास्थित्यर्थम्। अधोनिष्ठ्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति-इति तैत्तिरीयोक्तेः। हृदि ध्यानार्थं, शिरसि सर्वार्थं, मनसीन्द्रियाणां विषयग्रहणार्थं, इन्द्रियेषु स्वामित्वार्थम्।

—२ **अणुरिति**। मनःप्रभृतीनामणुत्वात्तान्नियमनार्थं तेषु तिष्ठन्नयमप्यणुरित्यर्थः। **व्यापक इति**। तत्सर्वं व्यापकं चित्तं प्रविश्य व्योम्नि धारयेदिति वाक्ये चित्तस्य व्यापकोक्त्या तद्विवृद्ध्यर्थं तत्र तिष्ठन्नयं व्यापक इत्यर्थः। ननु प्रादेशमात्रः प्रकृतस्तस्य विचारे कर्तव्येन्यविचारो विफल इत्यत आहुः-**एकस्येति**। **तथात्ववादः**-भगवत्ववादः।

—३ अभेदाय-वैश्वानरेणाभेदबोधनाय ।

—४ अतः-एवमुभयबलविचारकत्वात् ।

सूत्रार्थः- कल्पनाव्यतिरेकेणापि स्वरूपविचारेणैव जैमिनिरविरोधं मन्यत इति ॥ २८ ॥

## अभिव्यक्तेरित्याश्मरथ्यः ॥ १।२।२९ ॥

—७ अतः परं त्रिसूत्र्यामविरोधमित्यनुषञ्जनीयम् । तदपगमेन-मायापगमेन । आधिदैविकदेवताधिष्ठितेनेति । आधिदैविकी प्रणवमात्रावाच्येषु देवेषु वर्तमाना या ब्रह्मविष्णुशिवात्मिका देवता तयाधिष्ठितेन शरीरतयाङ्गीकृतेनेत्यर्थः ।

—८ अत एव-अधिष्ठानादेव ।

—९ सौत्रहेतुः साकारपक्षेऽप्युपपद्यतेतस्तमपि पक्षमाहुः-अभिव्यक्तेरिति । न स्वाभाविकत्वमिति । किंत्वागन्तुकत्वम् ।

सूत्रार्थः-वस्तुतो निराकारमपि ब्रह्माभिव्यक्तेर्हेतोः साकारमिव सच्चिदानन्दरूपं भातीत्यविरोधमाश्मरथ्यो मन्यत इति ॥२९॥

## अनुस्मृतेर्बादरिः ॥ १।२।३० ॥

—१२ केवलयौक्तिकः-युक्तिप्रधानः । अनुस्मृतेरित्यस्यार्थमाहुर्भाष्य-:-चिन्तनवशादिति । प्रादुर्भूतरूपेत्यादि । भक्तस्यानुग्रहार्थं वै ो रूपकल्पना-इति वाक्यात् ।

१५ तथात्वात्-युक्तिप्रधानत्वात् ।

१६ उक्तपक्षेस्वारस्येनाहुः-अथवेति ।

ार्थः-यद्धिया त उरुगायेति वाक्यानुरोधानुस्मृतेर्हेतोर्ब्रह्मणः साका-स्तुतो निराकारत्वमेवेति बादरिरविरोधं मन्यत इति ॥३०॥

## संपत्तेरिति जैमिनिस्तथाहि दर्शयति ॥ १।२।३१ ॥

२० पूर्वप्रदर्शितजैमिनिमतापेक्षयात्र यो विशेषस्तमाहुः-जैमिनि-इति । नियतसाकारं-प्रादेशमात्रम् ।

- २२ संपत्तिकृतमिति । स्थानानुरोधेन तदनुगुणा स्थितिः संपत्तिस्त-तमेव प्रादेशमात्रत्वं न तु स्वाभाविकम् ।

७२-१ संपादयामीति । कैकेय इति शेषः ।

—४ संपत्तिनिमित्तमेवेति । मूर्धानमारभ्य चिबुकपर्यन्तं प्रादेशमात्रं स्थानं संपत्तिस्तन्निमित्तमित्यर्थः ।

**सूत्रार्थः**-जैमिनिः प्रादेशमात्रत्वं संपत्तिकृतं न नियतमिति वदति ततो-विरोधं मन्यते। वाजसनेयिब्राह्मणे-तथा तु व एतान् वक्ष्यामि यथा प्रादेश-मात्रमेवाभिसंपादयिष्यामि-इति श्रुतिः प्रादेशमात्रत्वं संपत्तिकृतमिति दर्शय-तीति ॥ ३१ ॥

## आमनन्ति चैनमस्मिन् ॥ १।२।३२ ॥

—७ **मुख्यं**-शब्दबलसिद्धम्। संपत्तिकृतं प्रादेशमात्रत्वं न किंतु स्वाभा-विकमेव। **नहीत्यादि**। श्रीमद्भागवतषष्ठस्कन्धगद्यस्यार्थोपन्यासोयम्।

—९ **अन्यथात्वकल्पनमिति**। एकस्यैव प्रादेशपरिमाणकत्वं व्यापकत्वं चेति प्रातीतिको विरोधो न शास्त्रसिद्धः। तद्वशायुक्त्या प्रादेशमात्रो न भवतीत्यन्यथात्वकल्पनं नेत्यथः।

—१० श्रुत्यन्तरसंमतिमाहुः-**वैश्वानरस्येति**।

—१२ **स्वमतं**-विरुद्धधर्माश्रयत्वरूपम्। **आहेति**। बादरायण इति शेषः। **विशेषणवैयर्थ्यापत्तेरिति**। कालोनन्तोजरोमर इत्यत्रानन्तेति विशेषणवैयर्थ्यापत्तेरित्यथः।

—१७ **युक्तिगम्येति**। नैषा तर्केण मतिरापनेयेति निषेधात्। ननु सूत्र-कृता स्पष्टमनुक्तत्वादयमेव सूत्राशय इति कुत इत्यत आहुः-**आविरोधे-पीति**। **श्रुतेः**-प्रादेशमात्रमभिविमानमिति श्रुतेः। **शब्दमूलत्वात्**-शब्द-शक्तिस्वभावाधीनत्वात्।

—१८ ननु सर्वत्र शास्त्रान्तरे युक्त्यैव विरोधपरिहारः क्रियत इति मत्वा शङ्कते-**नन्विति**।

—२० **औदर्यादाह इति**। औदर्येण जठराग्निना दाहाभावः।

—२१ **रेतस इति**। मयूरीसन्निधे मयूरो नृत्यति तदा तस्य नेत्राभ्या-मश्रूणि गलन्ति तानि च मयूर्या भक्ष्यन्ते तत एव मयूरोत्पत्तिर्न तु रेतोद्वारा प्राण्यन्तरवदिति वैचित्र्यम्। एवंच वस्तुस्वभावे विरोधो न शङ्कनीय इत्यर्थः।

—२२ **स्वभावदर्शनाभ्यामिति**। स्वभावो वस्तुस्वभावो दर्शनं शास्त्रं वस्तुस्वभाववादे श्रुतिं प्रमाणयन्ति-**तस्यान्त इत्यादिना**।

—२३ दर्शनं प्रमाणयन्ति-**यशोदेत्यादि**।

७३-१ **औत्पत्तिकः**- उत्पत्तिसिद्धः स्वभावसिद्ध इति यावत्।

—२ **निर्णीत इति**। बन्धनरज्जूनां द्व्यङ्गुलन्यूनतया ततः स्वेच्छया बन्धनकथनान्निर्णीतः। एवंच वस्तुस्वभावे तर्को नास्तीत्युपसंहरन्ति-**तस्मादिति**।

सूत्रार्थः। एवं वैश्वानरमस्मिन्मूर्धचिबुकान्तराले जाबालाः समामनन्ति। एषोनन्तोव्यक्त इत्यादिना। अतः प्रादेशमात्र एव व्यापक इति वैश्वानरपदवाच्यः परमात्मैवेति सिद्धम्॥ ३२॥

इत्यष्टममधिकरणम्।

---

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालबोधिन्यां प्रथमाध्यायस्य द्वितीयः पादः॥ १।२

---

# प्रथमाध्याये तृतीयः पादः॥ १।३॥

## द्युभ्वाद्यायतनं स्वशब्दात्॥ १।३।१॥

—१० पादसंगतिमाहुः–द्वितीयपाद इत्यादिना। अयं भावः। अत्र प्रथमे समन्वयाध्याये संदिग्धोपनिषद्वाक्यानां ब्रह्मणि समन्वयार्थं विचारारम्भः। तत्र कानिचिद्वाक्यान्याधेयवाचकानि कानिचिदाधारवाचकानि तत्समन्वयार्थं प्रथमपादे–अन्तस्तद्धर्माधिकरणे तल्लिङ्गाद्यधिकरणे–चोभयरूपं ब्रह्म प्रतिपादितं ततो द्वितीयपादेन्तस्तद्धर्माधिकरणोक्तमाधेयरूपं ब्रह्म विस्तरतः प्रोक्तं ततश्चैकसंबन्धिज्ञानमपरसंबन्धिस्मारकमिति रीत्या स्मृतमाधाररूपत्वं ब्रह्मणोस्मिंस्तृतीये पादे व्याख्यायते। अत्र–तृतीयपादे।

—११ तेन–उभयरूपब्रह्मप्रतिपादनेन। फलिष्यतीति। सर्वं ब्रह्मेति वाक्यार्थज्ञाने जाते श्रवणादिद्वारा मनसि निवृत्तव्यापारे सति स्वयमुपलब्धनिजसुखानुभवरूपं ब्रह्म फलिष्यतीति भावः।

—१२ नन्वाकाशस्तल्लिङ्गाद्यधिकरणेष्वाकाशात्मत्वाकाशज्यायस्त्वादिधर्मैर्व्यापकत्वबोधे जात आधाररूपतायां निश्चितायां निष्प्रयोजनोयं तृतीयपाद इत्यत आहुः–बाधकानामिति। तेषु प्रेत्याभिसंभवाध्वपारात्रन्तरात्मत्वादीनां साधितत्वेन बाधकानां बलिष्ठत्वात्। साधकानामिति। असाधितत्वेनेति शेषः। अभावत इति। दुर्बलत्वात्साधकाभावादित्यर्थः।

—१३ आधारधर्माः–ज्यायस्त्वादयः। बाध्येरन्निति। उपासनायां बाधिता भवेयुरित्यर्थः। इतीति। अतो हेतोराधाररूपभगवत्प्रतिपादनार्थं तृतीयपादोभिधीयत इत्यर्थः।

—१४ विषयवाक्यमाहुः– इदं श्रूयत इति। आथर्वणोपनिषद्द्वितीयमुण्डके श्रूयते। उपनिषदि बहूनां वाक्यानां सत्त्वेस्यैव वाक्यस्य प्रथमतो विचारः कुत इत्यत आहुः–यस्मिन्निति। बाधास्त्रिविधः। अर्थकृतः

प्रकरणकृतः लिङ्गकृतश्चेति। अयं वाक्यार्थः सर्वप्रकारैर्बाधितोतः पूर्वं विचार्यत इत्यर्थः।

—२० अर्थकृतं बाधं विवृण्वन्ति–द्युभ्वादीनामिति। भगवतो भारवाहकत्वानुपपत्तेर्ब्रह्मवाक्यत्वबाध इत्यर्थः।

—२१ प्रकरणकृतं च बाधं व्याकुर्वन्ति–अन्येत्यादि।

—२२ **पृष्टत्वादिति**। प्रथममुण्डके शौनकेनाङ्गिरसं प्रति पृष्टत्वादित्यर्थः। लिङ्गकृतं बाधं व्याकुर्वन्ति–**सेतुरिति**। आत्मज्ञानं फलं सेतुः साधनभूत एवंच साधनफलयोश्चैक्यासंभवात्सेतुरूपलिङ्गकृतो ब्रह्मवाक्यत्वबाध इति भावः।

—२४ **स्मृतिमूलमिति**। सांख्यस्मृतिमूलभूतमित्यर्थः। एवंच सांख्यमतप्रतिपाद्यप्रधानबोधकं पुरुषबोधकं वा भविष्यतीति भावः।

७४–२ **साधकमिति**। अर्थकृतस्य लिङ्गकृतस्य च बाधस्य परिहारार्थं ब्रह्मवाक्यत्वसाधकं हेतुमित्यर्थः। **प्रथमपरिहारं**–प्रथमस्यार्थकृतबाधस्य परिहारम्।

—४ **पूर्वोक्तानां**–द्युभ्वादीनाम्। **आत्मभूतं**–अनारोपितानागन्तुकं यत्स्वरूपं तद्वाचकम्। एतद्बोधनार्थं सूत्रे स्वशब्दप्रयोगः। अन्यथात्मशब्दादित्येव वदेदिति भावः। ननु भगवतः सर्वाधारत्वे भारवाहकत्वपरिहारः कथमित्यत आहुः– **कारणे हीति**।

—५ लिङ्गकृतबाधपरिहारमाहुः– **सेतुत्वमिति**। सेतुवाक्येमृतसाधनत्वं ब्रह्मण उच्यते न तु तज्ज्ञानस्य। तमेवैकं जानथेति श्रुतौ तस्यैव फलत्वम्। नन्वेवं कथमुपपत्तिरित्यत आहुः– **अभेदेपीति**। एवंच ब्रह्मविदिति वाक्यवदत्रापि तस्यैव साधनत्वं फलत्वं च। अवस्थाभेदेन भेदादुभयवाक्यसामञ्जस्यमिति भावः।

—६ **तस्मात्**–अर्थलिङ्गकृतदोषद्वयस्य वारणात्। **लक्ष्यस्येति**। लक्ष्यं सर्वगतं चैव शिरो मे सर्वतो मुख इति पूर्वमन्त्रोक्तस्य ब्रह्मणो लक्ष्यस्य।

**सूत्रार्थः**— यस्मिन्द्यौरिति वाक्योक्तानां द्युभ्वादीनामायतनं ब्रह्मैव। आत्मशब्दादिति॥ १॥

## मुक्तोपसृप्यव्यपदेशात्॥ १।३।२॥

—९ प्रकरणदोषस्यापरिहृतत्वात्तमाक्षिपन्ति–**ननु चेति**। मुक्तोपसृप्य इति भावप्रधानो निर्देशः। मुक्तनिष्ठा योपसृप्यता भगवन्निकटगमनयोग्यता तया कृत्वा भगवतस्तस्या व्यपदेशो मुक्तोपसृप्यव्यपदेशस्तस्मात्।

—११ एतेन व्यपदेशेन दोषपरिहारप्रकारमाहुः- **मुक्तानामिति**। व्यपदिश्यत इत्यनेनान्वयः। मुक्तपदेनात्र जीवन्मुक्तानां ग्रहणम्।

—१३ **तदुपसृप्यता**- मुक्तनिष्ठानामुपसृप्तुं योग्यता। तत्र प्रमाणमवान्तरप्रकरणम्। तत्रत्यो यः शरधनुर्न्यायस्तेन तथा ज्ञातमिति। तथाहि-द्वितीयमुण्डके-तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्-इत्यस्यार्थस्तद्भावगतेन चेतसेति। ब्रह्मभावप्राप्तेन चेतसा योपासा तथा निशितं ब्रह्मत्वेनाज्ञातं जीवं लक्ष्ये ब्रह्मणि योजयितुमुपासानिशितत्वाधायकतद्भावगतचेतःसिद्ध्यर्थमन्यवाग्विमोकोत्रोच्यते स च शरीराध्यासराहित्य एव सिध्यतीति भगवतो मुक्तोपसृप्यता व्यपदिश्यते। उक्तरीत्या जीवयोग्यताकथनद्वारोच्यत इत्यर्थः। अन्यवाग्विमोके दोषद्वयम्। शरः, धनुः, शरीरमिति वाग्व्यवहार एव न भविष्यतीति प्रकरणबाधरूप एकः। अपरवाग्विमोकोर्थस्यैव बाधः। तत्रायं दोषमुद्धरन्ति न ब्रह्मणि योजनीयमिति एतद्बोधाय वाग्विमोकोत्रोच्यते नतु सर्वज्ञानविघाताय।

—१५ एवमन्यवाग्विमोकस्य दोषत्वं प्रकरणेन निवारितमर्थेनापि निवारयन्ति-**किंचेति**। **न वस्तुविमोक इति**। यथा कुण्डलादिसंज्ञापरित्याग एकरूपं सुवर्णं परिज्ञायते तद्वद्वाग्विमोके ब्रह्मस्वरूपवस्तुपरिज्ञानं भवतीत्यर्थः।

—१८ मायावादिमतमाक्षिपन्ति-**येत्विति**। **अन्यार्थत्वमिति**। सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्यं प्रपञ्चविलापनार्थं नानेकरसताप्रतिपादनार्थमित्यन्यार्थत्वं ते कल्पयन्ति। **कल्पितमतानुसारेणेति**। प्रपञ्चो मायिक इत्यादिकल्पितमतानुसारेणेत्यर्थः। **त इत्यादि**। यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपा इत्यादयः पूर्वाः श्रुतयः। अरा इव रथनाभावित्याद्या उत्तराः श्रुतयस्तत्तद्दृष्टान्तपूर्वकब्रह्मकार्यब्रह्मरूपाविरुद्धधर्माधारत्वादिब्रह्मधर्मप्रतिपादकतया स्फुटार्थास्तद्विरुद्धो यः प्रपञ्चमायिकत्वादिरूपोर्थस्तद्वादिन उपेक्ष्या इत्यर्थः।

**सूत्रार्थः**- देहाद्यध्यासत्यागेन जीवन्मुक्तानामुपसृप्यं ब्रह्मास्मिन्प्रकरणे व्यपदिश्यतेतो द्युभ्वाद्यायतनं ब्रह्मैवेति ॥ २ ॥

## नानुमानमतच्छब्दात् ॥१।३।३॥

—२१ इदमधिकरणं प्रधानपरमिति मतं दूषयितुं तन्मतेन पूर्वपक्षं दर्शयन्ति-**नन्विति**। **अरा इवेति**। अरा इव रथनाभौ संहता यत्र नाड्यः स एषोन्तश्चरते बहुधा जायमानः। इत्यत्र नाडीसंघातवत्त्वं शरीरनिष्ठो जडधर्मः। रथनाभिदृष्टान्तो जडदृष्टान्तः।

—२२ **ब्रह्मपुर इति** । दिव्ये ब्रह्मपुरे ह्येष इत्यत्र पुरमिव पुरमिति पुरपदबोधितो दृष्टान्तो भूमिष्ठमहिमवत्त्वं शरीरधर्मः । एवं मनोमयः प्राणशरीरनेतेति मनोमयत्वं विकारधर्मः । इत्यादीत्यादिपदेन हिरण्मये परे कोश इत्यादिमन्त्रोक्तानां पदानां शुभ्रत्वप्रकाशाभावादीनां संग्रहः । आत्मसर्वज्ञादिशब्दाश्चेतनधर्मबोधकाः पुरुषप्रतिपादकाः । **तस्मात्**–प्रकृतपुरुषबोधकपदसत्त्वात् ।

—२३ **निर्णीतमिति** । अत्र प्रकाशः– यद्यपि तत्र निर्णीतं तथापि तत्रान्तरात्मत्वेनाधेतयतया ब्रह्म सिद्धमत्र त्वाधारतयेति । रथनाभ्यादिदृष्टान्तसहकृतान्नाडीसंघाताधारत्वादिरूपाज्जडधर्मादाधारभूतेक्षरे प्रकृतिरूपतायाः पुनरुज्जीवनं संभवतीति विशिष्टाद्वैतमेव भवेन्न तु शुद्धब्रह्मवाद इति तदभावाय प्रयास इत्यर्थः ।

—२५ सिद्धान्तं व्याकुर्वन्ति–**नेति** । इदं प्रकरणं सांख्यमतमूलभूतं तदसाधारणधर्मबोधकशब्दवत्त्वादित्यनुमानं सांख्यमतानुमापकं न भवतीत्यर्थः ।

**सूत्रार्थः**–इदं प्रकरणं सांख्यमतानुमापकं न भवति । निःसंदिग्धतया तन्मतख्यापकस्य शब्दस्याभावादिति ॥ ३ ॥

## प्राणभृच्च ॥१।३।४॥

७५–६ जीवनिराकरणाय पूर्वपक्षं दर्शयन्ति–**नन्विति** । **निर्णायकं**–सांख्यमतनिर्णायकम् ।

—११ **पृथग्योगकरणं**–पृथक्सूत्रकरणम् । **उत्तरार्थं**– उत्तरसूत्रेष्वन्वयार्थम् ।

**सूत्रार्थः**-जीवोपि न वाक्यार्थः । तत्प्रतिपादकशब्दाभावादिति ॥ ४ ॥

## भेदव्यपदेशात् ॥१।३।५॥

**सूत्रार्थः**–तमेवैकं जानथेति कर्मकर्तृभेदव्यपदेशोस्त्यतो न जीवो वाक्यार्थ इति ॥ ५ ॥

## प्रकरणात् ॥१।३।६॥

—१५ **जडजीवसाधारणेति** । तमेवैकं जानथेत्यत्रकारोप्यर्थकः । तेन ततोपि मुख्यमात्मानं जानथेत्यर्थकरणे जडजीवसाधारणत्वं तन्निराकरणायेत्यर्थः ।

**सूत्रार्थः**– उपक्रमोपसंहारयोर्ब्रह्मविद्याया एव निरूपणेन ब्रह्मप्रकरणाद्ब्रह्मैवात्र प्रतिपाद्यमिति ॥ ६ ॥

## स्थित्यदनाभ्यां च ॥१।३।७॥

—२१ **अन्यथाभावशङ्कयेति** । ब्रह्मपदस्य जीवसाधारण्यात्सर्वस्यापि प्रकरणस्य जीवपरत्वशङ्कयेत्यर्थः ।

७६—२ **प्रातिलोम्येनेति** । स्थित्यदनयोः प्रकरणबलाधायकत्वं तस्य तत्पूर्वहेतुबलाधायकत्वमित्येवं वैपरीत्येन ।

—४ **अन्यथा**-सत्त्वक्षेत्रज्ञपरत्वेन ।

—५ **जीवब्रह्माणाविति** । व्यष्टिसमष्टिजीवौ अमुक्तमुक्तजीवौ वा ।

**सूत्रार्थः**-द्वा सुपर्णेति वाक्य आत्मनः स्थितिमात्रं जीवस्य कर्मफलोपभोगश्च निरूप्यते । अतः स्थित्यदनाभ्यां जीवपरमात्मानौ परामृष्टौ सांख्यमतप्रतिपाद्यवैलक्षण्यं बोधयत इति ।

इति प्रथममधिकरणम् ।

---

## भूमा संप्रसादादध्युपदेशात् ॥१।३।८॥

—९ विषयवाक्यमाहुः-**इदं श्रूयत इति** । छान्दोग्यनवमप्रपाठके सनत्कुमारनारदसंवादे श्रूयते ।

—११ संशयबीजमाहुः-**तत्रेति** ।

—१४ **समाप्येति** । अपह्नवनिवारणं श्रावयित्वा समाप्येत्यर्थः ।

—१७ पूर्वपक्षमाह-**यद्यपीति** ।

—१९ **प्रश्नसिद्धिरिति** । उपसंहारे-तथा आत्मदेश एवात्मैवाधस्तादात्मोपरिष्टात् इत्यादिना जीवपरत्व आत्मविषयकनारदप्रश्नसिद्धिरित्यर्थः ।

—२२ **सुषुप्तिरूपमेव भूमेति** । उपसंहारे-यो वै भूमा तत्सुखं नाल्पे सुखमस्ति-इति वाक्येन सुखबाहुल्यमुक्तं तच्च सुषुप्तावेव प्रतीयतेतः सुषुप्तिरेव वाक्यार्थ इति पूर्वपक्षाशयः ।

—२३ **संप्रसादः सुषुप्तिरिति** । सम्यक् प्रसादोस्मिन्निति व्युत्पत्त्या संप्रसादशब्दस्य सुषुप्तिरर्थः ।

७७-१ जीवात्मव्यावृत्तिहेतुमाहुः-**आत्मशब्दश्चेति** ।

—२ **भावशब्दस्यापीति** । भगवतः सर्वत्वस्य श्रुतिप्रतिपादितत्वेन भावशब्दस्य भगवति प्रयोगो न दोषाय । सर्वशब्दबीजभूतो यः प्रणवस्तदर्थकत्वेन भगवतस्तत्रैव भगवति सर्वेषां शब्दानां मुख्यतया वृत्तेः ।

**सूत्रार्थः**- भूमा भगवानेव । सुषुप्तेराधिक्येनाधिकधर्मवत्त्वेनोपदेशादिति ॥ ८ ॥

## धर्मोपपत्तेश्च ॥१।३।९॥

—५ ननु यत्र नान्यत्पश्यतीत्यादिनोक्ता अन्यादर्शनादयः सुषुप्तेरसाधारणा धर्मास्तेषां ब्रह्माणि वृत्तिर्विरुद्धेति शङ्कां निराकुर्वन्ति-**नान्यादिति** ।

अविरोधे हेतुमाहुः- **स्वाप्ययसंपत्त्योरिति** । स्वाप्ययः स्वापः । संपत्तिः पुरुषोत्तमप्राप्तिस्तयोर्मध्येऽन्यतरापेक्षमुभयश्रुत्युक्तमाविष्कृतं प्रकटीकृतमित्यर्थः ।

—७ यथास्मिन्सूत्रे ब्रह्मधर्माविर्भावः स्वाप्ययसंपत्त्योर्नियत एवं नान्यत्पश्यतीत्यादयोपि धर्मा ब्रह्मणि संभवन्ति-**उभयत्राम्नानादिति** । न विरुध्यन्त इत्यनेनान्वयः । सर्वमात्मैवाभूदित्यादिनान्यादर्शनादयो धर्माः परमात्मन्याम्नाताः । एवं यत्र नान्यत्पश्यतीत्यादिना भूम्न्यन्यादर्शनादयो धर्मा आम्नाता इत्युभयत्राम्नानाद्यथा परमात्मपदवाच्ये भगवति धर्मोपपत्तिरेवं भूमशब्दवाच्ये भगवति । संप्रसादे त्वाम्नातत्वाभावाद्धर्मोपपत्तिर्नास्ति ।

—८ धर्मोपपत्तिमुक्त्वा फलोपपत्तिमाहुः- **चकारादिति** । **तस्यैवेति** । अविभागद्रष्टुरेवेत्यर्थः ।

—१० **इत्यन्तेन**- प्रपाठकान्तिमग्रन्थेन ।

**सूत्रार्थः**- यत्र नान्यत्पश्यतीत्यादिनोक्तानां धर्माणां भगवत्येवोपपत्तेः । चकारात्स वा एष इत्यादिनोक्तं फलं भगवद्विद एवोपपद्यत इति ज्ञेयमिति ।

**इति द्वितीयमधिकरणम् ।**

---

## अक्षरमम्बरान्तधृतेः ॥ १।३।१० ॥

—१४ **गार्गीब्राह्मण इति** । बृहदारण्यकतृतीयाध्यायस्थगार्गीब्राह्मणे ।

—१६ **पदार्थान्तरमिति** । जडो जीवश्चेति पदार्थान्तरम् । ओतप्रोतत्वं विकारित्वापादकत्वेन जडलिङ्गम् । अमृताक्षरं हर इति श्रुतावक्षरपदं प्रसिध्या जीवलिङ्गं प्रशासनं च ब्रह्मलिङ्गमिति त्रिविधसंशये बीजम् ।

—१७ पूर्वपक्षमाह-**तत्राचेतनेत्यादि** । **अचेतनसाधारण्यादिति** । ओतप्रोततया विकारित्वेनाचेतनसाधारण्यमित्यर्थः ।

—१८ **तुल्य इति** । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव । इति स्मार्तदृष्टान्ताद्धारवाहकत्वमेव गमयिष्यतीति द्युभ्वाद्यायतनत्वेन विरोधोपि समानः । **अत एव**-अब्रह्मपरत्वादेव । **न हीति** । अत्र तु निराक्रियन्त इति विषयभेदसद्भाव इति भावः ।

—१९ **अतः**- विषयभेदात् । **अचेतनतुल्यत्वादिति** । अस्यान्यतरपरिग्रह इत्यनेनान्वयः ।

—२० असमाप्तत्वादिति । ब्रह्मवादस्य समाप्तिस्त्वारुणिसंवादेन्तर्यामिनिरूपणेनैव । आग्रहाविष्टत्वं स्त्रीत्वं च ब्रह्मविद्याश्रवणेनाधिकारित्वसाधकं तत आहुः–स्त्रीत्वाच्चेति ।

—२१ कयाचिदुपपत्त्येति । अश्नुत इति न क्षरतीति योगेन वेत्यर्थः ।

७८–३ यद्यपि विषयवाक्येम्बरान्तधृतेः पाठाभावादसिद्धोयं हेतुस्तथाप्यम्बरान्तधृतेरित्यस्य श्रुतिसिद्धत्वं तदाहुः–श्रुतिं व्याख्यायेति ।

—४ तात्पर्यसिद्धतां विशदयन्ति–अत्रैक इति । अयं भावः । प्रथमब्राह्मणे यदिदं सर्वमोतं च प्रोतं चेत्यादिना ब्रह्मलोकपर्यन्तं पूर्वपूर्वमुत्तरोत्तरस्मिन्प्रोतमिति निरूप्य ततोरुणिसंवादोत्तरं पुनर्गार्ग्या प्रश्नः कृतः–यदूर्ध्वं याज्ञवल्क्य दिवः–इत्यादि–कस्मिंस्तदोतं च प्रोतं च इति ततो याज्ञवल्क्येनाकाश इत्युत्तरे पुनराकाशविषय ओतप्रोतत्वप्रश्ने–एतद्वै गार्गि तदक्षरम्–इत्याद्युत्तरम् । अत्र यद्यपि प्रश्नद्वयं प्रतिभासते तथापि प्रश्नैक्यमुत्तरैक्यमेव । आकाशविषयकौतत्वप्रश्नेक्षरस्यैवोत्तरितत्वात् । आकाशस्यावान्तरत्वमागतं तेन पृथिव्याद्याकाशान्तानां विधारको भगवानेवेति सिद्धम् ।

—५ द्युभ्वाद्यायतनासिद्धो धर्म इति । तत्स्वरूपतया तद्धारकत्वधर्म इत्यर्थः । तथाचोक्तं श्रीमद्भागवते–

> नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे ।
> ओतप्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः ।

इति । अतो भारवाहकत्वदोषोपि न । न तदश्नोतीति । इदमत्र तात्पर्यम् । द्वावपि निषेधौ व्यापकत्वं तदभावं च बोधयन्तौ विरुद्धधर्माश्रयत्वं वस्तुपरिच्छेदराहित्यं च द्योतयतः । किंच ब्रह्म ज्ञात्वा अभावसंभावना क्रियते चेन्मूर्धविपातः स्यादिति श्रुतौ प्रतिपादितम् । तादृङ्मूर्धविपातो गार्ग्या न जात इति तस्या ब्रह्मवित्त्वेनाधिकारित्वात्स्त्रीत्वदोषोपि न । एवं चायं सर्वोपि ब्रह्मवाद एव परोक्षेण प्रतिपादितः । तथा च द्युभ्वाद्यधिकरणासिद्धब्रह्मधर्म एव हेतुर्मुख्यः । तेन हेतुनाक्षरं ब्रह्मेति सिध्यतीति । अत्रास्थूलादिवाक्योक्तमक्षरं परमात्मैव । विरुद्धधर्माधारत्वे सत्यम्बरान्तधारकत्वात् । यन्नैवं तन्नैवमिति व्यतिरेक्यनुमानप्रयोगो ज्ञेयः ।

सूत्रार्थः–अक्षरशब्दवाच्यं परमात्मैव । पृथिव्याद्याकाशान्तधारकत्वेनोक्तेरिति ॥ १० ॥

## सा च प्रशासनात् ॥१।३।११॥

—१० कचिद्वाक्ये–यस्मिन्द्यौरित्यादिवाक्ये ।

—१३ सा—स्वयान्यधर्मत्वेन गृह्यमाणा। एवंच स्वर्गात्पततस्त्रिशङ्कोर्यथा विधृतिस्तिष्ठेति वदतो विश्वामित्रस्य धर्मो न त्रिशङ्कोस्तथान्यनिष्ठा विधृतिर्ब्रह्मधर्म एव प्रशासनस्य चेतनधर्मत्वादिति भावः।

**सूत्रार्थः**—एतस्य वा अक्षरस्य प्रशासने—इत्यादिश्रुत्या प्रशासनोक्तेः साकाशान्तधृतिर्ब्रह्मधर्म एवेति ॥ ११ ॥

## अन्यभावव्यावृत्तेश्च ॥१।३।१२॥

—१७ **भविष्यतीति**। प्रशासनहेतुकत्वं विधृतेरुपासनार्थं भविष्यतीत्यर्थः। २० **कार्यकारणभावभेदेनेति**। अब्रह्मत्वे हीत्यनेनान्वितम्। एवं चाक्षरे प्रशासनकर्तृत्वस्य चेतनधर्मस्य कथनेन प्रधानव्यावृत्तिः। आकाशोतप्रोतत्वकथनेन जीवव्यावृत्तिः। तेनाब्रह्माणि ब्रह्मत्वेनोपासनापरमिति वक्तुं न शक्यतेक्षरस्याब्रह्मत्वाभावादित्यर्थः।

—२१ युक्त्यन्तरं वदन्ति—**चकारादिति**। **सूत्रार्थः**—अब्रह्मधर्मव्यावृत्तेरम्बरान्तधृतिर्ब्रह्मधर्म एव। यो वा एतदक्षरमविदित्वा गार्गीत्यादिप्रकरणेन शुद्धब्रह्मप्रतिपादनमेव नतूपासनाप्रतिपादनमिति चकारेण सूच्यत इति ॥ १२ ॥

इति तृतीयमधिकरणम्।

---

## ईक्षतिकर्मव्यपदेशात्सः ॥ १।३।१३ ॥

७९–३ **पञ्चमप्रश्न इति**। आथर्वणानां प्रश्नोपनिषदः पञ्चमे प्रश्ने। संशयस्तु ध्येयविषय इत्याहुः—**तत्रेति**। परापरयोरुभयोरपि प्रकृतत्वं संदेहबीजम्।

—९ पूर्वपक्षमाह—**तत्रामुख्येत्यादि**। त्रिमात्रेणार्धचतुर्थमात्रेण च परपुरुषध्यानस्योक्तत्वात्तत्तुल्यकक्षत्वेनामुख्यप्रवाहपतित्वादित्यर्थः। ब्रह्मज्ञानं फलं न किंतु परप्राप्तिः फलं ब्रह्मविदाप्नोति परमिति श्रुतेः। अत्र तु तदीक्षणस्य फलत्वेन प्रतिपादनं तस्मात्परात्परशब्देन ब्रह्म न भवतीति भावः।

—१४ **जीवघनादिति**। जीवानां केवलमुक्तानां घनः पिण्डीभावो यत्र तादृशादक्षरात्।

—१५ **उभयोः**—ध्यानेक्षणरूपयोः। **एकत्वं**—एकविषयत्वम्। तद्विवृण्वन्ति—**अपरमिति**। ब्रह्मोंकारयोरभेदोपक्रमादिति भावः।

—१६ **तथैव च श्लोकाविति**। विषयवाक्यादग्र एवमेतौ श्लोकौ भवतः।

तिस्रो मात्रा मृत्युप्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः ।
क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु-
इत्यादि ।

—१७ युक्त्यन्तरमाहुः-अभिध्यानस्येति । मन्दशङ्कानिवृत्त्यर्थमिति । परं ब्रह्म न दृश्यत इति मन्दशङ्कानिवृत्त्यर्थम् । सर्वसंकरवादिनां-शङ्कराचार्यतदनुयायिनाम् । तैरत्र श्रुतौ-एतान्त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नः स सामभिरुन्नीयते ब्रह्मलोकमिति पाठोङ्गीक्रियते ।

—१९ तत्रापीति । तत्रापि पाठे विचारस्तुल्य इति न दोष इत्यर्थः ।

सूत्रार्थः-अभिध्यानविषयः स परपुरुषः परमात्मैव । ईक्षतेः कर्मत्वेन व्यपदेशादिति ॥ १३ ॥

इति चतुर्थमधिकरणम् ।

---

## दहर उत्तरेभ्यः ॥ १।३।१४ ॥

२५— श्रूयत इति । छान्दोग्योपनिषदि दशमप्रपाठकारम्भे । ननु तल्लिङ्गादित्यधिकरण आकाशशब्दोदितस्य सर्वाधारब्रह्मत्वे विचारिते तेन निष्प्रयोजनमिदमधिकरणमित्यत आहुः-जीवेत्यादि । उपाधिभेदाद्भेदेपि वस्तुतश्चैतन्यमात्रत्वाज्जीवाभिन्नमेव ब्रह्मेति वादो जीवब्रह्मवादः ।

८०-१ निर्णीयत इति । स जीवब्रह्मवादः संभवति न वेति निर्णीयत इत्यर्थः । एवं चैतन्निर्णयस्य पूर्वमकृतत्वादेतत्सूत्रप्रणयनमिति भावः । इदमेवास्याधिकरणस्य प्रयोजनमित्यत्र किं विनिगमकमित्याहुः- तादिति ।

-२ व्यर्थमिति । अधिकरणारम्भ इत्यस्यानुगुणं व्यर्थ इति प्रयोगोपेक्ष्यते परं सामान्ये नपुंसकम् । इत्यनेन नपुंसकत्वम् । अत्र प्रकाशः । तथा च यदि तथा स्यात्तदोपाधिभेदस्येतरत्वाप्रयोजकत्वादाकाशतुल्यतासंभवादितरपरामर्शसूत्रं व्याहत्याधिकरणारम्भो व्यर्थ एव स्यात् । एतस्यैव वाक्यस्य श्रुतिवाच्यत्वापातेन नेति निषेधोपि न संभवेत् । तस्मादस्मिन्नधिकरणे जीवब्रह्मैक्यकृतसर्वसंकरवादस्य मायावादस्य निराकृतिरेव मुख्या । अतोधिकरणसार्थक्यानुपपत्तिरेव प्रणयनप्रयोजनगमिकेत्यर्थः ।

—४ पूर्वपक्षमाह-किं तावदिति । अवान्तरप्रकरणद्वयम् । दहरविद्यारूपम्, इन्द्रप्रजापतिसंवादरूपं च । तत्र चतुर्भिः पर्यायैर्जाग्रदाद्यवस्थाचतुष्टयेन जीवस्यैव प्रतिपादनादिति भावः । अर्थानुगुण्यमिति । कश्चिदर्थो

विरुद्धश्चेत्प्रकरणान्तरं कल्पनीयं नोचेत्तदर्थानुगुण्यं व्याख्येयम्। दहराकाशं प्रक्रम्य-एषोपहतपाप्मा जीवः-इत्यङ्गुल्या निर्देश इत्यानुगुण्यमिति भावः।

—९ अन्यदप्यर्थानुगुण्यमाहुः- **तस्येति** । **सूक्ष्मं**-हार्दाकाशरूपम् । तस्यान्ते सुषिरं सूक्ष्ममिति श्रुत्यन्तरात्। महिम्नः स्वरूपमाहुः- **वासनेति** । **अन्यथा**-ईदृशमहिम्नोऽस्वीकारे। **उभयत्र**- सर्वं समाहितं, सर्वाणि च भूतानीत्युभयस्थले। **उपदिशतीति**। उपासनार्थमिति शेषः। **प्रतिभान्तीति**। प्रतिलक्षणे। स्वाज्ञानकल्पितानां जीवानां स्वप्नादिषु सिद्धत्वात्तेषामेव गमनागमने लक्ष्यीकृत्य प्रवृत्तं वाक्यमिति भावः। एवं कल्पने बीजमाहुः- **स्वातिरिक्तस्येति**। तत्त्वमस्यादिश्रुतिवाक्येषु तथैव सिद्धत्वादिति भावः।

—१७ ननु य आत्मा स सेतुरित्यादिवाक्येन यल्लोकाधारत्वमुक्तं तस्य कथं संगतिरित्यत आहुः-**एवमिति**। यथा गन्तारस्तत्राज्ञानकल्पिता एवं लोका अप्यज्ञानकल्पितास्तेन च कल्पितलोकानामाधारत्वमपि नासंगतमिति भावः। **तस्येति**। अज्ञानकल्पितस्याविदुष इत्यर्थः। कर्मणामविद्वदधिकारत्वादविद्वत्त्वस्य चाज्ञानिकत्वात्तादृशस्यैव तत्साधनमुपायप्रकारश्च । विदुषो ब्रह्मभूतस्य व्यापकस्य तन्न संभवतीति जीवभावस्याज्ञानकल्पितत्वाङ्गीकारे सर्वस्यापि संगतिरित्यर्थः।

—१८ **तस्मात्**-उत्तरप्रकरणस्वारस्यात्।

—२१ सिद्धान्तमतेऽज्ञानकल्पितभिन्नभावरूपो जीवो भवतीति सूचयितुं जीवस्वरूपमाहुः-**जीवो नामेति**। एवंच दहर उभयविधोऽपि जीवो नेति भावः।

**सूत्रार्थः**-दहरः परमात्मा न जीवः। उत्तरसूत्रोक्तहेतुभ्य इति ॥ १४ ॥

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥१।३।१५॥

८१-३ व्याकुर्वन्ति-**गतिरित्यादि युक्तावित्यन्तग्रन्थेन**। सूत्रस्थतथाहिशब्दस्यार्थः-**तथा**-गतिशब्दौ। **हि**-युक्तौ। गतेरज्ञानकल्पितजीवपरत्वं परिहरन्ति-**अनृतेनेत्यादि विरोधश्चेत्यन्तेन ग्रन्थेन**। **न किंचिदिति**। जागरणदशायामज्ञाननाशे कल्पितस्य गन्तुरपि नाशात्स्मरणं न स्यादिति भावः।

—११ **शास्त्रवैफल्यापत्तेरिति** । गन्तुरभावेनानुविद्य व्रजन्तीत्यादिना ज्ञानिनः फलाभावस्य श्रुत्यैवोक्तत्वाज्ज्ञानिनश्चाज्ञानवशाद्गमनाभावस्य त्वयैव व्युत्पादितत्वात्। अथ य इहात्मानमनुविद्य व्रजन्ति-इत्याद्युक्तस्य गन्तुरनङ्गीकारे द्विविधगतिबोधकशास्त्रवैफल्यापत्तेरित्यर्थः । **कर्मकर्तृविरोधश्चेति**। वस्तुतो जीवस्य ब्रह्माभेदेऽङ्गीकृते आत्मानमनुविद्य व्रजन्तीत्युक्तस्य कर्मकर्तृभावस्य विरोधः। अत्रत्यकर्मकर्तृभावो भेदमूलक इत्येकवचनबहुवचनप्रयोगाभ्यामेव स्पष्टतया ज्ञायते। जीवपरमात्मनोरंशांशिभावेन भेदसिद्धौ

तद्गतेर्ब्रह्मविषयकत्वमेव युक्तमिति दृष्टत्वेन हेतुना साधितम् । अतः परं शब्दस्य ब्रह्मपरत्वं दृष्टत्वेन हेतुना साधयन्ति **तथेति** । अपहतपाप्मत्वं धर्मान्तराणामप्युपलक्षकम् । अपहतपाप्मत्वादिविरुद्धधर्माणां जीवेदृष्टत्वादुभयत्रापि दृष्टस्यैव साधकत्वात्तेपि शब्दा ब्रह्मपरा इत्यर्थः । ब्रह्मलोकपदस्य ब्रह्मपरत्वं पूर्वपक्षग्रन्थ एव साधितमिति सर्वमनवद्यम् ।

—१३ सिद्धान्तभूतब्रह्मवादे तु विभागोविभागोपि बहु स्यामितीच्छाकृत इति दृष्टान्तेनाहुः–**पृथिवीति** ।

—१४ विभागस्याज्ञानकृतत्वं दूषयितुमज्ञानं विकल्पयन्ति–**तथाहीति** ।

—१६ द्वितीयपक्षं दूषयन्ति–**सांख्येति** ।

—१७ प्रथमपक्षं दूषयन्ति–**अन्तरिति** । अयं भावः । अन्तः शक्तिः स्वरूपाविरोधिनी स्वरूपविरोधिनी वा । आद्ये स्वरूपभूताञ्जीवान्न व्याप्नुयात्तथाच भेद एव न स्यात् । द्वितीये जीवानिव परमात्मानमपि व्याप्नुयात् ।

—१८ तथाच ब्रह्मशक्तित्वभङ्गः स्यादित्याहुः-**आश्रयनाशप्रसंगादिति** । ननु सा शुद्धसत्त्वेनेश्वरोपाधिभूता, मिश्रसत्त्वेन जीवोपाधिभूतेति परिकल्प्य विभेदकत्वमुच्यत इति चेत्तत्राहुः–**कल्पनाया इति** । **अप्रामाणिकत्वादिति** । श्रुत्यादिष्वनुक्तत्वादिति शेषः ।

—२० ननु–नासिके निरभियेतां दोधूयति नभस्वति–इत्यत्रान्तःस्थितस्यापि वायोर्भेदकत्वं दृष्टमिति चेत्तत्राहुः–**नापीति** । वायोर्ब्रह्माण्डशक्तित्वाभावादस्तु विभेदकत्वमस्यास्तु ब्रह्मशक्तित्वान्न तथा विभेदकत्वमिति दृष्टान्तवैषम्यमिति भावः । मायावादे दूषणान्तरमाहुः– **किंचेति** । **ब्रह्मवादे**-बहु स्यामिति प्रत्यक्षश्रुतिसिद्धे ।

—२१ **अज्ञानादिति** । प्रत्यक्षादिना प्रपञ्चे ब्रह्मत्वाज्ञानादित्यर्थः ।

—२२ **ब्रह्मविदुपासनया**– साधुसंगेन । **गमिष्यतीति** । पित्तजन्यः कामलारोगः पित्तनाशकशर्कराभक्षणेन यथा निवर्तते तन्निवृत्तौ च शङ्खपीतिमाप्रतीतिरपि निवर्तते तद्वत्सत्संगेनाज्ञाननिवृत्तौ प्रपञ्चमिथ्यात्वं निवर्तेतेति व्यर्थं मतकरणमित्यर्थः ।

—२३ ननु भवत्वेवं तथाप्याधुनिकस्यास्य मतस्य निराकरणार्थमाधिकरणप्रणयनं त्वयुक्तमित्यत आहुः- **सर्वज्ञेनेति** । निराकरणेनेति हेतौ तृतीया । प्रकृत्यादिभ्य उपसंख्यानमिति वार्तिकात् । एवंच पुराणेषु यथा भाविनिराकरणं तथा भाविमिथ्यावादनिराकरणार्थमधिकरणप्रणयनमिति भावः ।

२४—**दर्शनादिति** । अत्र दर्शनद्वयं क्रमेण गतिशब्दयोस्तथात्वसाधकम् ।

८२–१ **लिङ्गमिति**। गतिशब्दयोर्ब्रह्मपरत्वे लिङ्गमस्तीत्यर्थः। वाक्यशेषेण पूर्वं गतेर्लिङ्गमाहुः– **यथैवेति**। **कर्मजितः**– सेवादिकर्मणा प्राप्तो धनगृहादिः। **लोकः**–सुखहेतुत्वेन भोग्यः।

—२ **नहीति**। अत्र हि वाक्यशेषे–तद्य इहात्मानमनुविद्य व्रजन्तीत्यात्माज्ञानं लोकक्षयहेतुत्वेनोच्यते। यद्यात्मा ब्रह्माभिन्नः स्यात्तदापहतपाप्मादिगुणकत्वात्स्वस्य स्वाज्ञानं न संभवति। अत इदमज्ञानं जीवस्य ब्रह्मभिन्नत्वं बोधयद्गतेर्ब्रह्मविषयत्वे लिङ्गमित्यर्थः।

—३ **हिताकरणप्रसक्तिश्चेति**। यदि गन्तॄणां मनोरथादिकल्पितत्वं स्यात्तदाज्ञानिवज्ज्ञानिनामपि गन्तॄणां मिथ्यात्वात्तेषु सर्वलोककामचाररूपहितस्याप्यकरणप्रसक्तिः। अतो हितकरणे सत्यजीवकर्तृत्वं बोधयद्गतेर्जीवभिन्नब्रह्मविषयत्वे लिङ्गमिति भावः। ननु ज्ञानेनाज्ञाननाशात्कल्पितरूपनिवृत्तौ सामर्थ्योद्बोधेन ब्रह्माभिन्नेपि तस्मिन् हितस्योपयोगः स्यादित्यत आहुः-**न चेत्यादि**।

—४ **विरोधित्वादिति**। अनुविद्य व्रजन्तीति श्रुत्युक्तव्रजनाविरोधात्। तदेव व्युत्पादयन्ति–**नहीति**।

—५ गते लिङ्गं व्युत्पाद्य शब्दस्य ब्रह्मपरत्वे लिङ्गमाहुः-**विरुद्धेति**। **चोप्यर्थे**। एवंच जीवाभिन्नकल्पनापि श्रुतिविरुद्धेत्यर्थः।

—६ **तज्ज्ञानं**–अहं ब्रह्मास्मीति ज्ञानम्। **तस्य**–जीवस्य। **तस्य**–भगवतः। **स गुणः**–ज्ञानरूपो गुणः।

—७ **भगशब्दवाच्यानां**–ऐश्वर्यादीनाम्। **तत्कृपयेति**। स गुणो ज्ञानरूपो भगवत्कृपया वामदेवादिवज्जीवे यदा समायाति तदा तस्यापि सर्वलोककामचारादिरूपं माहात्म्यं भवतीति वाक्यार्थः। एवंचापहतपाप्मादिरूपः शब्दो जीवाभिन्नब्रह्मपर इति सिद्धम्।

—१० **ब्रह्मत्वेन ज्ञानमिति**। आत्मनो ब्रह्मत्वेन ज्ञानं न मोक्षायेति योजनीयम्। तमेवेति श्रुतिस्थैवकारादयमर्थो गम्यते। पुरुषविधब्राह्मणोक्तमहं ब्रह्मास्मीति ज्ञानं ब्रह्मणः सर्वरूपत्वज्ञानानन्तरमेवेति न विरोधः। एवमहंग्रहोपासनायां बोध्यम्।

—११ **तस्मात्**–गतिशब्दरूपहेतुद्वयात्।

**सूत्रार्थः**–ब्रह्मलोकगत्यैवमेवेमाः सर्वाः प्रजा इत्यादिशब्दैश्चात्र दहरशब्दवाच्यं ब्रह्मैव। तथा गतिशब्दयोर्ब्रह्मपरत्वनिरूपणे लिङ्गमस्तीति ॥१५॥

## धृतेश्च महिम्नोस्यास्मिन्नुपलब्धेः ॥ १।३।१६ ॥

उत्तरेभ्य इति हेतुबहुत्वं प्रतिज्ञातं तत्पूरयितुमाहुः-अपरमिति ।

—१४ असंभेदाय-सांकर्याभावाय ।

—१६ सेतुत्वमिति । स्वयं साधनीभूय निःसाधनपारप्रापकत्वं सेतुत्वम् ।

—१८ महिमेति । पुरुषसूक्त एतावानस्येति मन्त्रे । ब्रह्मापेक्षयापि महिम्नो ज्यायस्त्वं श्रुत्यैवोक्तमतोस्मान्महिम्नोपि तथेत्यर्थः । तथाच हेतुद्वयमिति भावः ।

—२० उभयत्र-अन्तर्बहिश्च । एकस्य- द्यावापृथिव्यादेः । जगतो दर्शनं विरुद्धमिति न वाच्यमित्यन्वयः ।

—२२ यावान्वा अयमाकाश इति । आकाशतुल्य इत्यर्थः । यशोदादीनामन्तर्बहिश्चोभयत्र दर्शनाद्विरुद्धधर्माधारत्वस्य स्फुटत्वान्महिमरूपत्वमिति भावः । न च तन्मायया प्रदर्शितमिति वाच्यम् ।

किं स्वप्न एतदुत देवमाया किं वा मदीयो बत बुद्धिमोहः ।
अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः ।
अथो यथावन्न वितर्कगोचरं चेतोमनःप्राणवचोभिरञ्जसा ।
यदाश्रयं येन यतः प्रतीयते सुदुर्विभाव्यं प्रणतास्मि तत्पदम् ॥

इति मायावादिपक्षनिराकरणपूर्वकं भगवद्योगदर्शनकारणतास्थापनात् ।

—२४ तदेतन्निगमयन्ति- न त्विति ।

सूत्रार्थः— अथ य आत्मा स सेतुर्विधृतिरिति श्रुत्युक्तविधारणस्य ब्रह्मण्येव संभवाद्र दहरशब्दवाच्यं ब्रह्मैव । चकारात्सेतुत्वमपि ब्रह्मण एव । ननु गौणधारणं जीव एव संभवतीति धारणात्मकहेतुर्न ब्रह्मत्वसाधक इति चेन्न । अस्य धारणात्मकमहिम्नो ब्रह्मण्येवोपलब्धेरिति ॥ १६ ॥

## प्रसिद्धेश्च ॥ १।३।१७ ॥

८३-३ सर्वधर्मप्रसिद्धिरिति । अरश्च ह वै ण्यश्चार्णवावित्यनेनोक्ता ऐरम्मदःसोमसवनाश्वत्थापराजिताख्यब्रह्मपुरप्रभृतिसर्वधर्मप्रसिद्धिः । एतदेव वाराहपुराण उपबृंहितम् ।

अरनामामृताम्भोधिर्ण्यनामामृतसागरः ।

इत्यादि ।

सूत्रार्थः—एतत्प्रकरणोक्ता आकाशपदवाच्यस्यापहतपाप्मत्वादयो धर्मा ब्रह्मण्येव प्रसिद्धा अतो ब्रह्मैव दहरपदवाच्यमिति ॥ १७ ॥

## इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १।३।१८ ॥

—५ अतः परं चतुःसूत्र्याः प्रयोजनमाहुः– **अन्यनिषेधेति** ।

—१४ परामर्शमाहुः– **तत्रात्मविद इति** ।

—१६ **अभयमित्यादीति** । उक्त्वेति शेषः । **सेतुरिति** । वदतीति शेषः ।

—१८ जीवपरत्वं व्याकुर्वन्ति–**तत्रेति** । **जीवावस्थेति** । संप्रसादस्य जीवावस्थाविशेषत्वमुक्तं बृहदारण्यके । अस्मिन्प्रसादे रत्वा चरित्वेत्यत्र सिद्धम् । **तत्र**–सुषुप्तौ । **परसंबन्धनिमित्तेन**–ब्रह्मसंबन्धनिमित्तेन ।

—१९ **वचनादिति** । इदमेव जीवासाधारणं लिङ्गमिति भावः ।

—२१ एवमितरपरामर्शं व्याख्याय तस्याधिकत्वं स्फुटयन्ति–**नेत्यादि** । **विरुद्धधर्मत्वेन**–ब्रह्मविरुद्धधर्मत्वेन ।

—२२ **तन्निश्चयात्**–जीवत्वनिश्चयात् । ननु जीवस्य ब्रह्माभिन्नत्वाद्विरुद्धधर्माध्यासाङ्गीकारे न दोष इत्यत आहुः–**उभयोरिति** ।

—२४ **जीवे**–हृदयान्तर्वर्तिनि । तर्हि परामर्शस्य का गतिरित्यत आहुः–**न हीति** ।

८४–२ **नोभयमिति** । जीवब्रह्मरूपेणावस्थाभेदाभिन्नम् ।

**सूत्रार्थः**—ननु जीवस्योपक्रमादिषु परामर्शात्स एवात्र प्रतिपाद्यत इति चेन्न । जीवे जगदाधारत्वादिधर्माणामसंभवादिति ॥ १८ ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १।३।१९ ॥

—५ प्राजापत्यप्रकरणं जीवपरमित्याहुः–**तत्रेति** ।

—१० परिहारं व्याकुर्वन्ति–**एवमित्यादि** ।

—११ **तदाहेत** । तस्माद्धेतोः कारणभूतं प्रकारमाहेत्यर्थः । **आविर्भूतस्वरूप इति** । प्रजापतिवाक्ये परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रवणात् । आविर्भूतं प्रकटीभूतं ब्रह्मस्वरूपं यस्मिन्स तथेत्यर्थः ।

—१२ आविर्भाव एव कथमित्यत आहुः–**स्वाप्ययसंपत्त्योरिति** ।

—१४ नन्वेवमर्थे किं गमकमित्यत आहुः–**अन्यथेति** । प्रतिबिम्बादावित्यत्रादिपदेन शरीरसंग्रहः ।

—१७ **तथा वचनं**–स्वरूपाभिनिष्पत्तिवचनम् ।

**सूत्रार्थः**—उत्तरप्रकरणानुरोधादत्रापि जीवो वाक्यार्थ इति चेद्भगवदाविर्भावेन ते धर्मा जीवे संभवन्तीति गृहाण । अतो न जीवो दहरपदवाच्य इति ॥ १९ ॥

## अन्यार्थश्च परामर्शः ॥ १।३।२० ॥

—२२ कोसावर्थ इत्यपेक्षायामाहुः–**तस्मादिति** ।

—२३ स्वस्यैवामिति । भगवानमृतरूपो मर्त्यमयमायितेति ज्ञानं स्वस्य जातं चेद्ब्रह्मसुखं फलं जायत इत्यर्थः ।

८५–१ नानाविधव्याख्यानसत्त्वेयमेव सूत्रार्थ इति निश्चये किं मानमित्यत आहुः–वक्ष्यति चेति । एवंचैतत्सूत्रस्वारस्यादयमेवार्थ इति तात्पर्यम् । स्वाप्ययसंपत्त्योरिति सूत्रस्यार्थः–सुषुप्तिविषया न तदश्नोति कंचनेति श्रुतिर्ब्रह्मसंपत्तिरूपपुष्टिमार्गविषया सोश्नुत इति श्रुतिरित्येवं श्रुतिद्वयेन भिन्नविषयकमुक्तमेवंच श्रुतिव्यवस्थार्थं निर्गुणसगुणकल्पनानुपयुक्तेति ॥

**सूत्रार्थः**– आदिमध्यावसानेषु जीवपरामर्शस्यान्यत्प्रयोजनमिति ॥ २० ॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ १।३।२१ ॥

—१० तत्रेति । विषयसप्तमी । तद्विषयकमित्यर्थः । अत्र तन्नेति पाठः । तदिति पाठः साधुः । तथा पुरुषशरीरं चेति । विजिघित्सोपिपास इत्यादिधर्मैः सूचितं पुरुषशरीरं च विरुद्धमिति नाशङ्कनीयमित्यर्थः ।

**सूत्रार्थः**– अल्पे पुण्डरीकेवस्थानश्रुतेर्जीवोत्र निरूप्य इति चेन्न । निचाय्यत्वादेवं व्योमवच्चेत्यत्र तदुक्तमेव । एवंच हृदयकमले ब्रह्मणो द्रष्टुं शक्यत्वात्तदायतनत्वेन निरूपणमित्यर्थ इति ॥ २१ ॥

इति पञ्चममधिकरणम् ।

---

## अनुकृतेस्तस्य च ॥ १।३।२२ ॥

—२१ अन्यत्र– मुण्डकपञ्चमवल्लीसमाप्तौ द्वितीयमुण्डकसमाप्तौ च । यत्तच्छब्दानामिति । य एष सुप्तेषु जागर्ति । मन्त्रान्तरेपि–तस्मिंल्लोकाः श्रिताः सर्वे–इत्यादिमन्त्रेषु यत्तच्छब्दानामित्यर्थः ।

२३ पूर्वपक्षी श्रुतिं व्याकुर्वन्समाधत्ते–तत्रेत्यादि । अस्याः श्रुतेः सूर्यादीनामभाने तात्पर्यं न किंतु–गजा यत्र न गण्यन्ते मशकानां तु का कथेति न्यायेनाल्पभान एव तात्पर्यमतो न दोषः । उत्तरार्धे तु तमेव भान्तमिति कथनादल्पप्रकाशशालिनि सत्यलोके स्थितः कश्चित्तेजोविशेष एवोच्यते सूर्यादितेजोभिभावकः । इदानीमपि ।

खद्योतो द्योतते तावद्यावन्नोदयते शशी ।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ।

इति तेजोविशेषस्यैव सजातीयाभिभावकत्वस्य प्रसिद्धत्वात् ।

८६–६ समाधानं व्याकुर्वन्ति–भगवदनुकारार्थमिति । नान्यार्थकल्पनमिति । अन्यार्थभूतसत्यलोकस्थिततेजोविशेषकल्पनमित्यर्थः ।

सूत्रार्थः– तमेव भान्तमित्यनेन सूर्यादिभानस्य भगवदनुकृतिनिरूपणार्थत्वादस्मिन् वाक्ये ब्रह्मैव प्रतिपाद्यम्। तस्य भासा सर्वमिदं विभातीत्यादिना सूर्यादीनां स्वतो भानं नास्तीत्युच्यत इति ॥ २२ ॥

अपि स्मर्यते ॥ १।३।२३ ॥

सूत्रार्थः– न तद्भासयते सूर्य इति यदादित्यगतं तेज इति यच्चन्द्रमसि यच्चाग्नाविति च गीतासु स्मर्यतेपीति ॥ २३ ॥

इति षष्ठमधिकरणम्।

---

शब्दादेव प्रमितः ॥ १।३।२४ ॥

—२१ बाधकान्तरमिति। अङ्गुष्ठपरिमाणविरोधरूपं बाधकान्तरमित्यर्थः।

८७-१ श्रूयत इति। कठोपनिषदि चतुर्थवल्लीसमाप्तौ।

—३ जीवस्यैवेति।

अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः ॥

इति श्रुत्यन्तरात्तस्यैवेत्यर्थः। अङ्गुष्ठमात्रमिति। महाभारतस्थसावित्र्युपाख्यानेयं श्लोकः स च संपूर्णो यथा।

अथ सत्यवतः कायात्पाशबद्धं वशं गतम्।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्।

इति।

—८ विमानादिति। वाक्ये पूर्वार्धेऽङ्गुष्ठमात्रत्वमुक्त्वोत्तरार्धे तावन्मात्रस्यैव भूतभव्येशानत्वं वक्तीति वाक्यरूपशब्दादेव प्रकर्षेण विरुद्धधर्माश्रयतया मानादित्यर्थः।

—९ अन्यस्य तादृशत्वमिति। स्वल्पस्यापि राजादेर्विविधजनेशनशालित्वम्।

सूत्रार्थः– अत्रेशान इति शब्दादेवाङ्गुष्ठप्रमितो भगवानेवोच्यत इति॥२४॥

हृद्यपेक्षया मनुष्याधिकारत्वात् ॥ १।३।२५ ॥

—१९ ननु प्रादेशमात्रेणैव नियमनं भविष्यतीत्याशङ्कायामाह–मनुष्याधिकारत्वादिति। मनुष्याधिकारेणैव मृत्यूपाख्यानप्रवृत्तेर्मनुष्यहृदयस्याङ्गुष्ठमात्रत्वात्परिमाणमेवोक्तं तेनाङ्गुष्ठमात्रोऽत्र परमात्मैवेति ॥ २५ ॥

—२१ अवदानश्रवणादिति। हृदयस्याग्रेवद्यत्यथ जिह्वाया अथ वक्षसः- इति तैत्तिरीये षष्ठाष्टकेङ्गुष्ठमात्रमवद्यतीति विधिना प्रथमं हृदयावदानप्रतिज्ञानादित्यर्थः।

सूत्रार्थः- ईश्वरः सर्वभूतानामिति स्मृत्युक्तनियमनात्मकेश्वरकार्यापेक्षया हृद्यङ्गुष्ठमात्रो निरूप्यते।

इति सप्तममधिकरणम्।

---

## तदुपर्यपि बादरायणः संभवात् ॥ १।३।२६ ॥

—२५ प्रसंगसंगतिं सूचयितुं सूत्रमवतारयन्ति-अङ्गुष्ठमात्रेत्यादि। कस्यचित्-जैमिनीयदर्शनाभिमानिनः। जैमिनिनये हि-अर्थी समर्थो विद्वाञ्छास्त्रेणापर्युदस्तश्च वैदिके कर्मण्यधिक्रियते-इति स्वीक्रियते। सामर्थ्यं च हस्तपादाद्यवयवात्मकशरीरसद्भावस्तच्च देवादीनां न संभवति। मन्त्रार्थवादेषु यद्यपि तेषां शरीरित्वप्रतिपादनं तथापि तेषां मन्त्रार्थवादानां विधिशेषत्वेन शरीरादौ तात्पर्याभाव इति च प्रतिपाद्यते। ततश्च देवादीनां शरीराभावादधिकाराभाव इति बोध्यम्।

८८-३ मनुष्यादर्वाक्तनेषु पश्वादिषु योग्यत्वाभावादेव विचारानवसर इत्याहुः-तदुपर्यपीति।

—६ शतानन्दिनामपीति। ते ये शतं मानुषा आनन्दा इत्यादिना प्रजापतिपर्यन्तं शतानन्दिनस्तैत्तिरीये भृगुप्रपाठके समाम्नाताः।

—८ धर्मज्ञानाभ्यामिति। तं विद्याकर्मणी समन्वारभेते-इति श्रुत्या शरीरारम्भं प्रति धर्मज्ञानयोः कारणत्वम्। तयोः सातिशयत्वे देवादिजन्मसंभवः। तथाहि देवादीनामपि शतानन्दिश्रुतौ श्रोत्रियस्य चाकामहतस्येति लिङ्गेनाध्ययने सिद्धे

कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता।
मयादौ ब्रह्मणे प्रोक्ता।

इति ग्रन्थेन देवादीनामध्ययने पुराणेप्युपबृंहितेधिकारयुक्तजन्मसंभवः। अत एव वज्रहस्तः पुरन्दर इत्यादि संगच्छते। अर्थवादा अपि सतां गुणानामुत्कर्षाधायकाः। असत एव गुणांस्ते यदि प्रशंसेयुस्तर्हि तेषां प्रतारकत्वं स्यादित्यर्थः।

सूत्रार्थः—मनुष्यापेक्षया श्रेष्ठानां साध्यादीनामपि ब्रह्मविद्यायामधिकार इति बादरायणो मन्यते। विशिष्टजन्मवत्त्वेन तेषामप्यधिकारस्य संभवादिति ॥ २६ ॥

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ १।३।२७ ॥**

—१६ तत्पूर्वभाविष्वित्यस्य व्याख्यानं **कर्मणीति** । **ततश्चेति**। चोवधारणे। ततोङ्गीकृतादधिकारादेवेत्यर्थः।

—१७ **देशद्रव्याद्यभावाच्चेति**। पृथिव्यादिरूपदेशस्य व्रीह्यादिरूपद्रव्यस्यादिपदेन दर्शादिकालस्य चाभावात्। स्वर्लोके सूर्यादिगत्यभावाद्दर्शादिकालाभावः स्फुटः। **देवतान्तराभावादिति**। पुराण एकधैवेन्द्रादयो वर्णिता न द्वैविध्येन तेनैन्द्रं दध्यमावास्यायामित्यादिवाक्यार्थासंभव इत्यर्थः। **साध्या वै देवा इति**। एतद्वाक्यं तैत्तिरीयसप्तमाष्टके द्वितीयप्रपाठकारम्भे।

८९–३ प्रकारान्तरेण हेतुं व्याकुर्वन्ति–**अथवेति** । चतुर्धाकरणेत्यादि। अयं भावः। आग्नेयं पुरोडाशं चतुर्धा करोतीति विधिनाग्नेयस्यैव चतुर्धाकरणं प्राप्तं तथाच यत्राग्नेयः पुरोडाशो नास्ति तत्र चतुर्द्धाकरणस्य लोपः। तथावहन्तीति विधिनावहननं तुषापनयोपि प्राप्तः। तत्र प्राजापत्यान् शतकृष्णलान्निर्वपेदित्यादियाग उभयस्य लोपो विद्यमानेनैव कर्मकरणात्।

—५ प्रकारान्तरमाहुः–**तथा यत्रेति**।

—६ **सोमवाहकानोभावादिति**। सोमवाहकं यदनः शकटं तदभाववत्। तथाहि–सोमवाहकं शकटं यद्यपि विहितं तथापि पर्वतस्थसोमग्रहणप्रसङ्गे शकटगमनार्हमार्गाभावाच्छकटस्य लोपः। यत्किञ्चित्पदार्थेविद्यमानेपि कर्मकरणसंभवादिति भावः। **यज्ञेनेति**। एतेन देवतासद्भावोप्युक्तः। पुरुषावयवरूपाणां देवानां सत्त्वात्। ननु प्रथममिन्द्रादिदेवतानामभावायागः कथमिति चेन्न। प्राथमिकयागे भगवत एव देवतास्थानापन्नत्वेन ग्राह्यत्वात्।

—९ ननु तर्हि जैमिनिस्मृतेः का गतिरित्यत आहुः– **आधुनिकान् प्रतीति**। एवं चासर्वज्ञान्प्रति जैमिनिस्मृतिप्रवृत्तिरिति भावः। एतेन

जैमिनीये च वैयासे न विरोधोस्ति कश्चन।

इति पुराणवाक्यं समर्थितम्।

**सूत्रार्थः**– साध्या वै देवाः सत्रमासतेति श्रुत्या तेषां कर्माणि प्रवृत्तिदर्शनाज्ज्ञानेनाधिकार इति चेन्न। एकशतं वर्षाणि प्रजापताविन्द्रो ब्रह्मचर्यमुवासेति श्रुत्या ज्ञानेपि प्रवृत्तिदर्शनादिति ॥ २७ ॥

**शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ १।३।२८ ॥**

—१२ **शब्दे**–वेदे। विरोधं व्युत्पादयन्ति–**अर्थज्ञानेत्यादि**।

—१३ **कर्मकरणमिति**। अयं भावः। साध्या वै देवाः सुवर्गकामा इति तैत्तिरीयसप्तमाष्टके पठितम्। तत्र चैतादृशवेदार्थो यदा ज्ञायेत तदा

साध्यादीनां कर्मकरणेधिकारः संभवेत् । तादृशार्थज्ञानं च साध्यदेवसाध्यकर्मविषयकम् । एवंच ज्ञानानन्तरं कर्त्रा कर्माणि प्रवर्तितव्यमिति विहितत्वाज्ज्ञानकाले कर्तृकर्मभूतानां साध्यदेवानां सहानवस्थानरूपविरोधः ।

—१४ अन्यकल्पनायामिति । पूर्वकल्पे साध्यैर्यज्ञः कृतः स एव वेदेन वर्ण्यत इति कल्पनायामित्यर्थः ।

—१५ व्यवस्थापकाभावादिति । संसारस्यानादित्वादिति शेषः । ननु भाविवस्तुवृत्तान्तो वेदेनोक्त इति न विरोध इत्यत आहुः—तस्मादिति ।

—१६ न भवेदिति । इदानीन्तनवस्तुसंबन्धे स्वीक्रियमाणे वेदस्य पाश्चात्त्यत्वं स्यात्ततश्च तस्यानित्यत्वं स्यादित्यर्थः ।

—१७ प्रभव इति । प्रकर्षेण विद्यमानतेत्यर्थः । एवंच वेदोक्तपदार्थानां नित्यत्वं लोक उत्पत्तिमतामनित्यत्वमिति भावः ।

—१८ सर्वानुकारित्वादिति । सर्वमनुकारि यस्य तादृशत्वात् । अतोनुकार्यपेक्षयानुकार्यस्य भेदात् ।

—१९ अत इति । लौकिकप्रमाणविषयत्वादित्यर्थः । भिन्न एवेति । रूपप्रपञ्चापेक्षयेति शेषः । शब्दैकसमधिगम्यः—वेदवेद्यः । न तु लौकिकप्रमाणवेद्यः ।

—२१ न विरोध इति । एवंच साध्यादिभिर्वेदैर्वेदोक्तप्रपञ्चज्ञानानन्तरं कर्मकरणान्न कर्मकर्तृविरोधः । तादृशप्रपञ्चस्य नित्यत्वेन तत्संबन्धान्न वेदस्यानित्यत्वमिति भावः ।

—२३ अवगच्छन्तीति । वृद्धपरम्परयेति शेषः । एवंच वेदोक्ताः पदार्थाः कर्माणि च नित्यानीत्यवगन्तव्यमिति भावः । जात्याकृतिव्यक्तयः पदार्था इति न्यायसूत्रम् । पूर्वतन्त्रे जैमिनिमते जातौ शक्तिर्व्यक्तेराक्षेपलभ्यत्वम् । एकदेशिमत आकृतौ शक्तिर्व्यक्तेराक्षेपलभ्यत्वम् । एवंचातिरिक्तप्रपञ्चस्वीकारापेक्षया जातौ चाकृतौ वा शक्तिस्वीकारे तयोर्नित्यत्वेन विरोधो नास्तीत्याशयेन शङ्कते—न चेति । पीनो देवदत्तो दिवा न भुङ्क्त इत्यत्र पीनत्वान्यथानुपपत्त्या रात्रिभोजनमाक्षिप्यते । एवं जलाहरणान्यथानुपपत्त्या घटरूपा व्यक्तिराक्षिप्यते । तत्राक्षेपोर्थापत्तिः प्रमाणान्तरमिति पूर्वमीमांसकाः । व्यतिरेक्यनुमानेन गतार्थत्वमर्थापत्तेरिति नैयायिकाः । एवंच प्रमाणान्तरकल्पने गौरवम् ।

—२४ अतः परिशेषादाक्षेपस्य लक्षणायां पर्यवसानं वक्तव्यं तच्च न संभवतीत्याशयेनोत्तरमाहुः—सर्वत्रेति । सर्वत्र लक्षणास्वीकारे शक्त्युच्छेद इति भावः । नन्वस्तु लक्षणा जैमिनिमतमाद्रियामहे । बौधायनेन वृत्ति-

कृता पूर्वोत्तरतन्त्रयोरेकशास्त्रस्यैव स्वीकारादित्यत आहुः-यः सिक्तरेता इति। अयमर्थः। नहि सर्वत्र वेदे शक्ता एव शब्दाः प्रयुज्यन्ते किंतु यौगिका अपि। यथा यः सिक्तरेताः स्यात्प्रथमायां तस्य जित्यामुपदध्यादिति सिक्तरेतःपदम्। अत्राकृतिर्न संभवति। या च व्यक्तिमाक्षिपेत्। किंतु सिक्तं रेतो येनेति सिक्तरेतस्त्वमुपाधिः। स च रेतःसेकानन्तरभावित्वादनित्य इति विरोध इत्यर्थः। ननु जातावुपाधौ वास्माभिः शक्तिर्नाद्रियते किंतु पदप्रवृत्तिनिमित्ते। तच्च किमप्यस्तु।

—२५ एवंच तस्य नित्यत्वान्न कोपि दोष इत्यत आहुः-न चेति। प्रवृत्तिनिमित्ते घटत्वे शक्तिस्वीकारे तेन जलाहरणासंभवात्प्रवृत्तिवैयर्थ्यापत्तेरित्यर्थः।

९०-१ अथ घटादिरूपस्यानित्यस्याप्यर्थबलादाक्षेपकत्वमाक्षेपश्चोपनय इति विभाव्यतेतोरुच्या दूषणान्तरमाहुः- संकेतग्रहविरोधादिति। तादृशस्थले व्यवहारादिना शक्तिग्रहो वाच्यः। तत्र व्यवहारस्तु व्यक्तावेव पर्यवस्यन्ननुपस्थिते प्रवृत्तिनिमित्ते संकेतं न ग्राहयिष्यतीति विरोधादित्यर्थः। ननु भवन्मतेपि वैदिकसृष्टेरतिरिक्तत्वेनागोचरत्वादनुपस्थितिस्तथाच संकेतग्रहो न भविष्यतीत्यत आहुः- सर्वस्येति। भगवत्त्वात्-भगवदनुकारित्वात्। एवंच ब्रह्मादीनां भगवद्दर्शनेनेदानींतनानां तु लौकिकसादृश्यात्तदुपमानेन संकेतग्रह इति नानुपस्थितिदोष इत्यर्थः। अतो यथा जैमिनिमते वेदाद्धर्मावगतिस्तथा व्यासमते वेदाद्वैदिकपदार्थानामप्यवगतिरिति कर्मावगतिप्रत्यक्षेण साधितम्।

—३ अथानुमानेन साधयन्ति-जमदग्नीनामिति। येषां प्रवरत्रयं ते चतुरवत्तिनः। येषां प्रवरपञ्चकं ते पञ्चावत्तिनः। प्रधानयागकाले पुरोडाशादवदानं चतुर्वारं चतुरवत्तिनां पञ्चवारं पञ्चावत्तिनामिति विशेषः। जामदग्न्यवत्सगोत्रादयः केचन पञ्चप्रवरिणो यजमानास्तेषां पञ्चावत्तं विहितं दर्शपूर्णमासप्रकरण आपस्तम्बसूत्रे। अत्र यजमानो जामदग्न्यादिगोत्रजन्य इति प्रत्यक्षं नास्ति किंत्वनुमानम्। तदेवाहुः-न हि स्वयमिति।

—४ ननु हेत्वंशे प्रत्यक्षत्वं साध्यांशे परोक्षत्वं यत्र तत्रैवानुमानप्रसरो दृष्टोत्र सर्वपारोक्ष्ये कथमनुमानप्रसर इति चेत्तत्राहुः-परोक्षव्यवहारस्येति। तथा च ब्रह्मवादे सर्वपारोक्ष्येनुमानं स्वीक्रियत इत्यर्थः। एवंच यजमानेन परोक्षं जामदग्न्यत्वं यथा स्वस्मिन्परोक्षेण गृह्यते तद्वद्वेदोक्तप्रपञ्चोपि गृह्यत इति भावः।

**सूत्रार्थः**- ननु देवादीनां कर्मकरणे विरोधाभावेपि वैदिकशब्दे विरोधो भविष्यति। तथाहि वेदार्थज्ञानादनु कर्मकरणं साध्यैः कर्म कृतमिति वेद एवोच्यते तज्ज्ञात्वा साध्यादिभिः कर्मकरणं विरुद्धम्। सोग्निष्टोमेन वसून्-

याजयदित्यत्रोत्पन्नानां वस्तूनां वृत्तान्तकथने तु नित्यानित्यसंयोगविरोधाद्वेदस्यानित्यत्वमिति चेन्न। शब्दोक्तानां साध्यादिपदार्थानामतः शब्दादेव प्रकाशनात्। लौकिकघटादिभ्यो वैदिकघटादयो भिन्ना एवाङ्गीकर्तव्याः। तत्प्रतिपादकत्वाद्वेदस्य न नित्यानित्यसंयोगः। तत्र प्रमाणमाह–प्रत्यक्षानुमानाभ्यामिति। इदानीमेव प्रत्यक्षं यद्यजमानर्त्विजः स्वकृत्यं वेदादेव जानन्ति। जमदग्नीनां पञ्चावत्तमित्यत्र तु स्वस्मिन्नामदग्न्यत्वमनुमाय पुरोडाशादिषु पञ्चावत्तत्वं कुर्वन्ति। अतोऽलौकिकशब्दार्थप्रतिपादकत्वाद्वैदिकशब्दे न विरोध इति ॥ २८ ॥

## अत एव च नित्यत्वम् ॥ १।३।२९ ॥

—११ ननु यतो वा इमानीति श्रुतिर्भौतिकसृष्टिर्ब्रह्मोपादानिकेति वदति तस्या वैयर्थ्यं भवेयदि वैदिकसृष्टिर्भिन्नाङ्गीक्रियते चेदत आहुः–अस्या इति।

—१२ ब्रह्मोपादानस्येति। ब्रह्मरूपं यदुपादानं तस्य। तन्माहात्म्येत्यादि। तस्या वैदिकसृष्टेः प्रकटसच्चिदानन्दरूपत्वब्रह्मधर्मसंपन्नत्वादिरूपमाहात्म्यनिरूपणार्थम्।

—१३ सृष्टेर्मोहजनकत्वं कथमत आहुः– अत एवेति। नैयायिकाः परमाणुसकाशात्सृष्टिं वदन्ति। साङ्ख्याः प्रकृतिसकाशात्। एवंच वेदविरुद्धत्वात्तेषां मतमप्रमाणमित्यर्थः।

—१४ निःश्वसितवचनात्– अस्य महतो भूतस्य निःश्वसितम्– इति वचनात्। तस्यापि– ब्रह्मणोपि। नन्वेवं चेत्परापरविभागः कथमत आहुः–अर्थप्राधान्यादिति।

—१५ ब्रह्मविद्या–उपनिषद्विद्या। वैदिकप्रपञ्चस्य भिन्नत्वे साधकान्तरमाहुः–प्रपञ्चभेदादिति। लोकवेदाधिकरणे वार्तिके।

लोकेवगतसामर्थ्यः शब्दो वेदेपि बोधकः।

इति यद्यप्यङ्गीकृतं तथापि तत्कल्पितम्। जैमिनिनानुक्तत्वात्। अतः शब्दभेदः। लौकिकवैदिकव्यवहारभेदस्तु प्रसिद्ध एव।

सूत्रार्थः–आधिदैविकपदार्थप्रतिपादकत्वादेव वेदस्य नित्यत्वमिति ॥२९॥

## समाननामरूपत्वादावृत्तावप्यविरोधो दर्शनात्स्मृतेश्च ॥ १।३।३० ॥

—२० सर्वत्र–सर्ववेदे। उत्तरकाण्डे–उपनिषत्सु। अर्थबलविचारेण–तत्तेजोसृजतेत्यादेः सृष्टिनित्यताबोधकत्वात्तादृगर्थबलविचारेण।

—२४ **तथात्वात्**–अनित्यत्वेन प्रतीयमानत्वात्। **आवृत्तिशङ्कापीति**। वारंवारं सृष्टिप्रलययोः सत्त्वं तस्य शङ्कापीत्यर्थः। आवृत्तावपीत्यस्य व्याख्यानं समुद्र इत्यादि।

९१-१ **प्रक्षेपवदिति**। सप्तम्यर्थे वतिः। प्रक्षेप इवेत्यर्थः।

—२ **नामरूपयोरिति**। प्रपञ्चस्य नामरूपत्वेन व्यवह्रियमाणत्वेन सदा सत्त्वान्नित्यत्वं यथा समुद्रे जलं प्रक्षिप्तं पुनरुद्धृतं च तदा तदेव शुद्धं जलमिति निश्चयो नास्ति पूर्ववदेव नामरूपयोः सत्त्वात्। नामरूपाभ्यामन्यस्य भेदकस्याभावाच्च। तदन्यदेतादित्यपि निश्चयो नास्तीति तस्य प्रवाहरूपेण नित्यत्वमित्यर्थः।

—४ **सिद्धत्वादिति**। तथाच प्रवाहस्याविच्छिन्नत्वान्नित्यत्वमिति मीमांसकानां सिद्धान्त इति भावः।

—९ **ऋषीणामिति**। एतत्स्मृतिलक्षणं तथाच लक्षणेन प्रवाहाविच्छेदो बोधितः।

**सूत्रार्थः**–लौकिकप्रतीत्यनुसारेणोत्पत्तिप्रलयसत्त्वेपि प्रलये ब्रह्मणि लीनानां घटादिपदार्थानां सृष्टिकाले तथैव नामरूपविशिष्टत्वेनोद्गमाद्भेदकान्तराभावाज्जलप्रवाहवन्नित्यत्वेन प्रतीतेर्न नित्यानित्यसंयोगात्मको विरोधः। वेदपितृमातृगङ्गादिषु तदेवेदमिति व्यवहारदर्शनात्। सूर्याचन्द्रमसौ धातेत्यादिश्रुतिदर्शनाच्च। प्रजाः सृज यथापूर्वमिति स्मृतेश्चेति ॥ ३० ॥

## मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ १।३।३१ ॥

—१२ **एकदेशेन**–उपासनाविशेषरूपेण तदेकदेशेन। असौ वा आदित्य इत्यादि। इदं वाक्यं छान्दोग्ये तृतीयप्रपाठकारम्भे।

—१७ **स्वमुख्येन मुखेनेति**। अग्नीन्द्रवरुणसोमब्रह्मरूपा ये स्वगणमुख्यास्तद्रूपेण मुखेनेत्यर्थः। **पञ्चविधा एव**–वस्वादयः पञ्चैव।

—१९ ननु मास्तु मधुविद्याधिकार एतावता ब्रह्मविद्याधिकारो वारयितुं न शक्यत इत्यत आहुः–**ब्रह्मणोपीति**। एवंच ब्रह्मणोपि देवत्वेन तस्याप्युपासकमध्ये प्रवेशेनोपास्यत्वप्राप्यत्वयोर्विघटनादिति भावः।

—२१ ननु मोक्षो ब्रह्मविद्यामन्तरेण न संभवतीत्यत आहुः–**मोक्षस्यापीति**। वसुरुद्राद्यधिकारोपि सावधिः। ततश्च तन्निवृत्त्यनन्तरं देवत्वेनोत्तरमार्गवर्तित्वात्स्वतोमार्गबलादेव मोक्षस्यापि सिद्धेर्न विद्यावश्यकत्वमित्यर्थः।

—२२ अत्रार्थे यावदधिकारमवस्थितिराधिकारिकाणामिति वैयासिकसूत्रं प्रमाणयन्ति–**यावदिति**।

—२३ ननु सोऽग्निष्टोमेन वसूनयाजयदित्यादिश्रुत्या यागाधिकारे सिद्धे ब्रह्मविद्यायामपि तत्कल्पने को दोष इत्यत आहुः–वसूनिति । अग्निष्टोमे कृते यजमानस्य वसुत्वं स्वर्गे जायत इति भाविनीं संज्ञामादायाग्निष्टोमेन वसूनयाजयदिति श्रुतिः प्रवर्तत इत्यर्थः ।

९२–१ **तरतमभाववतामिति** । शताश्वमेधे संपादित इन्द्रत्वं तन्न्यूनेऽल्पदेवत्वमिति तरतमभाव इत्यर्थः ।

**सूत्रार्थः**—आदित्यादिभिर्मध्वाद्युपासनासंभवात्सर्वत्र ज्ञाने कर्मणि च देवादीनामनधिकार इति जैमिनिराचार्यो मन्यत इति ॥ ३१ ॥

## ज्योतिषि भावाच्च ॥ १।३।३२ ॥

—५ **महाभोगवन्त इति** । शिशुमारचक्रे स्वर्गभोगवन्तः ।

—६ श्रुतिं प्रमाणयन्ति–**अग्निः पुच्छस्येति** । इयं श्रुतिस्तैत्तिरीयारण्यके शिशुमारोपस्थाने ।

**सूत्रार्थः**–ज्योतिर्मण्डले नक्षत्रादिरूपेण भोगकरणदर्शनात्सर्वोपास्यानां तेषामुपयोगाभावाज्ज्ञानकर्मणोर्नाधिकारो देवानामिति ॥ ३२ ॥

## भावं तु बादरायणोऽस्ति हि ॥१।३।३३॥

—१२**स्वनामग्रहणमिति** । बादरायणेति यौगिकनामग्रहणमित्यर्थः । अयं हि निबन्धकाराणां पन्था यत्स्वनामग्रहणप्रसंगे

आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥

इति स्मार्तनिषेधाद्यौगिकं नामोच्चारयन्ति । भगवान्पतञ्जलिरपि स्वनामग्रहणप्रसंगे–गोनर्दीयस्त्वेवमाह–इति तत्र तत्र स्वनामोल्लिखति ।

—१३ **तुल्यत्वं**–जैमिनितुल्यत्वम् । **प्रजापतिरिति** । इदं तैत्तिरीयब्राह्मणे द्वितीयाष्टके । अत्र प्रजापतिरिति भाविसंज्ञाश्रयितुं न शक्यते–यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्चेति श्रुत्या ततः पूर्वमन्यस्याभावात् ।

—१६ कर्माधिकारसंपादिनी श्रुतिरुक्ता । अधुना ज्ञानाधिकारसंपादिनीमाहुः–**तद्यो यो देवानामिति** ।

—१९ ननु क्वचिच्छ्रुतौ देवानां कर्मजन्यफलभोक्तृत्वं प्रतीयतेत आहुः–**यत्र चेति** ।

—२१ **अनशनादिति** । एते हि दर्शनात्तृप्यन्ति नतु भक्षणादिनेति भावः। **अन्यथा**–अतिरिक्तवस्वाद्यनङ्गीकारे । **विरोध इति** । पूर्वपक्षोक्तन्यायेन वसूनयाजयदित्यत्रैव वसुत्वमेव न स्यादित्यर्थः । तत्र दृष्टान्तः । **यज्ञसूनामिति** । यथा तत्र यजमानाय वस्वादयोऽधिकारिणो वासवादिसामगानेन

प्रातरादिसवनानि प्रयच्छन्ति । एवमत्राप्यमृतदानमेवोच्येत नतु वस्वादिभावोपि। अतोत्र वेत्तुर्वस्वादिभावार्थापत्त्योपास्या अतिरिक्ता अङ्गीकार्या इत्यर्थः ।

—२२ न हीति । दृष्ट्वैव तृप्यन्तीत्याधिदैविकानामेव ।

—२३ योपीति । देवोपासकवदिति पाठः । प्रकाशकृतस्तु देवोपासनवदिति पाठमादृत्य कथमपि लापयन्ति ।

—२४ ननु पूर्वपक्षरीत्या कल्पभेदः कुतो नाङ्गीक्रियत इत्यत आहुः-न वेति ।

—२५ अनित्यतेति । एतेषामेवोपास्यत्वेनित्यतेत्यथः ।

सूत्रार्थः-देवानां ज्ञानकर्माधिकारसद्भावं बादरायणाचार्यो मन्यते । देवा वै-इत्यादिश्रुतिभिस्तथा बोधनात् ॥ ३३ ॥

इत्यष्टममधिकरणम् ।

---

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ १।३।३४ ॥

९३-३ अनुप्रसंगरूपां संगतिमाहुः-इदानीमिति । ननु शूद्राणामुपनयनाभावेनाधिकारसंभावनैव नास्ति तर्हि निषेधार्थं कुतः प्रयास इति चेन्न ब्रह्मविद्यायामुपनयनस्याप्रयोजकत्वात् । वैश्वानरविद्यायां तान्हानुपनीयैतदुवाचेति श्रावणात् । ननु शूद्रस्य शास्त्रीयज्ञानाभावान्नाधिकार इत्यत आहुः-यथेति । एवंच निषादस्य शास्त्रीयज्ञानाभावेपि यथा निषादस्थपतिं याजयेदिति विधिप्रामाण्यात्कर्मण्यधिकार एवं शूद्रस्यापि विद्यायामित्यर्थः।

—५ ननु शूद्रे निषादवच्छ्रुतिप्रामाण्यं नास्तीत्यत आहुः-हविष्कृदाधावेति । दर्शपूर्णमासप्रकरण आपस्तम्बसूत्रे हविःकण्डनपेषणार्थं हविष्कृदेहीति त्रिराह्वयतीति हविष्कृदाह्वानं विहितम् । दोहावी चेति । तथा चानेन साधकान्तरेणापि शूद्रस्याधिकारः स्पष्ट एवेत्यर्थः ।

—७ श्रूयत इति । छान्दोग्ये षष्ठप्रपाठकारम्भे श्रूयते ।

—८ सयुग्वन इति । युक्तवानिति युग्वा शकटविशेषस्तेन सह वर्तमानः सयुग्वा तस्य । तस्य पङ्गुत्वात्सर्वदा शकटेन सह वर्तमानत्वम् । रैकेति तस्य रूढं नाम । जानश्रुतिरिति । जनश्रुतेरपत्यं पुमान् ।

—९ पौत्रायण इति । पुत्रस्य पुत्रः । देवतामिति । उपास्यदेवताम् ।

—१० अह हारेत्वेति । अः प्रतिषेधे । हेत्याश्चर्ये । हारेत्वा-हारेणेत्वा युक्तो रथः । हे शूद्र । गोभिः सह यदानीतं तत्सर्वं तवैव निकटे तिष्ठत्वि-

स्यर्थः। विवरणे तु– अरे शूद्र। त्वामहह धिक्। गोभिः सह यदानीतं तत्सर्वं त्वत्समीप एवास्तु। इति।

—११ **मुखेन**–द्वारेण।

—१२ सूत्रं व्याकुर्वन्ति– **अत इति**।

—१६ **कंवर एनमेतदिति**। कं उ अरे एनमिति पदच्छेदः। कं वराकमित्यर्थः।

—१८ **शुचमन्विति**। अत्र शुचं द्रवतीति वक्तव्य आद्रवतीत्युक्तं तत्र दीर्घः पृषोदरादित्वाद्वर्णान्तरलोपस्याप्युपलक्षकः। एवं योगादरणम्।

—१९ **कथमेवामिति**। पूर्वतन्त्रेनेन न्यायेन रथकारपदे रूढिरेवादृतात्र तद्विरुद्धं योगः कथमाद्रियत इत्यर्थः।

—२० योगादरणस्य प्रयोजनमाहुः– **स्वस्येति**।

—२२ अत्र पक्षे स्वस्य सर्वत्वख्यापनेनोत्कर्षवत्त्वप्रदर्शनं प्रपञ्चस्य धिक्कारवचनमिति दोषद्वयं मत्वा पक्षान्तरमाहुः– **तस्येति**। तस्माद् गमकद्वारा योगोद्दलने रूढेरकिंचित्करत्वात्।

**सूत्रार्थः**– अस्य जानश्रुतेर्हंसादनादरश्रवणाच्छोकः समुत्पन्नः। तदनन्तरमाद्रवणाच्छूद्रत्वं जातम्। क्षात्रियं प्रति परोक्षवादेन शूद्रसंबोधनेन हंसवाक्यजनितशोकवत्त्वसूचनात्स्वस्य सर्वज्ञत्वं सूच्यते। ब्रह्मविदां सर्वज्ञत्वं युक्तमेवेति ॥ ३४ ॥

## क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ १।३।३५ ॥

—२७ **अवगम्यते**–अनुमीयते। तत्र हेतुमाहुः–**गोनिष्केति**। निष्कं सुवर्णचतुष्टयम्। **क्षत्तृप्रभृतय इति**। क्षत्तृशब्दस्य क्षत्तृस्थापनमर्थः बहुपाक्यत्वावसथकरणब्राह्मणभोजनक्षत्त्रन्ता राजधर्माः। तत्र बहुपाक्यत्वादयो धर्माः समृद्धे धर्मिष्ठे शूद्रेपि संभवन्तीति विशिष्टस्य राजधर्मस्य प्रथमं निर्देशं कृत्वा तत्प्रभृतय इत्युक्तम्। विवरणे तु एतत्पदं व्याख्यायाग्र एवं लिखितं क्वचित्पुस्तके क्षत्तृप्रभृतय इति पदमेव नास्ति। न ह्येते क्षत्रियादन्यस्य संभवन्तीत्यपि पाठः। अयं पाठः समीचीनः प्रतिभाति। कुतः। न ह्येत इत्यत्रैत इत्यनेन पूर्वोक्तहेतुवाक्यस्थगोनिष्कादिराजधर्माणामेव ग्रहणात्। किं चाग्रेपि वाक्ये कन्यां दातुं शक्नोतीत्युक्त्या पूर्वोक्तानामेव ग्रहणं नतु क्षत्तृप्रभृतीनामिति। एतद्विवरणोक्तमस्मदभीष्टम्। केवलं स्थितस्य गतिश्चिन्तनीयेति न्यायेन प्रकाशकृदभिमतत्वेन च क्षत्तृप्रभृतय इति व्याख्यातम्। ननु चातुर्वर्ण्यमेके समामनन्तीति वाक्याद् ब्राह्मणस्य चातुर्वर्ण्यविवाहस्योक्तत्वेन शूद्रात्कन्याग्रहणमुचितमित्यत आहुः–**न चेति**।

९४-३ संगच्छत इति । तद्वाक्यप्रतिपादितमाहात्म्यं शूद्रे न संगच्छते । उपदेशात् । रैक्ककर्तृकब्रह्मविद्योपदेशात् ।

—५ उत्तरत्र-उपसंहारवाक्ये । चैत्ररथेनेति । क्षत्रियत्वावगतिरिति शेषः ।

—८ काक्षसेनिपदस्य चित्ररथपदव्याख्यानत्वमाहुः-कक्षारूपेति ।

कक्षः स्यादन्तरीयस्य पश्चादञ्चलपल्लवे ।
स्पर्धापदे च दोर्मूले-

इति कोशे स्पर्धास्थानं कक्षपदेनोच्यते । एवंच रथस्य चित्रत्वेन स्पर्धाश्रयत्वं रथानां संभवतीति चित्रपदेन कक्षापदं रथपदेन सेनापदं च द्योत्यत इति भावः ।

—९ क्लेशेन व्याख्याने किं बीजमित्याकाङ्क्षायां लिङ्गपदं विवृण्वन्ति-एतेनेति । अयाजयन्निति । एतद्वाक्यं सामवेदे द्विरात्रे श्रूयते । तच्च संपूर्णं यथा-एतेन वै चैत्ररथं कापेया अयाजयंस्तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वंस्तस्माच्चैत्ररथो नामैकः क्षत्रपतिर्जायते-इति । तथाच समानान्वयानां समानान्वया एव याजका भवन्तीति प्रायो दर्शनम् । अतः कापेयसंबन्धात्काक्षसेनिश्चैत्ररथ इति भावः ।

—१२ भगवत इति । भगवतः प्रजापतिरूपबोधकत्वात्परंपरया भगवत्संबन्धिनावित्यर्थः ।

—१३ तस्मादिति । एवंच परम्पराविद्यायामपि यत्र नाधिकारस्तत्र साक्षाद्विद्यायां किमु वाच्यमिति भावः ।

सूत्रार्थः-गोनिष्कादिदानाज्जानश्रुतेः क्षत्रियत्वावगमात् । चकाराद्ब्रह्मविद्योपदेशोप्यन्यस्य न संभवतीति हेतुः समुच्चेयः । ननु गवादिपदार्था अन्येनापि दातुं शक्यास्तेन जानश्रुतिः क्षत्रियाद्भिन्नोपि संभवतीति चेन्न । उत्तरत्र संवर्गविद्यायामुक्तेन चैत्ररथशब्दलिङ्गेन तस्य क्षत्रियत्वप्रतीतेरिति ॥ ३५ ॥

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ १।३।३६ ॥

—१८ उपनयनस्योपनिषत्सु परामर्शमाहुः-तं हेति । छान्दोग्ये वाक्यमेतत्सनत्कुमारसंवादे । एवंच शूद्रश्रुतिमात्रेणाधिकारसिद्धिर्न वक्तव्या ।

आनर्थक्ये प्रमाणानां विपरीतं बलाबलम् ।

इति न्यायात् ।

सूत्रार्थः--सर्वत्र विद्योपदेश उपनयनसंस्कारस्य परामर्शाच्छूद्रे संस्काराभावकथनाच्च । चकारात्-न शूद्रे पातकं किंचिदित्यादि समुच्चीयत इति ॥ ३६ ॥

## तद्भावनिर्धारणे च प्रवृत्तेः ॥ १।३।३७ ॥

—२५ इतश्चेति । भाष्यार्थः समासेन यथा । गौतमेन यदा सत्यभाषणेन जाबालस्य वर्णित्वं शूद्रत्वाभावश्च निर्णीतस्तदैव विद्योपदेशः कृतः । अतो न शूद्रस्याधिकार इति । अत्र प्रकाशकृद्विवरणकृद्भ्यांतु ब्राह्मणबीजत्वेपि व्यभिचारजन्यत्वाच्छूद्रता । वामदेव्यसामोपासकस्य न कांचन परिहरेदिति सर्वगामित्वाभ्यनुज्ञानात्तज्जन्यस्य व्यभिचारदोषानाक्रान्तत्वमित्यादि लिखितम् ।

सूत्रार्थः— शूद्रत्वाभावनिर्धारणे सति चकाराद्वर्णित्वनिर्धारणे च सति जाबालोपनयनार्थं गौतमस्य प्रवृत्तेरिति ॥ ३७ ॥

## श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ १।३।३८ ॥

९५-८ तत्संनिधौ-शूद्रसंनिधौ । त्रपुजतुभ्यामिति । त्रपु-सीसं जतु-र्लाक्षा । यद्यु वेति । यदि उ वेति पदच्छेदः ।

—९ उदाहरणे-उच्चारणे । धारणे-अभ्यासपूर्वकधारणे ।

—१० दोहादौ यद्यपि शूद्राधिकारस्तथापि तत्कर्म तूष्णीमेवेत्याहुः-दोहादाविति । अभाव एवेति । प्रथममध्वर्युणा यत्किंचित्कालं समन्त्रकदोहे कृते पश्चाच्छूद्रेणामन्त्रकदोहः क्रियत इति श्रौतसूत्रे स्पष्टम् ।

—११ कारणविशेषेणेति । शापादिकारणादित्यर्थः । अत्र शूद्रश्रवणाधिकारविषये प्रकाशे बहु मीमांसितं तत्तत एवालोचनीयम् ।

सूत्रार्थः—शूद्रेण श्रवणस्याध्ययनस्यार्थज्ञानस्य च प्रतिषेधाद्वेदाक्षरविचारेणेत्यादिनिषेधकस्मृतेश्च वैदिकविषये शूद्राधिकारो नेति सिद्धमिति ॥ ३८ ॥

इति नवममधिकरणम् ।

---

## कम्पनात् ॥ १।३।३९ ॥

—१८ एवं प्रासंगिकाधिकारिनिरूपणं कृत्वा सिंहावलोकनन्यायेन पूर्वप्रस्तुतमेव विचारयन्ति कम्पनाधिकरणेनेत्याह-कठवल्लीविचारेणेति ।

—१९ तत्रत्यं-षष्ठवल्लीस्थम् । तच्चिन्तनस्य प्रयोजनं किमित्यत आहुः-प्रलयावधीति । तद्वाक्यप्रतिपाद्यं रूपं प्रलयस्यावधिभूतम् । तस्य ज्ञाने तत्र लयः स्यादतो हेतोश्चिन्त्यत इत्यर्थः ।

—२१ अत्रेति । न प्रकरणेन । प्रकरणस्य श्रुत्यपेक्षया दुर्बलत्वादिति भावः । अमरत्वादिति हेतोः पूर्वेण युज्यत इत्यनेनान्वयः । इन्द्रस्याग्न प्राप्तौ बीजं वज्राकिञ्चन ।

९६-३ **तस्मात्**-प्रकरणापेक्षया श्रुतिलिङ्गयोः प्राबल्यात्।

—५ **प्रथमवाक्यार्थ इति**। पादत्रयवाक्यार्थ इत्यर्थः। भयसत्त्वे कम्पनं जायतेतो भयजनको भगवानेवेति भावः। भीषास्माद्वातः पवत इत्यादि-श्रुतेः। प्राणस्तु वाक्यार्थो न भवति तस्य स्वावियोग एव भयजनकत्वात्।

—६ इन्द्रस्य भयजनकत्वं वारयन्ति-**न चेति**। अग्निहृदयं वज्रमेकान्तत इन्द्रस्यायुधं न भवति।

—७ अत्रार्थे तैत्तिरीयब्राह्मणप्रथमाष्टकप्रथमब्राह्मणपठितां श्रुतिं प्रमाण-यन्ति-**तस्येति**।

—९ **पूर्वमेवेति**। प्राणाधिकरण इत्यर्थः।

**सूत्रार्थः**—प्राण एजतीत्यस्मिन्वाक्ये सर्वजगद्भयजनकत्वेन हेतुना भगवानेव ग्राह्यो न प्राण इन्द्रो वेति॥ ३९॥

इति दशममधिकरणम्।

---

## ज्योतिर्दर्शनात् ॥१।३।४०॥

—१४ छान्दोग्यदशमप्रपाठकदहरविद्यास्थं विषयवाक्यम्। **य एष इति**। **महाभूतरूपमिति**। तेजोरूपं तृतीयं महाभूतमित्यर्थः।

—१६ ज्योतिश्चरणाधिकरणेनास्य गतार्थता नास्तीति बोधयितुमेतद-धिकरणप्रयोजनं कारिकयाहुः। **ब्रह्मधर्माश्चेति**।

—१७ **चत्वार इति**। पूर्ववाक्यगतं- उपसत्तव्यत्वं, उपसंपन्नस्वरूपा-भिनिष्पादकत्वं, उत्तरवाक्यगतं हृदयत्वं सत्यपदोक्तं मर्त्यामृतनियामकत्वं चेति चत्वारो धर्माः। **निरूपिता इति**। निर्णायकत्वेन निरूपिताः। अतो न गतार्थतेत्यर्थः।

—१८ **उपपत्त्येति**। अस्माच्छरीरात्समुत्थायेति बोधितयेत्यर्थः।

—१९ **दर्शनादिति**। ब्रह्मपदस्थाने ज्योतिःपददर्शनमस्ति तस्माद्ब्रह्मै-वेत्यर्थः।

—२० तदेव स्पष्टयन्ति-**सुषुप्ताविति**। एवंच तत्र सच्छब्देन यथा ब्रह्म बोध्यत एवमत्रापि सुषुप्तिबोधकेन संप्रसादवचनेन परंज्योतिर्ब्रह्मैव गृह्यत इति भावः।

**सूत्रार्थः**— परं ज्योतिरभिसंपद्येत्यत्र ज्योतिःपदेन ब्रह्मैव ग्राह्यं न भौतिकं तेजो न्याय्यत्वादिति॥ ४०॥

इत्येकादशमधिकरणम्।

---

# आकाशोर्थान्तरत्वादिव्यपदेशात् ॥ १।३।४१ ॥

९७-२पूर्वमाकाशपदस्य चिदाकाशपरत्वं व्यवस्थापितमधुना छान्दोग्यसमाप्तौ श्रूयमाणमाकाशो वै नाम नामरूपयोरिति। तत्र संदेहनिवारणार्थमिदमधिकरणम्।

—८ **प्रयोजनमिति**। आकाशाद्वायुरिति श्रुत्या वायुजननरूपं प्रयोजनमित्यर्थः। **अन्यस्येति**। ते यदन्तरेत्यनेनोक्तस्य समन्तात्तदन्तःस्थापनरूपस्येत्यर्थः। **व्यपदेशः**-कथनम्। सूत्रस्यार्थान्तरत्वादीत्यस्यायमर्थः। तथा चान्तरः अर्थो यस्मादित्यर्थान्तरम्। वाहिताग्न्यादिष्विति परनिपातः। एवमत्र बहुव्रीहिणा कर्ता बोध्यते। अन्योर्थोर्थान्तरामिति नित्यसमासपक्षे लक्षणया कर्तृलाभः। तस्य भावोर्थान्तरत्वम्। भाष्ये-**कार्यान्तरेति**। वायुजनकत्वरूपाकाशकार्यातिरिक्तकार्यकर्तृत्वव्यपदेशश्चेत्यर्थः।

—९ **सिद्धवत्कारेणेति**। आकाशो वै इत्यत्र वैपदेन सिद्धवत्कारो बोध्यते तेन पदेनातदीया भूताकाशसंबन्धिन उत्कृष्टधर्मा यत्र बोध्यन्ते तदेवेत्यर्थः।

—१० ननु माहात्म्यहेतुकं नियमनत्वं नभस्त्वमिति नामनिर्वाहकत्वमाकाशस्य स्यादित्यत आहुः- **नापीति**। अदो ददाति श्वसतां पदं यन्नियमान्नभ इति स्मृत्या नियमनमपि भगवदधीनमिति तस्यैव माहात्म्यमिति भावः।

—११ ननु यद्ययं निर्वाहो ब्रह्मधर्म एव तदा तद्धर्माधिकरणेन तल्लिङ्गाधिकरणेन वा गतार्थत्वाद्व्यर्थः सूत्रारम्भ इत्यत आहुः- **निर्वाहस्येति**। **ब्रह्मधर्मत्वं**-ब्रह्मवाक्यत्वम्।

—१२ **विचार इति**। पृथगधिकरणविचार इत्यर्थः। तत्रापि विशेषमाहुः-**अर्थापत्तीत्यादि**। यद्याकाशो वै इति ब्रह्मवाक्यं न स्यात्तर्हि निर्वाहस्य ब्रह्मधर्मत्वं न स्यात्। तस्य ब्रह्मधर्मत्वं तु न्यायसिद्धमेतदन्यथानुपपत्त्याकाशो वै इति ब्रह्मवाक्यमेव। **तस्मात्**-ब्रह्मणः। अन्यच्च तद्वाच्यं चेति समासः। अथवान्यवाचकपदवाच्यस्य। तथाच ब्रह्मान्यो भूताकाशस्तस्य यो धर्मो निर्वाहरूपो न भवतीत्यतद्धर्मस्तस्य यत्र कथनं तत्रेत्यर्थः।

**सूत्रार्थः**— आकाशो वै इति श्रुतावाकाशपदेन परमात्मैव ग्राह्यो न भूताकाशः। श्रुतिसिद्धं यद्भूताकाशस्य प्रयोजनमवकाशदानात्मकं तद्भिन्नस्य नामरूपनिर्वहणरूपस्य प्रयोजनस्य कथनादिति ॥ ४१ ॥

इति द्वादशमाधिकरणम्।

---

*

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ १।३।४२ ॥

—२१ समन्वयाध्याये सर्वेषामुपनिषद्वाक्यानां ब्रह्मणि समन्वयो वक्तव्यः। तत्र बृहदारण्यकषष्ठप्रपाठके ज्योतिर्ब्राह्मणे प्रायशो जीवान्वाख्यानपरवाक्यानि दृश्यन्तेतः सुषुप्त्यधिकरणमारचयन्ति।

—२२ अन्त इति। ज्योतिर्ब्राह्मणशारीरब्राह्मणान्त इत्यर्थः।

—२३ ब्रह्मवाक्यमिति। एवंच संपूर्णवाक्य एव संदेहो न तु तत्रत्यैकस्मिन्पद इत्यर्थः।

—२४ स्वातन्त्र्येण-मुख्यतया। ज्ञानकर्मत्व इति। ज्ञाधातुनिरूपितकर्मत्व इत्यर्थः। ज्ञेयत्व इति यावत्। तथाच मुख्यत्वेन ब्रह्मण एव ज्ञानविषयत्वे प्रतिपाद्यब्रह्मप्रतिपादकब्रह्मवाक्यत्वमित्यर्थः।

—२५ तर्ह्युभयथा शक्यवचनत्वे कथं संदेहनिवृत्तिरित्याकाङ्क्षायामर्थज्ञानान्निवृत्तिरित्यभिप्रेत्य तत्तात्पर्यबोधकं हेतुमवतारयन्ति-यद्यपीति। अर्थज्ञान इति। वास्तवार्थज्ञाने सतीत्यर्थः। एवंच साधारणधर्मवद्धर्मिज्ञानं संशयजनकं तथाच प्रकृते विषयवाक्ये संशयजनकजीवब्रह्मोभयसाधारणपदानां सत्त्वेपि तात्पर्यज्ञानेन वास्तविकार्थज्ञाने जाते न संदेह इत्यर्थः। संदेहनिवृत्तौ सूत्रस्योपयोगः क इत्याहुः- नियामकमिति। अत्रैव श्रुतेस्तात्पर्यमिति नियामकमित्यर्थः। हेतुमाहेति। सूत्रकार इति शेषः। भेदेनेति। व्यपदेशादिति पूर्वसूत्रोक्तहेत्वेकदेशोत्रानुवर्तते। तथाच भेदेन व्यपदेशादित्येतावानत्र हेतुरित्यर्थः।

—२६ प्रश्न इति। राज्ञा किंज्योतिरयं पुरुष इति जीवविषयके प्रश्ने कृते सतीत्यर्थः।

—२७ निराकरणानन्तरमिति। अस्तमित आदित्य इति वाक्येनेति शेषः। भगवानेवेति। एतेन जीवो नास्तीति याज्ञवल्क्याशयो वर्णितः।

—२९ जीवोपीति। तथाच प्रकाशमानत्वमन्तर्यामित्वेनाभिमानित्वेनोभयसाधारणमिति भावः।

९८-१ इत्याहेति। स समानः सन्नित्यादिना मृत्यो रूपाणीत्यन्तेन श्रुतिराहेत्यर्थः।

—२ नन्वेवं सति जीवधर्मकथनस्य किं प्रयोजनमत आहुः- तस्येति। तस्य-ब्रह्मणः। क्रियामात्रस्य-जीवव्यापारमात्रस्य। तन्मूलत्वाय-ब्रह्ममूलत्वार्थम्। उच्यत इत्यनेनान्वयः। क्रीडतीत्याहेत्युक्तं तत्र कासौ क्रीडा कुत्र वेत्यत आहुः- तत्रेत्यादिना।

—४ ननु त्रयाणां सत्त्व उभा लोकाविति श्रुतौ द्वयमेव कथमुक्तमत आहुः- तत्रेति। चतुर्थमिति। स एष संप्रसादे रत्वा चरित्वेति श्रुतेः।

त्वा-मित्रादिदर्शनेन रतिमनुभूय । चरित्वा-विहारं कृत्वा । मोक्षोपीति । एतज्जीवस्य पञ्चमं स्थानमिति शेषः । एषोस्य परमो लोक इति वक्ष्यमाणत्वात् ।

—५ इदानीं सूत्रेण भेदस्य विवक्षितार्थे नियामकत्वं वक्तुं भूमिकां रचयन्ति- तत्रास्मिन्निति । प्रत्यक्षसिद्धमिति । एवंच भेदस्य सिद्धत्वाद्वेदेन नोक्त इति भावः । मोक्षे त्विति । ब्रह्मैव सन् ब्रह्माप्येतीति श्रुत्यैवाभेदप्रतिपादनात् ।

—६ श्रुत्यैवेति । अयं शारीर आत्मा प्राज्ञेनात्मना संपरिष्वक्त इत्यनेन सुषुप्तावयं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ इत्यनेन परलोके भेदः प्रतिपादित इत्यर्थः । तथाच स्थानद्वये भेदस्यासिद्धत्वात्तत्र भेदश्च श्रुत्या प्रतिपाद्यत इति कृत्वेदं वाक्यं ब्रह्मपरं नतु जीवपरमिति विवक्षितार्थे भेदस्य नियामकत्वं वक्तुं सूत्रं प्रणिनाय सूत्रकार इति भावः । एतावता समानः सन्नित्यस्य तात्पर्यार्थ उपवर्णितः ।

—७ अधुनोभौ लोकावनुसंचरतीत्यनेन भगवतो जाग्रत्स्वप्नक्रीडाप्रकारं वक्तुं प्रथमं जाग्रत्क्रीडाप्रकारमाहुः-तत्रेति ।

—८ ध्यायतीवेति । इवशब्दोनुकरणार्थः । ध्यानव्यापारं करोतीव । एवंच वास्तविकं ध्यानं नास्तीति भावः । लेलायतीव-चलतीव तथा चेह लोकेनुकरणेन क्रीडेत्यर्थः । सा च-चेरतुः प्राकृतौ यथा-इत्यादिना पुराणेषु प्रसिद्धा । स्वयमेवेति । एवंच मायिकीं जीववत्क्रीडां करोतीत्यर्थः ।

—१० कण्डिकाद्वयेन-अष्टमनवमकण्डिकाद्वयेन । पूर्वप्रक्रान्त इति । किंज्योतिरयं पुरुष इति प्रश्ने प्रक्रान्त इत्यर्थः ।

—१२ सः-भगवान् । पश्यतीति । परलोके जीववद्भगवतः क्रीडा बोध्या । एतत्कण्डिकायां भगवत्क्रीडा बोध्यत इत्यत्र किं विनिगमकमित्यत्राहुः-भेदोथेत्यादि । तथाच क्रमभेद एव साधक इत्यर्थः ।

—१३ जीवस्येति । एवंचैषा द्वितीया तत्रत्या क्रीडा ।

—१४ अथो खल्विति । अस्मिन्पक्षे यज्जागरितं तदेव स्वप्न इत्यभेदः ।

—१५ अत्र पक्षेस्वरसमाहुः-परामिति । परान्त्विवत्यर्थः ।

—१५ तत्र-पूर्वस्मिन्पक्षे । एवंच पूर्वं स्वप्नस्योक्तत्वादन्यज्योतिरभावात्स्वयंज्योतिष्ट्वं स्पष्टम् । अस्मिन्पक्षे तु जागरितस्वप्नयोरैक्यप्रतिपादनाज्जागरितेपि च पूर्वमित्यादीनामुक्तत्वात्स्वयंज्योतिष्ट्वमस्पष्टमित्यस्वरस इति भावः । एतावद्दूरे-एतावत्पर्यन्तम् । भगवच्चरित्रमिति । समानः सन्नित्यारभ्य स्वयंज्योतिर्भवतीत्येतावत्पर्यन्तं चरित्रं बन्धकमङ्गीकृत्येत्यर्थः ।

—१६ तस्य-जीवस्य ।

—१८ मत्स्यदृष्टान्ततात्पर्यमाहुः-तत्रेति । तत्र-उत्तरे । **क्रियाज्ञानप्रधान इति**। क्रियाया ज्ञानं प्रधानं यस्मिन्स इति दृष्टान्तविशेषणम् । एवं च नद्या मत्स्यस्य च क्रियाविलक्षण्यान्नदीभिन्नत्वज्ञानं मत्स्ये यथा जायते। एवं जीवस्योभयत्र क्रियया जाग्रत्स्वप्नावस्थाद्वयभिन्नत्वज्ञानं जायते । तथोभयकूलसंचरणात्तत्र तत्र स्वाभाविक्यासक्तिर्मत्स्यस्य यथा नास्ति तथा जीवस्याप्युभयत्र संचारादवस्थाद्वयेप्यासक्तिराहित्येन दृष्टान्तस्वारस्यं ज्ञेयम् ।

—१९ **श्येनसुपर्णौति**। श्येनो महाकायो मन्दवेगः । सुपर्णः स्वल्पकायस्तीव्रवेगः। श्येनो यथाकाशेत्यन्तं भ्रमणं कृत्वा नीड आगत्य सुखं स्वपित्येवमयं पुरुषो जाग्रति स्वप्नेच श्रान्तः सन्सुषुप्तौ सुखमनुभवति । ननु सुषुप्तौ भगवत्प्राप्तिरिति कथं ज्ञायते इत्यत आहुः-**अवस्थान्त इति** । एतस्मा अन्ताय धावतीति श्रुतावेतस्मा अन्ताय भगवत इत्यर्थकेनावस्थान्तपदेन भगवान् ज्ञायते। यत्र सुप्त इत्यग्रिमं वाक्यमपि सुषुप्तौ भगवत्सत्त्वे मानम् ।

—२० **पञ्चवर्ण इति**।एकः केशः सहस्रधा भिन्न इत्येतादृशसूक्ष्मा नाड्यः शुक्लनीलपिङ्गलहरितलोहितवर्णै रसैः पूर्णास्ताः पञ्चवर्णा भवन्तीति तत एवास्य क्लेश इत्यर्थः। तथा चोक्तं सुश्रुते-

पिङ्गाः शिरा वातवहा नीलाः पित्तवहाः स्मृताः ।
असृग्वहास्तु रोहिण्यो गौर्यः श्लेष्मवहाः शिराः ॥

इति। इतरेतरसंयोगान्नीलाः। पये नीलशब्देन हरिता बोध्याः। तथाच शुक्लवर्णनाडीमनःसंबन्धे राज्यानुभवः। नीलवर्णादिसंबन्धे गर्तपात इत्युपाधिवशात्क्लेश इति भावः ।

—२२ अत्र-सुषुप्तौ । **शारीर इति** । जीवस्य ज्ञानाभावाच्छारीरत्वव्यपदेशः ।

—२३ **नाड्येति**। एवंच नाडीकृतक्लेशो नास्तीत्यर्थः। तत्र-सुषुप्तौ ।

—२४ **सलिलत्वमिति**। शब्दब्रह्मणः सलिलत्वं जलतुल्यत्वं तत्र प्राप्तस्य बाह्येन्द्रियाणामपि सलिलत्वमित्यर्थः । **पूर्वोपपत्तिरिति** । एषोस्य परमो लोक इति यत्पूर्वमुक्तं तस्योपपत्तिरित्यर्थः ।

—२६ एतावता-सुषुप्तिमाहात्म्यकथनेन । **उभयासंग इति**। पुनः पुनरुभयत्र संचरणादुभयत्र समाना तस्यासक्तिरिति स्यादतस्तन्निवृत्त्यर्थमेतावान् ग्रन्थ इत्यर्थः ।

—२७ **दर्शनेति**। मोक्षे सर्वदा सुखस्य सत्त्वादावापः संग्रहः। **सुषुप्तौ सुखमहमस्वाप्समित्यनेन स्मरणेनोद्वापस्त्यागः**।

–२८ सिद्धमिति। सुषुप्तिसुखस्यापि साक्षित्वेन भिन्नत्वात्सिद्धमित्यर्थः। पुनः प्रश्नतात्पर्यमाहुः–एवं जीवमिति। मोक्षयोग्यं जीवमित्यर्थः। भगवन्तं मोक्षप्रदम्।

९९–१ प्रश्नोत्तरं जीवब्रह्मधर्मैकीकरणेनोत्तरस्य तात्पर्यमाहुः–तत्रेति। निर्बन्धेन–कामप्रश्नमिषेण। एवंच याज्ञवल्क्यो व्याख्यानसामर्थ्याभावान्न भीतवान् किंतु व्याजेन सर्वं मदीयं ज्ञानं गृहीतुं वारंवारमवरोधं करोति तेन राज्ञो बुद्धिस्तवने पर्यवसानमिति भावः।

—५ भगवत्सम्माननमिति। सम्मानमित्यपपाठः। न जीवस्येत्यर्थः। राजपदोक्तेः। ननु राजपदस्य दृष्टान्ते सत्त्वाज्जीवानिराकरणाभाव इत्यत आहुः· एवंविदमिति। नैवंविदिति। कर्मफलाविन्न भवतीत्यर्थः।

—६ नन्वेवंविदमिति श्रुत्या ज्ञानं विधीयत इत्यत आहुः– वाक्यभेद इति। विधेयभेदे वाक्यभेदात्–एवमेवैवं विदम्–इति वाक्यमथ नेदं ब्रह्मायातीति वाक्यं भिन्नं स्यादित्यर्थः।

—७ भगवच्चरित्रमिति। जीवेनोत्क्रमणं कर्तुमशक्यं प्राणाश्च जडा अतो भगवत्प्रेरणयैव सर्वमिति भावः।

—८ पूर्वमेवेति। ज्योतिर्ब्राह्मण एकविंशतिकण्डिकान्त इत्यर्थः। अनुवदतीति। एवंच श्रुतौ पौनरुक्त्यमिति भावः। तथाच प्राणधारणार्थं स प्राण एव ब्रह्मीभूतो विहरतीति भावः। तदुक्तं श्रीमद्भागवते–देहोपि दैववशगः –इत्यादिना।

—९ भगवन्निर्गमे हीति। भगवतः सकाशाज्जीवस्य निर्गमने। अथवा भगवत्स्वरूपस्य तस्य निर्गमने। तस्य–सप्राणनिर्गमनस्य। इच्छाधीनत्वादिति। तदुक्तं श्रीमद्भागवते द्वितीयस्कन्धे–यदि प्रयास्यन्नृप पारमेष्ठ्यम्–इत्यादिना क्रममुक्तिः। तदभावे–वैहायसविहारेच्छाभावे।

—१० न तस्येत्यस्य तात्पर्यमाहुः– इन्द्रियाणीति।

—१२ श्लोक इति। यदा सर्वे प्रमुच्यन्त इत्यादिश्लोकः। जीवन्मुक्तावस्थायां कदाचिज्जानीयाद्राजेति तां गोपायितुं सुषुप्त्यवस्थां दृढीकर्तुमाहुः–जीवोपदेश इति। तथाच श्रीमद्भागवते काठके च पूर्वमुपदेशः, तदनन्तरं जीवन्मुक्तावस्थानिरूपणं तथात्र नास्तीति भावः।

—१३ मतान्तरत्वादिति। योगनयेयं समाधिर्न तु वेदान्तिनये। ननु मास्तु समाधिः स्वस्वरूपावस्थितिरूपा सद्योमुक्तिरेवास्त्वित्यत आहुः–ब्रह्मेति।

—१४ फलमिति। इदं च देहलीदीपन्यायेनोभयत्र योज्यम्। तथाच ब्रह्मप्रकरणत्वाज्जीवस्य ब्रह्मभावरूपं फलं न सद्योमुक्तिः फलं तत्र फलमु-

त्क्रमण एव भवति । उत्क्रमणानन्तरमेव ब्रह्मभावरूपं फलं भवतीत्यत्र प्रमाणमाहुः- **ब्राह्मणस्यापीति** । ऊर्ध्वोच्छ्वासी भवतीत्युपक्रमे शारीर-ब्राह्मणस्याप्युक्तत्वादित्यर्थः । एवंचोत्क्रान्तिरहिता सद्योमुक्तिरपि नास्तीत्यर्थः ।

—१५ तथाच सुषुप्तिप्रकरणाभावेपि सुषुप्तिलिङ्गेन सुषुप्तिज्ञानमस्य भवत्वित्याशयेन श्रुतिराह—**तद्यथेति**। शेत इत्यन्तरमनस्थिकोशरीर इत्यादि-श्रुतितात्पर्यमाहुः-**अनस्थिक इति**। अस्थियुक्तस्थूलशरीररहितः । इदं च सुषुप्तौ जीवन्मुक्तावस्थायां चाभिमानाभावात्समानम्। **सम्राडित्यन्तामिति**। एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्य इत्युपसंहार इत्यर्थः। अनस्थिक इत्यादिर्भाष्यसंगृहीतपाठः काण्वः।

—१६ **ब्रह्मविद्गतेरिति**। ब्रह्मविदः क्रममुक्तेर्बोधकः । **एष इति**। एष पन्था इत्यनेन निष्क्रमणमार्गबोधः ।

—१७ **पञ्चवर्णा इति**। मार्गे पञ्चवर्णवत्त्वं सुषुम्णानाडीकृतम् ।

—१८ **अनेवंविदः**- ब्रह्मज्ञानरहितस्य । **बुद्धिमतां**- सद्योमुक्तिभाजां ज्ञानिनाम् ।

—१९ एवं त्रयोदशानां श्लोकानां तात्पर्यमुक्त्वावशिष्टश्रुतितात्पर्यमाहुः- **पुनरिति** ।

१००-१ अत उपक्रमोपसंहारयोः परमात्मन एव प्रकृतत्वसिद्ध्या तस्यैव प्रकरणित्वं सिद्धं तदाहुः- **आकाशवदिति** । आकाशस्तल्लिङ्गादित्याधि-करणेन्यथानुपपत्त्याकाशवाक्यस्य ब्रह्मपरत्वं यथा निर्धारितं तथैवात्रापीत्यर्थः ।

**सूत्रार्थः**-अभयं ह वै ब्रह्म भवतीति ब्रह्मवाक्यमेव न जीववाक्यम् । सुषुप्तिनिरूपण उत्क्रान्तिनिरूपणे च जीवब्रह्मणोर्भेदेन कथनाद्ब्रह्मण एव ज्ञेयत्वेन निरूपणादिति ॥ ४२ ॥

## पत्यादिशब्देभ्यः ॥ १।३।४३ ॥

—४ भेदव्यपदेशेन प्रकरणस्य ब्रह्मपरत्वसाधनं क्लिष्टमित्यतो हेत्वन्तरेण वदतीत्याशयेनाहुः— **किंचेति**। **शब्देभ्य इति**। शारीरब्राह्मणान्तर्गतैक-विंशतिकण्डिकास्थशब्देभ्यः । बहुवचनकथनेनोपासनापरत्वमस्य वाक्यस्य निवारितं सकृदुक्तानामेवोपासनापरत्वादिति ।

**सूत्रार्थः**—सर्वस्य वशीत्यादिनोक्तेभ्यः शब्देभ्यो ब्रह्मप्रकरणमेवेद-मिति ॥ ४३ ॥ **इति त्रयोदशमधिकरणम्**।

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालबोधिन्यां प्रथमाध्यायस्य तृतीयः पादः ॥ १।३ ॥

# प्रथमाध्याये चतुर्थः पादः ॥ १।४ ॥

## आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १।४।१ ॥

—१२ समन्वयाध्याये प्रथमे सर्वेषामुपनिषद्वाक्यानां ब्रह्मपरत्वं वक्तव्यं तच्च साक्षात्परंपरया वा पादत्रयेणोक्तम्। अथास्मिंश्चतुर्थे पादे केषुचिदुपनिषत्पदेषु विद्यमानान्यव्यक्तपदानि सांख्यादिमतासिद्धप्रधानादिबोधकानि नात एव न श्रौतानीति यदि न बोध्येत तर्हि पूर्वोक्तसमन्वयेन ब्रह्मपरत्वकथनं सफलं न भवेदतः सांख्यादिमतं श्रौतं न भवतीति विचारयितुमयं पादः। एवंच पादसंगतिस्तदेतदाहुः- एवं सर्वेषामित्यादिना। तत्र सांख्यमतं वेदप्रतिपाद्यं, अव्यक्तादिपदघटितोपनिषद्वाक्यप्रतिपाद्यार्थप्रतिपादकत्वात्। वेदान्तमतवत्, इत्यनुमानेन प्राप्तं वेदमूलकत्वं निवारयितुमानुमानिकाधिकरणारम्भः।

—१४ यद्यप्यदृश्यत्वाधिकरण एतादृशविचारः कृतस्तथापि सर्वथा सांख्यमतमश्रौतमिति विचारो न कृत इत्याहुः— तत्रेति।

—१५ नन्वीक्षतेर्नाशब्दमित्यत्र ब्रह्मण उपनिषच्छब्दजन्यशाब्दबोधविषयत्वमेव प्रतिपादितं नतु सांख्यमतनिराकरणमत आहुः—अशब्दत्वादिति। उपनिषच्छब्दजन्यशाब्दबोधाविषयत्वादित्यर्थः। नन्वीक्षतेर्नाशब्दमिति सूत्रं ब्रह्मणः शब्दागोचरत्वेप्युपनिषच्छब्दजन्यशाब्दबोधविषयत्वमस्तीत्येतादृशार्थपरत्वेन तत्सूत्रव्याख्यावसरे भाष्ये स्थापितं नतु सांख्यमतनिराकरणपरत्वेन। अत्र त्वीक्षतेर्नाशब्दमिति सांख्यमतमशब्दत्वादिति निवारितमित्युक्तमिति पूर्वपरभाष्यविरोध इति चेन्न। अत्रत्यभाष्यस्य वक्ष्यमाणार्थकत्वात्। तथाहि। ईक्षतेर्नाशब्दमिति सूत्रेण सांख्यमतमुपनिषच्छब्दजन्यशाब्दबोधाविषयत्वान्निवारितमिति। एवं चेक्षतेर्नाशब्दमिति सूत्रेण ब्रह्मण एव वैदिकशब्दजन्यशाब्दबोधविषयत्वे प्रतिपादितेर्थादेव सांख्यमतस्य तादृशशाब्दबोधविषयत्वेन निवारणमिति। अत एवाशब्दत्वादित्यार्थिकहेतुप्रयोगः कृतो नतु-ईक्षतेर्नाशब्दम् इति सूत्रे सांख्यमतं निवारितमित्युक्तं भाष्यकृता। एवंच न पूर्वापरभाष्याविरोधः। वेदेन-काठकशाखास्थवेदवाक्येन। प्रकृत्याद्यित्यादिपदेन पुरुषस्यापि संग्रहः।

—१०१-१मायाप्रकृत्यविद्यावादा इति। मायां तु प्रकृतिं विद्यादित्यादिनोक्तत्वात्।

—२ **तन्मतमिति** । अहंकारमहत्तत्त्वप्रकृतिपुरुषाणामुत्तरोत्तरं परत्वबोधकं सांख्यमतम् ।

—३ **संदिग्धानां**-संदेहविषयीभूतानाम् । **पौर्वापर्येण**-पूर्वापरसंदर्भेण । **निर्णय इति** । महावाक्यस्योचित इति शेषः ।

—४ **संदिग्धवाक्येन**-संदिग्धावान्तरवाक्येन । **उचितेति**। महावाक्यानुरोधेनावान्तरवाक्यार्थो निर्णयः । ननु संदिग्धपदघटितवाक्येनावयविभूतस्य महावाक्यस्य व्याकुलता युक्ता । एवंच तद्व्याकुलीभावादितन्मतं न सिध्यतीत्यर्थः ।

-५ **अत्र**-प्रकरणे । **हि**र्हेतौ ।

—१० **तदन्विति** । इन्द्रियेभ्य इत्यादिवाक्यानि पठितान्येवं संदर्भः ।

—११ अस्मिन् संदर्भे योर्थः स एव सूत्रे हेतुवाक्ये वदतीत्याहुः-**तत्रेत्यादिना** । **उचित इति**। इन्द्रियेभ्यः परा इत्यादिवाक्य आत्मानं रथिनं विद्धीत्यादिपूर्ववाक्यार्थसंबद्ध एवात्रार्थो वर्णनीय इत्यर्थः । **तमाह**-तादृशार्थं सूत्रकार आह ।

—१२ हेतुसूत्रार्थमाहुः-**शरीररूपकविन्यस्तगृहीतेरिति** । अस्यार्थः-

उपमानेन तुल्यत्वमुपमेयस्य रूपकम् ।

इति रूपकलक्षणाद्रूप्यते यत्तद्रूपमिति कर्मणि घञि कृते-इवे प्रतिकृतौ (पा. सू. ५।३।९६ ) इत्यनेन कनि कृते रूपकमित्यलङ्कारनाम सिध्यति । शरीरेण रूप्यन्ते ज्ञायन्ते ते शरीररूपा इन्द्रियादयस्ते यत्र रूपकालङ्कारेण रथादिसादृश्यबोधकेन विन्यस्ताः स्थापिताः शरीररूपकविन्यस्तास्तेषां गृहीतिर्ग्रहणं तस्याः शरीररूपकविन्यस्तगृहीतेर्हेतोरित्यर्थः । अत्र शाकपार्थिवादित्वाद्रूपपदस्य लोपः । तथाचात्मानं रथिनमित्यादिरूपकेणात्मरूपाहङ्कारादीनां ग्रहणं ननु सांख्यमतसिद्धाहङ्कारत्वेनेत्यतो न सांख्यमतस्य वेदबोध्यत्वमिति भावः ।

—१४ **अन्यथा**-एतादृशार्थाभावे। **प्रकृतहानेत्यादि** । भगवत्प्राप्तिरूपफलसाधनमार्गसाधनशरीरस्य रथादिरूपकत्वकथनं यत्प्रकृतं तस्य हानं सांख्यमतसिद्धपदार्थानां विवेकरूपं साधनं स्वरूपावस्थानरूपं फलं चाप्रकृतं तस्य परिग्रहापत्तिरित्यर्थः ।

—१५ सांख्यमतस्थपदार्थबोधकमिदं प्रकरणमपि नास्तीत्याहुः- **जीवप्रकरणमिति** । **रूप्यत इति** । रूपकालङ्कारेण बोध्यत इत्यर्थः । एवंच तन्मते रूपावस्थानातिरिक्तस्य भगवत्प्राप्तिरूपस्य मोक्षस्यानङ्गीकारात्-इन्द्रियेभ्यः पराः-इति वाक्ये सांख्यमतपदार्थबोधकत्वं नास्तीति भावः ।

—१७ ननु कथमिदं जीवप्रकरणं कथं वा रथादिरूपकमित्यत आहुः– तत्रेति ।

—१८ अपराधीनधानत्वादिति । शरीररूपरथ आत्मरूपरथिन एव सत्ता मान्यस्येत्यर्थः ।

—२१ ते चेति । एवंच विषयाणामिन्द्रियेभ्यः परत्वं यदुच्यते मोक्षप्रकरणे तद्भगवदीयतया मनसा सम्यग्भावितानामेव । यथोक्तं श्रीमद्भागवते नवमस्कन्धेम्बरीषचरिते । स वै मनः कृष्णपदारविन्दयोरित्यादिश्लोकत्रयेण ।

—२२ भवन्ति–इन्द्रियाकर्षका भवन्ति । विरक्तेन्द्रियाणामिति । भगवद्भक्तिरसरहितानां केवलज्ञानिनां शुकादीनामिन्द्रियाणामित्यर्थः । एवं चास्मिन्मोक्षशास्त्रे लौकिकविषयाणां चर्चैव नास्ति शुष्कज्ञानीन्द्रियविषययोर्लौकिकसंबन्ध एव नास्तीति । भगवदीयविषयाणामेवात्र परत्वं बोध्यमिति भावः ।

—२३ अव्यक्तं सांख्यमते प्रकृतिः सात्र न विवक्षितेत्याहुः– भगवत्कृपैव सेति ।

१०२–१ सूक्ष्मयेति । एवंच सूक्ष्मपदेन बुद्धेरुपनिषदनुसारित्वबोधनाद्भक्तिप्रणाड्या प्राप्तिं दर्शयतीत्यर्थः । तेन श्रुतौ गम्यत इति गतिरिति प्राप्यत्वबोधनात् स्मृतावपि विशत इतिपदेन तस्यैवार्थस्योपबृंहणात् अत्र प्राप्तिरूप एवार्थोभिप्रेतो दृश्यते नतु शुष्कदर्शनरूपस्तेन च नात्र सांख्यमतप्रत्यभिज्ञानमिति भावः ।

सूत्रार्थः– कठशाखासु सांख्यमतसिद्धं प्रकृत्यादिकं श्रूयते तेन तन्मतमपि श्रौतमिति चेन्न यतः पूर्वं शरीरसंबन्धिनामिन्द्रियादीनां रथादिषु रूपकभावेन ग्रहणम् । तेन भगवानेवोत्कृष्टः पुरुष इति पूर्ववाक्यसंबद्ध एवार्थः । एष सर्वेषु भूतेष्विति श्रुतिरेवमेव दर्शयति । चकारात्ततो मां तत्त्वतो ज्ञात्वेति स्मृतिरपि ग्राह्येति ॥ १ ॥

## सूक्ष्मं तु तदर्हत्वात् ॥ १।४।२ ॥

—८ धर्मिप्रवाहादिति । धर्मिणः– ब्रह्मणः । प्रवाहात्– सर्वत्रोपनिषदि कथनात् ।

—९ सूक्ष्ममिति । सूक्ष्ममव्यक्त तद्ब्रह्मैवेत्यर्थः । न ः कथमत आहुः– धर्मधर्मिणोरिति । एवंच कृपा भगवद्धर्मः । ततश्च घटकलशयोरिव सूक्ष्माव्यक्तयोरपि परस्परवाच्यवाचकभावेन सूक्ष्मपदेनाव्यक्तं कृपारूपं ब्रह्म बोध्यते धर्मधर्मिणोरभेदादित्यर्थः ।

—१० तदेवेति । अत्र विवरणे तदेव हि सर्वप्रकारेण व्यज्यत इति पाठः । तदेव-कृपाविशिष्टम्। सर्वप्रकारेण-आनन्दमयत्वादिसर्वप्रकारेण। व्यज्यते-आनन्दमयादितत्तदधिकरणेषु सर्वत्रोपनिषत्सु व्यञ्जनया बोध्यते शक्त्या तु ब्रह्मत्वेनेति । तदेव सर्वप्रकारेण न व्यज्यत इत्यपपाठः । तदेव-ब्रह्मैव । केवलं सूक्ष्मपदेन न व्यज्यते किंतु कृपापीत्यर्थः । तदेव-कृपाविशिष्टं ब्रह्मैव ।

—११ उभयत्र- कृपायां ब्रह्मणि च ।

सूत्रार्थः-ननु धर्मरूपा भगवत्कृपाव्यक्तशब्देन गृहीतुमशक्येति चेन्न । यतः सूक्ष्मं तद्ब्रह्मैव । अव्यक्तमपि तदेव । एवंच धर्मधर्मिणोरभेदाद्भगवत्कृपापि सूक्ष्मशब्देनोच्यते तेनाव्यक्तशब्देन वक्तुं योग्यत्वादिति ॥ २ ॥

## तदधीनत्वादर्थवत् ॥ १।४।३ ॥

—१४ धर्मधर्मिणोरभेदं स्वीकृत्य यत्समाधानमुक्तं तदसंगतमिति शङ्कते-नन्विति । यदि पूर्वोक्तयुक्त्या कृपाया ब्रह्मत्वं तदा धर्मित्वे तद्भिन्नत्वरूपं परत्वं युक्तिरहितं यदि कथंचिद्धर्मत्वं तदा धर्मिप्रायपाठविरोधरूपो दोष इति पूर्वोक्तं समाधानमसंगतमित्याशयेन पूर्वपक्षमाह- नन्वित्यादिना आहुरित्यन्तेन ।

—१५ समाद्यते-अभेदेऽपीति । एवंचाभेदे यथैकरूप्येण ग्रहणं युक्तिसिद्धमेवं भेदे नियम्यनियामकभावो युक्तिसिद्ध इत्युभयमपि युक्तमित्यर्थः। नन्वेकत्वे नियम्यनियामकभावः कथं तद्दृष्टान्तेन साधयन्ति-तत्रेति ।

—१७ तथैवेति । एकत्वेपि संख्यातानन्दत्वासंख्यातानन्दत्वात्मकरूपभेदेनैव । एवंच रूपभेदेन सोप्युपपन्नः ।

—२० अस्मिन्पक्षेऽव्यक्तपदस्य यौगिकत्वेन रूढिर्योगमपहरतीति न्यायेन शैथिल्यं स्यादित्यरुच्या पक्षान्तरमाहुः- अथवेति । अक्षरमेवाव्यक्तमस्तु-अव्यक्तोक्षरमुच्यते-इति गीतावाक्यात् । नन्वस्मिन्पक्षेर्थवदिति दृष्टान्तस्य संगतिः कथमत आहुः-तस्मिन् सतीति । तस्मिन्नक्षरे स्फुरिते सति विज्ञानस्य बुद्धेर्यदक्षरात्मकविषयाधीनत्वं सोत्र दृष्टान्तभूतोर्थो ग्राह्यः । तथा च तद्विज्ञानं यथाक्षरसारूप्येप्यक्षराद्भिन्नमक्षराधीनं च तथाक्षरमपि ब्रह्मसरूपं ब्रह्मणः परस्ताद्भिन्नं तदधीनं चेत्यैक्येपि न परत्वानुपपत्तिप्रवाहविरोधावित्यर्थः ।

—२१ एतेन-त्रिसूत्र्या एतादृशार्थव्याख्यानेन । सर्वविप्लववादिनः-मायावादिनः । तेषां मतेव्यक्तशब्दवाच्या बीजभूताविद्या मायेति स्वीक्रियते । निराकृतेति । निराकृता इति । अव्यक्तोक्षर उच्यते-इति गीतावाक्यात् । असंबद्धाभिलापा चेति । बीजं मां सर्वभूतानाम्-इति गीतावाक्ये भगवन्तं

प्रति बीजकथनान्मायाया बीजत्वकथनं मायावादिनामसंबद्धाभिलापित्वम् ।

—२३ ननु बीजशब्दो नपुंसकलिङ्गस्तस्य मामित्यनेन विशेषणता कथमिति चेत्तत्राहुः- अनेकेति । स्त्रीनपुंसकलिङ्गमायाव्यक्तादिरूढिशब्दानामित्यर्थः । त्वं स्त्री त्वं पुमानिति श्रुत्या तस्यैव सर्वरूपत्वमङ्गीकर्तव्यमित्यर्थः ।

—२४ शक्तित इति । जैमिन्युक्तं यद्भाट्टनये प्रसिद्धं लोकवेदाधिकरणं तदाश्रित्य लौकिकशक्तितः । तथा -प्रकृतिवाचकत्वम् । शाक्ता इति विवरणसंमतः पाठः । तदायमर्थः । शाक्तमतानुयायिनस्तां प्रकृतिं तथा जगद्बीजभूतां ब्रूयुरित्यन्वयः । सन्मार्गात्-वेदमार्गात् ।

सूत्रार्थः-यथा ब्रह्मविदाप्नोति परमित्यत्रैकस्यैव ब्रह्मणः सच्चिद्रूपेण ज्ञानविषयत्वमानन्दरूपेण तस्यैव फलत्वं च तद्वत् धर्मधर्मिणोरभेदेपि कृपाया भगवदधीनत्वात्तस्य परत्वमिति ॥ ३ ॥

## ज्ञेयत्वावचनाच्च ॥ १।४।४ ॥

—१०३-२ सूत्रप्रयोजनमाहुः—पूर्वापरेति । प्रतिपादित इति । अव्यक्तपदवाच्यः कृपा वाक्षरो वार्थः प्रतिपादित इत्यर्थः ।

—४ ज्ञातव्यमिति । गुणपुरुषान्तरज्ञानात्कैवल्यमिति सांख्यसूत्राद्विध्यर्थे तव्यप्रत्ययः ।

—६ नन्वज्ञानदशायां मास्त्वन्तरज्ञानं तावताव्यक्तपदस्य प्रकृतिवाचकत्वे का क्षतिरित्यत आहुः- परत्ववचनमिति । ब्रह्मणीति शेषः । उभयोः-प्रकृतिपुरुषयोः ।

—७ पूर्वं- अदृश्यत्वाधिकरणे ।

सूत्रार्थः—सांख्यैः प्रकृतिपुरुषयोर्ज्ञेयत्वेन कथनम् । अत्र त्वव्यक्तादीनां ज्ञेयत्वेन कथनम् । चकारात्सांख्यमते प्रकृतिपुरुषयोः संश्लिष्टत्वम् । अत्र तु परापरभाव इति वैलक्षण्यात्सांख्यमतं न श्रौतमिति ॥ ४ ॥

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ १।४।५ ॥

—९ पूर्वपक्षं स्पष्टयन्ति-नन्विति ।

—११ महतः परमिति । महतः परमव्यक्तमिति निर्देशो ग्राह्यः । निचाय्येति । अनेन ज्ञेयत्ववचनम् ।

—१३ उत्तरवाक्य इति । इन्द्रियेभ्य इत्यस्योत्तरेशब्दमिति वाक्ये वदतीत्यर्थः । समाधानं स्पष्टयन्ति-प्रकरणस्येति । एकवाक्यतायां प्रकरणमेव नियामकं नतु वाक्यद्वयं प्रकरणं च-ऋतं पिबन्तावित्यारभ्य नाचिकेतोपाख्यानान्तं वाक्यद्वयं च महतः परव्यक्तमिति ।

—१० अशब्दमस्पर्शमिति च। एवंच द्वयोर्वाक्ययोः सर्वथैकवाक्यतायां सत्यां जीवब्रह्मणो रथित्वप्राप्यत्वनिरूपणं ब्रह्मणश्च ज्ञानेन मृत्युमुखप्रमोक्षरूपं फलमप्युच्यते। एवंच महतः परं ध्रुवमित्यत्र परशब्देनाव्यक्तरूपं प्रधानं सांख्यमते प्रधानज्ञानान्मोक्षो भवतीत्यनङ्गीकाराच्चेतनात्मज्ञानादेव मोक्षो भवतीत्यङ्गीकाराच्चेति भावः।

**सूत्रार्थः**- नन्वत्र श्रुतिर्ज्ञेयत्वमपि वदतीति चेन्न प्राज्ञस्य परमात्मन एव प्रकरणादिति ॥ ५ ॥

## त्रयाणामेवमुपन्यासः प्रश्नश्च ॥ १।४।६ ॥

—२४ त्रयाणां-अग्निजीवब्रह्मणाम्। उपन्यास इति। उपन्यासकारणीभूतः प्रश्नश्च स्यादित्यर्थः।

१०४-८ अत एव-सांख्यमतभावादेव। पश्चाद्वचनं- वल्लीत्रयसमाप्तौ कथनम्।

—९ उत्तरप्रश्नभावार्थमिति। उत्तरप्रश्नानिष्ठो भावो धर्मस्त्वित्वं तदर्थमित्यर्थः।

**सूत्रार्थः**-अत्र कठवल्ल्यां त्रयाणामग्निजीवब्रह्मणां कथनं प्रश्नश्च। तेन प्रकरणानुरोधाद्ब्रह्मण एव निरूपणमिति ॥ ६ ॥

## महद्वच्च ॥ १।४।७ ॥

—१६ प्रथमकार्ये-प्रकृतेः प्रथमकार्ये महत्तत्त्वरूपे।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ॥

इति सांख्यकारिकाप्रामाण्यात्।

**सूत्रार्थः**-महान्तं विभुमित्यत्र यथा महच्छब्दो यौगिकोपि ब्रह्मवाचकस्तथात्राव्यक्तशब्दोप्यक्षरवाचक इति ॥ ७ ॥

इति प्रथममधिकरणम्।

---

## चमसवदविशेषात् ॥ १।४।८ ॥

—२० अधिकरणप्रयोजनमाहुः-श्रुत्यन्तरेणेति।

—२२ अजामेकामिति मन्त्रस्थोजाशब्दः पूर्वपक्षोत्थानसूचकस्तेन संशयं तद्बीजं चानुल्लिख्य पूर्वपक्षं विषयवाक्यं चाहुः- नन्विति। श्वेताश्वतरोपनिषद्यजामेकामिति मन्त्रः।

—१०५-१ नन्विदं वाक्यं प्राकरणिकमेवाप्राकरणिकं नास्तीत्याशयेन शङ्कते-यद्यपीति।

—४ समादधते–तथापीति । यज्ञकाण्डे यथार्थान्तरब्रह्मवाचकप्रणवादिमन्त्राणामुपयोगस्तथा सांख्यमतासिद्धपदार्थवाचकमन्त्रस्य ब्रह्मविद्याया-मुपयोग इत्यर्थः । एवंचास्य मन्त्रस्य स्वार्थप्रतिपादने प्रकरणापेक्षा नास्तीति प्रधानस्याशब्दत्वं नास्तीत्येवं शङ्का स्यादिति भावः ।

—५ बहूनामनुग्रहो न्याय्य इत्याशयेन सांख्यमतस्थपदार्थबोधकांस्त्री-न्मन्त्रान्दर्शयति–त इति ।

—१० इत्यादि च वाक्यानीति । एते त्रयो मन्त्रा इत्यर्थः । एवंच कठवल्ल्यामेको मन्त्रः सांख्यमतपदार्थबोधकः । अन्ये मन्त्रा ब्रह्मप्रतिपादका अतो बहूनां वाक्यानामनुग्रहार्थं स एकः कठवल्लीस्थो मन्त्रोन्यार्थको भवत्वत्र तु बहूनां सांख्यमतप्रतिपादकत्वात्तन्मतं वैदिकमिति भावः ।

—१६ प्रकृतेरिति । अस्य पदस्याजादिमन्त्रे कल्पयितुं न शक्यत इत्यन्वयः । एवं चमसमन्त्रे यज्ञाङ्गसाधनवाचकपदानि सन्ति परंतु तेषां यथा न तद्वाचकत्वं तथात्रापि न सांख्यमतपदार्थवाचकत्वमजामेकामिति मन्त्रस्येयमाविशेषो बोध्यः ।

—१८अनित्यसंयोगभयादिति । नित्यवेदस्यानित्यकपिलसंयोगभयादि-त्यर्थः । नित्ययोरिति । भगवदंशरूपाधिदैविकयोरित्यर्थः ।

सूत्रार्थः—यथार्वाग्बिलश्चमस इति मन्त्रे कर्मविशेषं कल्पयित्वा तत्रार्वाग्बिलं चमसं कल्पयित्वा तस्मिन्यशोरूपं सोमं सप्त होतारो मन्त्रेण भक्षयेयुरिति विशेषः कल्पयितुं न शक्यते किंतु मन्त्रान्तरव्याख्यात एवार्थो गृह्यते तद्वदत्रापि लोहितशुक्लकृष्णशब्दैः सत्त्वरजस्तमसां कल्पनेन सर्वं सांख्यमत-मेव वैदिकमिति कल्पयितुं न शक्यत इति ॥ ८ ॥

## ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ १।४।९ ॥

—२३ इमामिति । चमसमन्त्रव्याख्यानं श्रुतावेव कृतमजामन्त्रस्य तु तथा व्याख्यानं नास्तीति चमसदृष्टान्तवैषम्यम् । किंच न जायत इति व्युत्पत्त्याजाशब्देन मूलप्रकृतिरेव गृह्यत इति सांख्यानां शङ्केत्यर्थः । ननूपनिषत्प्रतिपाद्यं तादृशं किं ज्योतिरित्याहुः—अग्निसोमसूर्यविद्युद्रूपादिति । अत्र पञ्चम्यन्तपाठे भावप्रधानो निर्देशः । एवंच ज्योतिषस्तादृशरूपत्वाद्धंसोक्तचरणरूपेत्यन्वयः । अग्निसूर्यसोमविद्युद्रूपमिति प्रथमान्तपाठे ज्योतिषो विशेषणम् ।

—२५हंसोक्तचरणरूपेति । हंसेन सत्यकामाय ऋषये छान्दोग्यषष्ठप्रपाठकेग्निः कलेत्यादिनाग्न्यादीनां कलात्वमुक्तम् । अतश्चरणरूपेत्यर्थः ।

—२६ अस्या अजाशब्दत्वेन व्यवहारे कारणमाहुः-भगवदिति । तत्तेजोसृजतेति श्रुतेः ।

—१०६-१ ननु भगवत्कार्यरूपाया अस्या अत्र कथं प्रत्यभिज्ञानमत आहुः-तत्र हेतुरिति।

—४ सा मुख्या सृष्टिरिति। त्रिवृत्कृतदेवतारूपा सा मुख्या बहुप्रजाजननसमर्थेत्यर्थः। उत्तरार्धं व्याकुर्वन्ति- अजद्वयमिति।

—५ नन्वजाया ज्योतिष्ट्वेन कथनमयुक्तं छान्दोग्ये तेजस उत्पत्तिकथने त्रिवृद्रूपताया अनुक्तेरित्यतः सूत्रशेषमवतारयन्ति- अत्रेति। निरूपयतीति सूत्रकार इति शेषः।

—७ एवमग्रेपीति। यदादित्यस्य रोहितं रूपमित्यादि। अनेन-जीवेन। सहार्थे तृतीया। आत्मनेति करणार्थे तृतीया।

—८ सरूपत्वकथनप्रयोजनमाहुः-बीजेपीति।

बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्।

—इति वाक्याद्बीजं भगवान्। अत्रापिना प्रजासु तेजोबन्नात्मकत्वेपि सच्चिदानन्दस्वरूपं त्रैविध्यमप्यस्तीति सूचितम्।

—९ तस्मादिति। यस्मादेवं वाक्यतात्पर्यं तस्मादित्यर्थः।

सूत्रार्थः-अजाशब्देनात्र ज्योतिरुच्यते। तदेवाग्निरित्यादिमन्त्रे ज्योतिषोपक्रमात्। द्वा सुपर्णेति वाक्यमग्र उक्तम्। मध्ये पठितोयमर्थः पूर्वोत्तरसंबद्धमर्थं ब्रूते। तेन जीवब्रह्मरूपमजद्वयमुक्तम्। एतस्यार्थस्य स्पष्टीकरणाय श्रुत्यन्तरसंमतिं दर्शयन्ति-एके शाखिनो यदग्ने रोहितं रूपमित्यानेना स्पष्टमेवाधीयत इति॥ ९॥

## कल्पनोपदेशाच्च मध्वादिवदविरोधः॥ १।४।१०॥

—१५ यथेति। यथाजा स्वामिहिताय भवति प्रजोत्पत्तिसंपादनेन तथेयं भगवद्धितेत्याग्निर्माणवक इतिवद्गौणी लक्षणा तेनाजाशब्दवाच्याया सृष्टिरित्यर्थः।

—१६ भाष्यकृतः स्वाभिप्रेतमाहुः- चकारादिति। चोप्यर्थे। परोक्षवादोयमिति। अजाशब्देनाद्यसृष्टिकथनरूपान्योक्तिरेव परोक्षवादः। परोक्षप्रिया हि देवा इति श्रुतेः। परोक्षं च मम प्रियमिति श्रीमद्भागवताच्च।

—१७ हितायेति। तत्तेषां न प्रियं यन्मनुष्या विद्युरिति श्रुतेर्मनुष्याणां ज्ञानं देवहिताय न भवतीति तद्धिताय। सौत्रदृष्टान्तं विशदयन्ति-यथेति। यथास्माकं माक्षिकं मधु तथा देवानामादित्य एव मधु तं दृष्ट्वा तृप्यन्ति देवाः। पृथिव्याः सर्वसस्योत्पादकत्ववत्सर्वार्थबोधकत्वाद्वाचो धेनुत्वं ज्ञेयम्।

—१८पञ्चाग्निविद्यायामिति। छान्दोग्योपनिषदि।

—१९ अविरोधश्च इति। यथा सांख्यमत आदित्ये चक्षुषोरधिदैवतत्वं सिद्धमेवेति मधुत्वं न शक्यत इति मधुविद्याश्रुतिविरोधपरिहारार्थं विद्यायाः

कल्पनोपदेशो यथा सांख्यवादिभिरङ्गीक्रियते तथा प्रकृतेर्व्याया सृष्टिः कल्पनयाजाशब्देनोच्यत इत्यर्थः ।

सूत्रार्थः-नन्वजाशब्दस्य प्रथमकार्यवाचकत्वं कथमिति चेन्न । यथाजा बर्करसहिता दुग्धादिना स्वामिहितं करोति तथेयमप्युपासिता हितं करोतीति ज्ञापनायाजाकल्पनाया उपदेशात् । चकारात्परोक्षवादोयमित्यपि सूचितम् । यथादित्यो वै देवमध्वित्यादिना द्युप्रभृतीनामग्नित्वं पञ्चाग्निविद्योक्तं तथात्रापि न विरोधः । अतोजाशब्दमात्रान्न सांख्यमतस्य वैदिकत्वमिति ॥ १० ॥

इति द्वितीयमधिकरणम् ।

---

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ १।४।११ ॥

—२३ मन्त्रान्तरे सांख्यशङ्कापरिहारार्थमिदं संख्योपसंग्रहाधिकरणम् । अथवा भाष्ये पुनराशङ्क्येत्यत्र पुनरित्युक्त्या पूर्वाधिकरणस्यैव शेषोयं तस्यैवेदं नामान्तरं ज्ञेयम् ।

—२४ विषयवाक्यं दर्शयन्ति-यस्मिन्निति । यस्मिन् ब्रह्मणि पञ्च पञ्च जना आकाशश्च प्रतिष्ठितास्तमात्मानमेवं ब्रह्मामृतं विद्वानन्यो जीवोमृतो भवतीति वाक्यार्थः । अस्मिन्मन्त्रे पञ्चपञ्चशब्दोक्त्या पञ्चविंशतितत्त्वबोधनात्सांख्यमतं श्रौतमिति वादी मूढग्राहेण मनुते ।

१०७-१ तद्विशदयन्ति-यद्यपीति । अत्र-पञ्चपञ्चजना इति मन्त्रे ।

—२ न तु पञ्चद्वयघटितमेकं वाक्यमित्याहुः-न पञ्चानामिति । पञ्चानां पञ्चेति षष्ठीसमासे गृहीते वाक्यस्य साधुत्वं स्यात्परं तादृशसमास एव न संभवतीति स्पष्टयन्ति- तथाहीति ।

—३ एकत्वादिति । ब्राह्मणसमाज इत्यत्र समासे ब्राह्मणानामित्यस्येव पञ्चानामित्यस्य संख्यावाचिनो बहुवचनान्तस्य प्रवेशो न वक्तुं शक्य इति न षष्ठीसमासः ।

—४ ननु नित्यबहुवचनान्तत्वाद्दारा इत्यादिवत्संख्यावाचकपञ्चशब्दस्य बहुत्वमविवक्षितं कृत्वा पञ्चसु पञ्चेति सप्तमीसमास एवास्त्वित्यत आहुः-संख्यायामिति । गुणे गुणानङ्गीकारादिति भावः । द्वितीयपक्षे दूषणमाहुः-संख्येयपरत्व इति ।

—५ पञ्चत्वमेवेति । पञ्चसु संख्येयेषु घटपटादिषु पञ्चसंख्या इत्यर्थो द्वितीयपक्षे लभ्येत तेन पञ्चत्वसंख्याया एव लाभो भवेन्नतु सांख्याभिमता पञ्चविंशतिसंख्या लभ्येतेत्यर्थः । यदि च पूर्ववदाद्यस्य संख्यार्थत्वं द्वितीयस्य

संख्येयार्थत्वं तत्रापि दोष इत्याहुः– **पूर्ववदिति** । पूर्ववत् षष्ठीसमासः सप्तमीसमासो वा चेदित्यर्थः। **अनन्वय इति**। षष्ठीसमासे पञ्चसंख्यासंबन्धिसंख्येयमित्यर्थः । संबन्धश्च समवायः । एवंच संख्येयवाचकपञ्चपदस्य संख्याविशिष्टे संख्येये शक्तिस्वीकारेण तत एव संख्याबोधे जाते पुनः संख्यावाचकपूर्वपदस्य प्रयोजनाभावेनाकाङ्क्षाभावादनन्वयः । सप्तमीसमासेतु संख्यायां संख्येयाभावादुत्तरपदस्यानन्वय इत्यर्थः । केचित्तु पूर्ववच्चेदनन्वय इति वाक्यस्यान्यथार्थं व्याख्यान्ति । **तथाहि पूर्ववदिति** । यथा पूर्वपदस्य संख्येयपरत्वं तथोत्तरपदस्य संख्येयपरत्वं चेदित्यर्थः । **अनन्वय इति** । उभयपदस्य संख्येयपरत्वे घटो घट इतिवदाकाङ्क्षाभावादनन्वय इति । ननु समासानुपपत्तिर्यदि दोषस्तर्हि तं वारयितुमसूर्यंपश्या राजदारा इतिवदसमर्थसमासोऽत्रास्त्वित्यत आहुः-**विधायकाभावादिति**। असूर्यंपश्या राजदारा इत्यत्र यथा-असूर्यललाटयोर्दृशितपोः (पा. सू. ३-२-३६) इति पाणिनिसूत्रं विधायकं तथात्र किमपि विधायकं नास्तीत्यर्थः। नन्वेवं सांख्यमतानवसरात्सूत्रे संख्योपसंग्रहादिति हेतुर्व्यर्थः स्यादत आहुः-**अतो वीप्सेति**। पञ्च पञ्चेति पदद्वयेनैकार्थवाचकत्वाद्द्विरुक्तिः। पञ्च पञ्चजना इत्यस्य वीप्सया यस्मिञ्जनाः पञ्चशः पञ्चेत्यर्थे जाते पञ्चविंशतिसंख्यारूपोऽर्थो लभ्येत। अस्मिन्नर्थे तत्त्वानां पञ्चविंशतित्वलाभो न भवति किंतु जनानामित्यस्वरसादाहुः-**पञ्चजनसंज्ञाविशिष्टानामिति**। वेदे प्रसिद्धानां निषादपञ्चमानां चतुर्णां वर्णानां पञ्चजनसंज्ञा।

—६ एवं चानेनाप्यर्थेन पञ्चविंशतितत्त्वलाभो न भवतीत्यस्वरसादाहुः- **यथासंभवमिति**। भाष्यकृद्भिर्यथासंभवमित्युक्त्यैवं सूचितं यत्सांख्यमतसिद्धिः कथमपि न संभवति परंतु सूत्रकृता संख्योपसंग्रहादिति हेतुप्रयोगः कृतस्तदर्थमेवं प्रयासः करणीयः। सचेत्थम्। पञ्चपञ्चजना इत्येकं पदम्। जनयन्तीति जनास्तत्त्वानि। तथा च पञ्च ते जनाश्च पञ्चजनाः पञ्चपञ्चजना इति कर्मधारयः। यद्वा पञ्चानां जनानां समाहारः पञ्चजनाः पञ्चानां पञ्चजनानां समाहारः पञ्चपञ्चजना इति समाहारगर्भितः समाहारः। अस्मिन्पक्षे आर्षत्वान्नपुंसकलिङ्गैकवचनयोरभावः । एवंच पञ्चविंशतितत्त्वानि श्रौतानीति मूढस्य सांख्यस्याग्रह इति भावः। एवंच संख्योपसंग्रहादिति सूत्रस्यायमर्थः। हेतुं व्याकुर्वन्ति- **तथापीति** । **मूढग्राहेण**-मूर्खतयाग्रहेण दुराग्रहेणेति यावत्। **संख्योपसंग्रहेपीति**। यथाकथंचिदिति शेषः।

—७ **लक्षणार्थं**-लक्षणसंपादनार्थम् । **केनचिद्धर्मेणेति**। यथा नैयायिका नवद्रव्यसाधारणं द्रव्यत्वरूपं धर्मं स्वीकुर्वन्ति तथा तत्त्वपञ्चकनिष्ठं साधारणं

धर्मं स्वीकरोतु सांख्यः परं त्वेतादृशो धर्मस्तन्मतेप्रसिद्धोतो न संभवतीत्यर्थः। अथवा लक्षणार्थं प्रत्यभिज्ञानार्थं यथा रूपत्वज्ञानं विनारसापेक्षया पृथक्त्व-प्रत्यभिज्ञानं न जायते तथात्रापि तत्तत्पञ्चकनिष्ठासाधारणधर्मं विनायममुक इति प्रत्यभिज्ञानं न जायत इति केनचिद्धर्मेण भाव्यमित्यर्थः। परं स सांख्य-मते नास्तीत्याहुः– सचेत्यादि।

—८ धर्माभावे किं स्यात्तत आहुः– तथा सतीति। तादृशधर्मस्यासंभवे सतीत्यर्थः। पञ्चैवेति। पञ्चत्वसंग्राहकधर्माभावे केवलपञ्चत्वसंख्यायाः सत्त्वेन पञ्चैव तत्त्वानि स्युरित्यर्थः। ते– तत्त्वपञ्चकानि।

—९ पूर्वोक्तरीत्या पञ्चविंशतिसंख्यायाः संग्रहं कृत्वा स्मार्तानां तत्त्वानां श्रौतत्वकल्पनरूपं सांख्यमतं न संभवति तत्र हेतुमाह–नानाभावादिति। नानाभावाः– नाना अनेके प्रकृतित्वापेक्षया भिन्ना भावा धर्मा येषां तादृशाः स्वीकर्तव्याः। ननु सन्त्येव भूतत्वादयो धर्मा इत्याशङ्क्य परिहरन्ति–यद्यपीत्यादिना। भूतत्वं–पञ्चभूतनिष्ठो धर्मः। आकूतित्वं कर्मेन्द्रियधर्मः। चित्तित्वं–ज्ञानेन्द्रियाणां धर्मः। अन्तःस्थितत्वं प्रकृति-पुरुषमहदहङ्कारमनसां धर्मः। एते धर्मा वक्तुं शक्यन्त इत्यर्थः।

—१० परं सांख्यैस्तथा नोक्तमित्याहुः– तथापीति।

—१३ अन्यथोपगमादिति। सांख्यकारिकास्वन्यथैव वचनात्। तत्र हि मूलप्रकृतिरित्यादिकारिकायां १ प्रकृतित्वं २ प्रकृतिविकृतित्वं ३ विकारत्वं ४ पुरुषत्वमेते चत्वार एव गृहीता एषां चतुर्णां मध्ये द्वावेकनिष्ठौ, एकः सप्तनिष्ठः, एकः षोडशनिष्ठः। एवंच पञ्चनिष्ठस्तु कोपि न भवति तेनान्यथैवोपगम इत्यर्थः। जनयन्तीति व्युत्पत्त्या जनशब्दस्य तत्त्व-वाचकत्वे पुरुषेपि जनकत्वं स्यात्तेन तदभिमतं पुरुषस्य निर्लेपत्वं विनङ्क्ष्य-तीत्यधिकं दूषणमाहुः–पुरुष इति। प्रकृतिः कर्त्री पुरुषस्तु पुष्करपलाशव-न्निर्लेप इति वैलक्षण्यं न स्यादित्यर्थः।

—१४ अतिरेकादिति। सांख्यतत्त्वापेक्षया श्रुतावात्माकाशयोराधिक्यं श्रूयत इत्यर्थः।

सूत्रार्थः—पञ्चपञ्चसंख्याग्रहणादपि सांख्यमतं न वैदिकं पञ्चविंशति-संख्यासंग्राहकधर्माणां तन्मते पञ्चपञ्चकनिष्ठत्वाभावेन तेभ्यो भिन्नत्वा-त्पञ्चपञ्चजनेभ्य आकाशश्च प्रतिष्ठित इत्याकाशस्य यस्मिन्नित्यनेनोक्तस्या-त्मनश्चाधिक्याच्चायं श्रुत्यर्थ इति प्रतीयत इति॥ ११॥

## प्राणादयो वाक्यशेषात्॥१।४।१२॥

—१८ तदनुरोधनेति। अन्वयानुपपत्त्या लक्षणाश्रयणं कार्यम्।

—१९ परिकल्प्य इति । त्रिणवेनौजस्कामं याजयेत् । युद्धं त्रिणवरात्रं तदभूत्तुमुलमुल्बणमित्यत्र यथा त्रयो नव यत्रेति बहुव्रीहिस्तथात्र पञ्च पञ्च यत्रेति बहुव्रीहिणा सुब्लुका च गणलक्षणयापि ज्योतिःशास्त्र इव पञ्चपञ्च-शब्दः पञ्चविंशतिवाचकतया परिकल्प्यः । नन्वेवमप्यात्माकाशयोराति-रेकदोषस्तदवस्थ इति चेत्तत्राहुः-स्पष्टमाहात्म्यार्थमिति ।

—२१ पञ्चजना इति । निश्चिता इति शेषः ।

—२२ वाक्यशेषमाहुः-प्राणस्येति ।

१०८-२ माहात्म्यविरोधश्चेति । ते निचिक्युरित्यादिनोत्तरार्धे भगव-न्माहात्म्यनिरूपणमस्ति । भगवदपेक्षाभावे तु तेन निरूपणेन विरोधः । सांख्यमत ईश्वरानङ्गीकारात्सुतरां विरोध इत्यर्थः । एवंच विरोधपरिहारार्थ-मेकवाक्यतारूप उपायोस्तीत्याहुः-अत इति ।

—३ पञ्चजनवाक्यस्य चेति । चकाराद्वाक्यशेषस्याप्यन्योर्थो वर्तत इत्यर्थः । पञ्चजनवाक्यार्थमाहुः—अतो बुद्धेरिति ।

—६ एकार्थत्वे-एकब्रह्मज्ञानरूपप्रयोजनकत्वे । सर्वं संगतमिति । शेष-प्राणादिवाक्येन कर्ता पञ्चजनवाक्येन च करणं बोध्यत इत्यर्थादेकवाक्यम् । साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ( जै. सू. ३।१।१९ ) इति जैमिनिसूत्रेण कर्तुः करणाकाङ्क्षा करणस्य च कर्त्राकाङ्क्षेति तयोः साकाङ्क्षत्वेन बुद्धिवृत्तिजनको भगवान् इत्येकस्मिन्नेवार्थे बोधिते ब्रह्मज्ञानं भगवन्माहात्म्यज्ञानं च जायत इति सर्वं संगतं स्यादित्यर्थः ।

—७ ननु प्राणादिवाक्यं कर्तृबोधकत्वान्मुख्यं तस्य शेषत्वं कथमत आहुः-खण्डत्वादिति । साकाङ्क्षत्वेन पूर्ववाक्यात्पृथक्प्रयोगादित्यर्थः । ननु येन प्राणायामाद्यनुष्ठीयते तस्यैव सिद्धिरिति योगशास्त्रे प्रोच्यत इति जीवस्यैव प्रवर्तकत्वं तेन भगवन्माहात्म्यविरोधः स्यादेवेत्यत आहुः-सर्वप्रवृत्तिकत्वा-दिति । प्राणायामादिसाधने जीवस्य प्रवर्तकत्वं भगवत एव बोध्यमिति नैव विरोध इत्यर्थः ।

—८ नन्वत्र पञ्चग्रहणात्पञ्चानां प्रवर्तकत्वमस्तु कथं सर्वप्रवर्तकत्वमतः पञ्चसु सर्वनिवेशमाहुः— तत्रेति ।

—९ गृहीतामिति । तेन रसनापि गृहीतेत्यर्थः ।

—१० क्वचिदेकग्रहणमिति । तेजस्येकस्या वाचो ग्रहणम् । उभयो-र्ग्रहणमिति । प्राणान्नयोस्तूभयोस्त्वग्घ्राणयो रसनान्नयोश्च ग्रहणम् ।

—११ आकाश इति । स च भूतानां तद्गुणानां चोपलक्षणम् । एवं चैतेषां ब्रह्मणि प्रतिष्ठितत्वोक्त्या प्राणवाक्ये प्रवर्तकत्वकथनेन च जीवो न सिध्यतीति भावः । पञ्चजना इति । योगेनेति शेषः ।

सूत्रार्थः—पञ्चजनशब्दवाच्याः प्राणादय एव। प्राणस्य प्राणमित्यादि वाक्यशेषादिति ॥ १२ ॥

ज्योतिषैकेषामसत्यन्ने ॥ १।४।१३ ॥

सूत्रार्थः—काण्वानां पाठेऽन्नेसति ज्योतिषा पञ्चसंख्यापूरणम् । अतोयं मन्त्रोपि न सांख्यमतमूलमिति ॥ १३ ॥

इति तृतीयमधिकरणम् ।

———

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १।४।१४ ॥

पूर्वाधिकरणापेक्षया विशेषमाहुः- श्रुतिविप्रतिषेधादिति । परस्परविरोधादित्यर्थः।

१०९—१नास्तीतीति । बोधयितुमिति शेषः ।

—३अन्यथैवेति । साक्षादात्मन एवेत्यर्थः ।

—४ युगपत्सर्वसृष्टिरपि बोध्यत इत्याहुः-इदमिति । अत्राधिकरण एवं संशयः । विप्रतिषिद्धनानाप्रकारकसृष्टिबोधिकां श्रुतिमनादृत्यैकविधसृष्टिबोधका स्मृतिरादरणीया मूलभूतश्रुतिर्वादरणीया ।

—५पूर्वपक्षमाहुः-एवमिति । क्रमव्युत्क्रमेत्यादि । विविधक्रमैर्विविधव्युत्क्रमैश्चेत्यर्थः ।

—६ ग्रहा त्वेति । इदं वाक्यं तैत्तिरीये प्रथमाष्टके । तदर्थश्च । ग्रहात्सोमग्रहादनु पश्चात्प्रजाः पशवश्च प्रजायन्ते इदमर्थवादवाक्यं यथा ग्रहस्वरूपबोधनार्थं नतु प्रजादिकारणत्वबोधनार्थं तथा सृष्टिवाक्यान्यपि ब्रह्मस्वरूपज्ञानार्थानीत्यर्थः ।

—७ अध्यारोपापवादन्यायेनेति । मायावादिमतेयं न्यायः ।

अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ।

इति तत्सांप्रदायिकोक्तेः । श्रुतौ कर्तृत्वबोधकान्यकर्तृत्वबोधकानीति द्विविधवाक्यानि सन्ति । तत्र मायावादिमते कर्तृत्वप्रतिपादकवाक्यैर्ब्रह्मणि कर्तृत्वमध्यारोप्य तस्याकर्तृत्वेनापवादः क्रियते । तन्न्यायेन श्रुतिविप्रतिषेधात्कारणत्वं नेत्यर्थः ।

—८ बाह्याबाह्यमतभेदेष्विति । वेदबाह्यानि गौतमकाणादादिमतानि तेषां मते परमाण्वादीनामेव जगत्कारणत्वात् । अबाह्यानि श्रुतिमूलकसांख्यादिमतानि ।

—१२ यथाव्यापदिष्टमिति । सच्चिदानन्दरूपवस्तुसर्वेश्वरत्वादिना । मायावादिनामध्यारोपापवादेन समाधानं न योग्यमित्याहुः- न तस्येति ।

सूत्रार्थः- सृष्टिभेदेषु ब्रह्मणः कारणत्वे विरोधो न। यथैकत्राकाशादिषु कारणत्वेनोक्तस्यान्यत्रापि तस्यैव कारणत्वेनोक्तेरिति ॥ १४ ॥

इति चतुर्थमधिकरणम्।

---

समाकर्षात् ॥ १।४।१५ ॥

—२१ पुनरन्यथेति। प्रकारान्तरेण श्रुतिविरोधमाशङ्क्येत्यर्थः। संशयः पूर्वाधिकरणवत्। क्वचिदिति। तैत्तिरीयके छान्दोग्ये च।

११०-१ विगानमिति। विरुद्धं गानम्। कर्मवदिति। यथा मलवद्वाससोऽन्नं नाद्यादिति निषिध्य-अथो खल्वाहुरभ्यञ्जनं वाव स्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं कामनयान्यादिति पक्षान्तरं कर्मविशेष उक्तं तद्वद्यत्र पक्षान्तरं बोद्धव्यं तत्र श्रुत्या तद्धैक आहुरित्युच्यते।

—२ पक्षान्तरकारणमाहुः- नहीति। प्रथमपक्षे दूषणमाहुः- असन्नेवेति। यो ब्रह्मासद्वेद सोऽसन्नेव भवतीत्यर्थः।

—३ द्वितीयपक्षे दूषणमाहुः-आदित्यवर्णमिति।

—४ तस्मादिति। अव्याकृतमिति श्रुतिपदेनाव्याकृतस्याव्यक्तस्य प्रधानस्य गृहीतुं शक्यत्वात्।

—५ स्वस्थानात्-स्वार्थात्।

—६ वैलक्षण्येन-सदसद्वैलक्षण्येन।

—७ को अद्धेति। इदं वाक्यं तैत्तिरीयब्राह्मणे द्वितीयाष्टकेऽष्टमप्रपाठके। अद्धा-साक्षात्।

—११ लोकप्रसिद्धतादृशार्थादिति। लोके प्रसिद्धो यः सच्छब्दस्य सत्त्वविशिष्टोऽर्थस्तादृशार्थात्समाकर्षात्प्रच्यावनादित्यर्थः। यथा यथोपासत इति। तत्तत्प्रकारेण भावने तत्तत्फलप्राप्तिरित्यर्थः।

—१२ तत्रोदाहरणं कंसादय इत्याहुः-यथेति।

—१३ अधिकरणारम्भे विगानमुक्तं तन्न संभवतीत्याहुः-सर्वेति।

—१४ प्रथमः पक्ष इति। सदेव सोम्येति वाक्योक्तः प्रपञ्चरूपोऽपि स भगवानिति प्रथमः पक्ष इत्यर्थः। असत्पक्षेण तुल्यमिति। वैलक्षण्याबोधकमित्यर्थः। नासदासीदिति। इदं वाक्यं तैत्तिरीये द्वितीयाष्टके।

—१५ तम इति। तमःशब्देन कर्माभिधीयते। पूर्वमनभिव्यक्तौ हेतुमाहुः-कर्मणापीति।

—१६ पूर्वमनभिव्यक्तोऽन्धकारस्तमःशब्दवाच्यो न भवति तनः कर्मैव तद्वाच्यं वक्तव्यमिति युक्तिमाहुः- नहीति। लोक इति। [illegible]

तम आसीत्तमसा गूढमग्र इत्यादिश्रुतेरपि तत्रत्यायाः प्रमाणत्वात् । एवं चैतावता श्रुत्या सदसद्विलक्षणो भगवान् जगत्कर्तेति गानमेव कृतं न विगानमिति भावः ।

—१८ **स्वयं**-सहायान्तरानपेक्षया ।

**सूत्रार्थः**- नो सदासीदित्यादिश्रुतिभिरसदादीनां कारणत्वेन कथनाद्ब्रह्मणः कारणत्वे विप्रतिपत्तिरिति चेन्न । एतेषां जगत्कारणप्रतिपादकासदादिपदानां लोकसिद्धार्थमपाकृत्य ब्रह्मपरकत्वकल्पनादिति ॥ १५ ॥

इति पञ्चममधिकरणम् ।

---

## जगद्वाचित्वात् ॥१।४।१६॥

—२३ विषयवाक्यमाहुः- **कौषीतकिब्राह्मण इति** । सर्वोऽपि षष्ठोऽध्यायो विषयवाक्यम् ।

१११-६ ननूपक्रमे ब्रह्मत्वमुक्तमत आहुः- **ब्रह्मत्वादय इति** ।आदिपदेन बृहदादीनां ग्रहणम् । **राजत्ववदिति** । यथा सर्वत्र देहेषु जीवत्वसाम्येऽपि परनियोजकत्वोपाधिना क्वचिद्देहे जीवस्य राजत्वं कर्मकरणोपाधिना च क्वचिद्यजमानत्वं तत्रापीत्यर्थः ।

—७ नन्वसंजातविरोधित्वेनोपक्रमस्य प्राबल्याद्ब्रह्मण एव कर्तृत्वमस्त्विति चेत्तत्राहुः-**अस्मिन्निति** । उपसंहारभेद उपक्रमस्य प्राबल्याभावादिति भावः । **सर्वत्र**-एतादृशोपक्रमोपसंहारस्थलेषु ।

—८**तथा सतीति** । वेदेन देहविशिष्टाभिमानिनः कर्तृत्वे बोधिते सतीत्यर्थः ।

—९ **बन्धमोक्षव्यवस्थेति** । भवेदिति व्यवहितेनान्वयः । **एवंसति**-अभिमानिनः कर्तृत्वे सिद्धे सति । **अर्थादिति** । जीवस्य कर्तृत्वाभिमानेन कर्तृत्वमस्तीत्यर्थादेव प्रकृतौ कर्तृत्वमित्यर्थः ।

—१२**पूर्वसिद्धं**-पूर्वस्मिन्नध्याय इन्द्रप्रतर्दनसंवादे सिद्धम् ।

—१३**सर्वविप्लवः**-सर्वश्रुतिविप्लवः । **अश्रुतकल्पनेति** । अश्रुतस्य प्रकृत्यभिमानिनः कल्पना । श्रुतस्य ब्रह्मणस्त्याग इति दोषापत्तिरित्यर्थः । **अतः**-ब्रह्मणः कर्तृत्वात् । **लय इति** । प्राणादीनामिति शेषः । ननु प्राण एव प्रज्ञात्मेति वाक्यविरोधात्प्राणादीनां ब्रह्मणि लयः कथमत आहुः-**प्राणात्मेत्यादि** । **पूर्वसिद्धं**-पूर्वस्मिन्नध्याय इन्द्रप्रतर्दनसंवादे ब्रह्मणः प्राणशब्दवाच्यत्वं सिद्धम् ।

**सूत्रार्थः**—भगवानेव जगत्कर्ता न जीवस्तज्जगत्कर्तृत्वस्यान्यत्राश्रुतत्वादश्रुतकल्पनानुपपत्तेरिति ॥ १६ ॥

**जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॥ १।४।१७ ॥**

**सूत्रार्थः**-क्वैष एतद्बालाके-इत्यस्मिन्प्रकरणे जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च जीवाद्वा मुख्यप्राणाद्वा सृष्टिरुक्तेति न ब्रह्मणो जगत्कारणत्वमिति चेत्तत्राह-जीवप्राणयोः कर्तृत्वकथनं तु जीवस्य ब्रह्माश्रितत्वात्प्राणस्य ब्रह्मयोगादुक्तं नतु तयोः स्वतन्त्रया जगत्कर्तृत्वं संभवतीति आश्रितत्वादिह इत्यादिसूत्रेण पूर्वमेव व्याख्यातमिति ॥ १७ ॥

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १।४।१८ ॥**

११२—५सांख्यमतमाचार्यशिष्याणामन्येषामप्यनुमतं न भवतीति बोधयितुं सूत्रप्रयोजनमाहुः-**स्वमतेनेति** । नियतधर्मवादस्वरूपमाहुः- **स्वापेत्यादि** ।

—६ परिहारं विवृण्वन्ति-**तस्मिन्निति** । यस्मिन्पक्षे स्वापप्रबोधयोर्जीवमुख्यप्राणधर्मत्वात्तल्लिङ्गत्वमेव न ब्रह्मधर्मत्वं तस्मिन्पक्षे । **अन्यार्थं**-ब्रह्मबोधार्थम् । तदाश्रयत्वेन तत्परिचायकत्वात् ।

—७ननु सूत्रस्थतुशब्देन पूर्वपक्षादस्य ज्यायस्त्वं कुतो नेत्याशङ्कां परिहर्तुं तुशब्दप्रयोजनमाहुः-**भेदे हीति** । एतस्य मतस्य पूर्वस्माद्वेदान्तिमताद्भेदेवश्यं जैमिनिनापि सांख्यमतं निराकर्तव्यमिति बोधकस्तुशब्दो नतु सिद्धान्तपक्षादस्योत्कर्षबोधकः । गामाविश्य च भूतानीत्यादिभिर्भूतादिसर्वकार्यस्य भगवत्कार्यतयैव सिद्धत्वात् ।

—८जीवब्रह्मणोरन्यार्थत्वं कथं तदाहुः-**ब्रह्मप्रतिपत्त्यर्थमिति** । लयोद्गमौ मृतिविलक्षणौ स्वापप्रबोधौ ।

—९अपि चेत्यनेन सूचितं हेतुमाहुः-**उपक्रमेत्यादि** ।

—११**फलमिति** । उपसंहारस्थं फलमित्यर्थः ।

—१२सूत्रस्थं हेत्वन्तरमाहुः-**अपिचेति** ।

—१३**ज्ञातत्वादिति** । एष इति शब्देन बालाकिज्ञातपदार्थस्यैव निर्देशादित्यर्थः ।

**सूत्रार्थः**-ब्रह्मज्ञानार्थमेव जीवमुख्यप्राणधर्मकीर्तनमिति जैमिनिराह । अपिच क्वैष इत्यादिप्रश्नेन यत्रैष इत्युत्तरेण चेदं प्रकरणं ब्रह्मपरमिति ज्ञायते। एवं वाजसनेयिशाखिनो दृप्तबालाकिब्राह्मणे स्पष्टमधीयत इति ॥ १८ ॥

इति षष्ठमधिकरणम् ।

---

**वाक्यान्वयत् ॥ १।४।१९ ॥**

११३—११ **स्वप्रतीत्या**-लौकिकप्रतीत्या ।

—१३ ब्रह्म तं परादादिति । अस्याः श्रुतेस्तात्पर्यम् । ब्रह्मक्षत्रादिरूपा वर्णाभिमानिनी देवता य आत्मनः सकाशादन्यत्र ब्रह्मक्षत्रादि वेद तं तादृशवेदनापराधात्पराकुर्यादिति ।

—१५भवतीति । एवंच दुन्दुभिशब्दः कोलाहलाभिभावक इति भावः ।

—१७तत्र-तादृशशब्दे ।

—१८ननु तादृशशब्दे दुन्दुभ्याघातः कारणं न तु तद्दर्शनमित्यत आहुः-अनुमानद्वारेति । अनुमानप्रकारश्चेत्थम् । महाकोलाहले दुन्दुभिश्रवणानन्तरं कस्यायं शब्द इति जिज्ञासा जायते तदनन्तरमयं शब्दो दुन्दुभ्याघातजन्यः पूर्वश्रुतशब्दसदृशशब्दत्वात् । यन्नैवं तन्नैवं यथा घटः । भवतीति । एवमनुमितौ संपन्नायां यन्निष्ठोयं शब्दस्तं द्रक्ष्याम इति प्रयत्ने कृते दुन्दुभिदर्शनं भवतीति तात्पर्यम् । ततो दुन्दुभिदर्शनानन्तरं दुन्दुभिस्तादृशशब्दकारणमिति ज्ञानमुत्पद्यते । एवं चोपचाराद्दुन्दुभिनिष्ठा कारणता दुन्दुभिनिदर्शन आनीयते । अत एव प्रयोगो भाष्ये तत्र कारणं दुन्दुभिदर्शनमिति । एवं चानुमानद्वारा परम्परया दुन्दुभ्यादिदृष्टान्तः ।

—१९ दृष्टान्तमुक्त्वा दार्ष्टान्तिके योजयन्ति-तथेति । कार्यानुसंधान इति । कार्यं शरीरं तत्समवेतचेष्टानुसंधानेनेत्यर्थः । भवतीति । मननादिद्वारेति शेषः । तत्र-भगवति ।

—२० तत एव-भगवत एव । तस्मिन्नेव-भगवत्येव । यथा घटोत्पत्तेः प्राग्लयानन्तरं मध्ये च मृद्विद्यत एवं भगवान्नामरूपोत्पत्तेः प्रागनन्तरं च विद्यत एवेति भावः ।

—२१ द्वयेन- स यथेत्यादिकण्डिकाद्वयेन । विशतीति । आश्रयत्वेनेति शेषः ।

—२२ तावन्मात्रतानिराकरणायेति । कार्योत्पत्त्यनन्तरं यावद्विनाशपर्यन्तं प्रतीयमानतानिराकरणायेत्यर्थः । न प्रेत्येति । अस्याः श्रुतेस्तात्पर्यं भूतलयोत्तरं भगवत्कृपयाज्ञाननाशे नामरूपात्मकं ज्ञापकं नास्तीति । एवं च शरीरादिनामरूपात्मकं कार्यं तस्य ज्ञापकं रूपं वक्तुं शक्यते । शरीरलयोत्तरं ज्ञापकं रूपं नास्तीत्येव न तु भगवानेव नास्तीति ज्ञेयं तस्य कालापरिच्छिन्नत्वात् ।

—२३ एतदेवाहुः- न शक्यत इति । विशेषाकाङ्क्षायां-स क इति विशेषाकाङ्क्षायाम् ।

—२४ अतिरिक्ताकथने-जगद्भिन्नत्वेनाकथने । वञ्चकत्वमिति । भगवान् विशेषरूपेण कथनायोग्यः । अथवा स नास्त्येवेति संमोहदशायामकथने वञ्चकत्वमित्यर्थः ।

—११४-१ कार्यवैलक्षण्यमिति । जगद्रूपकार्यापेक्षया वैलक्षण्यमविनाशित्वादि । सिद्धवत्कारेण-सिद्धवन्निर्देशेन ।

—२ आहेति । तस्यैव संसारमाहेत्यर्थः । मात्रासंसर्ग इति । यदि स भगवान् नित्यो न स्यात्तर्हि तस्य मात्रासंसर्गो न भवेदित्यर्थः । मात्रासंसर्गस्त्वस्य भवतीति माध्यन्दिनः पाठः । ननु भगवानविनाशी तर्हि विशेषतः कुतो नोक्तमित्यत आहुः-विशेषतस्त्विति ।

—३ चक्षुरिति । यावद्भेददृष्टिस्तावच्चक्षू रूपमेव पश्यति ।

ननु सर्वं खल्विदं ब्रह्मेति श्रुत्या रूपमपि ब्रह्मैवेति शङ्कते-नन्विति ।

—४ समादधते-तत्रेति । तद्ब्रह्मापश्यन् रूपदर्शनसमये द्रष्टव्यत्वेन रूपं पश्यति न ब्रह्म पश्यति तदानीं सर्वं ब्रह्मेति ज्ञानाभावात् ।

—५ अतद्रूपत्वात्-रूपस्य ब्रह्मत्वाभावात् । अयमर्थः । यावद्भेददर्शनं तावद् द्रष्टा ब्रह्मत्वेन रूपं न पश्यति । अत एव विशेषरूपेण ब्रह्मोपादानं कर्तुं न शक्यत इति भावः ।

—६ ज्ञानेन भेददृष्टौ लीनायामपि विशेषरूपेण कथनमशक्यमित्याहुः-ज्ञानोत्तरमिति ।

—७ आदिमध्यावसानेष्विति । येनाहममृता स्यामित्यादिः । मात्रासंसर्गस्त्वस्य भवतीति मध्यम् । इदमेव हीत्यनेनावसानम् ।

—८ उत्कर्षः-स्तुतिः । एवं जीवस्य स्तुत्यर्थं ब्रह्मता जगत्कर्तृत्वं चेति कथनमित्यर्थः ।

—९ अर्थविरोधादिति । ब्रह्म ह्यविकारि कार्यरूपेण तत्कथं विकुर्यादित्यर्थविरोधादित्यर्थः ।

—१० प्रकृतिवाद इति । जीवे जगत्कर्तृत्वं केवले न संभवतीत्यतो जीवाधिष्ठिता प्रकृतिरेव जगत्कारणमिति वादः ।

—११ अन्वेतीति । कारणत्वेनेति शेषः ।

—१२ जीवप्राधान्यगन्धोपीति । ततस्तदधिष्ठिता प्रकृतिस्तु दूरापेता ।

—१८ तन्मूलकत्वेन । पूर्वं-जीवमुख्यप्राणलिङ्गादित्यादिसूत्रे । विषयस्पर्श इति । विषयस्पर्शवत्त्वं जीवधर्मः स च जीवस्य ब्रह्माश्रितत्वाद्ब्रह्माणि कथ्यते । एवं विज्ञातृत्वं ब्रह्मधर्मः सच ब्रह्मांशत्वाज्जीवेपि भासते । तस्यैव-ब्रह्मण एव ।

—१९ एवं सति-एवं चोभयथापि जीववाक्यस्वाभावे ।

सूत्रार्थः-यदेवेत्यादिवाक्यस्य ब्रह्मण्येवान्वयान्नेदं जीवप्रकरणमिति ॥१९॥

प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥१।४।२०॥

११५-३ पुत्रादिप्रियसहवचनादिति । पुत्रादयो ये लौकिकाः प्रियास्तैः सहवचनात् ।

—५ तद्भेदेन-ब्रह्माभेदेन ।

—६ सर्वविज्ञानमिति । आत्मनि वा अरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितमिति वाक्यात् ।

—७ तस्यैव-सर्वत्वस्य । तस्याः-उपक्रमे जीवात्मकथनप्रतिज्ञायाः ।

—८ श्रोतव्यादीति । आत्मा वारे द्रष्टव्य इति वाक्यविषयः । एवंच सर्वविज्ञानप्रतिज्ञयेदं ब्रह्मप्रकरणं सिध्यतीति भावः ।

सूत्रार्थः-जीवोपक्रमाज्जीवस्यैवेदं प्रकरणमिति चेन्न । यत एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा जीवस्य भगवदंशत्वेन तदभेदे सति सिध्यति । एवंच तस्याः प्रतिज्ञायाः सिद्धेरिदं लिङ्गं यथा जीवो भगवदंशस्तथा जडोपीति ज्ञापकम् । अतो जीवोपक्रमेपि न तत्प्रकरणमेतदित्याश्मरथ्यो मन्यत इति ॥ २० ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ १।४।२१ ॥

—१३ एवं कथनं मुक्तिप्राप्तिलिङ्गमित्यत्र किं गमकमित्याहुः-अन्यथेत्यादि । औडुलोमिमतमेतत् । चिद्रूपे ब्रह्मणि जीवस्य प्रवेशो मोक्षः । ब्रह्म तु चिद्रूपं व्यापकमेवं चेदानीमपि जीवस्तत्र प्रविष्ट एव परं तत्र संघातस्यान्तरायः । यथा गृहमध्यगतभाण्डस्थं वस्तु गृहे । तद्वस्तु यदा भाण्डान्निष्कास्य स्थाप्यते तदा साक्षाद्गृहमध्यस्थं भवति । तथैव जीवोपि संघाताद्बहिर्भूय यदा साक्षाच्चित्संबद्धः स्यात्तदा मुच्येतेति संघाताद्भिन्नत्वबोधनार्थमेव जीवोपक्रमः । मैत्रेयी मोक्षेच्छुः सती विद्यां पृच्छति । तस्यै यदि मोक्षयोग्यं जीवस्वरूपं न ज्ञापयेत्तर्हि सैव कथममृता भवेदतो येनाहं नामृता स्यामिति तद्वाक्यमेवैवंकथनस्य मुक्तिलिङ्गत्वे गमकमित्यर्थः ।

—१५ दूषणं-प्रकृतित्वादापत्तिरूपं दूषणम् ।

सूत्रार्थः-संसारादुत्क्रमिष्यतो जीवस्य लिङ्गं मंत्रय्या एवममृतीभावः । अतो ज्ञानेन संसारादुत्क्रमिष्यतो जीवस्यामृतत्वमिति ज्ञापनार्थं जीवोपक्रमः । इत्यौडुलोमिर्मनुत इति ॥ २१ ॥

## अवस्थितेरिति काशकृत्स्नः ॥ १।४।२२ ॥

—१८ ब्रह्मेतीति । एवं चेदं ब्रह्मप्रकरणमेवेति भावः । अन्यथा-विशेषावस्थाभावे ।

—१९ भवतीति । उत्क्रामति शेषः । काशकृत्स्नमते जीवो ब्रह्मैव । यावत्पर्यन्तमज्ञानं तावत्पर्यन्तं संसारावस्था । एतदाशयेन मोक्षस्वरूपमाहुः-मोक्षस्त्विति ।

—२० सिद्धान्तात्-अंशत्वेन व्यवसाय इति सिद्धान्तात् ।

—२४ सिद्धमिति। मतान्तररीत्यापीदं ब्रह्मप्रकरणमेवेत्यर्थः।

सूत्रार्थः-भगवत एवावस्थितिविशेषो जीव इत्यवस्थितेर्लिङ्गं जीवोपक्रम इति काशकृत्स्नो मनुत इति ॥ २२ ॥

इति सप्तममधिकरणम्।

---

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १।४।२३ ॥

११६-१ पर्व-अधिकरणसप्तकेन।

—२ अस्याधिकरणस्यैतत्प्रयोजनं यद्ब्रह्मणः कारणत्वे सिद्धेपि शरीराख्य-शक्तिरूपां मायां विना कारणताया अनिर्वाहान्माया समवायि कारणमस्तु ब्रह्मच निमित्तकारणमास्त्विति यदुच्यतेर्धजरतीयं तन्निराकरणमित्याहुः-अर्धजरतीयेत्यादि। संशयः-समवायिकारणं प्रकृतिर्निमित्तकारणं ब्रह्मा-थवा सर्वविधकारणं ब्रह्मेति।

—६ अवैलक्षण्यादिति। क्वचित्कार्ये प्रत्येकं सत्त्वरजस्तमसां समवायेन वा दर्शनात्।

—७ अन्यदिति। निमित्तकारणमिन्यर्थः। ननु कार्येषु सत्त्वादीनामनु-वृत्तिदर्शनाद्यथा प्रकृतेः समवायित्वं तथा सत्तारूपब्रह्मगुणस्य सर्वत्रानुवृत्ति-दर्शनाद्ब्रह्मणोपि समवायित्वे किं बाधकमित्यत आहुः-अपेक्ष्यत इति। यदि समवायिनिमित्तयोर्भेदो न स्वीक्रियेत तर्हि ब्रह्मगुणानामपहतपाप्मत्वादीनां कार्येनुवृत्तिर्दृश्येतातो भेदोपेक्ष्यत इत्यर्थः।

—८ अत्रार्थे वैदिकदृष्टान्तमाहुः- कर्मण्यपीति। धर्मे-यज्ञे। यज्ञा-दिवैदिककर्माणि श्रुतिस्मृतिसमवायो यथाङ्गीक्रियते तद्वदत्रापि क्रियता-मित्याहुः-एवमित्यादि।

—९ प्रकृतिश्चेति। प्रकृतिशब्दश्च समवायिकारणे रूढः। मृत्प्रकृतिर्घट इत्यादिव्यवहारात्। किंच प्रकृष्टा कृतिर्येनेति योगादयं निमित्तकारणे-पि योगरूढः। एवंच समवायिकारणं निमित्तकारणं च ब्रह्मैवेत्यर्थः। नन्वेव-मपि निमित्तकारणं ब्रह्मेत्येतदात्मकोंशस्त्वयास्मन्मतसिद्धोङ्गीक्रियत एवेति चेन्न नैयायिकसिद्धस्यैतस्याङ्गीकारात्।

—१० अत एव सूत्रे समवायिकारणपदं परित्यज्य प्रकृतिपदं प्रयुक्त-मित्याशयेनाहुः-प्रकृतिपदप्रयोगादिति। स्मृतिसिद्धेत्यादि। नैयायिक-स्मृतिसिद्धा ये तृतीयकारणात्मकाः सर्वे समवायिनो धर्माः संयोगादयस्तेषा-मपदेशः कथनम्। न केवलं सर्वकारणं ब्रह्म। अपि तु सर्वकारकमपि तदेव।

—११ इत्याहुः- चकारादिति। यत्रेत्यादीति।

यत्र येन यतो यस्य यस्मै यद्यद्यथा यदा।
स्यादिदं भगवान् साक्षात्प्रधानपुरुषेश्वरः॥

इति पुराणोक्ताधारादिसर्वकारकसंग्रहः।

—१६ एकेन कार्यसिद्धावुभयोर्ग्रहणं कुत इत्याहुः- **उभयोरिति**। **उपचारव्यावृत्त्यर्थं**- गौणत्वानिवृत्त्यर्थम् ।

प्रतिज्ञादृष्टान्तानुपरोधात् । प्रतिज्ञापदेन प्रतिज्ञावाक्यं तथा दृष्टान्तपदेन दृष्टान्तवाक्यं ग्राह्यम् । प्रतिज्ञाशब्दार्थस्तु नियमः- संविदागूः प्रतिज्ञानमिति कोशात् । **उपक्रमोपसंहारवदिति** । दृष्टान्तोयम् ।

उपक्रमोपसंहारावभ्यासोपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥

इति वाक्यानुरोधादुपक्रमोपसंहाराभ्यामर्थसिद्धौ यथोपचारशङ्का नोद्भवति तथा प्रतिज्ञादृष्टान्तयोरैकार्थ्येनेत्यर्थः । **प्रतिज्ञामात्रत्व इति** । केवलं प्रतिज्ञामात्रस्य हेतुत्वे सतीत्यर्थः । एवंच प्रतिज्ञामात्रमिति हेतुश्चेत्स्वीक्रियते तदा अदृष्टा या योगजप्रत्यासत्तिस्तद्द्वाराप्येकविज्ञानेन सर्वविज्ञानं भवेत् । यथा-विश्वं पश्यति दूरतः । इति ।

अनागतमतीतं च वर्तमानमतीन्द्रियम् ।
विप्रकृष्टं व्यवहितं सम्यक्पश्यन्ति योगिनः ॥

इति । ततश्च तेन वाक्येन ब्रह्मणः समवायित्वासिद्धिर्न स्यात् ।

—१७ **दृष्टान्तमात्रत्व इति** । यदि दृष्टान्तमात्रं हेतूक्रियते तदा सर्वं वाच्यं ज्ञेयत्वात्तदेकदेशवत् । घटो वाच्यो ज्ञेयत्वात्पटवदित्यादिवत् सर्वं मज्ज्ञेयत्वादित्यप्यनुमानं संभवतीत्यनुमानविधयापि स्यात् ।

—१८ **सर्वसमानधर्मवदिति** । सर्वसमानः सर्वत्र वर्तमानो यो धर्मो ज्ञेयत्वादिरूपस्तद्युक्तं ब्रह्म स्यान्नतु समवायिकारणमित्यर्थः । **उभयोः**-प्रतिज्ञादृष्टान्तयोः । **प्रतिज्ञायाः**-एकविज्ञानेन सर्वविज्ञानं भवतीति प्रतिज्ञायाः ।

—१९ **दृष्टमेव**-कार्यैकदेशप्रत्यक्षमेव । **द्वारं**- समवायिकारणत्वगमकम् । **समवायित्वसिद्धिरिति** । यथैकस्मिन्मृत्पिण्डे मृद्विकारत्वनिश्चयोत्तरं सर्वस्मिंस्तत्सजातीये तथा ज्ञानान्मृत्तिकायां सत्समवायित्वज्ञानमेकदेशप्रत्यक्षादेव नत्वनुमानात्तथा प्रकृतेप्येकत्र सन्मयत्वे निश्चिते सर्वेषु तत्सजातीयेषु सद्विकारत्वज्ञानात्सति सर्वसमवायित्वज्ञानं तादृशप्रत्यक्षादेव भवतीति सद्रूपे भगवति समवायित्वसिद्धिरित्यर्थः । दृष्टान्ते पिण्डनखनिकृन्तनादिग्रहणस्य प्रयोजनमाहुः- **कार्यकारणयोरिति** । **भेदाभेदमतनिराकरणायेति** । कार्यकारणयोरत्यन्तमभेदे व्यवहारसंकरप्रसंगः । अत्यन्तभेदे चैकविज्ञानेन सर्वविज्ञानमित्याद्युपनिषद्बाधप्रसंगः । अतो भेदाभेदमतमास्थेयम् । अयं भेदाभेदो जगत्यप्यनुभूयते । यतस्तन्तव एवातानवितानवन्तो लोके पटत्वेन व्यवह्रियन्ते । पटत्वजातिं बिभ्रति च । एवंच प्रतिज्ञादृष्टान्तयोरुभ-

योरप्युपपत्तिरिति मतं निराकर्तुं पिण्डादित्रयं गृहीतम् ।

—२० तदाहुः- पिण्डमणीत्यादि । यदि हि भेदाभेदमतमास्थीयेत तर्हि येन रूपेण भेदस्तद्रूपं कारणज्ञानेन ज्ञातं न भवेत् । ततो भिन्नत्वात् । अथ तद्रूपमपि ज्ञायत इत्यङ्गीक्रियते चेत्तद्रूपं भिन्नं नेत्यभेद एवास्थेयः । सर्वथाभेदे सांकर्यप्रसंग इत्यपि वक्तुं न शक्यते । अवस्थाभेदेन सांकर्यनिवृत्तेः । अतः कयाचिदवस्थयावस्थितं कारणमेव कार्यं नतु ततो भिन्नाभिन्नमिति बोधनायावस्थारूपाणां पिण्डमणिनखनिकृन्तनानां ग्रहणम् ।

—२१ तथा सति-कारणमेवावस्थाविशेषेण कार्यं भवतीति ज्ञाते सति ।

—२२ नैयायिकादृतसामान्यलक्षणाप्रत्यासत्त्यनादरे बीजमाहुः- वाचारम्भणमिति । चावधारणे । यद्यत्र सामान्यलक्षणा विवक्षिता स्यात्तदा तत्सामान्यादिति वदेन्नतु वाचारम्भणमित्यादि । वाचारम्भणमित्यादेरर्थः । यो मृदः पृथुबुध्नोदरादिरूपो विकारः स वाचारम्भणं वाचिकक्रियात्मको नतु मृद्रूपात्कारणाद्व्यक्तिभेदापादकः । यथा सुप्त उत्थित उपविष्टे च पुरुषेऽवयवविन्यासो न पुरुषान्तरत्वापादकः । अतो विकारो नामधेयं नैमित्तिकक्रियायाः पदार्थस्वरूपभेदानापादकत्वान्नामैव । एवं चात्र कारणावस्थास्वरूपेणैवैकरूप्यस्य विवक्षितत्वाद्व्यक्तिभेदानादर एव सामान्यलक्षणानादरे हेतुः । यथा विपुलसुवर्णाकाङ्क्षायां कटककुण्डलादिव्यक्त्यनादरस्तथेत्यर्थः । तदुक्तं श्रीमद्भागवत एकादशस्कन्धे भगवतापि ।

यथा सुवर्णं सुकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य ।
तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् ॥
न यस्मात्परस्तादुत यन्न पश्चान्मध्येऽपि तन्न व्यपदेशमात्रम् ।
भूतं प्रसिद्धं च परेण यद्यत्तदेव तत्स्यादिति मे मनीषा ॥

इति ।

—२४ ननु विकारस्य वाङ्मात्रत्वे स्वीकृते ब्रह्मणो विवर्तोपादानत्वमपि स्वीकृतं भवेत्ततश्च प्रपञ्चस्य वाङ्मात्रत्वेनालीकत्वं स्यादत आहुः-अलीकत्वनिराकरणायेति ।

—२५ नान्यथेति । न प्रतिनियतेन घटादिरूपेणेत्यर्थः । ननु यदि ब्रह्मत्वेन जगतः सत्यत्वं तर्हि तेन रूपेण सामान्यलक्षणैव कुतो नाद्रियत इति चेत्तत्राहुः-सामान्यलक्षणेत्यादि । निराकरणमिति । श्रुतावग्न्यादिविद्युदन्तेषु तेज इत्येव सत्यमित्यकथनात् त्रीणि रूपाणीत्येव सत्यमिति कथनात्सर्वं तत्तद्रूपमेकमेव ब्रह्मेति व्यक्तिभेद एव नास्तीति ब्रह्मत्वसामान्यप्रत्यासत्तिर्नास्तीति भावः । निराकरणं चेत्यत्र चकारेण नैयायिकानां मते-

लौकिकप्रत्यक्षे सामान्यलक्षणा प्रत्यासत्तिः। मीमांसकानां मते तु तस्या अनादर एवेति ध्वनितम्।

११७--१ ब्रह्मरूपेणेति। एवंच यावत्पर्यन्तं जगद्भावस्तावत्पर्यन्तमेवासत्यत्वभ्रमः। ब्रह्मभावे तु सत्यत्वमेवेति भावः।

—२ नन्वेवं देहादेर्जगदन्तःपातित्वादात्मरूपेण सत्यतायां देहात्मबुद्धेर्दोषत्वं न स्यादत आहुः-देहात्मबुद्धिरिति। विकारबुद्धाविति। यावदात्मस्वरूपज्ञानाभावस्तावद्बहुजन्माभ्यस्तविकारबुद्धिरनुवर्तत एव तस्यां सत्यात्माभिन्नत्वेन देहावगाहित्वं नास्ति प्रत्युत देहाभिन्नत्वेनात्मावगाहित्वमिति दोषोऽस्त्येवेत्यर्थः। एवं व्यवस्थां संपाद्य देहात्मबुद्धेर्दोषत्वे किं मानमित्यत आहुः-श्रुतिसामर्थ्यमिति। दृष्टान्ते कार्यत्वतिरस्कारेण कारणात्मकत्वमुपदिष्टम्। न तु तत्पुरस्कारेण। किंच कारणात्मना कार्यज्ञानं बोधितं न तु कार्यात्मना कारणज्ञानमत एतत्सामर्थ्यमेव पूर्वोक्तव्यवस्थायां प्रमाणमित्यर्थः।

सूत्रार्थः-ब्रह्मैव समवायि कारणं निमित्तकारणं च। येनाश्रुतं श्रुतमित्यादिप्रतिज्ञाया यथैकेन मृत्पिण्डेनेति दृष्टान्तस्य चानुपरोधादिति॥२३॥

## अभिध्योपदेशाच्च ॥ १।४।२४ ॥

—५ लिङ्गान्तरमाहेति। दृष्टान्तश्रुतौ मृत्तिकेत्येव सत्यमिति कारणे सत्यपदकथनं तत्सामर्थ्यात्कार्ये मिथ्यात्वमप्यायातीति शङ्कायां प्रपञ्चे विवर्तत्वस्य ब्रह्मणि विवर्तोपादानत्वस्य च निरासाय लिङ्गान्तरमाहेत्यर्थः। एवं विलक्षणप्रपञ्चं रचयिष्यामीत्यभितो ध्यानं आलोचनं विचार इति यावत्।

—८ सुवर्णप्रकृतिकत्व एवेति। संभवतीति शेषः। अंशकार्ययोः सुवर्णप्रकृतिकत्व इत्यर्थः। एवंच सुवर्णवत्समवायिकारणत्वं ब्रह्मणि संभवतीत्यर्थः। ननु योगिकायव्यूहवदत्रापि बहुभवनं स्यात्तन्नेत्याहुः-अध्यासाभावादिति।

—९ गौणत्वापत्तेरिति। मायया सृष्टिकर्तृत्वरूपं गौणत्वं च स्यादित्यर्थः। संभवतीति। मायासहकारित्वादिति भावः।

—१३ ननु मायाया अभावेपि भगवता योगबलेनेदं सर्वं क्रियते इति स्वीकारेण भगवतः समवायिकारणत्वव्याघात इत्याशङ्क्य सूत्रस्य व्याख्यानान्तरमाहुः-अथवेति। सर्वं खल्विदमिति श्रुतिवाक्ये सर्वस्य ब्रह्मत्वे तज्जलानित्यनेनोत्पत्तिस्थितिलयाधारत्वं हेतुत्वेनोक्त्वा तथाभिध्यानमुपदिश्यते। यदि श्रुतेः समवायित्वमभिप्रेतं न स्यात्तर्हि हेतुं न वदेदतः समवायित्वं ब्रह्मण इत्यर्थः।

**सूत्रार्थः**—सोऽकामयत बहु स्यामित्यभिध्यानस्योपदेशाद्ब्रह्मैव जगतः समवायिकारणमिति ॥ २४ ॥

## साक्षाच्चोभयाम्नानात् ॥ १।४।२५ ॥

--१८ **श्रुतिमेव प्रमाणमाहेति।**

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।

—इति स्मृत्यवष्टम्भेन कश्चिद्वादी चोदयेत्तदर्थं श्रुतिमाहेत्यर्थः।

—२२ **स्मृतिमाहुः**-अहमिति। भगवद्गीतास्थमिदं वाक्यम्।

**सूत्रार्थः**-सर्वाणि हवा इमानीति श्रुत्या चकारादहं सर्वस्य जगत इति स्मृत्या च साक्षादेव ब्रह्मणः सकाशात्सृष्टिस्तस्या ब्रह्मण्येव प्रलयस्य च कथनाद्ब्रह्मैव जगतः समवायिकारणमिति ॥ २५ ॥

## आत्मकृतेः परिणामात् ॥ १।४।२६ ॥

११८--१ **कर्तृत्वप्रतीतेरिति।** कुलालकुविन्दादिवन्निमित्तकारणप्रतीतेरित्यर्थः।

--२ **तदात्मानमिति।** तैत्तिरीयोपनिषदीयं श्रुतिः।

--३ **अलौकिकत्वमिति।** लौकिकानां सुवर्णादीनां कुण्डलादिसमवायित्वेऽपि कुण्डलादिकर्तृत्वं नास्तीत्यलौकिकत्वम्। ननु स्वमते परिणामवादो नास्ति तेन सूत्रे परिणामादिति कथने स्वमतं सूत्रविरुद्धं स्यादित्यत आहुः-**तथापीति।** यद्यपि नास्ति परिणामोऽस्मन्मते तथापि सर्वं ब्रह्मेति ज्ञानार्थमविकृतपरिणामं व्यास आहेत्यर्थः।

—५ अविकृतपरिणामे दृष्टान्तमाहुः-**सुवर्णमित्यादि।** **तैजसानीति।** लोहकार्ष्णायसादीनि श्रुत्युक्तानीत्यर्थः। ननु बहुभवनं तेजःप्रभृतिषूक्तं तेन विकारित्वं तत्रागमिष्यति। एवं कथमविकृतपरिणामे दृष्टान्तत्वं तेजःप्रभृतीनामत आहुः-**वृद्धेश्चालौकिकत्वादिति।** तेषां वृद्धिरर्थाद्बहुभवनं न लौकिकं सर्वतः पूर्वभावित्वेन श्रुत्येकज्ञेयत्वात्। **पूर्वं बहु स्यामिति।** ततः तत्तेजोऽसृजत। ततः जीवानुप्रवेश इति यच्छ्रुतावुक्तं तद्ब्रह्मणः कारणत्व एव घटत इत्यर्थः। एवंचालौकिकबुद्धौ विकारो नास्तीति भावः।

—६ **कार्यश्रुतीति।** बहु स्यामिति कार्यश्रुत्यनुरोधाद्ब्रह्मण्यवस्थान्यथाभावोऽङ्गीक्रियते परं सोऽपि संख्यान्यथाभाव एव पूर्वमेकं ब्रह्मासीत्ततः सृष्टौ बहुसंख्याकं यथा पूर्वमेकत्वसंख्याविशिष्टं सुवर्णमलङ्कारदशायां बहुत्वमापन्नमित्येव नतु दध्यादिवद्रूपान्यथाभावरूपा विकृतिराद्रियते ब्रह्मणि। अयमेव सूत्रकाराशय इत्यत्र किं गमकमित्यत आहुः-**वक्ष्यतीति।** श्रुतेस्तु शब्दमूलत्वादित्यस्यायमर्थः। श्रुतौ ब्रह्मणो जगत्कारणत्वं निरवयवत्वं

चोभयमपि श्रूयते। श्रुतिसिद्धं युक्त्या न बाधनीयम्। ब्रह्मणः शब्देनैव केवलेन ज्ञेयत्वात्। सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाच्च। श्रीमद्भागवतेपि वेदस्तुतौ।

नहि विकृतिं त्यजन्ति कनकस्य तदात्मतया।

इत्यादौ।

**सूत्रार्थः**-तदात्मानꣳस्वयमिति श्रुत्यात्मन एव करणाद्ब्रह्मैव जगत्कारणम्। ब्रह्मण एव सुवर्णादिवदविकृतमेव कार्यरूपेण परिणामादिति॥ २६॥

## योनिश्च हि गीयते॥ १।४।२७॥

—११ परिहरतीति। चैतन्यं शरीराश्रितं शरीरं च योनिसमुद्भूतं योनिश्च प्रकृतिरिति मूर्खशङ्कां परिहरतीत्यर्थः।

**सूत्रार्थः**-जगतो योनिर्ब्रह्मैव। तथैव गीयते कर्तारमीशमित्यादिश्रुतिषु मम योनिरित्यादिस्मृतिषु चेति॥ २७॥

## एतेन सर्वे व्याख्याता व्याख्याताः॥ १।४।२८॥

११९-६ वक्ष्यत इति। एतावता ग्रन्थेन सामान्यतो निराकरणं कृतं विशेषतोवैदिकमतानि निराकर्तुमग्रिमाध्याय इति सामान्यविशेषरूपा संगतिर्बोधितेति।

**सूत्रार्थः**-ब्रह्मवादस्थापनेन सांख्यवादनिराकरणेन च सर्वे पातञ्जलादिवादा व्याख्याताः। ते नादर्तव्या इति शम्॥ २८॥

इत्यष्टममधिकरणम्।

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालबोधिन्यां प्रथमाध्यायस्य चतुर्थः पादः ४।१

पादोध्यायश्च समाप्तः॥ १॥



# ॥ अथ द्वितीयोध्यायः ॥

## स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात् ॥ २।१।१ ॥

अथ द्वितीयाध्यायं व्याचिख्यासवः श्रीवल्लभाचार्याः प्रथमाध्यायप्रतिपादितमर्थमुक्त्वाध्यायसंगतिं बोधयन्ति–**प्रथमाध्याय इति** ।

१२०—६ **अधुना**–समन्वयानन्तरम् । **श्रुतिस्मृत्यविरोध इति** । श्रुतीनां परस्परमाविरोधः स्मृतीनां च श्रुतिभिः सहाविरोध इत्यर्थः ।

—७ ननु श्रुतिविप्रतिषेधे निराकरणीये स्मृतिविरोधविचारः किमिति प्रस्तूयते तत्राहुः–**भ्रान्तिमूलतयेत्यादि** । श्रुतिविरुद्धस्मृतीनामिति शेषः । तासां भ्रान्तिमूलतया तदुक्तानां **सर्वसमयानां** युक्तिनियमानाम् । **अयुक्तितः**– अयुक्ततायां सत्याम् ।

—८ **तद्विरोधात्**–तादृशभ्रान्तिमूलकस्मृतिविरोधात् । **वैदिकं वचनं**–श्रुतिवाक्यम् । **शङ्क्यतां न व्रजेत्** । न शङ्कनीयामित्यर्थः । एतत्प्रथमसूत्रत्रयेण सिध्यति । **तु** पुनः ।

—९ **श्रुतिविप्रतिषेधः**–श्रुतौ विरोधः स परिहरणीयः । तदभावे विवक्षितार्थज्ञानं न स्यात् । एवंच श्रुतीनां बलिष्ठत्वात्ताभिः सह स्मृतीनां विरोधे प्राप्ते कासांचित्स्मृतीनां संकोचेन कासांचिद् दूषणेन लौकिकयुक्तीनां च तथैव दूषणेन विरोधपरिहारः । नतु तद्विरोधेन श्रुतिसंकोच इत्यर्थः । एतदेव मनासिकृत्य पादार्थं विभागपूर्वकं कथयन्ति–**प्रथमचतुर्थेत्यादि** । **सर्वथानुपयोग इति** । सांख्यमतस्येत्यर्थः ।

—१० **स्मृतिप्रतिपादित इति**। स्मृतेश्चेत्यादिसूत्रेषु प्रामाण्याङ्गीकाराऽस्मृतित्ववचनेन च प्रामाण्ये स्मृतित्वेन प्रकृतिकारणत्वांशेपि प्रामाण्यप्रत्यवस्थाने सतीत्यर्थः । **अप्रामाण्यं**–सर्ववेष्टनस्मृतिवदप्रामाण्यम् ।

—१२ अत्र हेतुमाहुः–**तुल्यबलानामिति** । **तुल्यबलानां**–सांख्ययोगादिस्मृतीनाम् । **परस्परविरोधे**–सांख्य ईश्वरस्य निराकरणम् । योगे तदङ्गीकार इति विरोधः । **प्रकारान्तरेति** । एकतरप्रामाण्यस्य वक्तुमशक्यत्वादेकतरप्रकारस्य सेश्वरानिरीश्वरान्यतरस्य न स्थितिर्निर्णय इत्यर्थः ।

—१३ एवं प्रथमपादार्थमुक्त्वा द्वितीयपादार्थमाहुः– **ततो द्वितीय इति** । **वेदबोधकत्वाभाव इति** । सर्ववेष्टनस्मृतिवदप्रामाण्यात् ।

—२० तृतीयचतुर्थपादयोरर्थमाहुः–**ततः सम्यगिति** ॥

सूत्रार्थः। नन्वेवं कपिलस्मृत्यनवकाशदोषः प्रसज्येतेति चेन्न। यतस्तथानवकाशदोषभिया कपिलस्मृतेः प्रामाण्यमङ्गीक्रियते चेदन्यासां कणादादिस्मृतीनामनवकाशदोषप्रसंगः स्यादिति ॥१॥

इति प्रथममधिकरणम्।

---

## इतरेषां चानुपलब्धेः ॥ २।१।२ ॥

सूत्रार्थः—इतरेषां प्रकृतिव्यतिरिक्तानां महदादीनां लोके वेदे चानुपलभ्यमानत्वात्तदंशेऽपि कपिलस्मृतेरप्रामाण्यम् इति ॥ २ ॥

इति द्वितीयमधिकरणम्।

---

## एतेन योगः प्रत्युक्तः ॥ २।१।३ ॥

१२१-७ पृथक्तया योगनिराकरणे प्रयोजनमाहुः— वैदिकत्वशङ्कयेति।

सूत्रार्थः— सांख्यस्मृतिनिराकरणेन पातञ्जलदर्शनस्यापि निराकरणं ज्ञेयमिति ॥ ३ ॥

इति तृतीयमधिकरणम्।

---

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥२।१।४॥

—१० बाधकः-समन्वयबाधकः।

—१२ ननु प्रत्यक्षतया वैलक्षण्यस्य सिद्धत्वात्किमिति शब्देन तत्साधनमत आहुः— प्रत्यक्षस्येति। मन्यमानस्य-सांख्यैकदेशिनः।

सूत्रार्थः-ब्रह्म जगत उपादानं न। ब्रह्मापेक्षया तत्र वैलक्षण्यात्। तच्च वैलक्षण्यं श्रुतेरेव ज्ञायते। इति ॥ ४ ॥

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ २।१।५ ॥

सूत्रार्थः। मृदब्रवीदित्यादिष्वभिमानिदेवतानां चेतनत्वेन कथनम्। तत्रैव विज्ञातं चाविज्ञातं चेति चेतनाचेतनविशेषकथनादग्निर्वाग्भूत्वेत्यादिष्वग्न्यादिचेतनदेवतानामचेतनानुगतिनिरूपणाच्च। एवंच जगतश्चेतनत्वं नास्तीति ॥ ५ ॥

## दृश्यते तु ॥ २।१।६ ॥

१२२-३ वैरूप्यं- वैलक्षण्यम्। तदंशस्य- अचेतनांशस्य।

—४ तुल्यांशसंपत्तिश्चेत्- तुल्यांशसंपत्तिर्विवक्षिता चेत्।

सूत्रार्थः—लोके केशगोमयवृश्चिकादौ कार्यकारणयोर्वैरूप्यं दृश्यते। तथाहि चेतनाद्देहादचेतनस्य केशस्योत्पत्तिरचेतनाद्गोमयाद्वृश्चिकादीनामुत्पत्तिरिति ॥ ६ ॥

इति चतुर्थमधिकरणम्।

असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ २।१।७ ॥

—८ एवं स्वमतेन व्याख्याय परमतसंग्रहार्थं व्याख्यान्ति- कार्यस्य वेति- वाशब्दोनादरद्योतकः।

सूत्रार्थः-ननु श्रुतौ - असदेवेदमित्यादिना जगत्कारणत्वेनासदेवोक्तमिति चेन्न कथमसतः सज्जायेतेति ततः परं वचनात्। असदेवेत्यादिवाक्यस्य प्रतिषेधार्थमात्रपरत्वादिति ॥ ७ ॥

अपीतौ तद्वत्प्रसंगादसमञ्जसम् ॥ २।१।८ ॥

—११ असमञ्जसमिति। सर्वज्ञत्वशुद्धत्वादिविघटकतयायुक्तमित्यर्थः।

सूत्रार्थः-ननु कार्यस्य कारणमध्ये लये स्थौल्यसावयवत्वादिभिः कार्यधर्मैः कारणस्यापि स्थौल्यादिधर्मयुक्तत्वं प्रसज्ज्येतातो ब्रह्मकारणवचनमसंगतमिति ॥ ८ ॥

न तु दृष्टान्तभावात् ॥ २।१।९ ॥

—१५ नतुवचनं- नत्विति पदद्वयकथनम्।

—१७ परं- प्रत्युत।

सूत्रार्थः— ब्रह्मकारणवचने न किमप्यसमञ्जसम्। कार्यस्य कारणे लये तद्धर्माणां संबन्धो न भवतीत्यर्थे दृष्टान्तसत्त्वात्। तथाहि शरावरुचकादीनां मृत्तिकादिषु तद्धर्मवत्त्वादर्शनात् ॥ ९ ॥

स्वपक्षदोषाच्च ॥ २।१।१० ॥

—२० कार्यतेति। एवंच वैलक्षण्यम्। तद्धर्मसंबन्धः-कार्यधर्मसंबन्धः।

—२२पुनर्बन्धप्रसंग इति। एवंच मत्पक्षे समुद्भाविताः सर्वे दोषास्तदीयपक्षेपि वर्तन्ते। ततश्च-

ययोरेव समो दोषः परिहारस्तयोः समः।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे ॥

इत्यादिन्यायेन पर्यनुयोगाभावः।

सूत्रार्थः—पूर्वोक्तानां कार्यकारणवैलक्षण्यादिदोषाणां प्रतिवादिपक्षे सर्वेनामञ्जसं तन्मतामिति ॥ १० ॥

तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसंगः ॥ २।१।११ ॥

१२३—३ शुष्कतर्केण-कार्यवैलक्षण्यादिप्रदर्शकेन । वेदप्रमाणराहित्यमेव तर्कस्य शुष्कत्वम् ।

—५ द्वैरूप्यासंभवादिति । केवलयुक्त्या श्रुतिविधुरया द्वैरूप्यासंभवादित्यर्थः ।

--१२ सावद्यः-निन्द्यः । निरवद्यः -अनिन्द्यः । परिहरन्ति-एवमिति ।

सूत्रार्थः--वेदार्थे केवलतर्को न सुप्रतिष्ठितः । ननु तादृशदोषानिर्हरणार्थं वयमन्यथानुमास्यामह इति चेन्न । एवमपि प्रकृतिकारणवादतर्कस्य दोषाविमोक्षात् । नियामकप्रमाणाभावादृषीणां परस्परं वैमत्याच्चेति ॥ ११ ॥

इति पञ्चममधिकरणम् ।

---

एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ २।१।१२ ॥

—१७ केषांचित्-मन्वादीनाम् ।

सूत्रार्थः--एतेन सांख्यनिराकरणप्रकारेण सर्वथा शिष्टैरनङ्गीकृता अणुमायाकारणवादा निरस्ता वेदितव्या इति ॥ १२ ॥

इति षष्ठमधिकरणम् ।

---

भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ २।१।१३ ॥

—२३ भोक्त्रापत्तिरिति । भावप्रधाननिर्देशोयम् । भोक्तृत्वापत्तिरित्यर्थः ।

सूत्रार्थः- ननु ब्रह्मकारणता स्वीक्रियते चेद्भोक्तृभोग्याविभागो न स्यादिति चेन्न लोकवदुपपत्तेः । तथाहि यथा लोके कटककुण्डलादीनां सुवर्णकार्यत्वात्सुवर्णेनाभेदेपि परस्परं भेद एव । कार्याणां कारणात्मत्वेपि परस्परात्मकत्वाभावादिति ॥ १३ ॥

इति सप्तममधिकरणम् ।

---

तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ २।१।१४ ॥

१२४-९ तथा च सतीति-खपुष्पवत्कार्यस्य वाङ्मात्रत्वेनावस्तुत्वे सति ।

—१२ ये पुनरिति । मायावादिनः । तेषां विपरीतज्ञाने कारणमाहुः-तामसबुद्धय इति । सूत्रश्रुतिनाशनेनेति । भिन्नासंगतार्थकरणमेव नाशनम् ।

—१३ तिलापः कृता इति । मृतस्यौर्ध्वदेहिककर्मण्युपयुक्तास्तिलापो यथा स्पर्शानर्हास्तथा ब्रह्मवादाः स्पर्शानर्हाः कृताः । आरम्भ इति । रामानुजाचार्या-

दिभिर्भेदनिराकरणार्थं सूत्रमिदं योजितं तन्मते प्रसंगान्मायावादनिराकरण-मस्माभिस्तु प्रत्यक्षं मायावादनिराकरणं क्रियत इति भावः।

—१५ निराकृतमिति–किंचित्परिकल्पनं निराकृतमित्यर्थः।

१७ त्रयविरोधभयपरित्यागेनेति। तत्तस्मात्त्रयाणां श्रुत्युपक्रमप्रकर-णानां यो बाधरूपो विरोधस्तज्जन्यभयत्यागेनेत्यर्थः। अन्यथा वदन्निति। मिथ्यात्वानुरोधेन सूत्रार्थः कर्तुं शक्यत इति वदन्नतिधृष्टो महासाहसिक इत्यर्थः।

—१८ विस्तरेणेति। श्रुतिसूत्रविरोधप्रदर्शनाधिकप्रयासेनेत्यर्थः।

सूत्रार्थः–वाचारम्भणं विकार इत्यारम्भणशब्दादिभ्यः कार्यस्य कारणा-भेद उच्यते न तु कार्यस्य मिथ्यात्वमिति ॥ १४ ॥

भावे चोपलब्धे ॥ २।१।१५ ॥

—२२ उपलभ्येतेति। एवं युक्तिद्वयबाधितो वाङ्मात्रत्ववादः न। ज्ञातमिति। एवमर्थकतया न ज्ञातमित्यर्थः।

—२३ पाठान्तरकल्पनमिति। तेन हि भावाच्चोपलब्धेरिति पाठः कल्पितः।

सूत्रार्थः–विद्यमान एव घटे घटोपलब्धिर्नान्यथा। यदि वाङ्मात्रारब्ध एव घटः स्यात्तर्हि घटाभावस्थले घटोऽस्तीति मिथ्यावादेन घट उपलभ्येतेति ॥ १५ ॥

सत्त्वाच्चावरस्य ॥ २।१।१६ ॥

सूत्रार्थः– प्रपञ्चस्य सत्त्वाद्यदिदं किं च तत्सत्यमित्यादिश्रुतिभिस्त्रै-कालिकस्थितेश्च तस्य ब्रह्मत्वं न तु मिथ्यात्वमिति ॥ १६ ॥

इत्यष्टममधिकरणम्।

---

असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ २।१।१७ ॥

१२५-९ अव्याकृतत्वेन–नामरूपाभ्यामव्याकृतत्वेन।

सूत्रार्थः–असद्वा इदमित्यादिश्रुत्या पूर्वं कार्यस्यासत्त्वमुच्यत इति चेन्न। अव्याकृतत्वरूपधर्मान्तरेण तथा व्यपदेशात् तदात्मान* स्वयमकुरुतेति वाक्यशेषस्तादृशव्यपदेशे प्रमाणमिति ॥ १७ ॥

युक्तेः शब्दान्तराच्च ॥ २।१।१८ ॥

—१५ शब्दान्तरमिति। अन्यः शब्दः।

सूत्रार्थः–समवेतमेव कार्यं सदुत्पद्यत इति युक्तम्। समवायसंबन्धस्य द्विनिष्ठत्वेन नित्यत्वेन च कार्यस्यापि कारणे स्थितिरव्यक्तरूपेण सदा

स्वीकार्या। ततः सच्छब्दाद्भिन्नस्तदात्मानं स्वयमकुरुतेत्यात्मशब्दस्तत्कथनाच्च घटादिकार्यस्य सत्यत्वमेव युक्तं न मिथ्यात्वमिति ॥ १८ ॥

पटवच्च ॥ २।१।१९ ॥

सूत्रार्थः-यथा संवेष्टितः पटो न स्पष्टं गृह्यते विस्तृतस्तु गृह्यते तद्वदाविर्भावतिरोभावाभ्यां जगतो ग्रहणाग्रहणे इति ॥ १९ ॥

यथा च प्राणादिः ॥ २।१।२० ॥

सूत्रार्थः-प्राणापानादीनां नियमने केवलं जीवनं संपद्यते । अनियमने त्वाकुञ्चनादि संपद्यते। एवं क्रियाभेदेपि प्राणाभावो वक्तुं न शक्यते तद्वज्जगतोपि पूर्वमसत्त्वं वक्तुं न शक्यत इति ॥ २० ॥

इति नवममधिकरणम्।

---

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २।१।२१ ॥

सूत्रार्थः-अनेन जीवेनात्मनानुप्रविश्येत्यादिश्रुतिभिरितरस्य जीवस्यापि ब्रह्मत्वेन व्यपदेशाद्ब्रह्मणो जगत्कारणत्वे तस्य जीवस्य हिताकरणादयो दोषाः प्रसज्यन्ते। जीवहिताकरणं तु तद्दुःखदर्शनाज्ज्ञायत इति ॥ २१ ॥

अधिकं तु भेदनिर्देशात् ॥ २।१।२२ ॥

१२६-११ एकं-हिताहितयोरेकम्।

सूत्रार्थः-ब्रह्म जीवाज्जडाच्चाधिकं, आत्मा वारे द्रष्टव्य इत्यादिश्रुत्या कर्मकर्तृभावेन भेदेन निर्देशात्। एवं चाधिकस्य नियमेनांशहिताकरणदर्शनादंशभूतजीवानां दुःखदर्शनेपि ब्रह्मणो जगत्कारणत्वे न दोष इति ॥२२॥

अश्मादिवच्च तदनुपपत्तिः ॥ २।१।२३ ॥

—१६ तदननुरोधः-कार्याधीनत्वाभावः।

सूत्रार्थः-यथा पार्थिवत्वाविशेषेपि हीरमाणिक्यपाषाणेषु पलाशचम्पकचन्दनेषु चोच्चनीचत्वं दृश्यते तथा जीवमात्राणां ब्रह्मांशत्वेपि ब्रह्मादिस्तम्बपर्यन्तानामुच्चनीचत्वं कार्यवैलक्षण्यं च संगच्छत इति ॥ २३ ॥

इति दशममधिकरणम्।

---

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २।१।२४ ॥

सूत्रार्थः-ननु लोके घटादिकार्यकरणसमये कुलालादीनां दण्डादिसाधनसंग्रहदर्शनात्केवलं साधनरहितं ब्रह्म न जगत्कारणमिति चेन्न। यथा दुग्धं साधनान्तरानिरपेक्षमेव दधि भवति तथा साधनान्तरनिरपेक्षाद्ब्रह्मणो जगदुत्पत्तेरिति ॥ २४ ॥

## देवादिवदपि लोके ॥ २।१।२५ ॥

**सूत्रार्थः**-यथा देवर्षिपितरो योगसामर्थ्येन बाह्यसाधननिरपेक्षा एव सर्वं कुर्वन्ति तथा ब्रह्मापीति ॥ २५ ॥

## कृत्स्नप्रसक्तिर्निरवयत्वशब्दकोपो वा ॥ २।१।२६ ॥

**सूत्रार्थः**-ननु यदि ब्रह्म साधनान्तरानिरपेक्षतया स्वात्मानं जगत्कुर्यात्तर्हि सर्वं ब्रह्मैकमेव कार्यं स्यात्। यद्यंशभेदेन जगद्भिन्नकार्ययुतं भवतीति कल्प्येत तर्हि निष्कलमित्यादिश्रुतिबोधितं तन्निरवयवत्वं विरुध्येतेति ॥२६॥

## श्रुतेस्तु शब्दमूलत्वात् ॥ २।१।२७ ॥

**१२७-१४ वादानवसरे**-वादस्यानवसरो यस्मिन्निति ब्रह्मणीत्यस्य विशेषणम्। मायावादिमतं दूषयितुमुपहसन्ति-**एवं परिहृतेपीति**।

**सूत्रार्थः**-श्रुतौ ब्रह्मणो जगत्कारणत्वं निरवयवत्वं चेत्युभयमपि श्रूयते। श्रुतिसिद्धं युक्त्या न बाधनीयम्। शब्देनैव केवलेन ब्रह्मणो ज्ञेयत्वात्। सर्वभवनसमर्थे ब्रह्माणि विरोधाभावाच्चेति ॥ २७ ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २।१।२८ ॥

**—१९ सृष्टत्वाच्चेति**। आत्मन्येवात्मनात्मानं सृजे हन्म्यनुपालये।
इति श्रीमद्भागवतदशमस्कन्धवाक्यादात्मानि स्रष्टृत्वं स्फुटम्।
**—२० विशेषाभावेन**-साम्येन।

**सूत्रार्थः**- ब्रह्मणो जगत्सृष्टौ देशकालापेक्षापि नास्ति यत आत्मन्येव सर्वं सृजति यतोस्य विचित्राः शक्तयः श्रूयन्त इति ॥ २८ ॥

## स्वपक्षदोषाच्च ॥ २।१।२९ ॥

**सूत्रार्थः**-प्रधानवादिना स्वपक्षदोषाः परिहर्तुमशक्याः। युक्तिविरोधात्। प्रमाणाभावेन तस्याचिन्त्यत्वकल्पनानुपपत्तेश्चेति ॥ २९ ॥

इत्येकादशमधिकरणम्।

---

## सर्वोपेता च तद्दर्शनात् ॥ २।१।३० ॥

**१२८-३ उपेतेति**। इणधातोस्तृजन्तः प्रयोगः।

**सूत्रार्थः**-सर्वशक्तिभिः सत्यत्वादिगुणैश्च युक्तः परो देवो ब्रह्मैव। यः सर्वज्ञः सर्वशक्तिरित्यादिश्रुतिषु तथा दर्शनादिति ॥ ३० ॥

विकरणत्वान्नेति चेत्तदुक्तम् ॥ २।१।३१ ॥

सूत्रार्थः-लोके सेन्द्रियस्य कर्तृत्वदर्शनाद्ब्रह्मणो निरिन्द्रियत्वात्कर्तृत्वं न संभवतीति चेन्न । श्रुतेस्तु शब्दमूलत्वादित्यनेनैतस्य समाहितत्वात् । अनवगाह्यमाहात्म्ये ब्रह्मणि श्रुतिरेव प्रमाणं न तर्क इति ॥ ३१ ॥

न प्रयोजनवत्त्वात् ॥ २।१।३२ ॥

—१४ व्यधिकरणो हेतुरिति पक्षेऽङ्गीकृते पूर्वसूत्रादेव नञोऽनुवृत्तिसंभवेनात्रत्यो नञ् व्यर्थ इत्यरुचेः पक्षान्तरमाहुः-नसमासो वेति । नेष्टं नैकधेत्यादिवन्नशब्देन सह सुप्सुपेति समासः ।

सूत्रार्थः-लोके कुलालादीनां सप्रयोजना प्रवृत्तिर्दृश्यते ब्रह्मण आप्तकामत्वेन प्रयोजनाभावात्तस्य कर्तृत्वं न संभवतीति ॥ ३२ ॥

लोकवत्तु लीलाकैवल्यम् ॥ २।१।३३ ॥

—२० लीलापदस्य कैवल्यरूपार्थे लक्षणा कर्तव्या भवतीत्यत आहुः-लीलैवेति । या लीला सैव प्रयोजनं सैव वा मोक्ष इत्यर्थः ।

सूत्रार्थः-लोकवदियं लीला । लोके लीलायां राज्ञा मृगयायामिव किंचित्प्रयोजनं नापेक्ष्यते । लीला मोक्षरूपैव । अथवा सा लीलैव केवला नत्वस्याः प्रयोजनान्तरमित्यर्थ इति ॥ ३३ ॥

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति ॥ २।१।३४ ॥

—२४ ननु कर्मानुरोधेन सुखदुःखदाने स्वातन्त्र्याभावस्तदनुरोधाभावे वैषम्यमित्युभयथापि दोष इति मीमांसकशङ्कायामाहुः-वादिबोधनायेति । श्रुतिभिः सर्वस्य ब्रह्मरूपत्वं साधितं तेन नास्माकमेवं मतं किंतु वादिभिर्बहुशो लोकानुसारेणैव प्रश्नः क्रियतेतस्तथोत्तरमित्यर्थः ।

१२९-२ ननु श्रुत्यैव समाधानसंभवे किं लौकिकाशङ्कोत्थापने प्रयोजनमित्यत आहुः-सापेक्षमपीति । एवंच माहात्म्यबोधनमेव प्रयोजनमित्यर्थः ।

सूत्रार्थः-जीवेषु सुखदुःखादिकरणदर्शनादीश्वरो विषमो निर्घृणश्च न । तस्य कर्मसापेक्षत्वात् । तथाहि दर्शयति-एष ह्येव साधु कर्म कारयति पुण्यो वै पुण्येन कर्मणेति श्रुतिरिति ॥ ३४ ॥

न कर्माविभागादिति चेन्नानादित्वात् ॥ २।१।३५ ॥

—६ अनादित्वादिति । स्यादन्योन्याश्रयदोषो यदि शरीरं कर्मेति व्यक्तिद्वयं स्यात्तत्तु नास्ति । बीजाङ्कुरवच्छरीरकर्मप्रवाहस्यानादित्वात् ।

सूत्रार्थः-ननु कर्म न संभवति पूर्वं कार्याणां विभागाभावादेवंच कथं कर्मसापेक्षमीश्वरस्य सुखादिदानमिति चेन्न । बीजाङ्कुरप्रवाहस्यानादित्वादिति ॥ ३५ ॥

## उपपद्यते चाप्युपलभ्यते च ॥ २।१।३६ ॥

—७ सूत्रेपिः पूर्वपक्षिनिन्दायाम्।

—८ कृतहान्यकृताभ्यागमप्रसंग इति। कृतस्य कर्मणो हानिः। अकृतस्य-अभ्यागम उपलम्भश्चेति द्वौ दोषौ प्रसज्ज्येयाताम्। तपसैव यथा पूर्वमिति स्मृतिः श्रीमद्भागवततृतीयस्कन्धनवमाध्यायस्था। तौ च दोषौ यथा-प्रलयसमीपदशायां सदसत्कर्मकरणोत्तरं प्रलये जाते जीवानां ब्रह्मरूपत्वात्तदानीं कर्मफलभोगाभावात्कृतहानिः। सृष्ट्यारम्भे ब्रह्मरूपतयातिशुद्धानां पुनः सकलदुःखसाधनीभूतशरीरसंबन्धादकृताभ्यागमश्चेति।

सूत्रार्थः-प्रवाहस्यानादित्वमुपपद्यते। अन्यथा जीवानामभावे संसारः कस्य। अतो नियमार्थं कर्मप्रवाहानादित्वमङ्गीकार्यम्। अनेम जीवेनात्मनेति श्रुतौ तपसैव यथापूर्वमिति स्मृतौ च तदुपलम्भादिति ॥ ३६ ॥

## सर्वधर्मोपपत्तेश्च ॥ २।१।३७ ॥

सूत्रार्थः-वेदोक्तसर्वधर्माणां ब्रह्मण्येवोपपत्तेस्तस्यैव जगत्कारणत्वं सिद्धम् ॥ ३७ ॥

इति द्वादशमधिकरणम्।

---

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालबोधिन्यां द्वितीयाध्यायस्य प्रथमः पादः ॥ २।१ ॥

---

# द्वितीयाध्याये द्वितीयः पादः ॥ २।२ ॥

## रचनानुपपत्तेश्च नानुमानम् ॥ २।२।१ ॥

प्रथमपादे सांख्यमतं खण्डयित्वा तन्निराकरणेनान्येषामपि खण्डनं ज्ञेयमित्यतिदेशः कृतः-एतेन शिष्टापरिग्रहा व्याख्याता व्याख्याता इत्यन्तिमसूत्रेण।

—२० तथापि मन्दमतिव्युत्पादनार्थं तन्नालमिति मत्वात्र स्वतन्त्रतया सर्वमतानां निराकरणमिति बोधयन्ति-स्वतन्त्रयेति। एतेन पादसंगतिः प्रदर्शिता। प्रथमं दशभिः सूत्रैः सांख्यमतं निराक्रियते-तन्मतं चेत्थम्। सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः। सत्त्वरजस्तमांसि प्रीत्यप्रीतिविषादात्मकद्रव्यस्वरूपाण्यतीन्द्रियाणि कार्यैकोन्नेयानि। एतत्साम्यावस्थारूपा प्रकृतिः सर्वकारणभूतेति मूलप्रकृतिरुच्यते। सैकाचेतनानेकचेतनभोगाप-

वर्गार्था नित्या सर्वगता सततविक्रिया कस्यापि विकृतिर्न। महदहङ्कार-पञ्चतन्मात्राः सप्त प्रकृतिविकृतयः। ततः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनःपृथिव्यादिपञ्चमहाभूतानीति षोडश विकाराः। पुरुषः परिणामशून्यत्वान्न कस्यापि प्रकृतिः। नित्यत्वेनाजन्यत्वान्न कस्यापि विकृतिः। अत एव निर्धर्मकश्चैतन्यमात्रस्वरूपो निष्क्रियः सर्वगतः प्रतिशरीरं भिन्नश्च निर्विकारत्वान्निष्क्रियत्वाच्च तस्य कर्तृत्वं न। प्रकृतेस्तु सविकारत्वात्सविक्रियत्वात्कर्तृत्वं परिणामित्वं चास्ति। एवं चैतन्मते तत्त्वानां चतुर्विंशतिः। प्रधानापरपर्यायभूता प्रकृतिश्च जगत्कारणमिति। एतन्मतं दूष्यतेनेन सूत्रेण तद्व्याख्यान्ति–लोकानामिति।

—२१ परिणामादिहेतुभिर्जगत्कारणं प्रधानमनुमीयते तादृशमनुमानं न कर्तव्यं रचनानुपपत्तेस्तदाहुः–रचना नोपपद्यत इति। नन्वन्वयादिहेतुभी रचनारूपः परिणाम एवास्तु तेन नानुपपत्तिरित्यत आहुः–रचितत्वादिति।

—२२ संश्लेषप्रसंगादिति। यदि भूरादिलोकाः प्रकृतिपरिणामाः स्युस्तर्हि सर्वे श्लिष्टाः स्युः। यतो लोके दध्यादिषु परिणतत्वसंश्लिष्टत्वयोर्नियमो दृष्टः।

१३०–१ अन्यथोपपत्त्येति। भूरादिलोकरचना न केवलाचेतनकारणिका रचनात्वात् गृहादिरचनावत्। भूरादिलोका नाचेतनकर्तृकाः। चेतनस्पर्शनक्रियात्मकरचनाविषयत्वात्। घटकुड्यादिवत्। इति द्विधानुमानरूपा यान्यथाप्रतिपत्तिस्तया सांख्यानुमानस्य सत्प्रतिपक्षदोषघटितत्वादित्यर्थः।

सूत्रार्थः–भूरादिलोकानां प्रधानेन रचनाया असंभवात्तादृशमनुमानं न कर्तव्यमिति ॥ १ ॥

## प्रवृत्तेश्च ॥ २।२।२ ॥

—४ प्रवृत्तिः–प्रयत्नस्तत्पूर्विका क्रिया वा।

—५ प्रथमप्रवृत्तिरिति। प्रधानस्य सृष्ट्यर्थं प्राथमिकी प्रवृत्तिर्वा नोपपद्यत इत्यर्थः। नैमित्तिकधर्मस्य निमित्तसंसर्ग एव संभवान्निमित्तभूतचेतनसंसर्गस्य सार्वदिकत्वे सृष्टिस्थितिकालविभागानुपपत्तेः। कादाचित्कत्वे च हेतोर्वक्तुमशक्यत्वात्प्रधानप्रथमप्रवृत्त्यसंभव इति भावः। ननु धेनोर्यथा वत्सार्थं दुग्धदानप्रवृत्तिस्तत्कार्यसमाप्तौ ततो निवृत्तिस्स्वभावतोथवा नृत्यप्रदर्शनार्थं प्रवृत्ताया नर्तक्या द्रष्टृसमाधानानन्तरं निवृत्तिः स्वभावतस्तथा प्रधानस्यापि स्वत एव कार्यान्निवृत्तिः स्यादित्येवं कृतिमात्रस्य प्रधानविषयत्वमङ्गीकृत्य फलपर्यन्तं प्रधानवादेङ्गीकृते स्वभाववादाश्रयणान्न कोपि दोष इत्याहुः–यद्यपीत्यादिना।

—७ समादधते—तथापीति। अत्र वादी केवलतर्केणैव प्रवृत्तोतस्तदुत्तरं तर्केणैवोक्तमित्यर्थः।

सूत्रार्थः—यदि प्रधानमेव जगत्कारणं स्यात्तर्हि तत्तत्कार्यार्थं दृश्यमाना जीवप्रवृत्तिर्बाधिता भवेत्। सर्वस्यैव प्रधानपरिणामत्वादिति ॥ २ ॥

## पयोम्बुवच्चेत्तत्रापि ॥ २।२।३ ॥

—१२ तत्रापि दोहनाधिश्रयण इति। तत्र दोहनाधिश्रयणयोर्दोहनाश्रयणकर्तृचेतनापेक्षा वर्तत इत्यर्थः। नद्यादिजलदृष्टान्तपक्षे मेघानामित्यादिग्रन्थः। अयमर्थः—नदीप्रस्रवणेपि चेतनानां मेघानां प्रयोजकत्वं विद्यते।

—१३ नन्वस्य सूत्रस्य व्याख्यानं पूर्वाचार्यैः—ननु यथा क्षीरमचेतनं स्वत एव वत्सविवृद्धये प्रवर्तते यथा वा नद्यादिजलं स्वभावत एव लोकोपकाराय प्रवर्तत इत्याशङ्क्य उभयवादिप्रसिद्धे रथादावचेतने केवलस्य प्रवृत्त्यदर्शनादिति समाधानमिति कृतं तत्कुतो नाङ्गीक्रियत इत्यत आहुः—व्याख्यानान्तरे त्विति। अत्र प्रकाशः—पूर्वत्र रचनाप्रवृत्त्योरनुपपत्त्या पूर्वपक्षिणोसंगतवादित्वमुक्तं तेन तदेव दृष्टान्तेन निवारणीयम्। अत एव दृष्टान्तद्वयमत्र सूत्र उक्तम्। यदि लोकोपकाराय प्रवृत्तिमात्रमेव दूष्यत्वेनाभिप्रेतं स्यात्तदा प्रवचनसूत्रेष्वचेतनत्वेपि क्षीरवच्चेष्टितं प्रधानस्येति कथनात्तन्मात्रमेवास्मिन्सूत्रे क्षीरपदेनानूदितं स्यात्। यदि च तदभिप्रेता पुरुषोपकारकता दूष्यत्वेनाभिप्रेता स्यादन्नाम्बुनोस्तथात्वस्य लोकप्रसिद्धत्वादन्नाम्बुवादित्युच्येत। अतो भिन्नैवेयं युक्तिरिति तथा व्याख्यानमयुक्तम्।

—१४ नोभयवादिसंमतमिति। यत्पुनरन्नं चाम्बुनोत्यन्तमनपेक्षा निम्नभूम्याद्यपेक्षितत्वात्स्पन्दनस्येति समाधानं तन्नु सिद्धान्तिनश्चेतनसापेक्षताभिप्रायवतो निम्नभूमिसापेक्षताया अनभिप्रेतत्वात्पूर्वपक्षिणोपि निरपेक्षतां प्रतिपादयतोनभिप्रेतत्वान्नोभयवादिसंमतामिति भावः।

सूत्रार्थः। ननु दुग्धं यथा स्वत एव विचित्रफेनरचनां करोति नद्यादिजलं वाचेतनमपि स्वत एव स्पन्दते तद्वत्प्रधानप्रवृत्तिः स्वत एव स्यादिति चेन्न। तत्रापि विचित्रफेनरचनायां चेतनप्रवृत्तिदर्शनात्। जलस्पन्दने वृष्टिकारिणां मेघानां चेतनानामेव सत्त्वादिति ॥ ३ ॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ २।२।४ ॥

—१६ व्यतिरेकेण—कार्यव्यतिरेकेण।

—१७ तदधीनं—प्रधानाधीनम्।

**सूत्रार्थः**–अन्यापेक्षाभावात्प्रधानस्य निरन्तरकार्यकरणमेव स्यान्नतु तद्विभावस्थितिरिति ॥ ४ ॥

## अन्यत्राभावाच्च न तृणादिवत् ॥ २।२।५ ॥

—२० **परिणमन्त इति** । क्षीरभावेनेति शेषः ।

**सूत्रार्थः**–यथा तृणादीनि स्वभावादेव दुग्धभावेन परिणमन्ते तद्वत्प्रधानमपि परिणमेदिति चेन्न । तृणादीनां धेनुशृङ्गे वृषभादौ च दुग्धपरिणामादर्शनात्तेषां दुग्धपरिणामस्यास्वाभाविकत्वादिति ॥ ५ ॥

## अभ्युपगमेऽप्यर्थाभावात् ॥ २।२।६ ॥

१३१–१ **प्रेक्ष्यकारित्वाभावादिति** । प्रेक्ष्यकारित्वं चेतनधर्मः ।

**सूत्रार्थः**–प्रधानस्य यथाकथमपि कारणत्वेऽङ्गीकृतेपि जडत्वेन प्रेक्षापूर्वकारित्वाभावान्न पुरुषार्थसिद्धिरिति ॥ ६ ॥

इति प्रथममधिकरणम् ।

---

## पुरुषाश्मवदिति चेत्तथापि ॥ २।२।७ ॥

—७ **क्रियां**–चलनक्रियाम् ।

—८ **दोषः**–पुरुषार्थासिद्धिरूपो दोषः ।

—११ **अनिर्मोक्ष इति** । कारणे विशिष्टत्वं नाम विशेषणविशिष्टत्वं वैशिष्ट्यं च संबन्धः । एवंच विशिष्टकारणत्वं संबन्धे पर्यवसन्नम् । तथा च नित्यप्रधानपुरुषयोः संबन्धस्यापि नित्यत्वात्तस्य भोगनिरूपितकारणत्वे स्वीक्रियमाणे भोगस्यैव सर्वदा सत्त्वान्मोक्षाभावप्रसंग इत्यर्थः । नन्वशक्तस्य प्रधानाधिष्ठानत्वराहितस्य पुरुषस्य मोक्ष इत्यर्थे स्वीकृते न कोपि दोष इत्यत आहुः–अशक्तस्येति । **अनुपपन्न इति** । बन्धकस्वभावायाः प्रकृतेः स्वातन्त्र्यादशक्तेनापि सह भोगो दुर्निवार्य इत्यतस्तस्य मोक्षः सर्वथानुपपन्नः ।

**सूत्रार्थः**–यथा पङ्गुरन्धमधिष्ठितः परस्परोपकाराय गच्छति । अयःकान्तमणिर्वा सांनिध्यमात्रेण लोहे क्रियामुत्पादयति तथा प्रधानमपि पुरुषाधिष्ठितं पुरुषसंनिहितं वेति चेत्तदपि न यतो यदि तत्र प्रधानप्रेरकत्वं पुरुषस्य स्वतस्तदा प्रधानस्याप्रयोजकत्वं यदि तत्प्रेरकत्वं प्रधानाधीनं तदा कार्यनैरन्तर्यमित्युभयथा दोष इति ॥ ७ ॥

## अङ्गित्वानुपपत्तेश्च ॥ २।२।८ ॥

—१५ परमात्मनः स्वरूपत औदासीन्यं मायाव्यपाश्रयं प्रवर्तकत्व-मिति शंकराचार्यैः पूर्वसूत्रव्याख्यान उक्तं तदुपहसन्ति-अनेनेति । सूत्रद्वयव्याख्यानेनेत्यर्थः ।

सूत्रार्थः-प्रकृतिपुरुषयोरङ्गाङ्गित्वे प्रधानवादप्रक्रिया संभवेत् । परंतु तयो-रङ्गाङ्गित्वमेव नोपपद्यते । यतः पुरुषस्याङ्गित्वे स्वमतहानिः । प्रकृतेराङ्गित्वे मोक्षाभावप्रसंगश्चेति ॥ ८ ॥

## अन्यथानुमितौ ज्ञशक्तिवियोगात् ॥ २।२।९ ॥

—१८ अन्यथा-प्रकारान्तरेण । सर्वं-गुणानां ये ये प्रवृत्तिविभागास्तेषां सर्वम् । सर्वे दोषाः-रचनानुपपत्त्यादयः । अन्यथानुमानं चेत्थम्-सत्त्वा-दिगुणा अंशतः प्रवृत्तिमन्तः चलस्वभावत्वात् अश्वत्थपर्णवत् । अत्रैवं सांख्यानां परिभाषा-सुखदुःखमोहात्मकं सत्त्वादिगुणत्रयम् । तस्य क्रमेण काशप्रवृत्तिनिग्रहरूपं कार्यम् । तत्तत्कार्यद्वारा सत्त्वादिगुणानामनुमानम् । तेषां गुणानां स्वाभाविकाक्रिययान्योन्याभिभवोन्योन्याश्रयः । अन्योन्यजननं अन्योन्यामिथुनीभावः । एवंच तमसा रजोनियमने प्रलयः । सत्त्वेन रजस्त-मसोर्नियमने प्रकाशः । तेन चात्मज्ञानं ततो मोक्षः । तथाच प्रलया-नुपपत्तिमोक्षाभावप्रसंगादिदूषणानामनवसरः ।

—१९ पूर्वं-पुंप्रकृतिसंयोगात्पूर्वम् । बीजस्यैवाभावात्-प्रवृत्तिबीज-स्यैवाभावात् ।

—२० नित्यत्वादिति । पुंप्रकृत्योर्नित्यत्वात्संबन्धस्यापि नित्यत्वा-दित्यर्थः । अनिर्मोक्षः-प्रकृतिसंबन्धराहित्यरूपमोक्षाभावः ।

सूत्रार्थः—ननु सकलदोषपरिहारो यथा भवेत्तथैवानुमेया प्रकृतिरिति चेन्न । प्रकृतिपुरुषसंयोगात् पूर्वं तस्या ज्ञानशक्तेरभावेनोक्तरीत्या दोषाणां परिहारासंभवादिति ॥ ९ ॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ २।२।१० ॥

सूत्रार्थः-सांख्यमतवर्तिषु केचित्तत्त्वानां षड्विंशतिं प्राहुरपरे पञ्चविंशति-मिति परस्परविरोधादसमञ्जसोयं वाद इति ॥ १० ॥

इति द्वितीयमधिकरणम् ।

---

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ २।२।११ ॥

१३२-३ अतः परं सप्तभिः सूत्रैर्नैयायिकमतं निराक्रियते । परमाणु-कारणवादः-जगत्कारणं परमाणुरिति वादः । स्थूलकार्यार्थं-त्रसरेण्वादि-स्थूलकार्यार्थम् ।

—७ उपहासार्थमिति । ये नैयायिका लौकिकतत्त्वमपि न जानन्ति ते कथमात्मतत्त्वं जानीयुरित्युपहासः ।

सूत्रार्थः–नैयायिकनये स्थूलघटादिकार्यार्थं परमाणुद्वयं संयुज्य प्रथमं द्व्यणुकं भवति । तत्र परमाण्वोर्मीलन उपर्यधोभावेनाङ्गीकृते द्व्यणुकं महत् स्यात् । प्राक्पश्चाद्भावेत मीलने तद् द्व्यणुकं दीर्घवत्स्यात् । एवं तैरङ्गीकृतं यत्परमाणुपरिमाणं ह्रस्वं परिमण्डलमिति तदसंगतम् इति ॥ ११ ॥

## उभयथापि न कर्मातस्तदभावः ॥ २।२।१२ ॥

—१० उभयथापीति । परमाण्वोः सार्वदेशिकः संयोग एकदेशिकः संयोग इत्युभयथापि संयोगो न युज्यते । न कर्मेति । परमाणूनां जडत्वात्स्वतः कर्म न संभवति । उभयथापि । सर्वदेशावच्छेदेन किंचिद्देशावच्छेदेनेत्युभयथापीत्यर्थः ।

—११ प्रदेशाभावादिति । परमाणोर्निरवयवत्वादिति भावः ।

—१२ ननु तस्य प्रदेशः कल्प्यत इति चेत्तत्राहुः–कल्पनेति । ननु सावयवत्वाभावेपि सर्वांशे संयोगः स्वीक्रियत इत्यत आहुः–असंयुक्तेत्यादि सर्वात्मना संयोगसत्त्वेसंयुक्तांश एव नास्तीत्यर्थः ।

—१४ असंयुक्तांशाभावे किं स्यादित्याहुः-तदेवेति । तदेव–द्व्यणुकमेव । तत्–परमाणुस्वरूपम् । द्व्यणुकस्याभाव इति नातिरिक्तद्व्यणुकसिद्धिरित्यर्थः ।

सूत्रार्थः– उभयथापि द्व्यणुकं न संभवति । परमाणुष्ववयवाभावेनोभयोः संघटनाभावात् । किंच संयोगजकर्मापि न संभवति हेत्वन्तरासंभवादिति ॥ १२ ॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ २।२।१३ ॥

—२० संबन्धान्तरापेक्षेति । द्रव्यद्रव्ययोः संयोगः संबन्धस्तस्य गुणत्वाद्गुणगुणिनोश्च समवायात्संयोगस्य द्रव्ये समवायसंबन्धेन सत्त्वमपेक्षितमेवं समवायेपि संबन्धान्तरापेक्षेत्यर्थः ।

—२१ अनवस्थितिः–अनवस्थादोषः ।

सूत्रार्थः– नैयायिकनये परमाणुद्व्यणुकयोः समवायोङ्गीक्रियते । स च नित्यो नित्यमेव संबन्धिनमपेक्षेत । संबन्धस्योभयनिष्ठत्वात् । अतोपि द्व्यणुकोत्पत्तिर्न संभवति किं च समवायः संबन्धसामान्यात्संयोगतुल्यः । तेन तस्यापि संबन्धान्तरापेक्षा ततस्तत्संबन्धस्यापीत्यनवस्था प्रसज्येतेति ॥१३॥

## नित्यमेव च भावात् ॥ २।२।१४ ॥

सूत्रार्थः– परमाणोः कारणान्तरस्य च नित्यत्वात्तत्कार्यं द्व्यणुकादि सर्वदेव स्यादिति ॥ १४ ॥

## रूपादिमत्वाच्च विपर्ययोदर्शनात् ॥ २।२।१५ ॥

**१३३-२ अदर्शनादिति** । नहि परमाणुर्दृश्यते । ननु कार्यलिङ्गकानुमानमेव तत्र मानमत आहुः- **कार्यानुपपत्तिरिति** । **श्रुत्यैव**- तस्माद्वा एतस्मादात्मन इति श्रुत्यैव ।

**सूत्रार्थः**- यद्रूपादिमत्तदनित्यमिति व्याप्त्या परमाणोरपि रूपादिमत्वादनित्यत्वमपरमाणुत्वं च स्यात् । नन्वियं व्याप्तिः परमाणुभिन्नाविषयेति चेन्न । श्रुत्या ब्रह्मणो जगत्कारणत्वे सिद्धे तदर्थं परमाणूनामङ्गीकारस्याप्रामाणिकत्वादिति ॥ १५ ॥

## उभयथापि च दोषात् ॥ २।२।१६ ॥

**—५ हरिद्राचूर्णसंबन्ध इति** । हरिद्रा पीतवर्णा चूर्णं श्वेतवर्णं तयोः संयोगे रक्तरूपमुत्पद्यते ।

**—६ विरोधः**- रूपादीनां सजातीयारम्भकत्वनियमविरोधः ।

**सूत्रार्थः**- यदि परमाणवो रूपादिमन्तस्तर्ह्यनित्यत्वं यदि नीरूपास्तर्हि तत्कार्ये रूपाभावप्रसंग एवमुभयथा दोषात्परमाणुकारणवादो नाङ्गीकार्य इति ॥ १६ ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ २।२।१७ ॥

**सूत्रार्थः**- अस्य गौतमदर्शनस्य वैदिकैः शिष्टैरपरिगृहीतत्वात्सर्वथानपेक्षेति ॥ १७ ॥

इति तृतीयमधिकरणम् ।

---

## समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ २।२।१८ ॥

**—११** अतः परमेकोनविंशत्या सूत्राणां बाह्यमतं निराक्रियते तदाहुः- **अतः परमिति** । तन्मतमनुवदन्ति- **त इति** । ते बौद्धाश्चतुर्विधाः । वैभाषिकः, सौत्रान्तिकः, विज्ञानवादी, माध्यमिकश्चेति । तत्राद्यः सर्वार्थान् प्रत्यक्षानुमानसिद्धान् सतः क्षणिकान् वदति । द्वितीयस्तु बाह्यान् सर्वानर्थान् क्षणिकान् सतो विज्ञानानुमेयानाह । तृतीयस्त्वर्थजन्यं विज्ञानमेव परमार्थम् । अर्थास्त्वसन्तः स्वाप्नकल्पा इत्याह । चतुर्थस्तु सर्वशून्यत्वमेवाह । एवं मतचतुष्टयेऽपि भोक्ता वा प्रकाशिता वा कश्चिच्चेतनः स्थिरः संहन्ता नाभ्युपेयते । यद्यपि बुद्ध एक एवोपदेष्टा तथापि शिष्यमतिभेदाच्चतुर्धोपदेशः । तत्र ये हीनमतयस्ते सर्वास्तित्ववादिनस्तदाशयमनुरुध्य शून्यतायामवतार्यन्ते । ये मध्यममतयस्ते तु विज्ञानमात्रास्तित्वमनुरुध्य

शून्यतायामवतार्यन्ते । ये पुनः प्रकृष्टमतयस्तेभ्यस्तु साक्षादेव शून्यतातत्त्वमुपदिश्यते । तत्र ये बाह्यार्थास्तित्ववादिनस्ते समुदायद्वयं जीवभोगार्थं संघातभावं प्राप्नोतीति मन्वते ।

—१५ तदप्राप्तिः— तादृक्संसारस्यासिद्धिः ।

सूत्रार्थः—भाष्योक्तोभयसमुदायसंबन्धे जीवस्य संसारस्तदपगमे मोक्ष इति बौद्धमतम् । एवमुभयहेतुकसमुदायाङ्गीकारेपि सर्वपदार्थानां क्षणिकत्वाज्जीवस्यापि वा क्षणिकत्वात्तत्संबन्धाप्राप्तिः कुतस्तत्संबन्धे जीवसंसार इत्यादिकमिति ॥ १८ ॥

इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ २।२।१९ ॥

—१९ पूर्वपूर्वस्य— विज्ञानधारायां पूर्वपूर्वप्रत्ययस्य । उत्तरोत्तरेति । उत्तरोत्तरविज्ञानविषयत्वेन कारणत्वादित्यर्थः । यथा घटं जानामीत्यत्र घटज्ञानं विषयतासंबन्धेन घटज्ञानवानहमित्यनुव्यवसायात्मकज्ञाने कारणमेवं पूर्वविज्ञाने यदनुभूतं तदेवोत्तरविज्ञाने स्मर्यत इति पूर्वविज्ञाने विषयत्वं प्राप्य करणत्वं स्वीक्रियते ततो न विज्ञानस्य क्षणिकत्वभङ्गः । न वा यस्य मे विवाहो जात इति संसाराप्राप्तिरिति भावः । संततेरेवेति । एवंच जीवस्य स्थिरत्वेन त्वन्मतप्रवेशो नास्तीति भावः ।

—२० न कापीति । धारावाहिकतादृशजीवस्य धारावाहिकरूपस्कन्धसंबन्धेन धारावाहिकवेदनास्कन्धात्मकसंसारप्राप्तिः । अथ च धारावाहिकसंस्कारस्कन्धेन नानाविधशरीरभेदतादृशसंस्कारविरामे चाभावरूपमोक्षासिद्धिरिति न काप्यनुपपत्तिरित्यर्थः । उत्पत्तिमात्रनिमित्तत्वादिति । पूर्वप्रत्ययस्योत्तरप्रत्ययोत्पादने निमित्तत्वादित्यर्थः ।

—२१ ननु मयानुसंधानं स्वीक्रियत इत्यत आहुः—अनुसंधानाभ्युपगम इति । संबन्धवियोगार्थमिति । वेदनास्कन्धरूपसंसारसंबन्धस्तद्वियोगार्थं मोक्षार्थमित्यर्थः । यतेतेति । जीवस्य स्थिरत्वाभावादित्यर्थः ।

सूत्रार्थः- नन्वेतेषां क्षणिकत्वेपि पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वात्संततेरेव जीवजडरूपत्वान्न क्षणिकत्वदोष इति चेन्न । यत एतेषामुत्पत्तिमात्रे निमित्तत्वमङ्गीक्रियते नतु समुदाये । एवंच स्थैर्याभावेनानुसंधानाभावात्समुदायानुपपत्त्या च पूर्वोक्तदोषतादवस्थ्यमिति ॥ १९ ॥

उत्तरोत्पादे च पूर्वनिरोधात् ॥ २।२।२० ॥

—१३४-३ विरोधात्—सहानवस्थितिरूपविरोधात् ।

**सूत्रार्थः**—अग्रिमोत्पत्तिरपि न संभवति । उत्पन्नो ह्युत्पादयेत्किल । परं तूत्पत्तिक्षण एव तस्य नष्टत्वान्नोत्तरोत्पादकत्वं तस्येति ॥ २० ॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २।२।२१ ॥

—५ **चतुर्विधानिति** । आलम्बनप्रत्ययः, समन्तरप्रत्ययः, अधिपतिप्रत्ययः, सहकारिप्रत्ययश्चेति चतुर्विधान् हेतून्प्राप्य चित्तं विज्ञानस्कन्धात्मकं चैत्ता वेदनास्कन्धात्मका उत्पद्यन्ते ।

—६ **असतीति** । असत्येव हेतावभावादेव फलोत्पत्तिरिष्यते चेत्तदा द्वितीया प्रतिज्ञा नश्यति ।

—७ **नाङ्गीक्रियत इति** । क्षणिकत्वस्य स्थितत्वादेवेत्यर्थः ।

**सूत्रार्थः**— सर्वं क्षणिकमित्येका प्रतिज्ञा । चतुर्विधान् हेतून्प्रतीत्य चित्तचैत्ता उत्पद्यन्त इति द्वितीया । तत्र पदार्थस्य क्षणान्तरसंबन्धस्वीकारे प्रथमप्रतिज्ञा हीयेत । पदार्थस्य क्षणान्तरसंबन्धानङ्गीकारे द्वितीयप्रतिज्ञा हीयेत । पदार्थस्य क्षणान्तरसंबन्धाभावेन चतुर्विधहेतुसमुदायाभावात् । हेतुसमुदायानङ्गीकारे नियामकाभावात्सर्वं सर्वस्माद्युगपदुत्पद्येतेति ॥ २१ ॥

## प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २।२।२२ ॥

—१३ **प्रतिसंख्यानिरोधो नामेति** । संख्या बुद्धिः प्रतिकूला बुद्धिः घटं नाशयामीत्याकारिका तत्पूर्वको यो निरोधो दण्डाद्युद्यम्य क्रियमाणो घटनाशः स प्रतिसंख्यानिरोधः । अयमेव तन्मतीयः स्थूलविनाशः । **विपरीत इति** । तादृशबुद्धिं विनापि जायमान इत्यर्थः । अयमेव प्रतिक्षणं जायमानो घटादीनां नाशः कुशलैरप्यवगन्तुमशक्यत्वात्सूक्ष्म उच्यते ।

—१४ **निरुपाख्यं**-अनिर्वाच्यम् । अवस्त्विति यावत् ।

—१५ **संततेरिति** । संतानिपदार्थानां संततिः संतानो हेतुफलरूपेण प्रवाहः । तस्याविच्छेदान्नैरन्तर्यादित्यर्थः । **नाशकसंबन्धाभावादिति** । अस्मिन् प्रवाहे पूर्वस्योत्तरं प्रति कारणसंबन्ध एव नतु नाशकसंबन्ध इत्यर्थः।

—१६ **व्यर्थ इति** । प्रयोजनाभावान्न स्वीकर्तव्यः । तथाविच्छिन्ना संततिस्तु तव गले पतिता । एवंच विज्ञानसंततिरेव जीवः । तस्य च संस्कारजन्यो यश्चरमक्षणे नाशः स एव तव मते मोक्षः । तत्र चरमक्षणात्पूर्वं जीवस्य संततिरूपत्वेनास्थिरत्वाद्बुद्धिसंबन्ध एव नास्ति ततश्च सर्वेषां क्षणिकत्वेन नाशकस्य मुद्गरस्य घटस्य च संबन्ध एव नास्तीति प्रतिसंख्यानिरोधस्याप्राप्तिरिति दूषणमिति भावः । **क्षणिकाङ्गीकारेणेति** । प्रथमक्षण उत्पत्तिर्द्वितीयक्षणे नाशस्तृतीयक्षणे पुनरुत्पत्तिरित्यङ्गीकारेणेत्यर्थः ।

सूत्रार्थः- बुद्धिपूर्वको भावानां विनाशः प्रतिसंख्यानिरोधः। अबुद्धिपूर्वको भावानां नाशोऽप्रतिसंख्यानिरोधः। एतावुभौ न प्राप्नुतः। भावानां संततेरविच्छेदात्। भावानां क्षणिकत्वेन नाशकसंबन्धाभावात्प्रतिसंख्यानिरोधो न शक्यते वक्तुम्। अप्रतिसंख्यानिरोधस्तु भावानां क्षणिकत्वाङ्गीकारेणैव सिद्धो न विशेषतो वक्तव्य इति ॥ २२ ॥

## उभयथाच दोषात् ॥ २।२।२३ ॥

—२१ अविद्यातत्कार्यातिरिक्तस्येति। नाश्यस्येत्यर्थः॥

सूत्रार्थः- बौद्धैर्मायावादिभिश्चाविद्यानाशो मोक्ष इत्यङ्गीक्रियते। तत्र सपरिकराविद्या हेतुं विनैव नश्यति हेत्वपेक्षया वा। आद्ये मोक्षसाधनबोधकशास्त्रवैफल्यं, द्वितीये-अविद्यातत्कार्यातिरिक्तपदार्थाङ्गीकारः कर्तव्यो भवेचेन चाभ्युपगमहानिरेवमुभयथापि दोषादसमीचीनं बौद्धं मायावादिनश्च मतमिति ॥ २३ ॥

## आकाशे चाविशेषात् ॥ २।२।२४ ॥

—२४ निरुपाख्यं-अवस्तु।

—२५ वस्तुत्वव्यवहारस्येति। पृथिव्यां घटो जले नौकेतिवदाकाशे बलाकेति व्यवहारस्येत्यर्थः।

सूत्रार्थः-आकाशं निरुपाख्यमित्यसंगतम्। तत्रापि पृथ्व्यादिवद्वस्तुत्वव्यवहारस्य सत्त्वादिति ॥ २४ ॥

## अनुस्मृतेश्च ॥ २।२।२५ ॥

—१३५-३ एकविषयत्वं चेति। यश्च पूर्वमनुभूतो यश्च स्मृतिकालेऽस्ति तयोरुभयोरपि क्षणिकत्वेनाश्रयत्वविषयत्वयोरभावाद्बाधितोयं वाद इत्यर्थः।

सूत्रार्थः-स एवायं घट इत्यनुस्मरणदर्शनादनुभवस्मरणयोरेकाश्रयत्वनियमाच्च क्षणिकवादोऽसंगत इति ॥ २५ ॥

## नासतो दृष्टत्वात् ॥ २।२।२६ ॥

एवमष्टाभिः सूत्रैः क्षणिकत्ववादो निराकृतः। अतः परमभावाद्भावोत्पत्तिं निराकुर्वन्ति सूत्रोपन्यासपूर्वकव्याख्यानेन।

—५ नानुपमर्द्येति। नानुपमर्द्य प्रादुर्भावादिति बुद्धसूत्रम्। तदर्थश्च-यथा दुग्धोपमर्दं विना दध्युत्पत्तिर्न दृश्यते तद्वद्बीजोपमर्दं विनाङ्कुरोत्पत्त्यदर्शनादभावाद्भावोत्पत्तिरिति। असत इति। शशशृङ्गादेरित्यर्थः।

—६ नहीति। इदमुपलक्षणं-सुवर्णजकुण्डलादौ सुवर्णोपमर्दादर्शनात्। अङ्कुरादिस्थले तु स्थूलांशस्यैवोपमर्दो न सूक्ष्मस्य।

—८ अविद्यावादं खण्डयन्ति–एवमिति।

—१० त्वं च रुद्रेति। इदं वाक्यं वाराहपुराणे रुद्रगीतासु।

—११ स्वागमैः कल्पितैरिति। पद्मपुराणोत्तरखण्डे सहस्रनामारम्भे वाक्यमिदम्।

—१२ एवंरूपयेति। एतैरेव श्लोकैर्महादेवेन पार्वतीं प्रत्युक्ताः श्लोकाः संगृहीता उत्तरखण्डीयास्तथाहि–

श्रृणु देवि प्रवक्ष्यामि तामसानि यथाक्रमम्।
येषां श्रवणमात्रेण पातित्यं ज्ञानिनामपि॥
प्रथमं हि मयैवोक्तं शैवं पाशुपतादिकम्।
मच्छक्त्यावेशितैर्विप्रैः संप्रोक्तानि ततः परम्॥
कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत्।
गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै॥
धिषणेन तथा प्रोक्तं चार्वाकमतिगर्हितम्।
दैत्यानां नाशनार्थाय विष्णुना बुद्धरूपिणा॥
बौद्धशास्त्रमसत्प्रोक्तं नग्ननीलपटादिकम्।
मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते॥
मयैव कथितं देवि कलौ ब्राह्मणरूपिणा।
अपार्थं श्रुतिवाक्यानां दर्शयल्लोकगर्हितम्॥
कर्मस्वरूपत्याज्यत्वमत्रैव प्रतिपाद्यते।
सर्वकर्मपरिभ्रष्टं वैकर्मत्वं तदुच्यते॥
परेशजीवयोरैक्यं मयात्र प्रतिपाद्यते।
ब्रह्मणश्च परं रूपं निर्गुणं वक्ष्यते मया॥
सर्वस्य जगतोप्यत्र मोहनार्थं कलौ युगे॥
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम्।
मयैव वक्ष्यते देवि जगतां नाशकारणात्॥

इति।

—१४ असदपरपर्यायामिति। अनेनात्र सूत्रे मायावादो दूषणार्ह इति सूचितम्।

—१७ शप्त्वेति। कीकटे तव मरणं भविष्यतीति शप्त्वा। एतच्च व्यासकलहशापादिकं तत्संप्रदायप्रसिद्धात्–

व्यासो नारायणः साक्षात् शङ्करः शङ्करः स्वयम्।
तयोर्विवादे संप्राप्ते किङ्करः किं करोम्यहम्॥

इति श्लोकात्तथा

वासना यदि भवेत्फलदात्री किं करिष्यति तदा मम काशी ।
व्यापको यदि भवेत्परमात्मा तारकं किमिति नोपदिशेन्माम् ॥

इति शङ्कराचार्यश्लोकाच्चावगम्यते । एवं शङ्कराचार्यं निन्दित्वा स्वस्याग्न्यवतारत्वेन यथाश्रुतसूत्रार्थज्ञानं प्रकटयन्ति-अतोग्निनेति ।

सूत्रार्थः- असतः कार्यमुत्पद्यत इति यद्बौद्धमतं तदसंगतं शशशृङ्गादिभिरसद्भिः कार्योत्पत्तेरदर्शनादिति ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः ॥ २।२।२७ ॥

—२१ साधनरहितानामिति। कृष्यादिक्रियातत्साधनीभूतहलादिरहितानामित्यर्थः ।

सूत्रार्थः- अभावाद्भावोत्पत्तिरित्यङ्गीकारे क्षेत्रादिकर्मसाध्यरहितानामपि धान्यादिसिद्धिः स्यादिति ॥ २७ ॥

इति चतुर्थमधिकरणम् ।

---

## नाभाव उपलब्धेः ॥ २।२।२८ ॥

—२५ विज्ञानवाद्यभिमतं- योगाचाराभिमतम् । उपादेयवचनः-ग्राह्यवाक्यः । एवं च तद्वचनं न ग्राह्यमित्यर्थः ।

सूत्रार्थः- अस्य बाह्यपदार्थरूपप्रपञ्चस्याभावो वक्तुं न शक्यते । उपलभ्यमानत्वादिति ॥ २८ ॥

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २।२।२९ ॥

१३६-५ अन्यथा दृष्टत्वात्- असत्त्वस्य दृष्टत्वात् ।

—८ प्रवृत्तिव्याघात इति । प्रवृत्तेर्बाह्यत्वात्तदस्तित्वस्यानङ्गीकारादित्यर्थः ।

सूत्रार्थः- ननु स्वाप्निकपदार्थवद्बाह्यपदार्थानामुपलब्धिरिति चेन्न । स्वाप्निकापेक्षया बाह्यपदार्थानां वैलक्षण्यात् । बाह्यपदार्थो वर्षानन्तरमप्युपलभ्यते स्वाप्निकस्तु तथा नेति ॥ २९ ॥

## न भावोनुपलब्धेः ॥ २।२।३० ॥

—१० यदपीत्यादि । अयं भावः । वासना नामानुभवजनितः स्मृतिजनितः संस्कारस्तदुत्पत्तिरनुभवं विना न सिध्यति । अनुभवोर्थं विना न सिध्यति । अर्थश्च बौद्धमते नास्ति । एवं च कथं वासनाजन्म ।

—१२ ननु विचित्रज्ञानाद्वासना वासनातो विचित्रज्ञानानीत्यनादिपरम्पराङ्गीक्रियत इति चेत्तत्राहुः– अनादित्व इति। अप्रतिष्ठैव– तस्य ज्ञानस्याप्रतिष्ठैव।

**सूत्रार्थः**– वासनानां सत्ता न संभवति त्वन्मते बाह्यपदार्थानामभावात्। उपलब्धौ भाव एव वासनाजनको दृष्ट इति॥ ३०॥

## क्षणिकत्वाच्च॥ २।२।३१॥

—१६ **वासनाया इति**। वृत्तिविज्ञानं वासनाजनकं पूर्वक्षणवृत्ति। तदाधारश्चालयविज्ञानं तत्समकालवृत्ति। एवं सति वृत्तिविज्ञानेन यदा वासनोत्पादनीया तदानीं वृत्तिविज्ञानाधारस्यालयविज्ञानस्य नष्टत्वादाधाराभावेनापि वासनानुपपत्तिः।

—१८ **असंबद्धभाषित्वादिति**। मायावादी यथा श्रुतिच्छायामादाय यत्किंचित्प्रलपति तद्वदयं युक्तिच्छायामादाय यत्किंचित्प्रलपति। अतः स स्वयुक्तिभिरेव दूषितप्राय इत्यर्थः।

**सूत्रार्थः**–आलयविज्ञानस्य क्षणित्वाद्वासनाधारोपि न संभवतीति॥ ३१॥

## सर्वथानुपपत्तेश्च॥ २।२।३२॥

**सूत्रार्थः**– यथा यथा विचार्यते सर्वथा तथा तथैतन्मतमनुपपन्नं भाति। चकारेण वेदविरोधदोषः सूचित इति॥ ३२॥

इति पञ्चममधिकरणम्।

---

## नैकस्मिन्नसंभवात्॥ २।२।३३॥

—२५ जैनमतमिदानीं निराक्रियते तदेतदाहुः– **विवसनसमय इति**। ब्रह्मण्येव विरुद्धधर्मान्तरं प्रमाणासिद्धं नान्यत्रेति स्थापयितुमेतन्मतखण्डनम्।

१३७-१ **स्यात्पूर्वक इति**। स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः, स्यान्नास्ति चावक्तव्यः, स्यादस्ति च स्यान्नास्ति चावक्तव्यश्चेति।

—२ **तदिति**। **तत्**– त्वन्मतोक्तमस्तिनास्तीत्यादिप्रतिपाद्यं सप्तभङ्गीन्यायरूपप्रयुक्तं तत्र हेतुद्वयम्। **विरोधेनासंभवादिति**। **विरोधेन**– परस्परमत्यन्तविरोधेन। **असंभवात्**– जीवादिसत्पदार्थेषु सप्तभङ्गीन्यायस्य प्रसरात्तेषां पदार्थानामसंभवादित्यर्थः।

**सूत्रार्थः**– दिगम्बरमते सप्तभङ्गीनयः स चैकस्मिन् वस्तुनि न संभवति । अस्तिनास्तिशब्दप्रतिपादितभावाभावयोरेकत्रासंभवादिति ॥ ३३ ॥

## एवं चात्माकार्त्स्न्यम् ॥ २।२।३४ ॥

—५ **वस्तुपरिच्छेदादिति** । त्वन्मते पदार्थमात्रस्य परमाणुजन्यत्वावयवजन्यं तत्तत्परिच्छिन्नं घटादिवदिति व्याप्त्यात्मनोपि जन्यत्वापत्तेरिति भावः । **सर्वत्वमिति** । संभवतीति शेषः । पक्षान्तरमाहुः– **अथवेति** ।

**सूत्रार्थः**– ननु बाह्यपदार्थेष्वौदासीन्यान्नास्य सप्तभङ्गीन्यायस्यैकत्रासंभवलक्षणो दोष इति शङ्कां परिहर्तुं सूत्रम् । एवमपि वस्तुपरिच्छेदादात्मनः सर्वत्वाभावः स्यात् । यद्वा दिगम्बरैः शरीरपरिमाण आत्मा स्वीक्रियते तत्खण्डयितुमिदं सूत्रम् । तथा सति हस्तिमनुष्यादिशरीराणां तुल्यत्वाभावादात्मनः सर्वशरीरतुल्यत्वं न स्यादिति ॥ ३४ ॥

## न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ २।२।३५ ॥

—९ **आत्मनोपि**– तत्तच्छरीरप्रविष्टात्मनोपि ।

—१० **तत्तुल्यता**– तत्तच्छरीरपरिमाणता । तथा च नानाविधकर्माष्टकेन ज्ञानावरणीयादिना देवादिशरीरं प्राप्नोति तदनुसारेणावयवोपचयापचयाभ्यां जीवोपि प्रविशतीति न विरोध इत्यर्थः । समादधते– **न वक्तव्यमिति** ।

—११ **विकारापत्तेरिति** । अवयवस्वीकारविकारानित्यतानां प्राप्तेरित्यर्थः । ननु संकोचविकासभाव एव स्वीक्रियते ननु सावयवत्वमित्यतो न विकार इत्यत आहुः– **संकोचविकास इति** ।

**सूत्रार्थः**— ननु शरीराणामवयवोपचयापचयानुसारमात्मनोप्यवयवोपचयापचयाङ्गीकारात्तत्तुल्यत्वेन पर्यायादप्यविरोध इति चेन्न । तथा सत्यात्मनोपि विकारित्वादिप्रसंगात् । यदवयवोपचयापचयवत्तद्विकारीति व्याप्तेरिति ॥ ३५ ॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ २।२।३६ ॥

**सूत्रार्थः**— मोक्षसामायिकपरिमाणावस्थितेरङ्गीकारात्पूर्वोक्तदोषनिरासार्थमुभयनित्यत्वं महत्परिमाणमणुपरिमाणं चेदङ्गीक्रियते तर्ह्युभयथापि शरीरपरिणामव्याघातान्न तवाभिमतसिद्धिरिति ॥ ३६ ॥

इति षष्ठमधिकरणम् ।

---

## पत्युरसामञ्जस्यात् ॥ २।२।३७ ॥

—२२ **असामञ्जस्यं विवृण्वते**– **पतिश्चेदिति** ।

**सूत्रार्थः**— जीवभिन्नस्तन्नियामक ईश्वरोङ्गीक्रियते चेत्तस्य वैषम्यनैर्घृण्यायसामञ्जस्यं प्रसज्येतातो नेश्वरो जीवभिन्नोङ्गीकार्य इति ॥ ३७ ॥

## संबन्धानुपपत्तेश्च ॥ २।२।३८ ॥

१३८-२ **जीवब्रह्मणोरिति** । त्वन्मते विभुद्वयसंयोगस्याभावाद्भूतावेशन्यायेन प्रेरणाया अभावेन पतित्वानुपपत्तिः । ननु स्वस्वामिभावसंबन्ध एवास्तु आवेशाभावेपि प्रेरणा दृश्यत इत्यत आहुः– **तुल्यत्वादिति** । चैतन्यत्वेन विभुत्वेन च जीवेश्वरयोस्तुल्यत्वादित्यर्थः ।

**सूत्रार्थः**—जीवब्रह्मणोर्विभुत्वेनाजसंयोगानङ्गीकारात्संभवाभावेन नियामकत्वं न संभवतीति सूचितमिति ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ २।२।३९ ॥

—५ **लौकिकन्यायेनेति** । उपादानगोचरापरोक्षज्ञानाचिकीर्षायत्नवान्यः स कर्तेति लौकिकन्यायेनेत्यर्थः ।

—७ **मतविरोध इति** । सावयवत्वनिरवयत्वाविकल्पेनेत्यर्थः । तथा चेश्वरशरीरस्य नित्यत्वमङ्गीक्रियते चेत्तस्य सावयवत्वे जगतोपि सावयवत्वान्नित्यत्वे सिद्धे कार्यत्वाभावान्नेश्वरसिद्धिरिति मतविरोधः । निरवयवत्वे स्वीक्रियमाणे तव मते निरवयवशरीरस्य कुत्राप्यदर्शनाम्मतविरोध इति भावः ।

ननु तस्यानित्यत्वमङ्गीक्रियत इत्यत आहुः– **अनवस्थेति** । तस्यापि कर्तान्यस्तस्याप्यन्य इत्यनवस्थेत्यर्थः ।

ननु स्वयमेव स्वशरीरं कुर्यादित्याहुः– **असंभवश्चेति** । अशरीरस्य कर्तृत्वासंभव इत्यर्थः । चकारेण जन्माद्यस्येत्यत्रोक्तदोषाणां समुच्चयः ।

**सूत्रार्थः**– जगत्कर्तृत्वेन कल्प्यमान ईश्वरोधिष्ठानसापेक्ष एव कल्पनीयः । एवं चेश्वरस्याधिष्ठानकल्पनायामनवस्थाप्रसंगः स्वसिद्धान्तहानिश्चेति ॥३९॥

## करणवच्चेन्न भोगादिभ्यः ॥ २।२।४० ॥

—१० **भोगादीति** । सुखदुःखभोगादीत्यर्थः ।

**सूत्रार्थः**– नन्वसंबन्धदोषपरिहारार्थं ब्रह्म सकरणमङ्गीकर्तव्यमिति चेन्न । करणवतो भोगावश्यंभावात्तस्य भोगप्रसक्तेरिति ॥ ४० ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ २।२।४१ ॥

—१३ **लोकन्यायेनेति** । यदियत्तापरिच्छिन्नं तदन्तवदिति लोकन्यायेनेत्यर्थः ।

**सूत्रार्थः**– प्रकृतिजीवानियमार्थमङ्गीकृतस्येश्वरस्य नियमनं परिच्छेदाभावे न संभवेत् । अतः परिच्छेदाङ्गीकारे जीवप्रकृत्योरन्तवत्त्वं स्यात् । तत्परिहारार्थं तयोर्विभुत्वे नित्यत्वे चाङ्गीकृते संबन्धाभावादीश्वरस्यासर्वज्ञता वा स्यादिति ॥ ४१ ॥

इति सप्तममधिकरणम् ।

---

## उत्पत्त्यसंभवात् ॥ २।२।४२ ॥

—२१ अन्यान्यत्वमिति । अन्ययोः प्रद्युम्नानिरुद्धयोरन्यत्वं जडत्वम् ।

—२२ सर्वनाश इति । उत्पन्नस्य नाशावश्यंभावित्वात् । अस्य तन्त्रस्य भगवत्प्रणीतत्वेऽप्यस्यांशस्याप्रामाण्यम् । तत्र गौतमशप्तानां मुनीनां विमोहनाय मध्ये वेदविरुद्धांशस्योक्तिरिति कूर्मसाम्बपुराणादिवचोभिर्ज्ञेयम् । तथाहि–कौर्मे चतुर्दशाध्याये ।

तस्माद्वै वेदबाह्यानां रक्षणार्थाय पापिनाम् ।
विमोहनाय शास्त्राणि करिष्यावो वृषध्वज ॥
एवं संबोधितो रुद्रो माधवेन मुरारिणा ।
चकार मोहशास्त्राणि केशवोपि शिवेरितः ॥
कापालं लागुडं वामं भैरवं पूर्वपश्चिमम् ।
पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रशः ॥

साम्बपुराणे च–

पाञ्चरात्रं भागवतं तन्त्रं वैखानसाभिधम् ।
वेदभ्रष्टान् समुद्दिश्य कमलापतिरुक्तवान् ॥

इति ।

**सूत्रार्थः**– संकर्षणस्य जीवत्वाङ्गीकाराज्जीवोत्पत्तेरभावान्नेदं पाञ्चरात्रमतं युक्तम् । जीवस्योत्पत्तौ तस्यानित्यत्वेन मोक्षशास्त्रवैफल्यप्रसक्तेरिति ॥ ४२ ॥

## न च कर्तुः करणम् ॥ २।२।४३ ॥

१३९-३ अग्रिमस्य–अहङ्कारस्य ।

**सूत्रार्थः**– कर्तुः संकर्षणसंज्ञकाज्जीवात्प्रद्युम्नाख्यं मन उत्पद्यत इति पाञ्चरात्रमतं तदसंगतम् । लोके कुलालादिकर्तृभ्यो दण्डादिकरणानामुत्पत्तेरदर्शनादिति ॥ ४३ ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ २।२।४४ ॥

—६ विज्ञानादिमन्त इति । विज्ञानैश्वर्यशक्तिबलवीर्यादिपारमेश्वरधर्मयुक्ताः । अप्रतिषेधः– अनियममम् ।

**सूत्रार्थः**– यद्येते सर्वेपि विज्ञानादिमन्तः परमेश्वरा उच्यन्ते तर्हि सर्वेष्वीश्वरत्वं प्रसज्येत। तथा चेश्वरबाहुल्यं स्यादिति॥ ४४॥

## विप्रतिषेधाच्च॥ २।२।४५॥

—१० **बहुकल्पनयेति**। प्रद्युम्नाख्यं मनोनिरुद्धोहङ्कार इत्यादयो बहुकल्पना इत्यर्थः। **वेदनिन्दयेति**। शाण्डिल्यश्चतुर्षु वेदेषु परं श्रेयोलब्ध्वा शास्त्रमिदमधीतवानिति वेदनिन्दयेत्यर्थः। **वेदप्रक्रियाविरोध इति**। तप्तचक्रादिधारणरूपसाधनप्रकाराद्विरोध इत्यर्थः।

**सूत्रार्थः**– पाञ्चरात्रमते कल्पनाबाहुल्याद्वेदनिन्दादर्शनाच्च विप्रतिषेधः। चकारेण वेदप्रक्रियाविरोधोपीति॥ ४५॥

इत्यष्टममधिकरणम्।

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालबोधिन्यां द्वितीयाध्यायस्य द्वितीयः पादः २।२

---

# द्वितीयाध्याये तृतीयः पादः॥ २।३॥

## न वियदश्रुतेः॥ २।३।१॥

—१७ तृतीयपादव्याख्यानप्रसंगेन तत्प्रयोजनं संगतिं च वदन्ति–**श्रुतिवाक्येष्विति**। पूर्वपादद्वयेन श्रुतिविरोधात्स्मार्तसांख्ययोगमतनिराकरणं कृतं तथा तर्कद्वारा काणादबौद्धादीनां च मतं निराकृतं तथाच श्रौतप्रमेयाविरोधः संपादितोधुना प्रसंगाच्छ्रौतवाक्यानां परस्पराविरोधः प्रदर्श्यते। इति पूर्वपादद्वयेनास्य संगतिः। **विप्रतिषेधपरिहारायेति**। सुन्दोपसुन्दन्यायेन विरोधकृतो यः प्रामाण्यप्रतिषेधस्तन्निकरणार्थमित्यर्थः।

—१८ **तदर्थे**– विरोधकृताप्रामाण्यनिरासार्थम्। **शक्त्यविरोधाभ्यामिति**। पूर्वेणान्वयः। तव च शक्त्यविरोधाभ्यां मीमांसायाः प्रवृत्तत्वादिति योजना। शक्तिः–वेदार्थसामर्थ्यम्। अविरोधः–वेदवाक्यानामविरोधः। यदा भगवता व्यासेनैवमाकलितं यल्लोका मौढ्यजन्यसंदेहाद्वेदार्थज्ञानेसमर्थास्तदा तेन वेदार्थभूतस्य ब्रह्मणः सामर्थ्यं वेदवाक्यानां परस्परविरोधाभावं च मनसिकृत्येयं मीमांसा प्रवर्तितेति भावः। ननु प्रथमपाद एवाविरोधो विचारितस्तेन गतार्थत्वमस्येति न वाच्यम्। तत्र केवलं ब्रह्मगताविरोधस्यैव प्रदर्शनात्। अत्र तु सर्वं ब्रह्मेति ब्रह्मवादे जडानां जीवानां च

ब्रह्मत्वाज्जडजीवसंबन्धिविरुद्धांशानिराकरणमस्तीत्याहुः- तथा चेति । चकार एवार्थे।

—२० ननु मुख्यस्यैव ब्रह्मणो विचार आवश्यको जडजीवयोस्तु ब्रह्मत्वं गौणमतो नावश्यकस्तद्विचार इत्यत आहुः- द्विविधेति । विस्फुलिङ्गन्यायेनेति। यथा वह्नेः स्फुलिङ्गाः सहसैवोद्भवन्ति न तु तत्र क्रमस्तथा क्रमरहिततयेत्यर्थः। एकः-अपर इति पाठे प्रकार इत्यध्याहार्यम्। ननु सर्वस्य ब्रह्मरूपत्व उत्पत्तिरेव न संभवति ब्रह्मणश्चाजत्वादिति शङ्कां वारयन्ति- सा चेति।

—२२ ननु तत्संबन्धं विना तद्रूपेणाभिव्यक्तिः कथमित्यत आहुः- सजडस्यैवेति। सजडस्यैव तस्य कार्यत्वात्। जीवस्य त्वंशेनैव कार्यत्वान्न नामरूपसंबन्ध इत्यन्वयः।

—२३ न नामरूपसंबन्ध इति । प्रतिनियतनामरूपसंबन्धाभाव इत्यर्थः। तथा च ब्रह्मणोनामरूपत्वं प्रतिनियतम्। एवंच प्रलयदशायां ब्रह्मणि लयानन्तरं जडजीवयोर्नामरूपत्वाभावान्न प्रतिनियतनामरूपसंबन्ध इति भावः।

—२४ ननु यद्यपि यथा कुण्डलादि सुवर्णकार्यं न सुवर्णशकलं तत्कार्यम्। एवं जीवस्य न ब्रह्मकार्यत्वं किंतु तद्रूपत्वम्। ततश्च ब्रह्म जीवकारणमिति न संगच्छेत तेन तन्नियाम्यत्वं जीवे न स्यादत आहुः-अनित्य इति। अनित्ये-घटपटादौ। जननं-उत्पत्तिरूपा सृष्टिरित्यर्थः । परिच्छिन्नमपरिच्छिन्नमिति द्विविधं नित्यम्। नित्ये परिच्छिन्नेणुरूपे जीवे । समागमः-शरीरसंबन्धरूपाभिव्यक्तिः।

—२५ नित्यापरिच्छिन्नतनौ-ब्रह्मणि। प्राकट्यं-अभिव्यक्तरूपा सृष्टिः। एवं-उत्पत्तिशरीरसंबन्धकेवलाभिव्यक्तिरूपा त्रिविधाप्यभिव्यक्तिर्ब्रह्माधीना तेन जीवेपि ब्रह्मकारणकत्वं निराबाधम्।

१४०-१ तत्र- द्विविधसृष्टिमध्ये।

—७ गौणीति। ईक्षापूर्वकत्वाभावादित्यर्थः।

—१० मुख्ये क्रमसृष्टाविति । क्रमसृष्टिविषय ईक्षाप्रतिपादकत्वेन मुख्यवाक्ये ॥ १ ॥

सूत्रार्थः-आकाशं नोत्पद्यते । सृष्टिनिरूपणे च्छान्दोग्योपनिषदि तदुत्पत्तेरश्रावणादिति।

## अस्ति तु ॥ २।३।२ ॥

—१३ सिद्धान्तोयमिति बोधयन्ति-तुशब्द इत्यादिना।

—१४ एकवाक्यत्वायेति । तथाचैकविज्ञानेन सर्वविज्ञानमिति प्रतिज्ञानुरोधात्तैत्तिरीयवाक्ये सृष्ट्यर्थमीक्षाया आकाङ्क्षा । छान्दोग्यवाक्ये सृष्ट्यर्थमाकाशादीनामाकाङ्क्षा । क्रमसृष्टिस्तूभयत्राप्यर्थ इत्येकवाक्यतेत्यर्थः ॥ २ ॥

सूत्रार्थः-तैत्तिरीयके तु तदुत्पत्तिरास्ति । तदेकवाक्यतया छान्दोग्येपि साङ्गीकर्तव्येति ।

## गौण्यसंभवात् ॥ २।३।३ ॥

—१७ सूत्रत्रयेण पूर्वपक्षमाहुः-वियदुत्पत्तिरिति । गौणीति । आवरणनिवारणरूपतया तैत्तिरीयकोक्ताकाशोत्पत्तिर्गौणी भविष्यतीत्यर्थः ।

—१८ मुख्ये-छान्दोग्यवाक्ये ।

—१९ तदधिष्ठानत्वेनेति । ब्रह्माधिष्ठानत्वेन ब्रह्मांशत्वेन ब्रह्मशरीरत्वेन वैकविज्ञानकोटिप्रवेशः । एवं चैतद्वाक्यमाकाशाधिष्ठानादिद्वारा ब्रह्मस्तावकं तेन नाकाशोत्पत्तौ तस्य तात्पर्यमिति भावः । लोकेपि गौणप्रयोगो दृश्यत इत्याहुः ॥ ३ ॥

सूत्रार्थः-शङ्कासूत्राणि त्रीणि । तैत्तिरीयस्थाकाशोत्पत्तिर्लाक्षणिकी । निरवयवव्यापकाकाशस्य मुख्योत्पत्तेरभावादिति ।

## शब्दाच्च ॥ २।३।४ ॥

—२२ श्रुत्यपेक्षया लोकोकिंचित्कर इति श्रुतिप्रमाणं दर्शयति सूत्रकारः-शब्दाच्चेति ॥ ४ ॥

सूत्रार्थः-वायुश्चान्तरिक्षं चैतदमृतं, आकाशवत्सर्वगतश्चेति श्रुतिशब्दैराकाशस्य नित्यत्वेन तदुत्पत्तिश्रुतिर्गौणीति ।

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ २।३।५ ॥

१४१-२ अनेन सूत्रेण संभूतपदस्य गौणत्वं न संभवतीत्याशङ्क्य परिहृतं तद्व्याख्यान्ति । नन्विति ।

—३ वृत्तिद्वयविरोध इति । आकाशादग्निरित्यादावनुवृत्तस्य संभूतपदस्यार्थो गौणत्वेन वादिना न गृह्यते तर्ह्यत्रैव गौणी परस्ताद्वाक्ये मुख्येत्येकस्यैव संभूतपदस्य वृत्तिद्वयं विरुद्धमित्यर्थः ।

—६ प्रयोगभेद इति । नन्वत्र वाक्यद्वये ब्रह्मशब्दद्वयं पठ्यते तत्र त्वेक एव संभूतशब्द इति प्रयोगभेद इत्यर्थः । आत्मसत्त्वेन-आत्मसत्तया । तत्सत्त्वं आकाशसत्ता । न तु पृथक्त्वेन ।

—८ इति सत्त्वगुणो वचनहेतुरिति । आत्मसत्तयाकाशसत्ता । कार्यत्वं नोत्पद्यतेतो हेतोः पृथक् सत्त्वरूपो य आकाशनिष्ठः सत्त्वगुणः स कार्य-

वाचकसंभूतपदस्य कार्यसदृशपृथग्भाववाचकत्वे हेतुः । एवंच गौर्वाहीक इत्यादिवद्गौणः प्रयोगः सत्त्वगुणेनेत्यर्थः ।

नन्वेवमाकाशं प्रति ब्रह्मणः कारणतानङ्गीकारे वाय्वादिवाक्येष्वात्मनः कारणताभावात्तत्तद्वाक्योक्तरीत्याकाशवायुवह्न्यादीनां कारणतास्वीकारेनेकेषां कारणता स्याद्ब्रह्मणश्च सा भज्येतैवंच ब्रह्मणः प्रशंसा न स्यात्तदभावे तन्निबन्धना गौणी लक्षणापि न स्यादित्यत आहुः-तत्तादिति । वायुसंभूतिवाक्य आकाशभावापन्नं ब्रह्म कारणमिति प्रकारेण सर्वत्र ब्रह्मैव कारणमित्यर्थः । लक्षणेत्यत्र युजूबोध्यः । न तु बहुव्रीहिस्तेनानेकप्रकारिकेति नार्थः ।

—९ नन्वेवमाकाशादिपदस्य तद्भावापत्तिविशिष्टे लक्षणा स्यादित्यत आहुः-तद्भावापत्तीति । तथाच घटेन जलमाहरेति वाक्ये च्छिद्रेतरत्वस्य यथा स्वभावादेव बोधस्तथार्थबलादेव तद्भावापन्नत्वं लभ्येत तेन न लक्षणेति भावः ।

—१० इदमिति । वक्ष्यमाणं दूषणमित्यर्थः ॥ ५ ॥

सूत्रार्थः-नन्वेकस्यैव संभूतशब्दस्याकाशः संभूत इत्यत्र गौणत्वमग्न्यादिषु मुख्यत्वमिति कथमिति चेन्न । यथा तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेत्यत्र प्रथमब्रह्मशब्दो मुख्यो द्वितीयो गौणस्तथात्राप्युपपत्तेरिति ।

## प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ २।३।६ ॥

—१३ छान्दोग्यश्रुतिरिति । एकविज्ञानश्रुतिः कथमिति प्रश्नस्योत्तरमाहुः । एकविज्ञानेत्यादि ।

—१४ अव्यतिरेकादिति । एतस्यैव व्याख्यानमनुद्गमादिति । अनुद्गमात्-अग्नेः स्फुलिङ्गानामिवाकाशस्य कार्यत्वेन ब्रह्मणः सकाशाद्व्युच्चरणात् ।

—१६ आकाशस्येति । एवं चाकाशज्ञानाभावे सर्वज्ञता विहन्येतेति भावः । लौकिकत्वादिति । आकाशे बलाकेति प्रत्ययान्मीमांसकैराकाशस्य लौकिकप्रत्यक्षत्वं स्वीक्रियते ।

—१७ तदेवाहुः-व्यवहारेत्यादि ।

—१९ वस्तुसामर्थ्यादिति । ज्ञानं भविष्यतीति शेषः ।

—२१ शब्दात्-वाक्यात् । एवंच यथाविभक्तस्याकाशस्य वस्तुसामर्थ्येन ज्ञानं विवक्षितं स्यात्तर्ह्यश्रुतं श्रुतमित्यादि न वदेदिति भावः ।

—२१ ज्ञानमिति । ज्ञानं व्युत्पादयतीत्यन्वयः ॥ ६ ॥

सूत्रार्थः- अतः परं परिहारः । आकाशोत्पत्तिर्नाङ्गीक्रियते चेत्सर्वविज्ञानप्रतिज्ञाबाधः । अव्यतिरेकादाकाशस्यानुद्गमात् । ननु वस्तुसामर्थ्येनैतादृश-

मपि ब्रह्मरूपमेकमस्तीति स्वीकारान्न प्रतिज्ञाभङ्ग इति चेन्न यतो येनाश्रुतमित्यादिशब्दैः श्रुतिः प्रकृतिविकृतिभावेनैकविज्ञानं व्युत्पादयतीति।

## यावद्विकारं तु विभागो लोकवत्॥ २।३।७॥

—२४ आकाशो जन्यो विकृतित्वादित्यनुमाने व्याप्तिमाहुः—यद्यदित्यादि।

१४२-३ आकाशोत्पत्तौ 'आकाशवत्सर्वगतश्च नित्यः' इत्यादिश्रुतीनां विरोधं परिहरन्ति-आकाशोत्पत्तावित्यादिना।

—८ ननु भवत्वेवं श्रुतीनां गतिस्तथाप्याकाशस्य नित्यतादिबोधने किं प्रयोजनमित्यत आहुः-व्यवहारे त्विति। आकाशशरीरमिति श्रुतिरुपासनार्था प्राचीनयोग्योपास्वेत्युपसंहारात्। यद्याकाशं नित्यं ब्रह्मशरीरं च न जानीयात्तर्हि कथमुपासीतेत्येतानि वाक्यान्यज्ञबोधकानि भवेयुः॥ ७॥

**सूत्रार्थः**-यद्विकृतं तस्य सर्वस्यापि विकृतिर्लोके दृष्टा। आकाशमपि लौकिकव्यवहारविषयत्वाद्विकृतं तेन तदुत्पत्तिरपि युक्तेति।

इति प्रथममधिकरणम्।

---

## एतेन मातरिश्वा व्याख्यातः॥ २।३।८॥

सैषानस्तमितेति श्रुतिर्बृहदारण्यके समानब्राह्मणे व्रतमीमांसायाम्॥ ८॥

**सूत्रार्थः**-एतेनाकाशोत्पत्तिस्थापनेन वायोरप्युत्पत्तिर्व्याख्यातेति।

इति द्वितीयमधिकरणम्।

---

## असंभवस्तु सतोनुपपत्तेः॥ २।३।९॥

—१६ उत्पत्तिः स्यादिति।

हरितो रोहितादासीद्धुन्धुस्तस्याभवत्सुतः।

इत्यादिपुराणवाक्येष्वस्तेरुत्पत्त्यर्थकस्य दर्शनात्सदेवेदमग्र आसीदिति वाक्येप्युत्पत्तिरूपोर्थः स्यादिति कश्चिच्छङ्कते वैताण्डिकः।

—१८ संभवतीति। आत्माश्रयतादोषादिति भावः॥ ९॥

**सूत्रार्थः**-सन्मात्रस्य ब्रह्मणस्तूत्पत्तिर्न संभवति। कार्योत्पत्तौ कारणोत्पत्तिर्नाङ्गीक्रियते। ब्रह्म स्वतो नोत्पद्यते। असंभवात्। अन्यतस्तदुत्पत्तौ त्वनवस्थाप्रसंग इति।

इति तृतीयमधिकरणम्।

---

## तेजोतस्तथा ह्याह ॥ २।३।१० ॥

१४३-३ छान्दोग्योक्तं ब्रह्मजत्वमेव कुतो न स्वीक्रियत इत्यत आहुः- ब्रह्मण एवेति ।

**सूत्रार्थः**-अस्माद्वायुस्वरूपाद्ब्रह्मणस्तेजस उत्पत्तिस्तथैव वायोरग्निरिति श्रुतिराहेति ।

इति चतुर्थमधिकरणम् ।

---

## आपः ॥ २।३।११ ॥

—६ तथा ह्याहेत्येवेत्येवकारेणात इत्यस्यानुवृत्तिव्यवच्छेदः ॥ ११ ॥

**सूत्रार्थः**-तेजःस्वरूपाद्ब्रह्मण आपः संभूता अग्नेराप इति श्रुतेरिति ।

इति पञ्चममधिकरणम् ।

---

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ २।३।१२ ॥

—१३ उपजीव्यश्रुतेः-तैत्तिरीयश्रुतेः ।

—१५ तथा सतीति । विषयवाक्येऽन्नपदस्य पृथिव्यां लक्षणा कृता चेत् साक्षादेवाद्भ्यः सकाशात्पृथिव्युत्पत्तिः प्रतीयते । तैत्तिरीये तु लक्षणां विनैवाद्भ्यः साक्षात् पृथिव्युत्पत्तिः । व्यवधानेनान्नोत्पत्तिः । एवंच व्यवधानेनाद्भ्यः सकाशादन्नोत्पत्तिर्वा लक्षणादरणं वा कर्तव्यमिति संशयः ।

—१७ पुनः शङ्का-नन्विति । एवंच लक्षणा न स्वीकर्तव्या । व्यवधानेनाद्भ्योऽन्नसृष्टिरित्येव स्वीकर्तव्यं प्रायपाठस्योपजीव्यश्रुत्यपेक्षया नैर्बल्यादेव संदेहनिवृत्तेरधिकरणारम्भो व्यर्थ इति शङ्काकृदाशयः ।

—१८ अपेक्षाभावादिति । तथाच तैत्तिरीयश्रुतेरिव च्छान्दोग्यश्रुतेर्मुख्यत्वं नास्तीति भावः । एकपदलक्षणापेक्षयेति । छान्दोग्यस्थ एकस्मिन्नन्नपदे पृथिवीरूपार्थलक्षणा स्वीक्रियते तदपेक्षया ।

—१९ पूर्वोक्त एवेति । पूर्वोक्तेऽन्नपद एव संशयो न तु पृथिव्युत्पत्ताविति नाधिकरणारम्भो व्यर्थ इत्यर्थः ।

**सूत्रार्थः**- ता अन्नमसृजन्तेति श्रुतावन्नशब्देन पृथिवी ग्राह्या । यतो भूतानामेवाधिकारो न भौतिकान्नस्य । तथा नीलरूपमपि पृथिव्यामेव संभवति । अद्भ्यः पृथिवीति श्रुत्यन्तरमप्यत्रैवार्थ उपोद्बलकमिति । सर्वत्रोपलभ्यत इति । देहलीदीपन्यायेनान्नपदस्योत्तरत्रापि संबन्धः ॥ १२ ॥

इति षष्ठमधिकरणम् ।

---

## तदभिध्यानादेव तल्लिङ्गात्सः ॥२।३।१३॥

१४४-७ तदभिध्यानमिति। आकाशरूपः स्यां वायुरूपः स्यामित्यादि तदभिध्यानम्।

—९ सर्वत्र वेदान्तेष्विति। स विश्वकृद्विश्वविदात्मयोनिरित्यादिषु। सिद्धमिति। एवमेव पौराणिकमहदादिसृष्टिषु ज्ञेयमर्थान्महतः सकाशाद्या सृष्टिरुच्यते सा ब्रह्मण एवेति ज्ञेयम् ॥ १३ ॥

**सूत्रार्थः**–आकाशादिभावापन्नब्रह्मण एव वाय्वादिकार्यं न तु केवलाकाशादिभ्यः। सर्वकार्यकर्तृत्वरूपाद्ब्रह्मणो लिङ्गात्। स आत्मा सर्वं सृजतीति।

इति सप्तममधिकरणम्।

---

## विपर्ययेण तु क्रमोत उपपद्यते ॥ २।३।१४ ॥

—१४ उपपद्यत इति। अत्र वैशेषिकादिवद् ध्वंसरूपो लयो न किंतु कारणे प्रवेशरूपः स विपरीतक्रमेणैव योग्यः। युगपत्प्रलये युगपत्सृष्टिः। क्रमेण प्रलये विपरीतक्रमेण सृष्टिरत उक्तं-क्रमसृष्टाविति ॥ १४ ॥

**सूत्रार्थः**– उत्पत्तिक्रमेण न लयः किंतु वैपरीत्येन। उत्पत्त्यनन्तरं प्रलयस्य सत्त्वात्तथैवोपपद्यते। प्रवेशवैपरीत्येन निर्गमनदर्शनादिति ॥

इत्यष्टममधिकरणम्।

---

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ २।३।१५ ॥

—१९ क्रमसृष्टिप्रसंगेन जीवमनसोरपि क्रमसृष्टौ निवेशो नास्तीति विचारयितुमेतदधिकरणं रचयन्ति।

—२० परमात्मेति। अयं सर्वेषां कारणीभूतो वाक्यषट्कात्पूर्वं ब्रह्मविदाप्नोति परमित्यनेनोक्त इत्यर्थः।

—२१ तत्र पूर्वपक्षी आह–क्रमेणेति।

—२२ प्रातिलोम्येनेति। सूत्रकारस्य विवक्षित इति शेषः ॥ १५ ॥

**सूत्रार्थः**– अन्नमयादिपञ्चकोशमध्ये विज्ञानमनसी उक्ते ते प्रतिलोमक्रमेणोत्पन्ने वक्तव्ये। अग्रेकथनात्मकाल्लिङ्गात्। ततस्तयोरुत्पत्तिर्वक्तव्येति

चेन्न नामरूपात्मकविशेषाभावात् । नामरूपात्मकविशेषयुक्तानामेवोत्पत्ते-रुच्यमानत्वादिति ।

चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भाव-भावित्वात् ॥ २।३।१६ ॥

१४५-९ अनित्ये जननमिति । अस्य पादस्य प्रथमसूत्रे व्याख्यातमेतत् । शरीरे इति प्रथमाद्विवचनम् । तयोरिति सप्तम्या द्विवचनम् ।

—१२ स तु स्यादिति । जायमानः शरीरमभिसंपद्यमान उत्क्रामन् म्रियमाण इति श्रुत्या देहसंबन्धेनैव जननमरणयोः कथितत्वाद् देहसंबन्धस्तु स्यादेवेत्यर्थः । भाक्तो लाक्षणिक इति पर्यायौ । स्पष्टप्रतिपत्तये पर्यायोक्तिः।

—१५ तद्भावभावित्वादिति । शरीराभिमानरूपात्संबन्धादित्यर्थः ।

—१६ तद्भावित्वं-तदभिमानित्वम् ॥ १६ ॥

सूत्रार्थः-स्थावरजङ्गमशरीरसंबन्ध एव जीवस्योत्पत्तिर्नतु स्वतः । शरीर-जन्ममरणादिना जीवस्य जन्ममरणादिव्यपदेशो लाक्षणिकः । यतो देहान्व-यव्यतिरेकाभ्यां जीवोपलब्ध्यनुपलब्धी भवत इति ।

इति नवममधिकरणम् ।

---

नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ २।३।१७ ॥

—२३ ननु बृहदारण्यके यथाग्नेः क्षुद्रा विस्फुलिङ्गा इत्यनेन जीवव्युच्चरणं श्रूयते सैवोत्पत्तिरिति चेन्नेत्यत आहुः- विस्फुलिङ्गवदिति । नामरूप-संबन्धाभावादिति । नामरूपसंबन्ध एवोत्पत्तिमत्त्वमित्यत्र विनिगमकं यथोर्णनाभिः सृजते-इत्यादिना पूर्वमुक्त ऊर्णनाभिदृष्टान्त एव ।

—२६ इत्येवमादिभ्य इति । आदिपदेन नित्यो नित्यानां, अजो नित्यः शाश्वत इत्यादीनां श्रुतीनां संग्रहः ॥ १७ ॥

सूत्रार्थः-आत्मा नोत्पद्यते । श्रुतौ तदुत्पत्तेरश्रूयमाणत्वात् । किंचायमात्मा-जरोमर इति श्रुतिभ्य आत्मनो नित्यत्वाज्जीवस्य नोत्पत्तिरिति । गुणानिति । धर्मानित्यर्थः ।

इति दशममधिकरणम् ।

---

ज्ञोत एव ॥ २।३।१८ ॥

१४६-५ शाङ्करमतं खण्डयन्ति-सर्वविप्लववादीति । सर्वविप्लववादित्वं-वासतोऽसत्त्वात्-इत्यत्र भाष्ये पुराणवचनेनोक्तम् ।

—७ जीवत्वस्य कल्पितत्वान्न स्वरूपनाश इत्यतः प्रश्नोत्तरे आहुः- जीवत्वमिति।

—१२ श्रुतिसूत्रनाशं स्पष्टयितुं तान्युदाहरन्ति-यः सर्वज्ञ इत्यादि।

—१५ स्वीकृत्य-अंशत्वत्यागेन तथात्वमङ्गीकृत्य। अपरावतार इति। पुराणवचनप्रामाण्याद्भगवदाज्ञयाशिवावतारे शङ्कराचार्ये माध्यमिकोप्याविष्ट इति भावः। एवंच ज्ञानधर्मा ज्ञातस्वरूपश्च जीव इति सिद्धम् ॥ १८॥

सूत्रार्थः- विज्ञानमय इत्यादिश्रुतिभ्य आत्मा ज्ञश्चैतन्यरूपो बोध्य इति।

इत्येकादशमधिकरणम्।

---

## उत्क्रान्तिगत्यागतीनाम् ॥ २।३।१९ ॥

—२३ अधिकरणप्रयोजनमाहुः-यद्यपीति।

१४७-१ उत्क्रान्तिशब्दस्य प्रथमप्रयोगे बीजमाहुः- ब्रह्मवैलक्षण्यार्थमिति आसीनो दूरं व्रजतीत्यादिना ब्रह्मणोपि गतेरुक्तत्वात्तद्वैलक्षण्यं गतौ बोधयितुमुत्क्रान्तिशब्द आदौ प्रयुक्त इत्यर्थः ॥ १९॥

सूत्रार्थः- स यदास्माच्छरीरादुत्क्रामतीति श्रुतिभिर्जीवोत्क्रान्तिगत्यागतीनामुक्तत्वात्तस्य परिणामोऽङ्गीकर्तव्य इति।

## स्वात्मना चोत्तरयोः ॥ २।३।२० ॥

—४ परिष्वङ्गः। संबन्धः।

—९ ब्रह्मोपनिषदिति। छान्दोग्योपनिषदित्यर्थः।

—१० अनुसंचरन्निति वेति। एवं चैतच्छ्रुत्युक्तयोर्गत्यागत्योः केवलस्वरूपेणैव साध्यत्वात्स्वतोणुरेव। एवंचाणुरूपं तस्य परिमाणम्।

—११ अस्मिन्नर्थे सूत्रस्थचकारवैयर्थ्यमित्यरुचेः प्रकारान्तरमाहुः— अथवेति।

—१२ ननूत्क्रान्तौ जीवस्य स्वतस्त्वं कुतो नास्तीत्याहुः— अङ्गुष्ठमात्रमिति ॥ २०॥

सूत्रार्थः-ऊर्णनाभिर्यथा तन्तून्सृजते संचरत्यपि। जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः॥ इति श्रुत्युक्तगत्यागत्योः स्वरूपेणैव संभवात्तदनुरोधेन जीवस्याणुत्वं स्वीकर्तव्यमिति।

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २।३।२१ ॥

—२० प्रकरणेनेति । ब्रह्मप्रकरणे पठिताः शब्दा ब्रह्मपरा एवेति नियम्यन्त इत्यर्थः ॥ २१ ॥

**सूत्रार्थः**–ननु स वा एष महानज इति श्रुत्याणुत्वविपरीतव्यापकत्वोक्तेर्जीवो नाणुरिति चेन्न तत्र श्रुतौ परब्रह्मणोधिकारादिति ।

## स्वशब्दोन्मानाभ्यां च ॥ २।३।२२ ॥

—२२ वस्त्वन्तरं पृथक्कृत्य यन्मानं तदुन्मानम् ॥ २२ ॥

**सूत्रार्थः**-स्वयं विहृत्येति श्रुतौ स्वशब्दो जीवस्याणुपरिणामं ज्ञापयति । बालाग्रशतभागस्येत्यादावुन्मानं ज्ञायते । चकारात् स्वप्नप्रबोधसंधावागतिदर्शनम् । एभिर्हेतुभिर्जीवस्याणुत्वं सिध्यतीति ।

## अविरोधश्चन्दनवत् ॥ २।३।२३ ॥

१४८–५ यथा चन्दनमिति । ज्वरं हन्ति शिरोबद्धा सहदेवीजटा यथा-इत्यादिना वैद्यकवाक्येन प्रभावेण सहदेवीजटया शिरोदेशस्थया यथा सर्वशरीरस्थज्वरनाशस्तथा चन्दनमप्येकदेशस्थं सर्वदेहसुखकृत् ॥ २३ ॥

**सूत्रार्थः**–यथैकदेशस्थितमपि चन्दनं सकलदेहं सुखयति तथा जीवो ह्येकदेशस्थितोपि सकलदेहचैतन्यं संपादयतीति ।

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २।३।२४ ॥

— ९ नेत्यादि संभवतीति । प्रत्यक्षेणैकदेशावस्थानस्यानिश्चयात् । अनुमानस्य व्यभिचरितत्वाच्च ।

—१२ स्थितिरिति । हृद्येष आत्मेत्यादिश्रुतेः । युक्तिरिति । ब्रह्माभिन्नत्वेन हृदयप्रवेशो युक्तिः ॥ २४ ॥

**सूत्रार्थः**–ननु चन्दनेवास्थितिवैशेष्यात्त्वचि सम्यगवस्थानात्त्वच एकत्वात्सकलशरीरे सुखमुत्पद्यते । अत्र तु तथा न संभवतीति चेन्न जीवस्यापि स्थानविशेषाभ्युपगमात् । तत्स्थानं हृदयमेवेति ।

## गुणाद्वा लोकवत् ॥ २।३।२५ ॥

—१३ ननु वैशेषिकमते यावद्गुणिवृत्तित्वं गुणस्य ततश्च जीवस्याणुत्वस्वीकारे तदीयचैतन्यं सर्वशरीरव्यापि न स्यादतः सूत्रमुपन्यस्यन्ति–गुणाद्वेति । अविरोध इत्यनुवर्तते ।

—१४ सः–गुणः ।

—१५ ननु प्रभाया द्रव्यत्वमङ्गीक्रियत इत्यत आहुः–प्रभाया इति ।

—१६ उदकगतौष्ण्यवदिति। यथोष्णजलस्थोष्णस्पर्शो गुणत्वं तद्वत्। विजातीयस्यारम्भकमिति। यथा चिन्तामणिश्चिन्तितानामन्यवस्तूनामुत्पादकस्तथेत्यर्थः। एवंच मणिभिन्नः पदार्थः प्रभां नारम्भयाति प्रमाणाभावात्।

— १७ सर्वैर्वादिभिरिति। महत्परिमाणवादिभिः। मणिप्रभा तु मण्यतिरिक्ते स्थले प्रतीयते तत्र सर्वैर्वादिभिरुपपत्तिः कर्तव्येति भावः। कल्प्यतामिति। विशिष्टकल्पनापेक्षया विशेषणकल्पनायां लाघवात्।

—२० वाशब्द इति। एवंच वाशब्द एवकारार्थे वाक्यालङ्कारे। तथा च लोकवदेव गुणादविरोध इति सूत्रयोजना।

—२१ ब्रह्मसिद्धान्ते-ब्रह्मैव सर्वकारणमिति सिद्धान्ते। यथैवेति। लोके यस्माद्यथाजातं तथेत्यर्थः॥ २५॥

**सूत्रार्थः**– लोके यथाल्पोपि मणिः कान्त्या बहुदेशं व्याप्नोति तथा जीवः स्वरूपतोणुरपि सकलशरीरव्यापिचैतन्यगुणादखिलं शरीरं व्याप्नोतीति।

## व्यतिरेको गन्धवत्॥ २।३।२६॥

—२३ गुणस्य स्वाश्रयाधिकवृत्तौ दृष्टान्तमाहुः-व्यतिरेक इत्यादिसूत्रेण।

—२६ ननु यावत्पर्यन्तं गन्धो वाति तावत्पर्यन्तं चम्पकगमनं स्वीक्रियत इत्यत आहुः–अन्यथेति।

—२७ अवोचामेति। पूर्वसूत्र इति शेषः॥ २६॥

**सूत्रार्थः**– यथा चम्पकपुष्पगन्धस्तानि पुष्पाणि विनापि दूरे देश उपलभ्यते तद्वज्जीवस्य चैतन्यगुणः।

## तथाच दर्शयति॥ २।३।२७॥

**सूत्रार्थः**– जीवो हृदयस्थानोणुपरिणाम इत्युक्त्वालोमभ्य इति श्रुतिस्तस्य चैतन्यगुणेन सकलशरीरास्थितिं ब्रूत इति।

## पृथगुपदेशात्॥ २।३।२८॥

**सूत्रार्थः**– प्रज्ञया शरीरमारुह्येति श्रुतौ प्रज्ञायाः कारणत्वेन पृथक्कथनाच्चैतन्यं जीवगुण इति।

इति द्वादशमधिकरणम्।

---

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्॥ २।३।२९॥

१४९-१२ भगवद्व्यपदेश इति। भाक्त इत्यर्थः।

—१७ प्राज्ञश्चेति । सुषुप्तिसाक्षी जीवाभिन्नो ब्रह्मांशः परमेश्वरस्यैव रूपान्तरं विश्वो वैश्वानरः प्रथमः पादस्तैजसो हिरण्यगर्भो द्वितीयः प्राज्ञस्तृतीय इति नृसिंहतापनीयोक्तेः ।

—१८ ब्रह्मलिङ्गादिति । ब्रह्मलिङ्गत्वादित्यर्थः ।

—२२ समन्वयनिरूपणे-प्रथमाध्याये ।

—२३ अविरोधे-द्वितीयेध्याये । अविरोधेनेति पाठे तु प्रतिपाद्येत्य-नेनान्वयः । ऐक्येपि-अंशांशिभावेनैक्येपि ।

१५०–४ शाङ्करमतमुपपादयन्ति-तत्रेति । स्वीकृत्य-महावाक्यत्वेनादृत्य ।

—८ वेदसूत्राणि-वेदसहितानि व्याससूत्राणि । व्याकुलीचकार-तत्र तत्रार्थान्तरं चकारेत्यर्थः ॥ २९ ॥

सूत्रार्थः- प्रज्ञाद्रष्टृत्वादिब्रह्मगुणप्रधानत्वाज्जीवे ब्रह्मत्वव्यपदेशः । यथा तद्वा अस्यातिच्छन्दोपहतपाप्मेत्यादिना प्राज्ञस्वरूपमुक्तम् ।

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ २।३।३० ॥

१५०–१२ व्यपदेशविषय एव कश्चन दोष आशङ्क्य परिह्रियतेनेन सूत्रेणातस्तं दोषं दर्शयन्ति-ननु कथमिति । अन्यस्य-ब्रह्मभिन्नस्य ।

—२१ पश्चात्-संसारदशोत्तरम् ।

—२२ तथैव-ब्रह्मभावपूर्वकांशत्वेन । अनावृतैश्वर्यादीनामिति । आवरणरहितैश्वर्यादीनां छान्दोग्य उक्तत्वादित्यर्थः ।

—२३ ननु प्राज्ञेप्येवमनावृतैश्वर्यं श्रुतौ वक्तुं शक्यत इत्यत आहुः-प्राज्ञा-दिति । संपन्नत्वं-सम्यक्तयानन्दप्राप्तिमत्त्वं तथाच श्रुतौ प्राज्ञ ईश्वरस्तृतीयः पाद इत्युपक्रम्य प्राज्ञस्य प्रशंसां कृत्वा तुरीयव्याख्यान ईश्वरग्रासस्तुरीय इति वचनेन प्राज्ञलयोक्त्यानन्दस्य तिरोभावः । जीवस्य तु स्वस्वरूपावस्था-नोक्त्या सर्वदानन्दस्य सत्त्वेन प्राज्ञाज्जीवे विशेष इति भावः ।

—२५ व्यपदेशो वेति । वाशब्दो वाक्यालङ्कारे । एवं जीवस्य ब्रह्म-भावं व्याख्याय व्यापकत्ववाक्यानि समर्थयन्ति ।

—२६ एतदेवोक्तमिति । उक्तं निबन्ध इति शेषः ।

व्यापकत्वश्रुतिरित्यादेरर्थः । तस्य ब्रह्मभावं प्राप्तस्य जीवस्य भगवत्त्वेन व्यापकत्वश्रुतिर्युज्यते नतु जीवत्वेन रूपेण ।

—२८ आनन्दांशाभिव्यक्तौ-ब्रह्मभावे सति तस्य तद्विरुद्धधर्माधारत्वं भवति ततस्तत्र ब्रह्माण्डकोट्यः परिच्छेदो व्यापकत्वं च प्रतीयेरन् । एवंच यथा कृष्णो भगवान् उत्सङ्गे स्थितोपि यशोदया मृत्स्नाभक्षणादिप्रसंगे सकलजगदाधारो दृष्टस्तथा जीवोणुरपि ब्रह्मभावेणुत्वाविरोधेनैव व्यापकः

सर्वजगदाधारश्चास्ति । अत एव-तदेतद्दृषिः पश्यन्, पुत्रेति तन्मयतयेत्यादि-श्रुतिस्मृतिभिः प्रतिपादितम् । जीव उपाधिना कल्पित इत्यप्यसंगतम् । अंशत्वेन निरूपणात् ।

सूत्रार्थः—यावदयमात्मानन्दांशप्राकट्येन ब्रह्म भवति तावदयं व्यपदेशः। पश्चाद्ब्रह्मधर्माणामाविर्भावाद्ब्रह्मत्वं युक्तमेव । तेनापकृष्टस्योत्कृष्टत्वकथनरूपो दोषो न यतस्तदानीं ब्रह्मधर्माणां स्वस्मिन् दर्शनमस्तीति ।

## पुंस्त्वादिवत्त्वस्य सतोभिव्यक्तियोगात् ॥ २।३।३१ ॥

१५१—३ व्यक्तियोग इति । मोक्षदशायामिति शेषः ॥ ३१ ॥

सूत्रार्थः—यथा रेतःसेकसामर्थ्यलक्षणं पुंस्त्वं बाल्ये विद्यमानमेव यौवने प्रकटितं भवति तथानन्दांशस्यापि संसारदशायां तिरोहितस्य ब्रह्मभाव आविर्भावः।एवंच जीवस्य संसारदशायामप्यानन्दांशस्य नात्यन्तमभावः किंतु तिरोधानम् इति ।

## नित्योपलब्ध्यनुपलब्धिप्रसंगोन्यतरनियमो वान्यथा ॥ २।३।३२ ॥

—११ पूर्वोक्त एवेति । संसारदशायामप्राकट्यं मोक्षदशायां प्राकट्यमिति पूर्वोक्तः प्रकारः ॥

सूत्रार्थः—यदि संसारदशायामप्यानन्दो जीवस्य प्रकट इत्युच्येत तर्ह्यानन्दांशस्य नित्यमुपलम्भः स्यात् ।एवंच संसारासंभवः अथ जीवस्य सर्वदैवानन्दांशानुपलम्भः स्वीक्रियते तर्हि मोक्षो न स्यात् । अथान्यथानुपपत्त्या जीवो निरानन्दो ब्रह्म त्वानन्दमयमित्येकतरनियमोङ्गीक्रियते चेद्ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतिविरोध इति ।

इति त्रयोदशमधिकरणम् ।

---

## कर्ता शास्त्रार्थवत्त्वात् ॥ २।३।३३ ॥

—१६ शास्त्रार्थवत्त्वादिति । शास्त्रस्यार्थवत्त्वं तस्मात् । स्वर्गकामो यजेतेति शास्त्राणां सार्थक्यात् । तथाहि जीवो यदि कर्ता नेष्येत तर्हि स्वर्गकामादिपदवैयर्थ्यद्वारा तत्तद्वाक्यानि व्यर्थानि भवेयुः ।

—१७ अनुपयोगादिति । ब्रह्मणोकामत्वेनेत्यर्थः ।

—१८ अशक्यत्वादिति ।कामनाभावेनेत्यर्थः ।गीतादिवाक्ये संदेहे सति किं कर्तव्यमित्याहुः— संदिग्धेपीति । तथैव-कर्तृत्वमेव ॥ ३३ ॥

**सूत्रार्थः**—कर्ता जीव एव । अन्यथा ज्योतिष्टोमादिविधायकश्रुतिवैयर्थ्यमेव । तथाहि ब्रह्मणः कर्मानुपयोगाज्जडप्रकृतेरशक्यत्वात्कर्मविधयो व्यर्थाः स्युरिति ।

## विहारोपदेशात् ॥ २।३।३४ ॥

—२० **विहारः**—स्वेच्छाक्रियात्मकभोगः ।

—२१ **उपदिष्टः**—दहरविद्यायामिति शेषः ॥ ३४ ॥

**सूत्रार्थः**—यद्यत्कामयते तत्तद्भवतीति श्रुत्या जीवस्यैव गन्धर्वादिलोके विहारकथनात्स एव कर्तेति ।

## उपादानात् ॥ २।३।३५ ॥

—२४ **तदेषां प्राणानामिति** । बृहदारण्यकदृप्तबालाकिब्राह्मणस्था श्रुतिः । मतान्तरमनुवदन्ति दूषयितुं विकल्पयन्ति च ।

—१५२-५ **जडत्वादिति** । बुद्धिर्जडा तेन तस्याः कर्तृत्वं चेतने समायातीति विपरीतम् । **अनङ्गीकारात्**-सूत्रकृतेति शेषः । **निराकृतत्वाच्चेति** । रचनानुपपत्तेश्चेत्यादिसूत्रे । **उपादानविरोधश्चेति** । श्रुतौ प्राणानामुपादानं श्रूयते बुद्धिश्च प्राणान्तर्गतैवातो बुद्धिसंबन्धेनोद्गमाङ्गीकारे प्राणोपादानविरोधस्तेन द्वितीयोपि पक्षो न ।

—६ **शास्त्रविरोध इति** । सर्वोपनिषत्प्रतिपादितकर्तृत्वविरोधः ।

—७ **सर्वविप्लवः**—मायावादः । **माध्यमिकवत्**—शून्यवादिबौद्धवत् ॥३५॥

**सूत्रार्थः**—नन्विन्द्रियैः कर्मकरणदर्शनात्तेषामेव कर्तृत्वमस्त्विति चेन्न तदेषां प्राणानां विज्ञानेनेति श्रुत्या सर्वेन्द्रियाणां जीवेनोपादानाज्जीव एव कर्तेति ।

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ २।३।३६ ॥

—१० **व्यपदेशः**—प्रथमान्ततया कर्तृत्वेन निर्देशः ।

—११ **अत्रेति**—अस्यां श्रुतौ विज्ञानपदेन बुद्धिर्गृह्यते ।

—१२ **जीवस्य कर्तृत्वमिति** । तथाच क्रियायामेव जीवस्य कर्तृत्वं नेति पूर्वपक्षाशयः । तथा सति-विज्ञानपदेन बुद्धेरेव ग्रहणे सति ।

—१४ ननु स्थाली पचतीत्यादिवत् कारकमात्रस्य स्वस्वव्यापारे स्वातन्त्र्यादत्र निर्देशविपर्ययो न भविष्यतीत्याहुः-**अथेति** ।

—१५ समादधते-**तथापीति** । विज्ञानमयमुपक्रम्य विज्ञानं यज्ञं तनुते इति वाक्यं पठितं ततश्चात्र बुद्धिवाचकत्व उपक्रमेपि बुद्धिविकारवाचकत्वं स्यादित्याहुः-**पूर्वेति** ।

—१६ द्र्यच्त्वादिति । द्र्यचश्छन्दसीति पाणिनिसूत्रेण द्र्यच्स्थल एव विकारार्थे मयटो विधानात्। ननु विज्ञानमादायेत्यत्र विपर्ययस्य सत्त्वादत्रापि स स्वीक्रियते को दोष इत्यत आहुः-विज्ञानमिति । एकस्येति । एवंच तत्र स्थलभेद एकं प्राणवाचकमत्रतु पूर्वोक्तोपक्रमपठितस्यैव परामर्शाद्विपर्ययो दोष एवेति भावः ।

—१७ ननु विज्ञानपदस्य जीववाचकत्वे विज्ञानमानन्दं ब्रह्मेत्यत्र विज्ञान-पदं गौणं स्यादित्यत आहुः-भगवतीति । औपचारिकत्वेत्यादि । सर्वे वेदा यत्पदमामनन्तीति श्रुतेः ।

—१८ नन्वेतत्कथनं तदा संभवति यदि विज्ञानमय इत्यत्र विकारार्थक-मयट्प्रत्ययो न चेत् । परं तादृशप्रत्ययस्तु वर्तते छन्दसि विकल्पेन मयड्-विधानादित्यत आहुः-यज्ञ इति ।अत्र तैत्तिरीयप्रथमाष्टकसप्तमप्रपाठकस्थ-मन्त्रे यज्ञकर्तृत्वेन यज्ञरूपत्वं यजमानस्य कल्पनयोपदिश्यते तेन विज्ञानं यज्ञं तनुते इत्यत्र यज्ञकर्तृत्वं जीवस्यैव न तु बुद्धेरित्यर्थः । हेत्वन्तरं चाहुः-श्रद्धादीनामिति । श्रद्धैव शिर इति श्रद्धाया जीवधर्मत्वादित्यर्थः ॥ ३६ ॥

सूत्रार्थः-विज्ञानं यज्ञमिति श्रुतिवाक्ये यागादिक्रियासु जीवस्यैव कर्तृ-त्वेन व्यपदेशाज्जीव एव कर्ता । अन्यथा विज्ञानेन विज्ञानमादायेति श्रुतिव-द्विज्ञानेन यज्ञं तनुत इति श्रुतेर्विपर्यासः कर्तव्यो भवेदिति ॥

## उपलब्धिवदनियमः ॥ २।३।३७ ॥

—२२ जीवस्य कर्तृत्वे स्वातन्त्र्यमेव प्राप्तं ततश्च स स्वस्य हितमेव कुर्यान्नाहितमिति पूर्वपक्षकृदाशयः ॥ ३७ ॥

सूत्रार्थः- ननु जीवस्य कर्तृत्वं हिताकरणं न संगच्छत इति चेन्न यथा चक्षुषाभिमतमनभिमतमुपलभते जीवस्तथेन्द्रियैः कर्म कुर्वन्निष्टमनिष्टं वोपलभत इति ।

## शक्तिविपर्ययात् ॥ २।३।३८ ॥

—२७ करोतीति । अतोहितकरणं न साहजिककर्तृत्वबाधकमित्यर्थः॥३८॥

सूत्रार्थः-नन्वेवमपि जीवस्य क्रियायां स्वातन्त्र्ये हिताकरणं न संगच्छत इति चेन्न जीवशक्तेर्विपर्ययात् । एवंच न हितकरणनियमः स्वातन्त्र्या-भावादिति ॥

## समाध्यभावाच्च ॥ २।३।३९ ॥

१५३-२ तादृशमन्त्राभावः-सामर्थ्यसाधकमन्त्राभावः ।

—३ अनिर्मोक्ष इति । कर्तृत्वस्य दुःखरूपत्वादिति भावः ।

—४ एतदिति । आध्यासिक एव कर्तृत्वेनिर्मोक्षः । अध्यासस्य दुःखरूपत्वात् ।

—५ नपुंसक इति । स्वातन्त्र्यादिसर्वपुरुषधर्मशून्य इत्यर्थः । बाह्यवत्-वैदिकप्रमाणबहिर्भूतमाध्यमिकवत् ।

—६ समाधिरित्यपीति । इन्द्रियाद्यध्यासरहितस्यैव मुख्यः समाधिरिति बोध्यम् । ननु लिङ्गसंबन्धाज्जीवन्मुक्तस्यापि बुद्धिसबन्धोस्त्येवेति कथं निरिन्द्रियत्वमित्यत आहुः-करणत्वेनेति । एवंच बुद्धिसंबन्धो ब्रह्माभेदे-ऽप्यनिवार्यः ।

—७ तस्मात्-अध्यासाभावात् । ननु ध्यायतीवेति श्रुताविवशब्दस्वार-स्यात्स्वाभाविकं कर्तृत्वं जीवे न किंत्वौपाधिकम् इति मतं निराकुर्वन्ति-ध्यायतीवेति ॥ ३९ ॥

**सूत्रार्थः**-जीवस्य क्रियाज्ञानशक्ती योगेनोत्पद्येते । ततस्तस्य समाधे-र्योगस्याभावाच्छक्तिविपर्ययः । चकारेण मन्त्रसामर्थ्याभावोपि सूच्यत इति ॥

## यथा च तक्षोभयथा ॥ २।३।४० ॥

—१५ प्रकृते । शास्त्रप्रणयने ॥ ४० ॥

**सूत्रार्थः**-ननु कर्तृत्वभोक्तृत्वभेदः स्यादिति चेन्न । तक्ष्णो दृष्टान्तेनैकस्यो-भयसबन्धात् । तथाहि यथा तक्षा स्वयं रथं निर्माय स्वार्थपक्षे तमारुह्य गच्छति । परार्थपक्षे तु केवलं रथं निर्माति । आरोहणकर्ता भिन्नः । तद्वज्जी-वोपि स्वार्थं परार्थं च करोति कारयतीति ।

इति चतुर्दशमधिकरणम् ।

---

## परात्तु तच्छ्रुतेः ॥ २।३।४१ ॥

१५४-२ दोष इति ।

किं वर्णितेन बहुना लक्षणं गुणदोषयोः ।
गुणदोषदृशिर्दोषो गुणस्तूभयवर्जितः ॥

इति भगवदुक्तन्यायान्न दोषः ॥ ४१ ॥

**सूत्रार्थः**-कर्तृत्वं ब्रह्मधर्म एव । परब्रह्मणः सकाशात्तज्जीवे समायाति । यमधो निनीषति सर्वकर्तेत्यादिश्रुतिभ्यः ।

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ २।३।४२ ॥

—४ स्वस्यैव कारयितृत्वादिति । पूर्वं कर्मानादित्वमीश्वरस्य तत्सापेक्षत्वं चाङ्गीकृत्य वैषम्यनैर्घृण्यपरिहारः कृतः स न युज्यते । कर्मानादित्ववत्स्वस्य यत्कारयितृत्वं तस्याप्यनादित्वादिति पक्षं खण्डयति तुशब्दः ।

—६ कारयतीति। परमेश्वरो जीवकृतप्रयत्नापेक्षः सन्नग्रेपेक्ष्यमाणं यदुपकरणबाहुल्यं तदेकेनासहायेन जीवेनाप्तुमशक्यमतस्तत्संपादनद्वारा स्वयमेव तं कारयति। अत्र दृष्टान्तमाहुः-यथा बालमिति।

—८ अनुवदतीति । एवंच गुणदोषविवेचनपूर्वकं बालेच्छानुकूलसामग्रीसंपादके पितरि यथा न दोषः किंतु बालस्वभाव एव दोषस्तथा ब्रह्मण्यपि साध्वसाधुकर्मप्रेरयितरि न दोषः किंतु जीव एव।

—९ हेतुं विवृण्वन्ति-अन्यथेति । अप्रामाणिकत्वं चेति । विहितनिषिद्धबोधकप्रमाणव्यापारस्य वैयर्थ्यमित्यर्थः।

—११ चकारेति । यथा लोके राज्यमर्यादारक्षकं व्यवहारशास्त्रम् । दोषगन्धोपीति । लोकवत्तु लीलाकैवल्यमिति न्यायेन जीवकृतप्रयत्नानुसरणान्न ब्रह्मणि वैषम्यादिदोषगन्धः ।

—१२ तथैव निर्माणात्। तादृशापेक्षावैशिष्ट्यपूर्वकत्वेन स्वयमेव निर्माणात्। ननु ते नाधीतश्रुतिगुणा इत्यादि श्रीमद्भागवतवाक्येषु प्रयत्नानपक्षयैव गोकुलस्थेभ्यः फलदानकथनादयमपि नियमो नेत्याहुः-यत्रान्यथेति। यत्र भक्ते गोकुलस्थे प्रयत्नं विना फललाभो दृश्यते स पुष्टिमार्गमध्यस्थो ज्ञेयः। इदमपि लोकवत्त्वित्यादिपूर्वन्यायेन ज्ञेयम्। लोकेपि राज्ञां कृपापात्रेषु प्रयत्नं विनैव फललाभदर्शनात् ॥ ४२ ॥

सूत्रार्थः-ब्रह्मणः सर्वकर्तृत्वेपि वैषम्यनैर्घृण्यदोषौ न। यतः परो भगवान् जीवकृतकर्मापेक्षी। ततश्च जीवस्य यादृशं प्रयत्नाभिनिवेशं पश्यति तादृशं कर्म कारयति। अन्यथा विहितप्रतिषिद्धयोर्वैयर्थ्यं प्रसज्येतेति।

इति पञ्चदशमधिकरणम्।

---

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ २।३।४३ ॥

—१७ ब्रह्मसंबन्धीति। स्वसंबन्धि तु ज्ञेत एवेति सूत्र उक्तम्।

—१८ नानाव्यपदेशादिति । अग्रिमश्रुतौ बहुत्वसंख्याविशिष्टत्वेन कथनात्। विस्फुलिङ्गवद् ब्रह्मणः सकाशादुत्पत्तिकथनाच्चेत्यपि बोध्यम्।

—२२ युक्तिर्वक्तव्येति। यथा न्यग्रोधफलमाहरेत्यादियुक्तिः। प्रष्टव्या इति। तद्विज्ञानार्थं स गुरुमेव गच्छेदिति श्रुतेः।

—२३ सर्वविप्लवः-सर्वश्रुतिविप्लवः।

—२५ विनिर्गताः-परस्परविलक्षणतया विनिर्गताः।

१५५-२ जडजीववैलक्षण्ये हेतुमाहुः-सदंशेनेत्यादि। इतरे जीवाः।

—३ अन्यधर्मतिरोभावाः– अन्यधर्मस्यानन्दांशस्य तिरोभावो येषु तादृशाः । मूलेच्छातः–प्रजायेयेति मूलेच्छातः । भगवदिच्छात इति यावत् । अस्वतन्त्रिण इति । स्वतन्त्रो ब्रह्मभावस्तद्राहिता जीवन्मुक्तेभ्यो भिन्ना इत्यर्थः ।

—११ धर्मान्तरेण–चित्स्वरूपनित्यत्वादिना ॥ ४३ ॥

**सूत्रार्थः**–जीवो ब्रह्मणोंशः । सर्व एवात्मानो व्युच्चरन्तीत्यादिना जीवनानात्वकथनात् । ननु जीवस्य ब्रह्मांशत्वे तत्सजातीयत्वं स्यात्किंच ब्रह्म दाशा ब्रह्मेमे कितवा इत्यादिश्रुतौ दाशादीनां प्रतीतं ब्रह्मत्वं तत्कार्यत्वे समञ्जसं स्यादिति चेन्न । कैश्चिच्छाखिभिः प्रकारान्तरेणार्थाच्छरीरत्वेन प्रकारेण दाशकितवादीनामधीतत्वात् । एवंचानन्दांशस्य तिरोहितत्वान्न जीवस्य ब्रह्मसाजात्यमिति ।

## मन्त्रवर्णात् ॥ २।३।४४ ॥

—१६ पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुरिति व्याख्यानात्पक्षान्तरमाहुः पादेष्वित्यादि ॥ ४४ ॥

**सूत्रार्थः**–पादोस्य सर्वा भूतानीति सर्वजीवानां पादत्वेन ब्रह्मांशत्वमुक्तमिति ।

## अपि स्मर्यते ॥ २।३।४५ ॥

—१८ भगवद्गीतास्मृतिर्ममैवांश इति ॥ ४५ ॥

**सूत्रार्थः**–ममैवांशो जीवलोके इति भगवद्गीतास्मृतौ प्रत्यक्षं जीवस्य ब्रह्मांशत्वं स्मर्यतेपीति ॥

## प्रकाशादिवन्नैवं परः ॥ २।३।४६ ॥

—२१ अंशत्व इति । हस्तादिवदंशत्व इति विपरीतक्रमो बोध्यः ।

—२२ द्विष्टत्वेनेति । जीवे दुःखरूपः प्रकारोतस्तस्य द्विष्टत्वेनानुभवः । परस्तु प्रियरूपोतस्तस्य तादृगनुभवो न ।

—२३ प्रकाशादिवदिति । यथाग्निहिमादीनां प्रकाशशैत्यादयो धर्मा न दुःखद्विष्टत्वबुद्धिजनकास्तथा दुःखमपि परस्य न दुःखबुद्धिजनकं द्विष्टत्वानुभवजनकं वेत्यर्थः । नाग्नेर्हि ताप–इत्यायेकादशस्कन्धस्थं वाक्यम् । तथाहि—

> कालस्तु हेतुः सुखदुःखयोश्चेत्किमात्मनस्तत्र तदात्मकोसौ ।
> नाग्नेर्हि तापो न हिमस्य तत्स्यात् क्रुध्येत कस्मै न परस्य द्वन्द्वम् ॥

इति ।

—२६ उक्तपक्षस्य क्लिष्टत्वात्पक्षान्तरमाहुः-अथवेति। पापस्यापीति। अत्र रूपस्यापीति योग्यः पाठः । सूर्यश्चक्षुस्तथा रूपं ज्योतिषो न पृथग् भवेत् । इति द्वादशस्कन्धस्थवाक्याद्रूपस्य प्रकाशांशत्वम् । पापस्यापीति पाठस्तु बहुपुस्तकानुरोधान्मूले गृहीतः ॥ ४६ ॥

**सूत्रार्थः**- ननु जीवस्य ब्रह्मांशत्वे तद्दुःखेन ब्रह्म दुःखि स्यादिति चेन्न । यतो जीवदुःखेन परो न दुःखी प्रकाशादिवत् । यथा प्रकाशादिरूपा अग्न्यादयोन्यानेव तापयन्ति नात्मानं तथा द्वैतबुद्ध्यंशस्य जीवस्य दुःखित्वेपि परस्य दुःखित्वं नेति ।

## स्मरन्ति च ॥ २।३।४७ ॥

१५६-३ **निर्गुणः**- प्राकृतसंसर्गशून्यः ।

—६ **पिप्पलं**- कर्मफलम् । तयोरन्य इति श्रुत्या जीवपरमात्मनोर्भेदो विरुद्धधर्मवत्त्वं च सिद्धम् ॥ ४७ ॥

**सूत्रार्थः**- न लिप्यते लोकदुःखेनेत्यादिस्मृतयः परस्य दुःखाभावं स्मरन्तीति ।

## अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ २।३।४८ ॥

—१० कः शूद्रः का भार्येति । एतादृशज्ञानाभावे ऋतौ भार्यामुपेयात्, न शूद्राय मतिं दद्यादिति विधिनिषेधविषयज्ञानाभावः । **स्वज्ञानमिति** ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति विधानात् ।

–१९ ननु यावज्जीवविधिर्ज्ञानिपरश्चेत्-यदहरेव विरजेत्तदहरेव संन्यस्येत्-इति संन्यासविधेर्वैयर्थ्यमित्यत आहुः- न्यासोपीति । देहसंबन्धे देहानुसंधाने सत्येव संन्यासोपपत्त्यर्थः । तादृशदशायां संन्यासे जरामर्याद्यग्निहोत्रस्य संभवान्न संन्यासविधिवैयर्थ्यम् । ये तु देहानुसंधानरहिताः पूर्णज्ञानिनः शुकादयस्तेषां विधिनियतत्वं नास्तीति यं प्रव्रजन्तमित्यादिषु स्पष्टम् ॥ ४८ ॥

**सूत्रार्थः**- जीवस्य भगवदंशत्वेपि शरीरसंबन्धाद्विधिनिषेधोपपत्तिः । यथा शवाग्निश्चण्डालभाण्डास्थितमुदकं तद्घटादिकं च परिह्रियते । अग्निहोत्राग्निर्गङ्गाजलं तन्मृत्तिका च परिगृह्यत इति ।

## असंततेश्चाव्यतिकरः ॥ २।३।४९ ॥

**सूत्रार्थः**—ननु बाल्याद्यवस्थाभेदेन शरीरस्यापि भेदात्कर्मकाले ब्राह्मणत्वादि कथमुपनयनकालीनशरीरस्य तदानीमभावात् । न च जीवैक्येनोपपत्तिश्चाण्डालशरीरेपि ब्राह्मण्यापत्तेरिति चेन्न । बाल्यादिषु शरीरभेदेपि

संतत्यैक्यस्य विवक्षितत्वात् । चाण्डालादिजन्मभेदे तु संततेर्भेदान्न व्यतिकर इति ॥ ४९ ॥

## आभास एव च ॥ २।३।५० ॥

—२७ सर्वकार्याणीति । अत्रापि चकारेण कथमित्यस्यानुकर्षः । सर्वकार्याणि भगवत एवोपादेयानीति कथमिति योजना ।

१५७-१ आकारस्य- चतुर्भुजत्वादिभगवदाकारस्य । मायावादं निषेधन्ति- न त्विति । नन्वेवं श्रौतस्य जलचन्द्रदृष्टान्तस्य विरोध इत्यत आहुः- जलचन्द्रवदिति ।

—२ नन्वस्य प्रतिबिम्बत्वे स्वीकृते को दोषस्तत्राहुः-तथा सतीति । मिथ्याभूतस्याध्यासायोगादित्यर्थः ।

—३ तत्र वृत्तेर्द्वासुपर्णाश्रुतेरपि विरुध्यते इत्यादिनिबन्धोक्तकारिकादूषणानि स्मारयन्ति- तत्रेति । मिथ्यात्वरूप इति । मिथ्यात्वस्वरूपो मायावाद्यभिमत आभासोविवक्षित इत्यर्थः ॥ ५० ॥

सूत्रार्थः-ननु सच्चिदानन्दमयब्रह्मांशो जीवोपि तद्गुणविशिष्टो भविष्यति तेन तस्य संसारित्वं न स्यादिति चेन्न । आनन्दांशतिरोधानेन जीवस्य ब्रह्माभासत्वकथनादिति ।

## अदृष्टानियमात् ॥ २।३।५१ ॥

—६ ईशित्वायेति । ईशितत्वायेत्यर्थः । नैयायिकमतमनुवदन्ति- नानात्मान इति ।

—८ सिद्धमिति । कार्यमात्रं प्रति जीवादृष्टस्य कारणताङ्गीकारात् । देशान्तरेत्यादि । अयं भावः । कार्योत्पत्तौ सामग्रीसमवधानमपेक्ष्यते । सामग्रीमध्येदृष्टमप्यन्तर्भूतमिति देशान्तरे यद्भोगार्थं यद्वस्तूत्पद्यते तत्र तददृष्टमवश्यं वक्तव्यम् । तच्चादृष्टं गुणत्वादात्मसमवेतमतस्तद्देश आत्माभावेदृष्टाभावः संपतेदतस्तदन्यथानुपपत्त्या तत्र तत्रात्मसत्ता स्वीकर्तव्यात आत्मनो व्यापकत्वमङ्गीकृतं नैयायिकैः ।

—१० मि याज्ञानेन- शरीरेहमित्यभिमानेन ।

—११ तथेति । सर्वेषामेकस्मिन् संबन्धतुल्यत्व एकस्यैव मिथ्याज्ञानं कथमित्यर्थः ।

—१२ विरोधात्- श्रुतिविरोधात् । ऋषिप्रामाण्यं- कणादगौतमयोर्ऋषित्वेन तत्प्रामाण्यम् । श्रुतिविरोध ऋष्युक्तमप्यप्रमाणमित्यर्थः ॥ ५१ ॥

**सूत्रार्थः**– नैयायिकादयो भोगव्यवस्थासिद्ध्यर्थं जीवनानात्वमङ्गीकुर्वन्ति तथादृष्टस्य भोगनियामकत्वं देशान्तरोत्पन्नवस्तुभोगान्यथानुपपत्त्या जीवानां व्यापकत्वं च । इदमनुपपन्नम् । व्यापकानां सर्वेषां जीवानामनेकदेहसंबन्धादेतद्देहस्येदमदृष्टमेतद्देहस्येदमिति नियमाभावात् । एवंचादृष्टस्यानियमाज्जीवनानात्वादिकमसंगतमिति ।

**अभिसंध्यादिष्वपि चैवम् ॥ २।३।५२ ॥**

—१५ **इति चेदिति** । ननु विलक्षणसंयोगोत्पादकानां मनःप्रभृतीनामभिमाननियामकत्वात्तेषां चेश्वरेच्छया नियतत्वाददृष्टानियमदोषो नेति पूर्वपक्षाशयः । **पूर्ववदेवेति** । विभूनामात्मनां मनःसंयोगस्यापि तुल्यत्वान्नियमासंभव एव दोषः । **तादृशेश्वरकल्पना**– ईश्वरस्य निमित्तकारणताकल्पना ॥ ५२ ॥

**सूत्रार्थः**–ननु मनःप्रभृतयो नियामका इत्यापि न । ईश्वरेच्छामनःप्रभृतिष्वभिसंध्यादिषु नियामकत्वेनाङ्गीकृतेषु पूर्वोक्तस्यैवानियमदोषस्य प्रसक्तेः। तथाहि जीवानां व्यापकत्वेन सर्वत्र संबन्धादस्येदं मनो नास्येदमिति नियमाभाव इति ।

**प्रदेशादिति चेन्नान्तर्भावात् ॥ २।३।५३ ॥**

—१९ **अन्यस्यापीति** । एवं च पूर्ववदेव दोषप्राप्तिः ।

—२० **सोंश इति** । विशेषत्वेन स्वीक्रियमाणो विशेषणांशः स चान्तर्भवेत् । अन्यप्रदेशे तत्प्रदेशाभावात्तत आत्मनस्तिरोहितो भवेत्तेन तस्य भोगस्यासंभव इति नैयायिकमतवज्जीवासिद्धिः ॥ ५३ ॥

**सूत्रार्थः**– ननु जीवानां विभुत्वेपि तत्र प्रदेशविशेषकल्पनाददृष्टानियमः स्यादिति चेन्न । तत्र जीवान्तरप्रदेशस्याप्यन्तर्भावात्पूर्वोक्तदोषस्याविघातात् । यद्वा तद्देहस्यैव देशान्तरगमने पूर्वदेशस्य त्यक्तत्वेन तद्देशस्य तिरोभावादिति ।

इति षोडशमधिकरणम् ।

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालबोधिन्यां द्वितीयाध्यायस्य तृतीयः पादः ॥ २।३ ॥

---

# द्वितीयाध्याये चतुर्थः पादः ॥ २।४ ॥

## तथा प्राणाः ॥ २।४।१ ॥

पूर्वपादे जीवस्य स्थूलशरीरनिष्पादकानां महाभूतादीनामुत्पत्तिक्रमादिकं विचारितम्। ततो जीवस्वरूपं मीमांसितं परंत्विन्द्रियादीनां स्वरूपं न विचारितमतोस्मिन्पादे तद्विचार्यत इत्यवसररूपा पादसंगतिः।

१५८-४ तदाहुः-**जीवशरीरवर्तिनामिति**।

—५ **तादृशधर्मवत्वं**-जीवसमानधर्मवत्त्वम्। इन्द्रियपदं विहाय प्राणशब्दप्रयोगे प्रयोजनमाहुः-**प्राणशब्दप्रयोग इति**।

—६ सर्वेन्द्रियवाचकत्वे प्राणशब्द एकवचनं कथमत आहुः-**मनस इति**। **मुख्यत्वात्**-लिङ्गशरीरे प्राधान्यात्।

—७ ननु सर्वोपपत्तिसाम्ये जीवधर्मस्यार्थादेव सिद्धेरिदं सूत्रं पूर्वपाद एव कुतो न विचारितमित्यत आहुः-**चिदंशस्येति**। एवंच जडत्वाद्वियदादितुल्यत्वं स्यादतः पृथग्विचारः।

—९ **तत्रापीति**। प्राणा वै सत्यमिति बृहदारण्यके सत्यधर्मग्रहणमस्ति ॥१॥

**सूत्रार्थः**- यथा जीव उत्क्रान्त्यादिधर्मवांस्तथेन्द्रियाण्यपीति।

## गौण्यसंभवात् ॥ २।४।२ ॥

—११ **भविष्यतीति**। सत्यत्वादिश्रुतिरुपासनापरतया गौणी भविष्यतीत्यर्थः।

—१२ **कथं संभवतीति**। युगपद्वृत्तिद्वयविरोधात् ॥ २ ॥

**सूत्रार्थः**- इन्द्रियोत्क्रान्तिश्रुतिर्गौणी न। एकस्या एव श्रुतेर्जीवे मुख्यत्वमिन्द्रियेषु गौणत्वमित्यसंभवादिति।

## तत्प्राक्श्रुतेश्च ॥ २।४।३ ॥

अत्रापि तथेत्यनुवर्तते।

—१५ **अधिकविचार इति**। जडभूतानां चिरस्थायित्वदर्शनात्तावतैव प्राणानामप्युत्क्रान्तिः संभाव्यतेतस्तदभावाय प्राणानां नित्यत्वमित्यधिकविचारः क्रियते।

—१९ **निषिध्यत इति**। एवंच पूर्वोक्तश्रुतेर्विरोधो न नापि प्राणानामनित्यत्वमित्यर्थः।

—२२ **विस्फुलिङ्गसदृशीति**। एवंच विस्फुलिङ्गवाक्ये यथा व्युच्चरणं तथात्र प्रादुर्भावः ॥ ३ ॥

**सूत्रार्थः**-असद्वा इदमग्र आसीदिति श्रुत्या सृष्टेः प्रागपि स्थितत्वात्प्राणादीनां नित्यत्वमिति ।

## तत्पूर्वकत्वाद्वाचः ॥ २।४।४ ॥

—२५ **कथमुत्पत्तिरिति** । एवंच मनोवाचोर्नोत्पत्तिः किंतूद्गममात्रं तेन तयोर्नित्यत्वसिद्धिः ॥ ४ ॥

**सूत्रार्थः**- मनः पूर्वरूपं वागुत्तररूपमिति श्रुतिः । यदि वेदात्मकवाचो नित्यत्वं तत्र तत्पूर्वस्य मनसो नित्यत्वं किमु वक्तव्यमित्यर्थ इति ।

## सप्तगतेर्विशेषितत्वाच्च ॥ २।४।५ ॥

१५९-६ **अतः**-अनश्वरभावस्याजन्यत्वेन । **तत्तदुपाख्यानेषु**-व्रतमीमांसाप्रभृतिषु ।

—७ **चेतनतुल्यत्वमिति** । स्वरूपतोचेतनत्वेपि-तदेषां प्राणानां विज्ञानेन-इति श्रुत्या धर्मरूपज्ञानस्य श्रावणाच्चेतनतुल्यत्वम् ।

—११ **शीर्षण्याः**- शिरसि भवा नेत्रनासिकादिरूपाः । **अवाञ्चौ**-नाभेरधोदेशे स्थितौ ॥ ५ ॥

**सूत्रार्थः**- तमुत्क्रान्तमित्यादिश्रुतौ चक्षुरादीनां सप्तानां गतिश्रवणादेकीभावश्रुतौ चक्षुरादिगत्या जीवगतेर्विशेषितत्वाच्चकारेण तत्तदुपाख्यानेषु चक्षुरादीन्द्रियाणां देवतात्वकथनात्तेषां जीवतुल्यत्वमिति ।

इति प्रथममधिकरणम् ।

---

## हस्तादयस्तु स्थितेतो नैवम् ॥ २।४।६ ॥

—२२ **उत्सूत्र इति** । पूर्वपक्षस्तु स एव परं सूत्राक्षररहितः स उत्तरानुरोधात्कल्पनीय इत्यर्थः ।

१६०-२ **अतो हेतोः**-चक्षुरादितुल्यत्वाद्धेतोः ।

—३ **अवान्तरगणना**-सप्तादिसंख्या । **सूचनयेति** । चक्षुरादीनां सप्तानां प्राधान्यसूचनया । अष्टगणना ग्रहत्वकथनेन बन्धकत्वसूचनया । नवगणनानावृतनवद्वारसूचनया । दशगणना केवलद्वारमात्रसूचनयेति संभवाभिप्राया । संभवन्ति ह्येकादशसंख्यायामेताः संख्या इत्यभिप्राया । **अधिकसंख्येति** चतुर्दशसंख्या त्वन्तःकरणस्य चतुर्विधत्वात्तदभिप्राया ।

—४ तर्ह्येकादशैवेन्द्रियाणीति कथमित्यत आहुः-एकादशैवेति । **स्थितमिति** । इन्द्रियाणि दशैकं चेति गीतोक्त्यात्रापि तथैव स्थितमिति भावः ॥ ६ ॥

सूत्रार्थः- ननु सप्त वै प्राणाः सप्तेमे लोका इति श्रुतौ सप्तानां गतिश्रवणात् जीवोत्क्रमणसमये तावतामेव विशेषितत्वाच्चान्ये भेदा एषामेव वृत्तय इति चेन्न । हस्तौ चादातव्यं चेति श्रुतौ हस्तादयश्चत्वार इन्द्रियत्वेन गणिताः । एवंच हस्तादीनां चक्षुरादितौल्ये स्थिते सति सप्तैवेन्द्रियाणीति न किं त्वेकादशेति ।

इति द्वितीयमधिकरणम् ।

---

## अणवश्च ॥ २।४।७ ॥

—७ संख्यां निर्धार्य परिमाणं निर्धारयन्ति-अणुपरिमाणा इति ॥ ७ ॥

सूत्रार्थः- सर्वाणीन्द्रियाण्यणुपरिमाणानीति ।

इति तृतीयमधिकरणम् ।

---

## श्रेष्ठश्च ॥ २।४।८ ॥

—११ इन्द्रियविचारानन्तरं मुख्यप्राणं विचारयन्ति-मुख्यश्चेति ।

—१२ सृष्टेः पूर्वमस्य सत्तायां प्रमाणमाहुः- नासदिति । इयं श्रुतिस्तैत्तिरीयब्राह्मणे द्वितीयाष्टकेष्टमप्रपाठके वर्तते । अवातं- वातरूपरहितमानीत् । एतेनाननात्मको यो मुख्यधर्मः स एव मुख्यप्राणः । एवमनेन रूपेण सत्तायां सिद्धायां-एतस्माज्जायते- इत्यादिना व्युच्चरणमेव बोध्यते न तूत्पत्तिः ॥ ८ ॥

सूत्रार्थः- मुख्यप्राणोप्यणुपरिमाणो गतिशीलश्च बोध्य इति ।

## न वायुक्रिये पृथगुपदेशात् ॥ २।४।९ ॥

—१८ तन्त्रान्तरीयाः- सांख्याः ।

—२१ करणक्रियातो भेदमाहुः- वृत्तिवृत्तिमतोरिति । वृत्तिः क्रिया । वृत्तिमत्-इन्द्रियम् । ततोपि- इन्द्रियतोपि । एवं च पदार्थान्तरमेव मुख्यः प्राणः ॥ ९ ॥

सूत्रार्थः—एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चेति श्रुतौ प्राणवाय्वोः पृथगुपदेशान्मुख्यप्राणो वायुः क्रिया वा न भवतीति ।

इति चतुर्थमधिकरणम् ।

---

## चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ २।४।१० ॥

—२५ संशयादिप्रदर्शनेनाधिकरणान्तरं बोधयन्ति-स प्राण इत्यादिना ।

१६१-२ संवृङ्क्ते- संगृह्णाति संग्रसति च।

—३ आशङ्काम्-प्राणः स्वतन्त्र इत्याशङ्काम्।

—४ मुख्यतः-आसन्यत्वात्।

—५ दृष्टत्वादिति। प्राणान् प्रपीड्येति श्रुतेः। जडत्वादय इत्यत्रादिपदेन जीवोपकरणत्वं ग्राह्यम्॥ १९॥

सूत्रार्थः-सुप्तेषु वागादिषु प्राण एको मृत्युनानाप्त इत्यादिश्रुत्या प्राणः स्वतन्त्र इति चेन्न। यतश्चक्षुरादीन्द्रियवत्प्राणोप्यस्वतन्त्रः। चक्षुरादिभिः सह शासनात्।

## अकरणत्वाच्च न दोषस्तथाहि दर्शयति॥ २।४।११॥

-९ तन्त्रान्तरे-योगशास्त्रे। एकादशासीति। अयं श्लोकः पञ्चमस्कन्धे जडभरतवाक्येषु।

—१० श्लोकार्थः- आकूतयः- विसर्गानन्दनादानगमनवचनाख्यकर्मजनका बाह्यप्रयत्नाः। धियः-शब्दस्पर्शरूपरसगन्धज्ञानानि पञ्च एता दश सद्वारकस्य मनसो वृत्तयः। अभिमानः-अहंममेत्याकारकः साक्षान्मनसो वृत्तिः। एवमेकादश मनसो वृत्तयः। द्वारभूतानामिन्द्रियाणां तु प्रतिनियता एकैकजातीयाः। मात्राणि-शब्दादयो धियां भूमयो विषयाः। कर्माणि-विसर्गादीन्याकूतीनां भूमयो विषयाः। पुरं-शरीरं तत्स्वसंबान्धिनामुपलक्षकम्। तत् अहंममाभिमानाख्यमनोवृत्तेर्विषयः। हे वीर तासां वृत्तीनामेवमेकादश भूमीर्विषयान् वदन्तीति।

—१२ एषः-व्यापाराभावः। तत्राहेति। तादृशापेक्षाभेदे प्रमाणमाहेत्यर्थः। कार्यवत्त्वमिति। कार्यवत्त्वमात्रं नतु सव्यापारम्।

—१६ उपकारित्वमिति। एवं चोपकारित्वादुपकरणमित्यर्थः॥११॥

सूत्रार्थः— प्राणस्य करणत्वाभावाद्व्यापारापेक्षादोषो न। करणमेव व्यापारवदिति नियमः। अन्य उपकारकस्तु केवलं कार्यमेवापेक्षते न व्यापारम्। तथाहि-तस्मिन्नुत्क्रामत्यथेतरः-इति श्रुतिरेव प्राणस्य शरीरस्थितिलक्षणं कार्यं दर्शयतीति।

## पञ्चवृत्तेर्मनोवद्व्यपदिश्यते॥ २।४।१२॥

—१९ बाणं-शरीरम्॥ १२॥

सूत्रार्थः-ननु व्यापारं विनोपकारित्वं न संभवेदिति दोषमपाकर्तुं सूत्रम्। अहमेवैतत्पञ्चधात्मानमिति श्रुतौ प्राणस्य पञ्चवृत्तित्वश्रवणादयं प्राणो मनोवद्व्यपदिश्यते। यथा मनसः स्वरूपत एकादश वृत्तय एवं प्राणस्यापि पञ्चभिर्वृत्तिभिः कार्यकरणं तेन न पूर्वोक्तशङ्केति।

अणुश्च ॥ २।४।१३ ॥

—२४ **पूर्वोक्तसर्वसमुच्चयः**— उत्क्रान्त्यादिवृत्त्यन्तरधर्मसंग्रहः ॥ १३ ॥
**सूत्रार्थः**—आसन्यप्राणोप्यणुरिति ।

इति पञ्चममधिकरणम् ।

---

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ २।४।१४ ॥

१६२-३ **जीवाधिष्ठानब्रह्मप्रेरणयोरिति** । व्युत्क्रमेणेदमुक्तम् । तथा च जीवाधिष्ठानं द्वितीयकोटौ हेतुः । ब्रह्मप्रेरणं प्रथमकोटौ ।

—५ **पूर्वपक्षमिति** । भोगमात्रकार्यस्य प्रतिनियततया जीवाधिष्ठानमात्रादेव सिद्धेर्न देवतापेक्षेति पूर्वपक्षाशयः ।

—६ **तदामननात्**-तस्य देवतारूपस्याधिष्ठातुः श्रुतौ कथनात् ।

—८ **अयमर्थ इति** । सौत्रतात्पर्यविषयीभूतोर्थः । योध्यात्मिकं इति श्रीमद्भागवतद्वितीयस्कन्धश्लोकः । पुराणस्य वेदोपबृंहकतया तदनुसारेण श्रुतिर्विचार्यते ।

—९ **आध्यात्मिक इति** । आत्मनीत्यध्यात्मं तत्र भव आध्यात्मिकः । एवमन्यत्रापि ।

—१० **उभयविच्छेद इति** । उभयोः- आध्यात्मिकाधिदैविकयोर्विच्छेदो द्वैधीभावो यस्मात्सः । तथाच मुखादिनिर्भेदोत्तरमेवेन्द्रियदेवतयोर्निर्भेदः श्रुतावुक्तः संगच्छते ।

—१५ नन्वेवं सदा देवतासांनिध्यं चेदेतस्माज्जायत इत्यत्र देवोद्गमः कुतो नोक्त इत्यत आहुः- **आध्यात्मिकाधिदैविकयोरिति** । एवं च साक्षादनुक्तोपि भङ्ग्यन्तरेणोक्त एवेत्यर्थः ।

—१७ नन्वेवं दृष्टार्थापत्तौ वागादिष्वेव तादृशं सामर्थ्यं कल्प्यम् । आध्यात्मिकादिस्मृतिवाक्ययोजनयाधिष्ठातृदेवताकल्पने किं मानमत आहुः- **वागादीनामिति** ।

—१९ **समष्टिव्यष्टिभाव इति** । सम्यगेकेन रूपेणानुगताष्टिर्व्याप्तिर्यस्यासौ समष्टिः । विविधा नानारूपेणाष्टिर्व्याप्तिर्यस्यासौ व्यष्टिरिति । **नोपपद्येतेति** । एवं च श्रुतार्थापत्तिरेव प्रमाणमिति भावः । अयमेव व्यासाशय इति बोधयति-**आधिभौतिककृतश्चेति** । चकारोवधारणे ।

—२० एवमाध्यात्मिकाधिदैविकभावं ब्रह्मण्यतिदिशन्ति-**एवमेवेति** ।

—२१ **यदज्ञानादिति** । यस्य भगवत्सामर्थ्यकृतस्याध्यात्मिकाधिदैविक-भावस्याज्ञानात् । सर्वविप्लववादी–शंकराचार्यः ॥ १४ ॥

**सूत्रार्थः**–वागादीन्द्रियाणामग्न्यादिकमधिष्ठानमस्ति–अग्निर्वाग्भूत्वा–इति श्रुतौ तथा कथनादिति ।

इति षष्ठमधिकरणम् ।

---

## प्राणवता शब्दात् ॥ २।४।१५ ॥

**१६३–१ संदेह इति** । अग्न्यादि स्वत एव वागादीनधितिष्ठति मुख्य-प्राणेन सहितं सद्वाधितिष्ठतीति संशय इत्यर्थः ।

**—२ अनवस्थानादिति** । इतरसाहित्याङ्गीकारे तत्रापि साहित्यान्तरा-पेक्षायामनवस्थापत्तेरित्यर्थः ।

**—३ प्राणवता**– मुख्यप्राणसहितेनाग्न्यादिना । **विवृण्वन्ति**– अयमर्थ इत्यादिना ।

**—६ अन्याश्चेति** । उपलक्षणतया बोध्या इति शेषः ।

**—१२ तदन्विति** । तदनन्तरं तेसुरा ज्ञात्वा श्रमरूपपाप्मना वेधं कृत-वन्तः । तदनन्तरं तत्परिचायनाय यदेवेदमप्रतिरूपं वदति स एव पाप्मेति निरूपितम् ।

**—१३ सोपि**– एवंपरिचायितो द्वितीयदोषोपि । **देवानामिति** । क्रमेण सर्वेषामेवोद्गातृत्वात् । तेन–प्राणकृतासुरनाशनेन ।

—१६ **दीप्यत इति** । अग्निरिति शेषः ॥ १५ ॥

**सूत्रार्थः**–सोयमाग्निः परेणेत्यादिश्रुत्या वागादीन्द्रियं प्राणयुक्ताग्न्यादिनाऽ-धिष्ठितं स्वीकार्यमिति ।

## तस्य च नित्यत्वात् ॥ २।४।१६ ॥

—१९ **सर्वदा**–प्रतिकल्पम् ।

—२१ ननु जीवभोगं विना सर्वो विचारो निष्फलस्तत्राहुः–**लोक इति**। श्रुत्यन्तरे स यथा महाराजो जानपदान् गृहीत्वेति दृष्टान्तेन जीवे भोगः फलिष्यतीत्यर्थः । एवं च करणत्वांशेग्न्यादीनां वागादीनां चाधिष्ठातृत्वं भोक्तृत्वांशे जीवस्येति बोध्यम् ॥ १६ ॥

**सूत्रार्थः**–अग्न्यादीनां प्राणसंबन्धस्य नित्यत्वात्सर्वदैवाधिष्ठातृत्वमिति ।

इति सप्तममधिकरणम् ।

---

## तादिन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ २।४।१७ ॥

१६४—६ नैकत्वमिति । प्राणेन्द्रियाणामेकत्वं नास्तीत्यर्थः । इन्द्रियेषु क्वचित्प्राणशब्दव्यपदेशस्तु द्रोणकर्णयोः कुरुशब्दव्यपदेशवद्बोध्यः ।

—७ तस्य त इति । आसन्यस्य प्राणापानसमानव्यानोदानशब्दाः पाचकादिशब्दवद्यौगिका अतो न भेदका इत्यर्थः।

सूत्रार्थः-इन्द्रियाणि तत्त्वान्तराण्येव । एतस्माज्जायत इति श्रुतौ प्राणात्पृथगिन्द्रियाणामुपदेशात् । श्रेष्ठान्मुख्यप्राणादन्यत्र तत्त्वान्तरत्वं प्राणस्य तु नेति ॥ १७ ॥

## भेदश्रुतेः ॥ २।४।१८ ॥

सूत्रार्थः–यत्रापि तमुत्क्रामन्तमित्यादिश्रुताविन्द्रियाणां प्राणत्वेन प्रयोगस्तत्रापि भेदेन कथनान्नेन्द्रियप्राणानामेकत्वमिति ॥ १८ ॥

## वैलक्षण्याच्च ॥ २।४।१९ ॥

सूत्रार्थः–प्राणस्येन्द्रियाणां च वैलक्षण्यात्तेषामेकत्वं न । सुप्तेषु वागादिषु प्राणस्य जागरणमित्यादिकं विविधं वैलक्षण्यं ज्ञेयमिति ॥ १९ ॥

इत्यष्टममधिकरणम् ।

---

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २।४।२० ॥

—१९ अलौकिकेपीति । व्याकरणवाणीत्येकवचनं हिरण्यगर्भाभिप्रायेण । नामरूपयोरपीति । रूपकरणमपि जीवकृतं स्वयैवं रीत्या मूर्तिः कर्तव्येति भृत्यान्प्रत्युपदेशेन सिध्यतीति भावः ।

—२२ संज्ञामूर्त्योरिति । यद्यपि लोकन्यायेन जीवेपि सामर्थ्यवशान्नामरूपव्याकर्तृत्वं वक्तुं शक्यते तथापि श्रुतौ त्रिवृत्करणेन सहैव पूर्वं नामरूपव्याकरणमुपदिष्टं तदा न जीवस्य शरीरसंबन्ध इति तदानीं जीवस्य तत्कर्तृत्वं वक्तुं न शक्यते शरीरसंबन्धोत्तरमेव तस्य बाह्यक्रियाकर्तृत्वस्य दृष्टत्वात् । त्रिवृत्करणसमये हिरण्यगर्भस्यानुत्पन्नत्वादिति सिद्धान्ततात्पर्यम् ॥ २० ॥

सूत्रार्थः– येन त्रिवृत्करणमङ्गीकृतं तत्कृतमेव पदार्थानां नामरूपनिर्माणं सेयं देवतैक्षतेत्यादिश्रुतौ नामरूपनिर्माणत्रिवृत्करणयोः समानकर्तृकत्वेन व्यपदेशादिति ।

इति नवममधिकरणम् ।

---

## मांसादि भौमं यथाशब्दमितरयोश्च ॥ २।४।२१ ॥

१६५-१५ नन्विन्द्रियविचार एवेदं विचारणीयमत्र कुतस्तद्विचार इत्यत आहुः-त्रिवृदिति ।

—१६ भौमं-स्वोत्पत्तिस्थानजन्यम् ।

—१८ वाचि तुल्यत्वादिति । तेजोमयी वाक्, अग्निर्वाग्भूत्वेति श्रुतिद्वयेपि वाचि तेजोमयस्य तुल्यत्वादित्यर्थः ।

—२० उपपादकश्रुतिबाधात्-उपपादकस्य त्रेधाविधानस्य संबन्धिनी या श्रुतिस्तस्या बाधात् ॥ २१ ॥

सूत्रार्थः- शङ्कासूत्रं-अन्नमशितमिति श्रुत्या पुरीषमांसादिकं तेजोबन्नप्रकृतिकं ज्ञेयम् । एवं चेतरयोर्मनःप्राणयोरपि यथाशब्दं भौतिकत्वं ज्ञेयमिति ।

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २।४।२२ ॥

१६६-२५ दर्शनादिति । यादृगन्नमश्नाति तादृगेवेशितुर्मनो भवतीति दर्शनम्। उपादानादिति । पञ्चदशाहानि माशीरित्यारभ्य सान्नेनोपसमाहिता प्राज्वालीदित्यन्तेन पोषणादेव कार्यक्षमत्वोपपादनमित्युपपादनम् । वैशेष्यात्-विशेषणं विशेषस्तद्भावो वैशेष्यं तस्मादित्यर्थः । गौणो वाद इति । गुणादागतो गौणः । लाक्षणिक इत्यर्थः ॥ २२ ॥

सूत्रार्थः- उत्तरसूत्रम्- मनआयन्नादिभिः कार्यक्षमं क्रियते । तेन वैशेष्याद्गौणोयं वादः । अतो मनःप्रभृतीनां न भौतिकत्वं किं तु तानि तत्त्वान्तराणीति सिद्धमिति ।

इति दशममधिकरणम्।

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालबोधिन्यां द्वितीयाध्यायस्य चतुर्थः पादः ॥ २।४ ॥

---

पादोध्यायश्च समाप्तः ॥



# ॥ अथ तृतीयोध्यायः ॥

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ३।१।१॥**

—१६७–५ अथ तृतीयाध्यायार्थं विवरीतुकामाः श्रीवल्लभाचार्याः पूर्वाध्यायगतमर्थं स्मारयित्वा प्रकृताध्यायार्थं बोधयन्ति–**सर्वोपनिषदामित्यादिना** । तं त्वौपनिषदमित्यादिश्रुत्या ब्रह्मण्युपनिषदामेव परं प्रामाण्यं सिद्धम् । तासां सर्वासामुपनिषदां समन्वयः प्रथमाध्यायप्रोक्तो द्वितीयाध्याये विरुद्धस्मृतिनिराकरणेन श्रुतिवाक्येष्वपि परस्पराविरोधानिरासेन चाविरोधे साधिते सति सिद्धो दृढोभवादित्यर्थः । अथ तासामुपनिषदां बोधकता निर्विचिकित्सशाब्दज्ञानेन ब्रह्मप्रमितिजनकता कथमित्याकाङ्क्षोत्पद्यते तां निवारयितुमयं तृतीयाध्याय आरभ्यते । एवं च द्वितीयाध्यायस्य प्रथमार्थशोधकत्वाद्यथोपोद्धातत्वं तद्वत्तृतीयाध्यायस्यापि प्रथमाध्यायाविषयभूतोपनिषद्वाक्यनिष्ठबोधकताप्रकारशोधकत्वेन तदङ्गत्वादुपोद्धातत्वं संगतिः । द्वितीयतृतीयाध्याययोस्तूपजीव्योपजीवकभाव एव संगतिरिति ज्ञेयम् ।

—७ ननु साधनाध्यायत्वेन प्रासिद्धेस्मिन्बोधकताविचारः कथमित्यत आहुः– **एकमित्यादि** । ब्रह्मनिदिध्यासनोपायभूता उपासनाः सर्वशाखासु क्वचिद्वाक्येन प्रकरणेन वा बोध्यन्तेत एकं वाक्यं प्रकरणं विद्यां जनयति तां विद्यां तादृशवाक्यप्रकरणयुक्ताः सर्वाः शाखाः सहैवैकीभूयैव एकां विद्यां जनयन्त्याहोस्वित् पृथक्त्वेनानेका विद्या जनयन्तीति चिन्त्यते विचार्यते सर्ववेदान्तप्रत्ययाधिकरणेऽन्यत्र च । एवं च यद्यत्र बोधकताप्रकारो विचार्यो न स्यात्तर्हि केवलमुपासनाविचारः कृतो भवेन्नतु विद्यैकत्वानेकत्वे । एतादृशविचारकरणादस्याध्यायस्य बोधकताप्रकारविचार एवार्थ इति सिद्धम् ।

—९ नन्वेवमस्याध्यायस्य बोधकताप्रकारविचाररूपेर्थे स्वीकृते संसारगतिप्रभेदादिबोधकाधिकरणानां कथं संगतिरित्यतः पादार्थानाहुः– **ससाधन इति** । अत्र श्लोके शाखा विद्यां जनयन्तीत्यनुवर्तनीयम् । तथाचेयं योजना हि जन्मना कर्मणा शुचौ ससाधने पुरुषे शाखा विद्यां जनयन्ति वा यथा योगे तथा केवले विद्यां जनयन्ति तत्प्रथमं विचार्यते । इति । जन्मकर्मभ्यां पवित्रे ससाधने विचाररूपसाधनसहिते पुरुषे शाखा विद्यां जनयन्ति । आहोस्वित् केवले जन्मकर्मशुद्धत्वाभावेपि वरणविषये पुरुषे विद्यां जनयन्ति । अत्र दृष्टान्तः ।

—१० **यथा योग इति**। योगस्य साधनान्तरनिरपेक्षता—

यदि शैलसमं पापं विस्तीर्णं योजनान् बहून्।

भिद्यते ज्ञानयोगेन

इति योगबोधकध्यानबिन्दुश्रुतेस्तथा

योगेनैव दहेदंहो नान्यत्तत्र कदाचन।

इति श्रीमद्भागवतवाक्याच्च ज्ञायते। तथा वरणमपि साधनान्तरनिरपेक्षमिति- अपूतः पूतो भवति मां स्मृत्वेति तापनीयश्रुतेर्ज्ञायते । तत्- जघन्याधिकारिणां शुचित्वम्। **प्रथमं**- प्रथमे पादे विचार्यत इत्यर्थः।

—११ द्वितीयपादार्थमाहुः- **विचारपूर्वकमिति**। **विचारपूर्वकं**-जीवावस्थाविचारपूर्वकम्। **तस्य**- अधिकारिजीवस्य। **ब्रह्मभावाप्तियोग्यता**-स्वरूपतो योग्यता। विचार्यत इत्यर्थः।

—१२ **ततः**- तद्विचारेण। **अधिकारे**- मुक्त्यधिकारे जीवस्य सिद्धे ततो विषयावधृतिर्विषयस्य ब्रह्मस्वरूपस्यावधृतिर्निश्चयो विचार्यते।

—१३ तृतीयपादार्थमाहुः- **अन्तरङ्गविचारेणेति**। सूक्ष्मदेहनिष्ठतया मुक्तिपर्यन्तमनुवर्तमानत्वेन चावश्यफलसाधकं कर्मज्ञानभक्तिमार्गीयमुपासनमन्तरङ्गमित्युच्यते। तद्विचारेण गुणानां तत्तदुपासनोपयुक्तानां भगवद्गुणानामुपसंहृतिरुपसंहारः। एतादृशोपासन एतादृशगुणानामेवोपासनमिति तृतीयपादे विचार्यत इत्यर्थः। **उपसंहृतिः**- नित्यकर्माण्येव ब्रह्मण्याधाय कार्याणीति नियमनम्।

—१४ चतुर्थपादार्थमाहुः- **बहिरङ्गविचारेणेति**। स्थूलदेहनिष्ठतयेतरसाधारण्येन चाश्रमादिसाधनानि बहिरङ्गपदेनोच्यन्ते तद्विचारेण **कर्मणां**-यज्ञतपःशमादिश्रवणादिभगवद्धर्मप्रभृतीनाम्। **इति**-एवम्। **सा**-उपसंहृतिः। **द्विधा**-अन्तरङ्गबहिरङ्गभावेन तृतीयचतुर्थपादाभ्यां विचार्यत इत्यर्थः।

—१५ एवं पादार्थानुक्त्वा निगमयन्ति-**तस्मादिति**। यस्मादेवं साधनसंपत्तावुपनिषदां विद्याजनकता तस्मादधिकारिजन्मनिर्धार इति प्रथमपादार्थः। न तु वैराग्यजननाय संसारगतिप्रदर्शनमात्रम्। **तदन्विति**। एवं द्वितीयेपि पादे जीवावस्थाप्रदर्शनं ब्रह्मभावयोग्यत्वार्थं न तु वैराग्यमात्रार्थम्।

—१६ **ततः**- तृतीये पादे। **ततः**-चतुर्थे पादे।

—१७ **जन्म विचार्यत इति**। तच्च जन्म छान्दोग्ये सप्तमप्रपाठकोक्तपञ्चाग्निविद्यायां सिद्धं तत्तात्पर्यं वदन्ति। **तत्र पूर्वजन्मनीति**।

—२४ नन्वत्रार्चिरादिमार्गे तासामाहुतीनामनुपयोगाद्धूममार्ग एव ता इति न तदर्थमिदमधिकरणं किं तु वैराग्यार्थमेवेत्यत आहुः– **न चेति**। धूममार्ग एव ता आहुतयो न किं तु मार्गान्तरेपीत्यर्थः। अत्रार्थे हेतुमाहुः– **तत्रेति**। **तत्र**– अर्चिर्धूममार्गयोः। **गमनागमनयोः**– अर्चिर्मार्गीयगमने धूममार्गीयागमने चेत्यर्थः।

१६८–१ **बहुविशेषश्रवणादिति**। प्रश्नप्रतिलोमक्रमेणारब्धायां विद्यायां यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीत्यस्योत्तरत्वेन पूर्वं पञ्चाग्न्यादिप्रपञ्चनं तदनन्तरं यदतोधिप्रजाः प्रयन्तीत्यस्योत्तरत्वेनार्चिरादिमार्गकथनमित्यादि–प्रकाशे सविस्तरमुक्तं तत्तत एवावधेयम्। ननु ब्रह्मविज्ञानवतामेवार्चिरादिमार्गगमनं नतु होमद्वारापि गमनमत आहुः– **तद्य इति**।

—२ **ज्ञानवतः**– श्रद्धातपःक्रमेण विद्यावतः।

—४ **तथोत्पत्तेः**– पञ्चाग्निविद्यान्यायेन देहोत्पत्तेः। **तुल्येति**। अर्चिरादिमार्गेपि पुरुषभावपर्यन्तमावृत्तिः समाना। प्रकारान्तरेणापि होमो ज्ञानिदेहस्य संपादक इत्युच्यते– **अथवेति**। **निष्कामे**– निष्कामयज्ञकर्तरि।

— ५ **भोगार्थे**– ब्रह्मगतिप्रतिबन्धकप्रारब्धभोगार्थम्। **निष्पत्तिः**– फलप्राप्तिः।

—६ **पञ्चाग्नावेव**–पञ्चाग्निविद्यायामेव।

—८ ननु बृहदारण्यके यज्ञादिना लोकजेतॄणां धूममार्गकथनात्सकाम एव धूममार्गो भवत्वित्यत आहुः- **एवमिति**।

—९ **पृथगुपदेशादिति**। बृहदारण्यके भिन्नतया गीतोक्तप्रकारेण कथनादित्यर्थः। अधिकरणावयवं संशयं द्योतयन्ति– **तस्मादिति**।

—११ **संबन्धः**– भूतसंबन्धः। **संशय इति**।

अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्।

इत्युक्तिः संशयबीजम्। **भिन्नपक्ष इति**। पञ्चाहुतिभ्यो धूमादिमार्गो भिन्नः सकामान् मन एव कर्मसहितं नयतीति पक्षे। **योनौ**–भूमिरूपायाम्। पूर्वपक्षमाहुः– **तत्रेति**। **श्रौतन्यायेनैव**– श्रुत्युक्तेन कर्मसाहित्यन्यायेनैव।

—१२ **गौणत्वापत्तेरिति**। सर्वभूतसाहितस्य गमनेपां च होमे सर्वभूतसाहित्येपां गौणत्वापत्तेरित्यर्थः। **उपस्थापकत्वाभावादिति**। संस्कृतभूतानां जीवेन सह गमनस्य बोधकानां वाक्यानामत्र प्रकरणेभावादित्यर्थः।

—१३ **देवानां**– यज्ञाधिष्ठातृदेवानाम्। **तावद्विलम्बे**– पूर्वदेहवियोगे सत्यवशिष्टफलदानार्थं योग्यदेहान्तरनिष्पत्तिपर्यन्तं स्थितिरूपे विलम्बे।

—१४ आप एव हूयन्त इति। एवकारोप्यर्थे। आपोपि हूयन्त इत्यर्थः। एवं च पूर्वदेहस्याग्नौ प्रतिपत्तिदशायां सर्वाण्येव भूतानि हूयन्त इति नैतैः सह गच्छतीति पूर्वपक्षः।

—१५ अन्तरप्रतिपत्ताविति। अन्तरशब्दो मध्यवाचकः।

अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये।
छिद्रात्मीयविनाबहिरवसरमध्येन्तरात्मनि च॥

इत्यमरकोशात्। चर्माणि द्वीपिनमित्यादिवत्प्रतिपत्ताविति सप्तमी तादर्थ्ये। तथा चोक्तं योग्यशरीरनिष्पत्त्यर्थामिति।

—१७ इदं- योग्यदेहप्राप्तिरूपम्।

—१८ भवतीति। यज्ञानां मुख्यं फलं भगवत्प्रादुर्भावः-ततो ह जज्ञे भुवनस्य गोपाः- हिरण्मयः शकुनिर्ब्रह्मनामेति श्रुतेः। प्रतिपत्तिः- योग्यदेहनिष्पत्तिरूपा साधनसंपत्तिः।

—१९ तत्कारणभूतैः- ज्ञानोपयोगिदेहकारणभूतैः। संस्कृतसूक्ष्मभूतैरित्यर्थः।

—२० तदैव- मृताग्निहोत्रकाले।

—२१ नैकट्यं- संस्कृतभूतानां देहसामीप्यम्। पूर्वं- योग्यदेहप्राप्तेः पूर्वम्। व्यवधानात्- भूतसूक्ष्माणां पूर्वदेहेन व्यवधानात्।

—२२ तमेव-एवंविधं जीवमेव। आसक्तानीति। आसक्तानि प्रयान्तीत्यर्थः।

—२३ समन्वारभेते- अग्रिमजन्मार्थं सह गच्छतः। पूर्वप्रज्ञा चेति। यं यं वापि स्मरन्भावमित्युक्ता पूर्वबुद्धिरित्यर्थः। जीवपक्ष इति। जीवस्य गमनपक्षे ज्ञानकर्मणामासञ्जनमावश्यकम्। कर्मणां सूक्ष्मपृथिव्यादिरूपत्वात्। भाष्ये द्रव्यकर्मणी इत्यत्रासञ्जिके इति ग्राह्यम्।

१६९-३ सिद्धवत्कारवचनात्- पुरुषत्वेन रूपेण निरूपणात्।

—४ न ह्यन्याधिष्ठान इति। एवं च यत्र यच्छरीरं योग्यं तदेव तत्र भवति न त्वन्यथेत्यर्थः।

—५ अन्यथापीति। असंस्कृतत्वे स्रावपातादिना गर्भनाशोपि स्यादित्यर्थः।

—६ ननूत्क्रमणप्रभृति ज्ञानयोग्यदेहलाभपर्यन्तं जीवे सर्वसूक्ष्मभूतसाहित्ये समानेपामेव होमः कुत उक्त इत्यत आहुः- जीवसाहित्येपीति शरीरवादिति। यथा वाजसनेयिशाखायां पुरुषस्य होम्यत्वेपि शरीरस्य

मुख्यत्वमुक्तं तथात्राप्यपामित्यर्थः । अयं- देवकृतः । तत्र-ब्रह्मलोके । तं-जीवम् ।

—७ न दुःखहेतुरिति । असंसारित्वात् । एवं च नास्योपाख्यानस्य वैराग्यहेतुत्वमित्यर्थः ।

—९ तस्मादिति । अपां होमस्य गौणत्वस्य खण्डितत्वाच्छ्रौतन्यायस्य दर्शितत्वाद्धोमप्रयोजकपूर्वजन्मगतनिष्कामकर्मणामेव संस्कृतसूक्ष्मभूतोपस्थापकत्वादब्भोमस्य द्युलोकाग्नावुक्तत्वेन तत्फलस्य सोमराजात्मकत्वेन च स्थूलशरीरारम्भकस्थूलभूतसंस्कारकतया तत्प्रयोजकलिङ्गशरीरसापेक्षत्वात्तदनागमने प्रश्ननिरूपणानुपपत्त्या तदागमनस्यैव देवाविलम्बे कारणत्वात्संस्कृतैर्भूतैः संपरिष्वक्त एव गच्छति न तु होमानन्तरं भूतसंबन्ध इति सिद्धमित्यर्थः ।

सूत्रार्थः- ब्रह्मज्ञानौपयिकजन्मार्थं संस्कृतभूतसहितो जीवो गच्छति । प्रश्नोत्तराभ्याम् । वेत्थ यथा पञ्चम्यामित्यादिः प्रश्नः । असौ वाव लोक इत्युत्तरम् । प्रश्नेपां पुरुषत्वेन कथनादुत्तरे चाहुतिफलत्वेन कथनात्तासां मुख्यतया ग्रहणस्य सर्वभूतोपलक्षकत्वात्संस्कृतभूतसहितो गच्छतीति ॥ १ ॥

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ ३।१।२ ॥

—१० अवगम्यन्ते-संस्कार्यत्वेन ज्ञायन्ते ।

—११ तावन्मात्रसंस्कारकत्वं-देवानां सर्वभूतसंस्कारकत्वम् ।

—१३ तुशब्द इति । अपामेव होम्यत्वेन संस्कारो देवैः क्रियते न तु सर्वभूतानामिति शङ्कामपाकरोति तुशब्द इत्यर्थः ।

—१४ त्र्यात्मकत्वादिति । जलानां त्रिवृत्कृतत्वादित्यर्थः । एवंचाप्शब्देन सर्वभूतानि गृहीतानीति ज्ञेयम् ।

—१७ भूयस्त्वादिति । रेतोलोहितादिद्वारा बाहुल्यादित्यर्थः । शुद्धत्वादिति । आपः स्वभावतो मेध्या इति स्मृतेः । विशेषाभावादिति । साम्येनेत्यर्थः । मध्यमभावात्-पृथ्वीतेजसोर्मध्यवृत्तित्वात् । दीक्षिततुल्यत्वेनेति । अग्रे बृहदारण्यकोक्तषष्ठपर्याये भास्वरवर्णपुरुषतायां दीक्षिततुल्यत्वेन ।

—१८ भारूपत्वेन-अब्जनकभारूपत्वेन । शुद्धापामेवेत्येवकारोप्यर्थे ।

—१९ द्रव्यभूयस्करत्वं-वरदानेन द्रव्यभूयस्करत्वम् ॥ २ ॥

सूत्रार्थः— प्रश्नप्रतिवचनयोरपां ग्रहणं तेजोबन्नानां त्रिवृत्कृतानामुपलक्षणम् । ननूपलक्षणत्वेन जलस्यैव ग्रहणं किमर्थमिति चेज्जलीयपदार्थबाहुल्यादिति गृहाणेति ।

## प्राणगतेश्च ॥ ३।१।३ ॥

—२३ प्राणाप्यायनजनकत्वादिति-आपोमयाः प्राणा इत्यादिना जलानां प्राणानां वर्धकत्वमुक्तम् ।

—२४ जलौकावदिति । यथा जलौकास्तृणान्तरं प्राप्य सर्वाण्यङ्गान्युपसंहरत्येवं जीवोपि देहान्तरं प्राप्य पूर्वोपार्जितं सर्वं स्वस्मिन्नुपसंहरति ।

१७०-१ अन्यत्र- मुक्तिभिन्नस्थले ।

—२ देवभाव इति । देवोपासनया प्राणानां देवभाव इत्यर्थः ।

—३ अत्रैव- क्रममुक्त्यादिस्थल एवेत्यर्थः । अत इति । सद्योमुक्तिं विहाय सर्वत्र देहसंबन्ध इत्यत्राप्यावश्यक इत्यपां संश्लेषो वक्तव्यः ।

सूत्रार्थः-तमुत्क्रामन्तमिति श्रुत्या प्राणस्य गतेरुक्तत्वादापोमयाः प्राणा इत्यपां पोषकत्वश्रवणात्प्राणः स्वाप्यायकं गृहीत्वा गच्छतीत्यपां ग्रहणं युक्तामिति ॥ ३ ॥

## अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ३।१।४ ॥

—८ यत्रास्य पुरुषस्येति । इयं श्रुतिर्बृहदारण्यकार्तभागब्राह्मणस्था ।

—१० बाधितविषयेति । लोमकेशानां सावयवत्वेन शरीरनाशे नाशसंभवाद्वनस्पत्यादिप्राप्तिर्लयमेव बोधयति नतु यथाश्रुतार्थस्य संभवः । अतो बाधविषयतेत्यर्थः ।

—१४ प्रकरणव्यतिरेकेण- अमुक्तप्रकरणव्यतिरेकेण । एवं चाग्निं वागिति श्रुतिर्मुक्तविषया । उत्क्रमणश्रुतिस्त्वमुक्तविषयेन्याविरोधः प्रतिपादितः । भाक्ता- लाक्षणिकी ।

—१५ व्यवस्थापक्षं व्युत्पादयन्ति- अथेति ।

—१६ मृत्युं पृष्ट्वेति । कास्वित्सा देवतेत्यादिना मृत्युविषयकं प्रश्नं कृत्वा ।

—१८ सामग्र्याः- लौकिकभोगसामग्र्याः ।

—१९ ननु मन्त्रव्याख्यानश्रुतौ कर्मप्रशंसायाः कृतत्वान्मन्त्रणं न जीवब्रह्मभावबोधकमित्यत आहुः- तौ हेति । भिन्नप्रश्नोत्तरेति । एतद्व्यतिरिक्तप्रश्नोत्तरप्रतिपादिकेत्यर्थः । उभयोरिति । यदूचतुरित्युभयोर्वचनाविधानादित्यर्थः ।

—२० ननु तद्विवरणं कुतो नेत्यत आहुः- ब्रह्मविद्येति ।

—२३ अत इति । एवं चाग्न्यादिभावश्रुतिर्मुक्तविषया । उत्क्रमणश्रुतिस्त्वमुक्तविषयेति व्यवस्थापक्षेप्यविरोधः ।

**सूत्रार्थः**- ननु यत्रास्य पुरुषस्येति श्रुत्या वाक्प्राणादीनामग्निवायुभावश्रवणात्प्राणस्य जीवेन सह गमनमनुपपन्नमिति चेन्न । अग्न्यादिगतिश्रुतेरमुक्तविषयत्वेन गौणत्वात् । यत्रास्य पुरुषस्येति श्रुतेर्मुक्तविषयत्वाच्चाग्निभावबोधकश्रुत्योत्क्रमणश्रुतेरबाध इति ॥ ४ ॥

**प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ३।१।५ ॥**

१७१-३ **संकीर्तिता इति** । उपक्रम आपो न कथिता इत्यर्थः ।

—४ **पुरुषवचनमिति** । उपसंहारेपां पुरुषवचनत्वेन निरूपणम् । उपक्रमापेक्षयोपसंहारस्य संजातविरोधित्वेन दौर्बल्यादित्यर्थः ।

—५ **मनसेति** । मनसा प्रणयतीयं वै मन इत्यत्रेदंपदेन श्रद्धासाहित्यग्रहणसंभवादित्यर्थः । नन्वेवं मनसो मुख्यत्वाच्छ्रद्धाया गौणत्वापत्तिरत आहुः- **तथापीति** । **अरुणान्यायेनेति** । जैमिनीये तृतीयाध्यायप्रथमपादेयं न्यायो विचारितः । तथाहि- अरुणया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणातीत्यत्र ज्योतिष्टोमप्रकरणवाक्येरुणगुणः क्रयविशेषणं भवति न वेति संशय्य सिद्धान्तितं यदरुणाशब्दः स्त्रीलिङ्गतया गुणिवचनः । तथा सत्यरुणगुणः स्वयोगेन द्रव्यं व्यवच्छिन्दन् द्रव्यद्वारा क्रये करणभावं प्राप्स्यतीति । एवंच यथा तत्रारुणधर्मस्य मुख्यत्वं न गोस्तथात्र होमे मनसो होम्यत्वेपि श्रद्धाया एव मुख्यत्वं न मनस इत्यर्थः । ननु श्रद्धापदेनापामग्रहणेब्युक्तिविशिष्टौ प्रश्नोपसंहारौ कथं संगच्छेतामित्याहुः- **तर्हि कथमिति** ।

—६ उत्तरयन्ति- **परोक्षवादादिति** । तथा चार्वाग्बिलश्चमस ऊर्ध्वबुध्न इत्यत्र चमसादिशब्दैर्गौण्या वृत्त्या यथा शिरःप्रभृत्युच्यते तथा श्रद्धा वा आप इत्यत्र शुद्धिसंपादकत्वसाम्यादाप इति पदेन श्रद्धैवोच्यत इत्यर्थः ।

—८ पूर्वपक्षमुपसंहरन्ति- **तस्मादिति** ।

—११ **नोपचार इति** । न लक्षणा स्वीकर्तव्या भवति । निघण्टौ श्रदिति सत्यनाम । श्रत्सत्यं दधातीति श्रद्धाशब्दस्य योगेनाप्सु प्रवृत्तेरित्यर्थः । उपपत्तिमाहुः- **उपक्रमेत्यादिना** । तथा चोपसंहारेपां होम्यत्वश्रवणाच्छ्रद्धाशब्देनाप्याप एवोपादेयाः । अन्यथोपक्रमोपसंहारविरोधः स्यादित्यर्थः ।

—१२ ननु श्रद्धाशब्दस्यावाचकत्वे श्रद्धासाहित्यलाभ इत्यत आहुः- **श्रद्धासहभाव इति** । तथा च पूर्वजन्मनि यजमाना इदानीं देवाश्च होतारो न श्रद्धाविधुराः । एवं तत्र श्रद्धासत्त्वात्संस्कारद्वारेण सूक्ष्मभूतेषु श्रद्धासत्त्वान्नाश्रद्धया हुतं दत्तमित्यादिविरोध इत्यर्थः । **तेन**- श्रद्धापदस्याप्सु योगः, उपक्रमोपसंहारानुपपत्तिः, श्रद्धासाहित्यलाभश्चेत्युपपत्तित्रयेण ।

—१४ श्रद्धाप्रयोगः– अप्सु श्रद्धाप्रयोगः ।

—१५ तत्र– सकामकर्तरि । सकामकर्तुः फल एवादरः । निष्कामकर्तुस्तु कर्मण्येवादरो न तु फल इत्यर्थः ।

—१६ आश्रयस्य– कर्मकर्तुः । विषयभावजनकत्वादिति । अयमर्थः । श्रद्धाया अयं स्वभावो यत्स्वाश्रयं स्वविषयं करोतीति ।

—१७ श्रद्धाप्रयोगः– अप्सु श्रद्धाप्रयोगः ।

सूत्रार्थः– ननु देवाः श्रद्धां जुह्वतीति प्रथमाहुतिबोधकश्रुतावपामश्रवणात्कथं ताभिः परिष्वक्तो गच्छतीति चेन्न । यतस्ता एवापः श्रद्धाशब्देनोच्यन्ते । उपपत्तेस्तथाहि–उपक्रमोपसंहारयोरपां श्रवणान्मध्ये श्रुतः शब्दोपि तत्पर एवेति ॥ ५ ॥

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ३।१।६ ॥

—२१ स्थितमिति । निर्धारितमित्यर्थः ।

१७२–२ श्रद्धापदेन–कर्माणि श्रद्धाप्रतिपादकेन पदेन । अनेन निष्कामकर्तारो लभ्यन्ते । देवकर्तृत्वेनेति । देवानां च प्रत्युपकारस्तेष्वेवावश्यक इति होमं प्रति देवानां कर्तृत्वेन च त एव प्रतीयन्ते । सोमभावसाम्याच्चेति । सोमभावोपि तादृशामेव सर्वेषामित्यर्थः । सोमभावसाम्यादिति हेतुं विभजन्ते–इष्टादिकारिणामिति ।

—३ अत्रापि–ज्योतिरादिमार्गे ।

सूत्रार्थः– ननु विशेषाश्रवणात्सर्वेषां जीवानां पञ्चाहुतिप्रकारेण जन्मेति चेन्न । इष्टादिकारिण एव धूमादिमार्गेण गच्छन्तः प्रथमं सोमभावं प्राप्नुवन्तीति प्रतीतेरिति ॥ ६ ॥

भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥ ३।१।७ ॥

–८ तत्– सोमात्मकमन्नम् ।

—१३ प्रकृतेपीति । एवं च चन्द्रमसः सोमभावो गौणश्चेदेषां नितरां गौण इत्यर्थः ।

—१४ भाक्तत्वं– गौणत्वम् ।

—१५ अन्यस्य– अब्रह्मविदः । नोपपद्यत इति । एवं च चन्द्रस्यान्नरूपतानुपपन्नेत्यर्थः ।

—१७ प्रकृते तु– चन्द्रभावे तु ।

—१८ तथा सति– आत्मवित्त्वे सति ।

—२१ तेषां– यष्टॄणाम् ।

—२२ तथा– चन्द्रत्वेन । भक्षणं– मुख्यभक्षणम् ।

—२३ ननु न वै देवा अश्नन्ति न पिबन्तीत्यादिश्रुतिविरोधाद् देवानां चन्द्रकलाभक्षणमपि गौणमित्यत आहुः– देवानामभक्षणमिति । एवं च देवानां यज्ञादिभागभोक्तृत्वमिव भौतिकभोक्तृत्वं सिद्धम् । भगवद्रूपाणां देवानां त्वभोक्तृत्वम् ।

—२४ तस्य– भगवतः । आविरुद्धे इति । जीवसाक्षिरूपाभ्यां भगवतोऽशनमनशनं च न विरुध्यते । तस्य विरुद्धधर्माश्रयत्वात् ।

सूत्रार्थः– देवानामात्मवित्त्वाभावात्तत्कृतं भक्षणं गौणं श्रुतिरेवान्नस्य गौणत्वं दर्शयति । तथाहि न स वेद यथा पशुरित्यत्र यथा पशुशब्दः पोषकपर एवं भक्षणं भोग्यभावपरं लक्षणया । तत्कृतसेवाग्रहणमेव देवकृतं भक्षणमिति ॥ ७ ॥

इति प्रथममधिकरणम् ।

---

कृतात्ययेनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ३।१।८ ॥

१७३–७ अनुशयवानिति । अनु पश्चाच्छेते कर्मफलभोगानन्तरं तिष्ठति यः स शेषः सोनुशयस्तद्वान् ।

—८ सदाचारयुक्त इति । तथा च पूर्वोक्तरीत्या वृष्ट्यादिद्वारा जन्म न भवेच्चेत्तदानीं योनौ दुष्कर्मचारी भवेदिति ज्ञानोपयोगिदेहार्थं तद्विचार आवश्यक इति भावः ।

—१० पूर्वपक्षमाहुः– तत्रेत्यादिना ।

—१२ कृतपदेन कर्म न ग्राह्यं किं तु सोमभाव एवेत्याहुः– कृतस्य सोमभावस्येति ।

—१५ अपगच्छति– योग्यदेहानुकूलगर्भवासायावतरति । अन्यथा– कर्मशेषसामग्र्यभावे ।

—१६ स्यादिति ।

प्रारब्धकर्मनिर्वाणो न्यपतत्पाञ्चभौतिकः ।

इति वचनात् ।

— १९ देवगाथेति । तथा चात्र गाथायां कृतस्य शोभनं कर्मजन्यसामग्रीरूपमवशेषितमित्युक्तं न तु कृतमवशेषितमित्युक्तमतः सामग्र्येवावशिष्टेत्यर्थः । ननु

कदाचित्सुकृतं कर्म कूटस्थमिव तिष्ठति ।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते ॥

इत्यन्या स्मृतिः कर्मरूपमप्यनुशयं दर्शयति तेन न निश्चय उक्तरूपस्यानुशयस्य ग्रहण इत्यत आहुः- अन्यथेति । अन्यथा- उक्तरूपस्यानुशयस्याग्रहणे । **पूर्वजन्मस्मृत्यभाव इति** । स्मारकाभावादित्यर्थः ।

—२१ ननु पूर्वकर्मजसामग्रीशेषरूपानुशयबलादेव तस्य सदाचारस्मृत्याद्युपपत्तेः संस्कृताद्भिः परिष्वङ्गो न स्वीकार्य इत्यत आहुः- **नन्विति** ।

—२२ **यथागतमिति** । अद्भिः परिष्वक्ततया यथा गमनं तथैवागमनमपि बोध्यमित्यर्थः । **बाधः स्यादिति** । तथाच प्रश्नोत्तरयोरद्भिः परिष्वक्तस्यैव गमनागमने प्रतीयेते तेन तयोर्बाधः स्यादित्यर्थः ।

**सूत्रार्थः**—सोमभावस्य नाशे सत्यवान्तरफलसाधकसुकृतलेशसहितो वृष्टिभावं प्राप्नोति दृष्टस्मृतिभ्याम् । तथाहि- लोके भोगसाधकमूलधननाशेपि तादृशवस्त्रोपकरणादिसहित एव पुरुषस्तत्स्थानादपगच्छतीति दृष्टम् । यद्यत्र नः स्वर्गसुखावशेषितमिति स्मृतिश्च । स च यथागतमद्भिः परिष्वक्तः । अवान्तरफलसाधकसाहित्येन च तदागमनं न । एवं च वैराग्यसहितो भिन्नप्रकाराद्भिः परिष्वक्तो देवकृपासहितो वृष्टिर्भवतीति ॥ ८ ॥

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ३।१।९ ॥

-१७४-३ **चरणादेव**-जन्मान्तरीयशुभाचारादेव । **अभ्याशः**-क्षिप्रम् ।

—९ **उपलक्षणार्थेति** । काकयुक्तं देवदत्तस्य गृहमितिवत् पूर्वजन्मकृतसमीचीनकर्मोपलक्षयतीत्यर्थः ।

—१३ **भिन्नप्रकारत्वं**- कर्मशेषरूपानुशयशून्यत्वम् ।

—१४ **न शङ्केति** । दृष्टसामग्रीलाभेन नादृष्टरूपानुशयशङ्का । अत एव नोत्तरम् ।

—१५ **पुरुषादन्यभावः**- अदृष्टप्रकारेण ज्ञानोपयोगिदेहसिद्धिरूपः । **प्रकरणपरिगृहीतेति** । दृष्टप्रकारेण पुरुषदेहबोधकप्रकरणस्था पञ्चाग्निश्रुतिः । **अन्यत्र**- अदृष्टप्रकारेण देहसंपादकन्यायसंपादिका नेत्यर्थः ।

**सूत्रार्थः**- ननु रमणीयाचरणात्सम्यग्जन्मासिद्धावनुशयसहभावः किमर्थमिति चेन्न । तद्य इहेति श्रुतावुक्तस्य योनिशब्दस्य पूर्वजन्मसूचकत्वात् । तथाहि- अनेन पूर्वजन्मनि सुकृतमाचरितमिति सूचयितुं न त्वग्रिमजन्मसमीचीनतायाः सूचकं तत् । अतो ज्ञानार्थमनुशयोपेक्ष्यत इति कार्ष्णाजिनेर्मतमिति ॥ ९ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३।१।१० ॥

—१९ **विधायकत्वमिति** । ज्ञानोपयोगिदेहप्राप्तिकामो रमणीयमाचरणं कुर्यादिति श्रुतेर्विधायकत्वमङ्गीकार्यमित्यर्थः ।

—२१ तस्याः श्रुतेः- रमणीयचरणश्रुतेः।

—२५ अन्यनिषेधार्थे- धूममार्गिणां निषिद्धयोनिनिरासार्थम्।

१७५-२ वेदवादिनामिति। वेदबाह्यमतत्वादिति शेषः।

—३ प्रजामन्विति। पुत्रगृहे तत्पुत्ररूपेण जन्म लभन्त इत्यर्थः।

—५ सर्वेषां- कर्तृकर्मफलानाम्। ऐक्यं- एकजातीयत्वम्। भिन्नरूपत्वात्- विजातीयरूपत्वात्।

—६ एकं- एकजातीयं त्रिकम्। अपरत्र- भिन्नजातीयात्रिके। उपरोधप्रसङ्गादिति। कस्य कारणस्य किं फलमित्यनिर्णयापत्तेः।

—७ प्रकृतेपि- चरणवाक्यस्थधूममार्गेपि। ननूत्तमचरणमेवोत्तमभवनभक्षणयोर्नियामकं स्यात्तेन न दोष इत्यत आहुः- ब्राह्मणादीनामिति।

सूत्रार्थः- ननु चरणश्रुत्याः पूर्वजन्मकृत्युपलक्षकत्व इह जन्मनि न कोपि पुरुषार्थः स्यादतो वैयर्थ्यं चरणश्रुतेस्तदपाकर्तुमग्रिमजन्मन्येव रमणीयत्वप्राप्तिरूपोर्थो ग्राह्यस्तेन नानुशयापेक्षेति चेन्न। धूमादिमार्गेणापेक्षितत्वाच्चरणश्रुतेर्वैयर्थ्याभावात्। एवं च चरणश्रुतिः सार्थक्यादनुशयाभावबोधिका नेति ॥ १० ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ३।१।११ ॥

—१३ अतःपरं भगवद्रूपकर्मात्मकस्य फलशेषसामग्रीरूपस्य कियत्कालमनुवृत्तिरिति विवेचयितुं सूत्रमवतारयन्ति- फलांश इति।

—१४ अभिव्यक्तः- फलरूपेणाविर्भूतः।

सूत्रार्थः— विहितनिषिद्धकर्मणी एवानुशय इति बादरेर्मतमिति ॥ ११ ॥

इति द्वितीयमधिकरणम्।

---

## अनिष्टादिकारिणामपि च श्रुतम् ॥ ३।१।१२ ॥

१७६-२ त्रिविधकर्मविधायक इति। कर्माकर्मविकर्मेति त्रैविध्यं बोधयन् विधायको वेद इत्यर्थः।

—४ एकान्ततः- नियमेन।

—६ अविशेषोपसंहाराविति। तद्य इह रमणीयचरणा य इह कपूयचरणा इति वाक्याभ्यां सामान्यत उभयोरुपसंहारावुक्तौ।

सूत्रार्थः— शङ्कासूत्रम्। ननु ये वै के चास्माल्लोकादिति श्रुत्येष्टाधिकारिव्यतिरिक्तानामपि सोमभावानन्तरं जन्म श्रुतमिति ॥ १२ ॥

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ ३।१।१३ ॥

—१२ अनुभवार्थं- पुण्यफलानुभवार्थम्।

—१३ गतिः- फलप्राप्तिः। विसदृशी- सोमभावविलक्षणा।

—१५ वैदिकगृह्यस्मार्तभेदेनेति। तत्र वैदिक्येका। गृह्यस्मार्तीया द्वितीया।

—२१ पूर्वजन्मधर्मस्य- पूर्वजन्मगतस्मार्तधर्मस्य।

—२२ श्रौताङ्गत्वं- चन्द्रभावरूपफलाङ्गत्वम्। उपक्षीणत्वात्- चन्द्रभाव उपक्षीणत्वात्। पञ्चाग्निप्रकार एव- पञ्चाग्निविद्यायामुक्ते ज्ञानोपयोगिदेहप्राप्तिफल एवेत्यर्थः।

—२३ अग्रे- तदाधिगम उत्तरपूर्वार्धयोरश्लेषविनाशाविति सूत्रे।

—२४ पितृमेधप्रथमाहुतिमन्त्र इति। अयं मन्त्रो ह्यर्वाग्बिलश्चमस इति मन्त्रवत्सिद्धार्थबोधकत्वेनाविधायकः।

१७७-१ व्यवस्थेति। उक्तपञ्चाग्निविद्यावतां चन्द्रभावः, तद्भिन्नानां यमलोकगतिरिति व्यवस्थेत्यर्थः। चित्तशुद्धीत्यादि। चित्तशुद्धिसत्त्वे पञ्चाग्निसंबन्ध उत्तरकाण्डफलम्। तदभावे पूर्वकाण्डफलं यमलोकादिरित्यर्थः।

—३ वेदान्तिनामपीति। न हि कश्चित्क्षणमपीति गीतावाक्यात्कर्मोत्पत्तौ वेदान्तिनामपि व्यवस्थावश्यकीत्यर्थः।

सूत्रार्थः—परिहारसूत्रम्। विहितेतरकर्तॄणां पापिनां यमसंनिधौ दुःखमनुभूय विशेषानुभवार्थमारोहस्तदनुभवानन्तरमवरोहश्च भवति। वैवस्वते विविच्यन्त इति श्रुतौ तेषां पापिनां विलक्षणगतिदर्शनादिति॥ १३॥

स्मरन्ति च ॥ ३।१।१४ ॥

सूत्रार्थः—व्यासादयोपि-यमेन पृष्टस्तत्राहमित्यादिना यमगतिं स्मरन्ति। चकाराल्लोकप्रसिद्धिर्ग्राह्येति ॥ १४ ॥

अपि सप्त ॥ ३।१।१५ ॥

सूत्रार्थः—पापोपभोगार्थं यमालयगमनमवश्यमङ्गीकर्तव्यं यतस्तत्र सप्त नरकाः सन्तीति ॥ १५ ॥

तत्रापि च तद्व्यापारादविरोधः ॥ ३।१।१६ ॥

—१५ तृतीयः पक्ष इति। सोमभावयमलोकाभ्यामन्याश्चित्रगुप्ताद्यधिकारिकः पक्ष इत्यर्थः।

—१९ नन्वप्रतिषिद्धमनुमतं भवतीति न्यायेन श्रुतिनिषेधाभावादतिरिक्तचित्रगुप्ताद्यधिकारिकपक्षाङ्गीकारे को दोष इत्यतः पक्षान्तरमाहुः— अथचेति । मन्त्रलिङ्गसिद्धेरिति । वैवस्वतं संगमनमिति मन्त्रलिङ्गात्सिद्धेरित्यर्थः ।

सूत्रार्थः—ननु नरकेषु चित्रगुप्तादयो यमाभिन्ना अधिकारिणः सन्ति तेन चेयं तृतीया गतिर्नरकगमनात्मिकेति चेन्न । चित्रगुप्तादीनां यमायत्तत्वात्तृतीयगतेरभावादिति ॥ १६ ॥

इति तृतीयमधिकरणम् ।

---

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३।१।१७ ॥

—२४ साधारणत्वाभावायेति । सोमगतेः सर्वसाधारणत्वाभावायेत्यर्थः ।

१७८—३ गौणमुख्यफलदेहार्थं—गौणमुख्यफलोपयोगिदेहार्थम् ।

—४ तयोरेव—विद्याकर्मणोरेव । प्रकृतत्वात्—प्रकरणप्राप्तत्वात् । कारणत्वात्—देवयानसोमगतिकारणत्वात् ।

सूत्रार्थः—ननु पञ्चाग्निविद्याप्रकरणे, अर्चिरादिमार्गनिरूपणे च गत्यन्तरस्याकथितत्वाद्यमगतिर्नास्तीति चेन्न । विद्यया देवयानमित्यादिश्रुतौ विद्याकर्मणोरेव प्रकृतत्वेन यममार्गस्यानुक्तेः । एवं चान्यत्र श्रुतत्वाद्यममार्गोस्त्येवेति ॥ १७ ॥

## न तृतीये तथोपलब्धेः ॥ ३।१।१८ ॥

—१५ एकवाक्यतेति । तानीमानीत्यादिनोक्तस्योभयोर्देवयानपितृयाणयोरेकवाक्यतैव प्रकरणाद्युक्तेत्यर्थः ।

—१६ संभवतीति । जायस्व म्रियस्वेति मार्गेपि महोपभोगः संभवति ।

—१८ जन्मद्वयं— हरिणब्राह्मणयोनिद्वयम् । त्रिभिरितीति । एतद्वचनं श्रीमद्भागवतैकादशस्कन्धे नारदेनर्षभान्प्रस्तुत्योक्तम् ।

—१९ प्रतीतेः— श्रीमद्भागवतपञ्चमस्कन्धे— अहं पुरा भरतो नामेति जडोक्तायाः प्रतीतेरित्यर्थः । ततः पूर्वं—भरतदेहात्पूर्वम् ।

—२० ननु विदुरादिषु सोमभावासंभवात्पञ्चाहुतिनियमभङ्ग इत्यत आहुः—पञ्चाहुतिनियमाभावस्त्विति ।

—२१ पुष्टिमार्गत्वात्—भगवदनुग्रहमार्गत्वात् ।

सूत्रार्थः—जायस्व म्रियस्वेति तृतीये मार्गे यमगतेर्नान्तर्भावः । यमलोकवद्दुःखाद्यनुपलब्धेरिति ॥ १८ ॥

## स्मर्यतेपि च लोके ॥ ३।१।१९ ॥

सूत्रार्थः—मूर्च्छादिषु यमलोकगमनसंभाषणादिकं लोकेपि स्मर्यत इति ॥ १९ ॥

## दर्शनाच्च ॥ ३।१।२० ॥

सूत्रार्थः—यमपुरुषाणामजामिलप्रभृतिभिर्दर्शनाच्चकारेण तैः संभाषणायमगतिरस्तीति ॥ २० ॥

इति चतुर्थमधिकरणम्।

---

## तृतीये शब्दावरोधः संशोकजस्य ॥ ३।१।२१ ॥

१७९—७ बीजव्यतिरेकेणेति । बीजं समवायिकारणं वृष्टिर्निमित्तकारणम्। अतः समवायिकारणबीजं विना वृष्टिमात्रेण नोत्पत्तिरित्यर्थः।

—९ शब्दसाम्येनेति । कार्यकारणोभयरूपेपि जले जलशब्दार्थस्य सत्त्वेनेत्यर्थः।

—१४ ननु तासामपां शोकजत्वकथने कथं प्रकृते कारणरूपजलसिद्धिरित्यत आहुः-अग्रे चेति।

—१६ शोकपदेनेति । शोकवाचकशोचतिपदस्य श्रुतावुपादानेन । यदाश्चिवति श्रुतिः तैत्तिरीयसंहिताप्रथमाष्टकपञ्चमप्रपाठकारम्भस्था।

—१७ सहायः सूचित इति। सहायः साहाय्यकारी दृष्टान्तः। तथाच भौतिकजलस्यापि रजतादिकारणतास्यां श्रुतौ प्रतिपाद्यते तर्ह्याध्यात्मिकजलस्य कारणतायां कः संदेह इत्यर्थः।

—१८ अग्निसमिद्रूपत्वादिति । छान्दोग्येग्निरूपत्वात्, बृहदारण्यके समिद्रूपत्वात्।

सूत्रार्थः- ननु तृतीयाहुतौ वृष्टेरन्नमिति कथनमसंगतं बीजव्यतिरेकेणान्नानुत्पत्तेरिति चेन्न। तत्र शब्दसाम्येन वृष्टिशब्देन बीजानिरपेक्षस्य कारणशक्तियुतस्य जलस्य ग्रहणादिति ॥ २१ ॥

## साभाव्यापत्तिरुपपत्तेः ॥ ३।१।२२ ॥

—२२ तस्मिन्-चन्द्रलोके। यावत्संपातं-ततः पतनपर्यन्तम्।

१८०-३ तत्तद्भावः-वायुधूमादिभावः । तदनन्तरभावित्वात्-ततः पश्चाद्भावित्वात्।

—४ न कारणत्वं–न वृष्टिजलस्य कारणरूपजलत्वम् ।

—८ उपपद्यत इति । एवं च गौणवृत्त्या यद्येवं न स्यात्तर्हि चित्रतुरगादावपि चित्रादिपदप्रयोगो मुख्यः स्यात्तदा मुख्यतुरगादिसाध्या गमनादिक्रिया चित्रतुरगादिना स्यादतो गौणवृत्तेः कल्पनमिति भावः ।

—९ विकारस्य–चित्रतुरंगमस्य । विकारान्तरापत्तौ–वास्तवतुरंगत्वेन प्रतीतिरूपापत्तौ । इयं–तत्तुल्याकृतिरूपा । यथा वृत्रो भूत्वाथ वृत्रहेत्यादौ । उपासनायां–वाचं धेनुमुपासीतेत्यत्र ।

—१० तदपि–आकृतिसाम्यमपि । ननु वृष्टेराहुतेस्तत्तद्भावानङ्गीकारे वायुर्भूत्वेति श्रुतिविरोध इत्यत आहुः– न चेति । प्रतिनियतपदार्थाः–प्रतिस्वरूपं नियतेषु वाय्वादिषु निविष्टे जीवे ताद्रूप्यभवनावरोहाभ्यामेव भूत्वेति पदप्रयोगात् ।

सूत्रार्थः– ननु कार्यरूपवाय्वादिसहभावेन वृष्टिरपि कार्यरूपैव गृह्येत तेन कारणशक्तियुतस्य जलस्याग्रहणात्पूर्वोक्तासंगतिः सुस्थितेति चेन्न । यतो वाय्वादिरूपापत्तिरपि वाय्वादिवदाभानमेव न तु मुख्यं वाय्वादिभवनम् । अन्यस्यान्यभावबोधकस्य वायुर्भूत्वेति वाक्यस्य गौणत्वेनाप्युपपत्तेः । अतो न कार्यरूपवृष्टिभाव इति ॥ २२ ॥

## नातिचिरेण विशेषात् ॥ ३।१।२३ ॥

—१७ वर्णलोप इति । दुर्निष्प्रपततरमित्यत्रत्यतकारलोपः । भिन्नपक्षे–धूममार्गात्पश्चाग्निमार्गो भिन्न इति पक्षे ।

—२० एवं वचनं–एतत्क्लेशकथनम् ।

सूत्रार्थः–वृष्टेरन्नरूपताभवने बहुकालो नापेक्ष्यते । अन्नभावापन्नस्यैव बहुकालापेक्षेति विशेषश्रवणादिति ॥ २३ ॥

इति पञ्चममधिकरणम् ।

---

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ३।१।२४ ॥

१८१–१ मर्यादाभङ्गप्रसंगादिति । चेतनाचेतनविभागव्यवस्थाभङ्गः स्यादित्यर्थः ।

—३ न पूर्ववत्–वायुर्भूत्वेत्यादिवत् । तद्भावापत्तिः–साम्यम् ।

—७ अत्रापि–होम्यान्नेपि । अधिष्ठाने हीति । यस्मादधिष्ठानेभिमाने सतीत्यर्थः । अधिष्ठीयतेनेनेति व्युत्पत्तेः । अभिमाने सत्येव वेदना लोके दृश्यते ।

**सूत्रार्थः**— ननु संसर्गजैः कर्मदोषैरित्युक्तेरधिकारिणोन्नत्वासंभव इति चेन्न । यत उप्ते बीजे यदा वृष्टिर्जायते तदा जलभावापन्ना जीवास्तेन सहान्नादिबीजे प्रविशन्ति । एवंच तस्मिन्समयेन्यैर्जीवैरधिष्ठितो यो व्रीह्यादिस्तस्मिन् पूर्ववद् वाय्वादिवन्न तद्भावापत्तिः किंत्वतिथिवत्कार्यमात्रं स्थितिः । व्रीहियवा इत्यादिना श्रुतौ जगति स्थितव्रीह्यादिभावस्यैव कथनादिति ॥ २४ ॥

## अशुद्धमिति चेन्न शब्दात् ॥ ३।१।२५ ॥

—१४ अन्यस्य-अशुद्धस्यान्नस्य ।

—१५ का गतिरिति । कथं निर्वाह इत्यर्थः ।

**सूत्रार्थः**— नन्वधिष्ठानेऽङ्गीक्रियमाणेधिष्ठातृजीवानामशुद्धत्वादन्नस्याशुद्धत्वमिति चेन्न । देवा अन्नं जुह्वतीति श्रुत्या देवहोमात्मकसंस्कारेणान्नस्य शुद्धत्वादिति ॥ २५ ॥

इति षष्ठमधिकरणम् ।

---

## रेतःसिग्योगोथ ॥ ३।१।२६ ॥

—२१ देवापेक्षेति । अथ नियमस्तदापि न देवापेक्षेत्यर्थः । पौरुषं चेति । एवंच पुरुषपदेन रेतःसिक्पुरुषो विज्ञायते । तस्मिन्पुरुषेन्नहोमः प्राणाग्निहोत्रप्रकारेणेत्यतो देवापेक्षा । इन्द्रियाधिष्ठातृदेवप्रसादमन्तरा तथा भोक्तुं न शक्यते ।

१८२—४ अन्याधिष्ठानेनेति । जीवान्तराधिष्ठितान्नेन सहेत्यर्थः । रेतःसिग्योगाभाव इति । एवंच तादृशान्नेन सहान्यो रेतःसिङ् न युज्यते । अयं भावः । तत्रान्न एक एव जीवः शुद्धस्तिष्ठति न त्वन्योपि । अन्यथा बहूनामुत्पत्तिप्रसंगः ।

**सूत्रार्थः**—ननु पुरुषे देवैरन्नहोमेन रेतोभावोनुपपन्नो बाल्याद्यवस्थाप्रतिबन्धादिति चेन्न । पुरुषशब्देन रेतःसेकसमर्थपुरुषस्यैव ग्रहणात् । सफलपूर्वाहुत्यनन्तरमस्याः कथनादिति ॥ २६ ॥

इति सप्तममधिकरणम् ।

---

## योनेः शरीरम् ॥ ३।१।२७ ॥

—१० श्रुतिबाध इति । गर्भ आहुतेः फलमिति बोधकश्रुतेर्विरोध इत्यर्थः ।

**उपसंहारः**— पञ्चम्यामाहुतावित्यादिश्रुतिरूपः ।

—११ कर्तव्याभावात्– रेतःसेकातिरिक्तपुरुषकर्तव्याभावात् ।

—१३ गर्भे स्थितस्य ज्ञानजननादग्रे गुरूपसत्त्यादिकं न कर्तव्यमिति यदुक्तं तत्राहुः– मध्यभावस्येति । मध्यभावस्य–गर्भमध्यजातज्ञानित्वस्य ।

—१४ अप्रयोजकत्वादिति । उत्पत्तिसमये वैष्णवमायया तज्ज्ञानित्वापहारादप्रयोजकत्वमित्यर्थः ।

—१५ उपसंहारानुपपत्तिरिति । आपः पुरुषवचसो भवन्तीत्युपसंहारे रेतआहुतेः पुरुषवचःपरिणामित्वोक्तेरनुपपत्तिरित्यर्थः । शरीरशब्देनेति । शीर्यत इति शरीरमिति व्युत्पत्तेः ।

—१६ स्वयं– पञ्चाग्निविद्यया निष्पन्नो जीवः । तदभिमानेन– शरीराभिमानेन ।

सूत्रार्थः—योनेर्निर्गतमेव शरीरं गर्भशब्देनोच्यते । नोदरस्थम् । शरीरपदेन वैराग्यादिसाधनसंपत्तिः सूचिता । एवं च शरीरसंपादनानन्तरं गुरूपसत्तिः कर्तव्येति ॥ २७ ॥

इत्यष्टममधिकरणम् ।

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां
बालबोधिन्यां तृतीयाध्यायस्य प्रथमः पादः ॥ ३।१ ॥

---

# तृतीयाध्याये द्वितीयः पादः ॥ ३।२ ॥

## संध्ये सृष्टिराह हि ॥ ३।२।१ ॥

अथ द्वितीयपादं व्याचिख्यासव आचार्याः प्रथमं प्रथमद्वितीयपादयोरेकनिर्वाहकत्वरूपां संगतिं ब्रुवते– पूर्वपाद इत्यादिना । अधिकारियोग्यदेहः– अधिकारिणो जीवस्य ज्ञानप्राप्तियोग्यदेहः ।

१८३–२ व्यर्था स्यादिति । मोक्षोपयोग्युपदेशानर्हत्वेन तत्र पुरुष उक्ता शुद्धिर्व्यर्था स्यादित्यर्थः ।

सूत्रार्थः— अतःपरं पूर्वपक्षसूत्रद्वयम्– स्वप्नस्थाने सृष्टिरस्ति । यतः श्रुतिरेवमाहेति ॥ १ ॥

## निर्मातारं चैके पुत्रादयश्च ॥ ३।२।२ ॥

—१७ ब्रह्मप्रकरणमिति । सिद्धमिति शेषः । नियतधर्मपक्ष इति । स्वयं विहृत्य स्वयं निर्मायेति कथनात्तत्कर्तृत्वरूपो जीवस्यैव धर्म इति पक्षे ।

—१८ **तदर्थं**-तन्निवृत्तये । एवंच भगवन्निर्मितत्वप्रतिपादनायैतत्सूत्रं प्रणीतमित्यर्थः।

—२० **शतायुष इत्यादि**। शतायुषः पुत्रपौत्रान् वृणीष्वेति पूर्वं कामविषया ऐहिकाः पुत्रादय उक्तास्ते च भगवन्निर्मिताः-सर्वयोनिषु कौन्तेय-इति वाक्यात्। अतो भगवन्निर्मितत्वादेव ते परलोकस्यापि साधकाः।

—२२ **चकारद्वयेन**-सूत्रस्थचकारद्वयेन । **कार्यकारणगता इति** । कार्यगता धर्माः सत्यत्वादयः । कारणगता धर्माः सामर्थ्यं तथोपादानप्रत्यक्षज्ञानादयः।

**सूत्रार्थः**- एष सुप्तेषु जागर्तीति श्रुत्यैके शाखिनो भगवन्तं निर्मातारं वदन्ति। शतायुषः पुत्रपौत्रानित्यादिना पुत्रपौत्रादयो भगवन्निर्मिता उक्ताः। चकारद्वयेन सर्वे कार्यकारणधर्माः स्वप्नसृष्टावुक्ता इति सूचितमिति॥ २॥

**मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३।२।३ ॥**

—२६ **पक्षं**-स्वप्नसत्यत्वपक्षम्। **मायामात्रमिति** । वैदिकनिघण्टुकोशे प्रज्ञानामसु माया वयुनं अभिख्येति पाठादर्थशून्यः प्रत्ययो माया तत्स्वरूपम्। अथवा।

जनकस्य कुले जाता देवमायेव निर्मिता।

इत्यत्रेव मायाशब्द आश्चर्यवाची। स्वप्नदृष्टपदार्था द्रष्टारं स्वप्नकाल एव स्वात्मानमनुभाव्य विनश्यन्तीत्याश्चर्यरूपत्वं तेषाम्।

**१८४-१ कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति**। अयं भावः। देशः कालो विषयसांनिध्यमिन्द्रियव्यापारो बाधाभावश्चेति कार्त्स्न्यं तेन स्वप्नदृष्टपदार्था नाभिव्यज्यन्ते किन्त्वैन्द्रजालिकसृष्टिर्यथा सामाजिकव्यामोहनाय तावत्कालं प्रवर्तते तद्वादियमपि स्वप्नकालपर्यन्तं तिष्ठति । तदेव विवृण्वन्ति-**कृत्स्नत्वेनेति**।

—७ **सत्यप्रयोजनाभावात्**-स्वप्नसृष्टेः सत्यत्वे प्रयोजनाभावात्। **महामायावित्वादिति**। भगवत इति शेषः।

—८ ननु जीवस्य सुखदुःखहेतुत्वाद्धेत्वभावे सुखदुःखरूपकार्यासंभवात्तादृशसुखदुःखकार्यहेतुभूता स्वप्नसृष्टिः सत्यैव भवत्वित्यत आहुः-**नापीति**। लोकद्वयाद्भिन्नस्तत्समानः सत्य इत्यर्थः । **एकत्वादिति**। अवस्थात्रयेपि जीवस्यैकत्वादित्यर्थः। **मन्यत इति**। स्वाप्निकपदार्थान्स्वप्नेविद्यया सत्यान्मन्यत इत्यर्थः।

—९ **स्थानद्वयप्रतिज्ञेति**। तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने इत्यादिश्रुत्युक्तस्थानद्वयप्रतिज्ञेत्यर्थः।

—१० जीवद्वयदर्शनमिति। जीवतां मृतानां च दर्शनेनेत्यर्थः।

—११ लोकद्वयप्रतिच्छायरूपत्वात्-लोकद्वयप्रतिबिम्बरूपत्वात्। अतः सत्यत्वाभावान्न प्रतिज्ञाविरोधः। नन्वीदृशसृष्ट्या सह क्रीडया को लाभ इत्यत आहुः-मायया क्रीडायामिति। अन्यानुरोधः-अन्यानुसरणम्। ज्योतिःशास्त्रनियमाभावादिति॥ उत्तरायणे मेषादिराशिगते सूर्येस्मिन्देश इयती रात्रिरित्यादिनियमाभावान्न तत्कृतगुणदोषाणां मुक्त्यधिकारिजीवे संबन्धः।

—१४ ननु स्वाप्निकपदार्थानामसत्त्वे दीक्षितस्य स्वप्नेन्नभोजने प्रायश्चित्तं विहितं तद्व्यर्थमित्यत आहुः-दीक्षितस्येति।

—१५ आरोपादिति। एवंच कर्तृत्वारोपमूलमेव तत्प्रायश्चित्तं न भोजननिमित्तमतो न स्वाप्निकपदार्थानां सत्यतेत्यर्थः। एतदुपोद्बलयितुं युक्त्यन्तरं वदन्ति-अन्यदेति। अन्यदा-भोजनव्यतिरिक्तस्वप्नकाले। अयमर्थः। स्मृतौ स्वप्ने कृतमगम्यागमनं धन्यामित्युक्तं यदि स्वप्नगतं सत्यं स्यात्तर्हि धर्मशास्त्रविरुद्धं तद्भवेत्तद्विषये धर्मशास्त्रे प्रायश्चित्तोक्तेः। अतोगम्यागमनं स्वाप्निकं यथा न सत्यं तथा सर्वे स्वाप्निकाः पदार्था असत्याः।

—१६ नन्वेवं स्वप्नस्य मिथ्यात्वे स्वप्नगतदेवताज्ञादि विसंवादि भवेदत आहुः- देवताज्ञादिस्त्विति। जीवब्रह्मणोरिति। योगोत्थसामर्थ्यानामिन्द्रादिजीवानां ब्रह्मणश्चेत्यर्थः। विद्यमानत्वात्। अन्तर्हृदि विद्यमानत्वात्। एवंच समाधाविव स्वप्नेपि देवताज्ञानां प्रामाण्यं युक्तं न विसंवाद इत्यर्थः। अलौकिकज्ञान इति। तत्र स्वप्नगतदेवताप्रसादे जायमानं ज्ञानमिन्द्रियाजन्यत्वादात्मज्योतिर्जन्यत्वाच्चालौकिकम्।

—१७ प्रतिच्छायत्वात्- देवदर्शनप्रासादादीनां भासमानत्वात्। संवादः- अर्थक्रियाकारित्वरूपः संवादः। क्वचिदिति। यथेन्द्रप्रतर्दनाख्यायिकायामिन्द्रे भगवदावेशे सति तेन स्वोपासनमुक्तं तथात्रापि क्वचिद्भगवदावेशे सतीषज्ज्ञानक्रियासंवादो भवति। सोपि भगवदावेशस्य धर्मो न स्वप्नस्येति स्वतन्त्रस्वप्नस्यासत्यत्वमिति बोधयन्ति-तस्मादित्यादिना।

सूत्रार्थः— उत्तरसूत्रम्। स्वप्ने सृष्टिर्मिथ्या। यथावस्थितदेशकालादिसापेक्षसर्वरूपत्वेनाभावात्। यतः स्वप्ने भासमानाः पदार्था विशकलिततया भासन्त इति॥ ३॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः॥ ३।२।४॥

—२० नन्विति। यदि भगवान् स्वक्रीडार्थं सृजति तत्तज्जीवसाक्षिकं देवाज्ञादिसत्यप्रपञ्चातिरिक्तांशेन कुतः सृजतीत्यर्थः।

१८५-१ **इत्यादिश्रुतेरिति**। आदिपदेन पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्तीत्यादिसंग्रहः।

**सूत्रार्थः**— यदा कर्मस्वित्यादिश्रुत्या स्वप्नः शुभाशुभफलस्य सूचकः। चकारादप्रत्यक्षत्वेनाज्ञादिप्रदर्शकः। किंच स्वप्नाध्यायविदः स्वप्नस्य सूचकत्वमाचक्षत इति ॥ ४ ॥

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ३।२।५ ॥

—१३ **चतुर्णां**- ऐश्वर्यवीर्ययशःश्रीतिरोभावानाम्।

—१४ **विपर्ययः**- अन्यथाज्ञानम्। **द्वयोः**- ज्ञानवैराग्ययोः। **नान्यथा**- न स्वतः। **एकस्येति**। युक्तं भगैः स्वैरित्यादिवाक्यात्पूर्णैश्वर्यादयो भगवत्येव वर्तन्ते तन्मध्य एकस्यैश्वर्यादेरेकांशस्य यत्पादपङ्कजपरागनिषेवतृप्ता इत्यादिवाक्यैर्भगवत्प्रसादात्प्राकट्योपि तथा निश्चयेन बन्धाभावात्। एकांशप्राकट्याभावे तु बन्धविपर्ययाविति युक्तम्।

—१५ **पूर्वमेव**- व्युच्चारणकाल एव। जीवा द्विविधाः सदा मुक्ता बन्धयोग्याश्च। तत्र मुक्ताः सेवायोग्या इति तेषु स्वरूपानन्दमात्रस्यैव तिरोभावो न धर्मरूपस्य नाप्यैश्वर्यादेः। बन्धयोग्येषु यथायोग्यं सर्वधर्माणां तिरोभाव इति निर्णयः।

—१६ तत्र गमकमाहुः- **अत एवेति**। **अत एव**- आनन्दहीनत्वादेव। **काममयः**-सुखकामनायुक्तः। **निद्रा**-निद्रात्वेनोच्यमाना। **तिरोभावकर्त्री**- सकलभगवद्धर्मतिरोभावकर्त्री अविद्या ज्ञेया।

—१८ **अन्यथा**- भगवद्धर्माणामतिरोभावे। **स्वरूपपर्यालोचनयेति**। षड्धर्मतिरोभावलक्षणयेत्यर्थः।

—१९ **किंचित्**- दुःखित्वानुपपत्त्यादिकम्।

**सूत्रार्थः**- भगवदिच्छया जीवस्य भगवद्धर्मतिरोभावः। ततोस्य बन्धविपर्ययावास्तामिति ॥ ५ ॥

## देहयोगाद्वा सोपि ॥ ३।२।६ ॥

—२१ **नियतधर्मवादेनेति**। सूक्ष्मदेहनियतो भगवद्धर्माणां तिरोभाव इति मतेनेत्यर्थः।

—२२ **देहयोगाद्वेति**। सूक्ष्मदेहयोगादेव। वाशब्दोवधारणे। **सर्वतिरोभावः**- ऐश्वर्यादिसर्वधर्मतिरोभावः।

—२३ विपर्ययः- विपरीतज्ञानम् । अन्यत्- बन्धदुःखादि । अस्य पक्षस्य हीनत्वं द्योतयितुमुभयपक्षतारतम्यमाहुः- अस्मिन्निति ।

—२४ विद्यमानेपीति । देहे विद्यमानेपीत्यर्थः । अतोयं पक्षः श्रेयान् । नत्विति । ईश्वरेच्छया धर्मतिरोभावो देहेन वेति तु विकल्पो नेत्यर्थः ।

१८६-१ व्याख्यानान्तरं दूषयन्ति-कश्चिदिति । परशब्देन-पराभिध्यानादित्यादिसूत्रस्थपरशब्देन । देहादिं- देहारम्भकादृष्टादिकर्म । इदं च मतं शंकररामानुजमध्वादिभाष्येष्विदानीमुपलभ्यमानेषु न दृश्यते तेनाधुनोत्सन्नस्य कस्यचिन्मतस्योल्लेखोयम् । आकस्मिकतेति । देहादृष्टादावचेतने ध्यानयोगयोरसंभवादाकस्मिकत्वं निर्हेतुकत्वं स्यादित्यर्थः ।

—२ शंकरभास्कराचार्ययोर्मतं वदन्ति- कश्चित्त्विति । एकमतानुसारित्वात्कश्चिदित्येकवचनम् ।

—३ तस्याभिध्यानात्- जीवकृतपरमेश्वराचिन्तनात् । देहभेदे- देहनिवृत्तौ । श्रुत्यनुरोधेनेति । इयं श्रुतिः श्वेताश्वतरस्था । ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः । तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकाम इति संपूर्णं वाक्यम् ।

—४ कल्पयतीति । पूर्वमध्यानात्तिरोहितं ततो ध्यानादतिरोहितमिति कल्पयतीत्यर्थः ।

—५ बह्वध्याहारेणेति । न तृतीये तथोपलब्धेरिति सूत्रात्तृतीयाध्याहारेण । सूत्रद्वयं-पराभिध्यानादिति देहयोगाद्वेति च सूत्रद्वयम् । खण्डयन्ति- तदिति । ब्रह्मवादाज्ञानादिति । यदि ब्रह्मवादं जानीयात्तर्हि देहयोगादिति सूत्रं सिद्धान्तत्वेन न स्वीकुर्यात् । असंगतेः- तन्मत ईश्वराभिध्यानस्य साधनत्वासंगतेरित्यर्थः ।

—६ स्वव्याख्यानस्योचितत्वप्रदर्शनाय पूर्वोक्तयुक्तिं स्मारयन्ति-निद्राया इति । तथा चाग्रे सुषुप्तेर्निरूप्यमाणत्वादिदं निद्राप्रकरणम् । निद्राया अवसरो विवेकज्ञानाभाव एव संभवति । अतो ज्ञानतिरोभावस्यैवात्र वक्तव्यत्वात्तस्य चोक्तरीत्यैव बोधाद्यथाव्याख्यात एवार्थो ग्राह्यः ।

सूत्रार्थः— मतान्तरेणाह । देहयोगादेवास्य सर्वभगवद्धर्मतिरोभावो विपर्ययो वा । अपिशब्दादन्यदपि ग्राह्यमिति ॥ ६ ॥

इति प्रथममधिकरणम् ।

---

## तद्भावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३।२।७ ॥

—१० **स्थानस्वप्नाभावे इति**। सुषुप्तावज्ञानस्य स्थानं स्वप्नाभावश्चेति द्वयम्। स्थानस्वप्नाभावावित्यपि पाठः।

१८७-१ **तद्वा अस्येति**। **अस्य**- अकामरूपजीवस्य।

—२ एवं स्वप्नाभावनिरूपणं व्याख्याय स्थाननिरूपणं व्याक्रियमाणा मतान्तरादस्मिन्मते विशेषमाहुः- **नाडीष्विति**।

—४ **बाह्याः**- बाह्यदेशं प्राप्य स्थिताः। **आभ्यन्तरः**- हृदयदेशादभ्यन्तरे वर्तमानः।

—५ **तां**- स्वाप्निकीं भगवल्लीलाम्।

**सूत्रार्थः**— एवं प्रसंगाज्जीवस्याज्ञानं निरूप्य सुषुप्तौ केवलमज्ञानं वक्तुमज्ञानस्थानं स्वप्नाभावं च निरूपयति। नाडीष्वात्मनि च स्वप्नस्याभावः। प्रपञ्चाभावश्रुतेः। तथाहि कामनया प्रपञ्चनिर्माणं सुषुप्तौ तु कामनाया अभाव एवेति ॥ ७ ॥

इति द्वितीयमधिकरणम्।

---

## अतः प्रबोधोस्मात् ॥ ३।२।८ ॥

—१४ **प्रतियोनि**- यतः स्थानात्संप्रसादं गतस्तत्स्थानं योनिस्तत्प्रति। **आद्रवति**- आगच्छति। **बुद्धान्ताय**- जागरणाय। जीवसमाधानप्रकरणे- सुषुप्तिप्रकरण इत्यर्थः।

—१६ **भगवतो वा समागत्येति**। भगवतः सकाशाद्धृदयदेशं समागत्येत्यर्थः।

—१८ **नाडीभ्य एव**- सुषुप्तिस्थानत एव। तत्र युक्तिं वदन्ति- **गर्तपतितस्येति**।

—१९ **प्रतियोन्याद्रवणं**- जीवस्य जागरणस्थानं प्रत्यागमनम्। **भगवतः**- भगवतः सकाशादित्यर्थः। **प्रबोध इति**। अन्तर्यामिणः प्रेरणया नाडीस्थान एव प्रबोध इत्यर्थः।

—२१ **आगमनं**- आगमनानुकूला क्रिया।

—२२ **तत एवेति**। एवं च सुषुप्तिस्थानत एव प्रबोधो न तु हृदय आगत्येति ज्ञेयम्।

**सूत्रार्थः**— नाडीभ्य एवात्मनः तकाशात्प्रबोधः । हि यत्र स्थितस्तस्मात्प्रबोध इति युक्तमिति ॥ ८ ॥

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ३।२।९ ॥

अत्र समायात्वित्यन्त एक आक्षेपः । अन्यत इत्यादिरन्यः ।

१८८-२ **अन्यतः प्रबोधे त्विति** । भगवता सुप्तस्य प्रबोधकरणे त्वित्यर्थः । **स एव**- सुषुप्ताभिन्नजीव एव । **व्यवहारः**- पितृपुत्रभार्यादिव्यवहारः । **तावता सेत्स्यतीति** । भगवता प्रबोधितत्वात्स एव योगिवत्तद्देहमाविश्य व्यवहारं कारयिष्यतीति भावः ।

—३ **प्रयत्न इति** । सुषुप्तयैव मुक्तेः सिद्धत्वादित्यर्थः । **स एव**- पूर्वसुप्तजीव एव ।

—८ **लौकिकं हेतुद्वयमुक्त्वा वैदिकं तद्याकुर्वन्ति-शब्दाश्चेति** । **शब्दाः**- वैदिकवाक्यानि ।

—१० **श्वोभूत इत्यादि** । एवं च सुषुप्तौ सर्वेषां मुक्तौ सत्यां श्वोवरणं कः कुर्यात् । शेषकर्म वा कः समापयेत् ।

—१३ ननु भगवत एव प्रबोधे मुक्तिरवश्यंभाविनीत्यत आहुः-**भगवतैवेति** । नायमात्मेति श्रुत्या ज्ञानं वरणमात्रसाध्यम् । वरणं च मर्यादामार्गे साधनद्वारैव भवत्यतस्तन्मार्गरक्षणार्थं भगवता प्रबोधसमये मुक्त्यजनकं स्वाज्ञानमुत्पाद्यते तेन न मुक्तिरिति भावः ।

**सूत्रार्थः**—प्रबोधे स एव जीवः प्रबुध्यते तत्र हेतुचतुष्टयम् १ तेन सुषुप्तेः प्राक्कृतमर्धं कर्म पश्चात्समाप्यते २ पूर्वकृतस्यानुस्मरणं भवति ३ पुण्यो वै पुण्येन कर्मणेति श्रुतिरपि ४ श्वोभूते ब्रह्माणं वृणीत इत्यादिविधयश्चेति ॥ ९ ॥

## मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ ३।२।१० ॥

—१९ **बुद्धिवृत्तय इति** । सर्वत्र बुद्धिरेकैव गङ्गाप्रवाहवत् । तद्वृत्तयस्त्वनुस्मरणादिरूपा नाना गङ्गाप्रवाहप्रविष्टक्षुद्रनदीजलवत् । **य एव त्रिदश इति** । सुषुप्तजीवापेक्षयान्यो यः कश्चन चिदंश इत्यर्थः । तथालौकिकवैदिकव्यवहारकर्ता ।

—२५ **निश्चयप्रमाणानामभावादिति** । अमरुनृपशरीरे मूर्च्छोत्तरं शंकराचार्यजीवप्रवेशे नान्यजीवसमागमनात्तथा ब्रह्मवैवर्ते ब्रह्मखण्डे उपबर्हणगन्धर्वशरीरे तस्यैव प्रवेश इति स्मरणाच्च संदेहोवशिष्यत इत्यर्थः । केचित्त्वस्मिन्सूत्रे मुसलाद्यभिघातजन्यां मूर्च्छां विचारयन्ति ।

—२६ तां च जाग्रत्स्वप्नसुषुप्त्युत्क्रान्तिभावात्पञ्चमीं वदन्ति तन्मतं दूषयन्ति-न तत्रेति । प्राणायनविघातकृता-मुसलप्रहारेण प्राणानां स्वस्थानत्यागस्तज्जन्या ।

१८९-१ व्यर्थ इति । जीवातिरिक्तधर्मत्वादित्यर्थः ।

—२ ननु जीवस्य केवलं साक्षित्वात्तदुपाधीनामेव सर्वे विचारा अतोयमपि प्राणावस्थाविचारः संगच्छत इत्यत आहुः-केवलसाक्षिवाद इति । न ब्रह्मवाद इति । सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यत्र जीवस्य साक्षिभिन्नत्वनिरूपणेन निराकृतत्वात् ।

सूत्रार्थः-मुग्धभावेर्धसंपत्तिरेव न सर्वा । अपूर्वलौकिकव्यवहारस्या- साधनत्वात् जीवनोपयोगिकर्मण एव करणादर्धसंपत्तिरेव । स एव न वेति संशयस्याविशिष्टत्वादिति ॥ १० ॥

इति तृतीयमधिकरणम् ।

---

## न स्थानतोपि परस्योभयलिङ्गं सर्वत्र ॥ ३।२।११ ॥

—७ विषयनिर्धारार्थमिति । एतावता ग्रन्थेन ज्ञानाधिकारी विचारितः । अतः परं द्वितीयपादशेषेण तृतीयपादेन च ज्ञानविषयस्वरूपं विचार्यते ।

—८ तदर्थं-स्वरूपनिर्धारार्थम् । समन्वयाविरोधाभ्यां-प्रथमद्वितीयाध्यायाभ्याम् ।

—९ कार्यविरोध इति । अन्यस्य प्रकृत्यादेः कार्यं न भवति किं तु ब्रह्मण एवेति निश्चितत्वात् ।

—१० अबोधकता स्यादिति । ब्रह्म सधर्मकं निर्धर्मकं वा जीववत्सदोषं वेत्यादिसंशयनिराकरणादुपनिषद्वाक्यानां ब्रह्मबोधकता न स्यादित्यर्थः ।

—११ अविरुद्धानां-भगवदीयत्वेन निर्णयात्स्वरूपतोविरुद्धानाम् ।

—१५ ननु श्रुत्यपेक्षया प्रतीतेर्दुर्बलत्वादप्रामाण्यमत आहुः-नेतर इति । वैलक्षण्यस्य-जीववैलक्षण्यस्य ।

१९—केचित्-ब्रह्मवादैकदेशिनो मुनयः । तमविरोधं प्रकटयन्ति-सर्वत्रेति ।

—२२ उपपद्यत इति । एवं च यथा घटपटादिकारणभूता पृथिवी तत्तत्कार्येषु निमित्तवशात्तत्तद्रूपं धारयति । एवं भगवानप्यस्थूलादिष्वप्येषु रसा-

दिगुणेषु च तत्तद्रूपतां धारयति। अनया रीत्या स्थानधर्मरूपं परस्योभयलिङ्गं युज्यत इत्येकं मतम्। मतान्तरमाहुः–अथवेति। अवच्छेदभेदेन–प्रदेशभेदेन। तत्र हेतुमाहुः–अचिन्त्यसामर्थ्याद्वेति। अत्रत्यो वाशब्दो न विकल्पार्थकः किं तु वाक्यालंकारार्थः।

—२३ **अन्यथा**–अचिन्त्यसामर्थ्येन धर्मानङ्गीकारे।

—२५ **एतानि**–सर्वकर्मत्वास्थूलत्वबोधकानि।

—२६ **वैयर्थ्यापत्तेरिति**। अनुवादे प्रयोजनाभावादित्यर्थः। **अचिन्त्यत्व इति**। सामर्थ्यस्याचिन्तनीयत्वे सामर्थ्यवतोऽज्ञानात्सर्वेषां मुक्त्यभावापत्तेरित्यर्थः।

१९०–५ **शास्त्रानारम्भप्रसंगादिति**। यस्यामतमितिरीत्या सर्वेषां ज्ञानं विचारं च विनैव मुक्तिसंभवेन व्यासशास्त्रारम्भो निष्फल एव भवेदित्यर्थः। **अयं च विरोध इति**। यस्यामतमित्यत्र केन प्रकारेण मतत्वममतत्वं च ग्राह्यमिति निर्णीय विरोधो निराकार्यः।

—६ **अत्र**–एतत्सूत्रप्रभृति पादद्वयेन।

—७ **अनुवादकत्वेनेति**। पृथिव्यादौ स्थितस्य तादृशोपादानस्य लोकत एव सिद्धत्वादनुवादकवाक्यानां वैयर्थ्यापत्तेरित्यर्थः। **प्रत्यारम्भं**–सर्वत्र ब्रह्मनिरूपणस्थलेषु।

—८ **अल्पकल्पनायां**–स्वल्पविरोधकल्पनायाम्।

—९ **प्रवृत्तेरिति**। व्यासस्य सूत्रकृत इति शेषः।

—१० **सत्त्वासत्त्वे इति**। विरुद्धोभयलिङ्गत्वेनाभिमते ब्रह्मणि सत्त्वासत्त्वे।

**सूत्रार्थः**– वेदान्तेषु परस्परविरुद्धत्वेन भासमानानि वचांसि जीवजडब्रह्मतया नीत्वा विरोधाभावः संपादनीय इति चेन्न। यत एवं स्थानभेदादपिशब्देनावच्छेदकभेदाद्वाचिन्त्यसामर्थ्यात्परब्रह्मण उभयलिङ्गत्वं न संभवति। यतः सर्वत्रैव ब्रह्मवाक्येष्वेवमेव ब्रह्मस्वरूपं निरूप्यत इति ॥ ११ ॥

## न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ ३।२।१२ ॥

—१२ **भवदुक्तः**–उभयलिङ्गत्वेनोक्तः।

—१८ **तस्मात्**–कार्यादीनां भगवदात्मकत्वनिगमनेन प्रतिवाक्यमभेदस्य ज्ञापनात्।

**सूत्रार्थः**— प्रपञ्चधर्मसहितं तद्रहितं च ब्रह्म भिन्नमिति भेदाङ्गीकारेण न पूर्वोक्तविरोध इति चेन्न। अयमेव स स योयमिति प्रत्येकमभेदवचनादिति ॥ १२ ॥

अपि चैवमेके ॥ ३।२।१३ ॥

**सूत्रार्थः**– एके शाखिनो नेह नानास्तीत्यादिनैवं भेदनिषेधेनाभेदमेव वदन्तीति ॥ १३ ॥

इति चतुर्थमधिकरणम् ।

---

## अरूपवदेव हि तत्प्रधानत्वात् ॥ ३।२।१४ ॥

**१९१–३ एकदेशिमतेनेति** । अयं ह्येकदेशी ब्रह्मण एकावयवेन जगत्समवायित्वं तदातिरिक्तस्य जगद्वैलक्षण्यं स्वरूपतः सधर्मकत्वं स्वेच्छया व्यवहार्यत्वं ज्ञानात्मकाकारत्वं चेत्यङ्गीकृत्य ज्ञानाकारब्रह्मणः प्रपञ्चप्रतिबिम्बेन लौकिकधर्मवत्त्वं मन्यते ।

**—४ अन्यत्र**–ब्रह्मणि ।

**—६ भगवद्विहारार्थमिति** । एकोहं बहु स्यां, स वै नैव रेमे इत्यादिश्रुतिभिः । **अशक्यत्वादिति** । रमणश्रुत्यन्यथानुपपत्त्या तादृशभेदस्यावश्यमङ्गीकार्यत्वादित्यर्थः ।

**—७ युक्त इति** । धर्मिणोर्भेदाद्धर्मनिषेधो युक्तः । **उपचारात्**–अभेदभ्रमेण लक्षणयेत्यर्थः ।

**—८ विपरीतमिति** । ब्रह्मण्येव सर्वकर्मोदय इत्यादि विपरीतं तथा च विधिपक्ष एव कुतो न गृह्यते किमर्थं निषेधपक्ष इत्यतः समाधानं वक्तुं सूत्रार्थमाहुः–**रूप्यत इति** ।

**—१० युक्तत्वादिति** । यदि कार्यकारणयोरंशांशिनोश्चाभेदस्तर्हि कार्यकारणभावोंशांशिभावश्चानुपपन्नो भवेत् ।

**—११ कारणत्वात्**–ब्रह्मणो विश्वं प्रति कारणत्वात् ।

**—१२ यत्र**–ब्रह्मणि । **तत्र**–प्रतिपादनस्थले । **तस्य**–आधिकरणीभूतब्रह्मणः । **ब्रह्मधर्माणां**–अस्थूलत्वादीनाम् ।

**—१३ अन्यधर्माणां**–विश्वधर्माणाम् । **तथा सर्वकर्मेतीति** । वैधर्म्येयं दृष्टान्तः । **मुख्यत्वमिति** । एतद्वै तदक्षरमिति ब्रह्मैवोद्दिश्य कथितत्वात्प्रशासनस्य मुख्यत्वम् ।

**—१४ भगवत्संबन्ध इति** । विधीयमान इति शेषः । **अमुख्यत्वं**–आरोपितभगवद्धर्मत्वम् । **विशिष्टबोधनेपीति** । सर्वकर्मा सर्वकाम इत्यादिशब्दैरुक्तधर्मवैशिष्ट्येन ब्रह्मणो बोधनेपि ।

**—१६ प्रमाणाभावादिति** । निष्कलं निष्क्रियमित्यादिश्रुत्या धर्माणां

बाधस्य प्रदर्शितत्वात्सधर्मकत्वज्ञापकश्रुतिभिस्तत्रातिरिक्तधर्मकल्पनायाः कर्तुमशक्यत्वादित्यर्थः ।

—१७ उचितमिति । उपासनार्थमुचितामित्यर्थः । भिन्नधर्माणां–सर्वकर्मत्वादिविश्वधर्माणाम् ।

—१८ एवं निर्णयः–औपचारिकत्वनिर्णयः । कार्यवत्–प्रपञ्चवत् ।

—१९ न भगवद्धर्मत्वमिति । प्रपञ्चरूपभगवद्धर्मत्वं यद्यप्यस्ति तथापि प्रधानरूपनित्यभगवद्धर्मत्वं नास्तीत्यर्थः ।

सूत्रार्थः–ब्रह्म सर्वव्यवहारविषयातीतम् । कार्यकारणयोर्वैलक्षण्यस्योक्तत्वात् । ननु कार्यकारणयोरवैलक्षण्यमस्त्विति चेन्न । यतो ब्रह्मस्वरूपवाक्येषु ब्रह्मणः प्राधान्येन वक्तव्यत्वात् तस्यैव निरूपणमुचितं न जगतोपि । अतो ब्रह्मणो जगद्विलक्षणत्वात्तद्धर्माणां निषेध एवोचित इति ॥ १४ ॥

## प्रकाशवच्चावैयर्थ्यात् ॥ ३।२।१५ ॥

—२२ विरोध इति । सर्वव्यवहारातीतत्वेन मनोविषयत्वाभावादित्यर्थः ।

—२५ शक्यत इति । उपासनादिसाधनेनेश्वरसामीप्यात्प्रतिबन्धकाभावाच्चेत्यर्थः ।

१९२–२ द्वयं–मनोवाग्विषयत्वं तदविषयत्वं चेतिद्वयम् ।

—३ शास्त्रं–उभयबोधकश्रुतिः ।

—७ अकार्यत्वं–नित्यत्वम् । तस्मात्–अलौकिकधर्माणां सत्त्वाच्छास्त्रस्य संनिधानार्थत्वाच्च ।

सूत्रार्थः–यथा सूर्यप्रकाशो व्यवहार्योऽव्यवहार्यश्चैवं ब्रह्मापि । एवं कल्पने ब्रह्मप्रतिपादकशास्त्रस्यावैयर्थ्यं प्रसज्येत । चकारेण–आसीनो दूरमित्यादीनामलौकिकधर्माणां विरोधो नास्तीति सूच्यत इति ॥ १५ ॥

## आह च तन्मात्रम् ॥ ३।२।१६ ॥

—१२ विरोधः–लोकविरोधः ।

—१५ अभावादिति । अतो नातिरिक्तेन्द्रियकल्पना युक्ता । वेदविरोधेन–दूरव्रजनादिबोधकवेदवाक्यविरोधेन ।

—१६ वेदनिश्वासेत्यादि । वेदनिश्वासायनं–वेदनिश्वासस्थानम् ।

—१७ भूतसमुत्थानं – भूतानां समुत्थानम् । उक्तत्वाच्चेति । श्वासोच्छ्वासजगत्स्थापनभूतसमुत्थानतदनुविनाशनाक्रियाणामुक्तत्वादित्यर्थः । चकारात् प्राणश्चैव प्राणो भवतीत्यादेः समुच्चयः ।

—१८ कृत्स्नवचनादिति। अकृत्स्नत्वबुध्युत्पादकप्रकारसत्त्व एव कृत्स्नवचनस्य चारितार्थ्यमिति भावः।

सूत्रार्थः—यथा सैन्धवघनमिति श्रुतिः प्रज्ञानघनमात्रं ब्रह्मस्वरूपमाह। तेन प्रज्ञानस्वरूपातिरिक्तेन्द्रियाणामभावान्न पश्यत्यचक्षुरित्यादिश्रुतिविरोधः। चकारेण सर्वेन्द्रियविवर्जितमिति स्मृतिरपि परिगृहीतेति ॥ १६ ॥

## दर्शयति चाथो अपि स्मर्यते ॥ ३।२।१७ ॥

—२४ असंभावनायां—कारणब्रह्मधर्माणां कार्येनङ्गीकारे। अन्यथा कल्पनमिति। विवर्तवादस्य, असतः सत्ताया वाश्रयणेन श्रुतिविरुद्धं कल्पनमित्यर्थः। अन्यथा कल्पनं—एकोऽहं बहुस्यां, ऐतदात्म्यमिदमिति श्रुतिविरुद्धं कल्पनम्।

१९३—२ आशङ्क्येति। विरोधमाशङ्क्येत्यर्थः।

—५ प्रकारवाची—एवंशब्दार्थकः।

—७ एतस्माज्जातं—ब्रह्मणो जातम्। कार्यकारणयोः—ब्रह्मप्रपञ्चयोः।

—९ रूपं निरूप्येति। ब्रह्मणो रूपं निरूप्य सत्यमिति ब्रह्मनाम निरूपयतीत्यर्थः।

—१० प्रपञ्चधर्मवचनं—सर्वकर्मत्वादीनां प्रपञ्चधर्माणां ब्रह्माणि प्रतिपादनम्।

—११ औपचारिकं—अभेदप्रयुक्तत्वेन लाक्षणिकम्।

—१३ श्रुतेः—न ह्यस्मात्परमस्तीति श्रुतेः।

—१४ सत्—प्रत्यक्षगोचरम्। असत्—प्रत्यक्षागोचरम्।

सूत्रार्थः—अथात आदेशो नेति नेतीत्यादिना श्रुतिर्जडजीवधर्माणा ब्रह्मण्यभावं दर्शयति। अग्रे अन्यत्परमस्तीति ब्रह्मणः प्रपञ्चातिरिक्तताकथनेन तत्र प्रपञ्चधर्मकथनमौपचारिकमेव। एतच्चौपचारिकत्वं—अनादिमत्परं ब्रह्म—इति स्मृतिर्दर्शयतीति ॥ १७ ॥

## अत एव चोपमा सूर्यकादिवत् ॥ ३।२।१८ ॥

—२१ निरुपमस्येति। न तत्समश्चाभ्यधिकश्च दृश्यत इति श्रुत्या तथा प्रतिपादितत्वात्।

—२२ तद्धर्मसंबन्धात्—प्रपञ्चधर्मसंबन्धात्।

—२३ इदमपि—निदर्शनमपि।

१९४—१ इतरसंश्लिष्टस्य—जलादिसंश्लिष्टस्य चन्द्रमसः।

**सूत्रार्थः**-इममेव निर्णयमाश्रित्य यथा सूर्यकादयो दृष्टान्तास्तथा समः प्लुषिणेत्याद्या उपमा ज्ञेया इति ॥ १८ ॥

इति पञ्चममधिकरणम् ।

---

## अम्बुवदग्रहणात्तु न तथात्वम् ॥ ३।२।१९ ॥

—८ तथात्वं विवृण्वन्ति-**समवायातिरिक्तस्येति** । **समवायातिरिक्तस्य**-समवाय्यतिरिक्तस्य । तथा च पञ्चीकृतजलसमवाय्यतिरिक्तस्य सूर्यादितेजसो यथा कम्पादिजलधर्माणां वास्तवयोगाभावस्तथा ब्रह्मण्यपि जडसमवाय्यतिरिक्ते सर्वकर्मत्वादिजडधर्माणां वास्तवयोगाभावः । अतो हेतोः सर्वकर्मत्वादयो धर्मा ब्रह्मणि न सन्ति ।

—९ **सर्वपरस्य**-सर्वापेक्षया परस्य ब्रह्मणः ।

—१० **अधिकरणधर्मवत्त्वमिति** । एकदेशिना सिद्धान्तितमिति शेषः । **तत्र**-तस्मिन्नेकदेशिमते निराकर्तव्ये ।

—११ **वक्तव्यमिति** । दूषणं वक्तव्यमित्यर्थः । यतो हि ब्रह्मणो जगद्वैलक्षण्यं वदतैकदेशिना ब्रह्मणि नीरूपत्वं व्यापकत्वं चाङ्गीकृतम् । **स्वमतविरोधादिति** । स्वमतेपि विरुद्धधर्मद्वयाधारत्वस्य ब्रह्मण्यङ्गीकारेण व्यापकत्वसर्वत्रविद्यमानत्वधर्मयोरङ्गीकाराद्ब्रह्मणि लौकिकधर्माभासस्याप्यङ्गीकारात्तथा च तन्मतमात्रपर्यवसायि दूषणं यथा स्यात्तथाम्बुवदग्रहणादिति हेतुं व्युत्पादयन्ति-**स्वच्छामिति** ।

—१३ नन्वेवं प्रतिबिम्बासंभवेन तद्धर्मासत्त्वेपि सर्वाधारत्वाद्धारूपत्वमादाय नीरूपेपि ब्रह्मणि सर्वोपाधिप्रतिबिम्बेन तद्धर्मवत्त्वस्य सुवचत्वादित्याहुः-**सर्वाधारत्वेनेति** । सर्वेषामुपाधीनां ब्रह्मणि प्रतिबिम्ब उच्यमाने ब्रह्मणस्तादृशधर्मराहित्येन तेषामुपाधिधर्मत्वेनैव प्रत्ययाद्रुपासनायामुपाधिधर्मत्वेन ब्रह्मणि तादृशधर्मवत्त्वज्ञानस्यानुपयोगात्तद्धर्मानुवादवैयर्थ्यमिति पूर्वमरूपवदेवेति सूत्रे सर्वशब्दस्य प्रसिद्धानुवादकथनेनोक्तमिति नात्र शङ्कावसर इत्यर्थः ।

—१४ ननु यथा सर्वं खल्विदं ब्रह्मेत्यत्रोपासनार्थं भ्रमात्सर्वाभेदकल्पनं तथात्रापि भ्रमात्सर्वकर्मत्वादिकमस्तीत्यत आहुः-**न चेति** ।

—१५ भ्रमजतत्कल्पनस्वीकारेन्तर्यामिब्रह्मणविरोधमाहुः- **पृथिव्यामिति** । एवं च विप्लववादिनां मते पृथिव्यादीनां कल्पितत्वात्तदधिष्ठानत्वं ब्रह्मणः श्रुत्युक्तं विरुद्धं स्यादित्यर्थः ।

**सूत्रार्थः**- जडजीवसंबन्धाद्ब्रह्मणि सर्वकामत्वादय औपचारिका इति न संभवति । जलं यथा प्रतिबिम्बं गृह्णाति तथा सर्वकामत्वादिधर्मैर्धर्मिणो भगवतो ग्रहणादिति ॥ १९ ॥

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ ३।२।२० ॥

—२४ **उभयसामञ्जस्यं**-विभुत्वाल्पत्वयोरैकाधिकरण्येन युक्तत्वम् । **एकतरबाधः**-वृद्धिह्रसिताकाशयोर्मध्य एकतरस्य बाधः । **तत्तदनुप्रवेशात्**-तत्तदुपाधिष्वनुप्रवेशात् ।

—२५ **अन्यधर्मत्वाभावादिति** । यदि जपाकुसुमलौहित्यादिवच्छ्रुतौ तेन्यधर्मत्वेन प्रतीताः स्युस्तदौपाधिकत्वं भवेत्तथा तु नास्ति किंत्वात्मधर्मत्वेन श्रुत्या प्रत्यायिता भवन्ति ।

१९५-१ **अन्यानुविधायित्वेपि**-अन्यगतत्वेन प्रतीयमानत्वेपि । **ते**-सर्वकर्मत्वादयः । **कारणत्वादिवदिति** । प्रजापत्यादिनिष्ठकारणत्वादिवदित्यर्थः । आदिपदेन-विश्लिष्टशक्तिबहुधेव भातीति स्मृत्युक्तं शक्तिविश्लेषादिकं गृह्यते ।

**सूत्रार्थः**- यथैकमेवाकाशं कारकादिष्वन्तर्भावाद्वृद्धिह्रासभाक्तथोभयसामञ्जस्यादेवं तत्तदनुप्रवेशाद् ब्रह्मणोपि सर्वकामत्वादयो धर्माः संभवन्तीति ॥ २० ॥

## दर्शनाच्च ॥ ३।२।२१ ॥

—९ **अध्यवसायः**-निश्चयः ।

—१० **उभयसाधकमिति** । स्वल्पत्वमहत्त्वयोः साधकमित्यर्थः ।

**सूत्रार्थः**-अल्पपरिमाणवत्त्वमहत्परिमाणवत्त्वबाल्यकैशोर्यादयो विरुद्धधर्मा भगवति दृश्यन्ते । चकारेणोलूखलबन्धनादौ प्रत्यक्षं दृश्यमाना उभयधर्मा गृह्यन्त इति ॥ २१ ॥

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ ३।२।२२ ॥

—१४ **युक्त्यापीति** । यो वादी वस्तु विरुद्धधर्माश्रयमिति नाङ्गीकरोति तं युक्त्यापि बोधयतीत्यर्थः ।

—२० **यतो वाच इति** । अत्र वाक्ये पूर्वार्धेन ज्ञानं निषिध्यते । आनन्दमित्यादिनोत्तरार्धेन तद्विधीयते । अस्थूलादिवाक्ये च-अवागमनाः- इति प्रशासनं निषिध्य-एतस्यैव प्रशासने-इत्यादिना पुनर्विधत्ते तथैव सर्वधर्मनिषेधमुखेन निषिध्य-एतद्विदित्वा-इत्यनेन वेद्यत्वं विधत्ते । ततः- न तदश्नोति कश्चन-इति व्याप्तिं निषिध्य-आकाश ओतश्चेत्यनेन तां विधत्ते ।

**सूत्रार्थः**- श्रुतिः प्राकृतधर्मवत्त्वमेव प्रतिषेधति नतु सर्वकामत्वाद्यलौकिकधर्मान् । यतो यत्रेमान्धर्मान् प्रतिषेधति तत्रैव भूयो वदतीति ॥ २२ ॥

इति षष्ठमधिकरणम् ।

---

## तदव्यक्तमाह हि ॥ ३।२।२३ ॥

१९६-३ **शब्दबलविचारेणेति** । यद्यपि स्वमते शब्दबलस्यैव प्राधान्यं तथापि कैश्चिद्दूषिभिरर्थबलस्याङ्गीकृतत्वादर्थबलविचारः ।

—१२ **संशयं वदन्ति-नहीति** ।

—१३ **उपचरितार्थत्वं**-लाक्षणिकत्वम् ।

**सूत्रार्थः**-पूर्वपक्षसूत्रम् । तद्ब्रह्माव्यक्तमेव । यतो नेति नेतीत्यादिश्रुतिस्तथैवाह ॥ २३ ॥

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ ३।२।२४ ॥

१९७-१ **द्विविधमिति** । साकारं निराकारं चेत्यर्थः ।

—३ **अनुमापकत्वं**-स्मृतिप्रमाणसिद्धम् ।

—५ **लौकिकालौकिकप्रत्यक्षविषयत्वादिति** । इन्द्रियमनःसंयोगजं लौकिकप्रत्यक्षं, दिव्यदृष्टिजन्यमलौकिकप्रत्यक्षम् ।

**सूत्रार्थः**-परिहारसूत्रम् । पूर्वपक्षोऽक्रमसंगतम् । सम्यक् सेवया तोषे जाते तं प्रति द्रष्टुं शक्यत्वात् । श्रद्धाभक्तिज्ञानयोगादिति श्रुत्या ततस्तु तं पश्यत इति स्मृत्या च ब्रह्म साकारगुणपूर्णं तेन नाव्यक्तमिति ॥ २४ ॥

इति सप्तममधिकरणम् ।

---

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ ३।२।२५ ॥

—११ **वस्तुशक्त्या निर्णये दृष्टान्तमाहुः-यथेति** ।

—१६ **एवंसाधकाः**-निर्विशेषत्वसाधकाः ।

—१८ **तथा साक्षात्कारात्**-उभयरूपत्वसाक्षात्कारात् ।

**सूत्रार्थः**-पूर्वपक्षसूत्रम् । प्रकाशादिवद्ब्रह्मण उभयरूपत्वं न संभवति । यथा सूर्यचन्द्रादिप्रकाशानां भिन्नत्वेपि एकविधत्वमेवाङ्गीक्रियते तद्वद्ब्रह्मणो वैशेष्यमङ्गीकार्यं भक्तसाक्षात्कारानुरोधादपि ब्रह्मणि तावतां धर्माणां स्वीकारो न यतो भगवतः प्रकाशस्तपःप्रणिधानादिकर्मणि भवति । तत्र तु भक्तेच्छानुरोधात्प्रकटीभवतीति स प्रकाशो न वस्तुनिर्णायक इत्यर्थः ।

चकारेणाप्रकाशोन्यथाप्रकाशश्च ग्राह्यः। सोप्यनेकरूपेण प्रकटीभवतीति नानेकरूपदर्शनं वस्तुनिर्णायकमिति ॥ २५ ॥

अतोनन्तेन तथाहि लिङ्गम् ॥ ३।२।२६ ॥

—१९८-३ निमित्तभेदव्यतिरेकेण-भिन्ननिमित्तं विना।

—४ वस्तु भवतीति। वस्त्वभावे हेतुर्जायमानत्वमेव।

—५ लिङ्गं-जायमानत्वबोधकम्। अयमर्थः-जायमानमवस्तुभूतमित्यर्थः।

—६ उरुगाय-महदीड्य। यद्वपुः। ते-महान्तः। प्रणयसे-निर्मासि।

सूत्रार्थः-पूर्वपक्षसूत्रम्। अतोभ्यासादनन्तेन रूपेणाविर्भावः। न ह्येकं वस्तु स्वतोनेकविधं भवति तथा सति स विग्रह एव भवेन्न स्वरूपम्। हीत्यनेन यद्यद्धिया त इति प्रमाणं सूचितम्। अतः श्रुतेः प्रत्यक्षस्य वानिर्णायकत्वान्निर्धर्मकमेव ब्रह्मेति ॥ २६ ॥

उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३।२।२७ ॥

—११ इदं शास्त्रं-विचाररूपं व्यासशास्त्रम्। शास्त्रान्तरादत्रायमेव विशेषो यद्वेद एव ब्रह्मस्वरूपज्ञाने प्रमाणं न लोकस्तन्न्याया वेति बोधयन्ति-अत्रेति।

—१२ स्वरूपशक्त्येति। लौकिकयुक्तिविषयस्वरूपेण तादृशसामर्थ्येन चेत्यर्थः। उभयव्यपदेशात्-उभयोर्विरुद्धधर्मयोः कथनात्।

—१४ यद्युभयविधमेकमेव ब्रह्म तर्हि सर्वेषां भक्तानां विरुद्धधर्मतयैकमेव प्रतिभासेत कथं द्विधा भासत इत्यत आहुः-तत्राहेति।

—१६ कल्पनाशास्त्रे-मायावादे। इदं-एकस्य ब्रह्मणोनेकधा भानम्।

—१७ ननु यथाश्रुतविरुद्धधर्मवत्त्वस्वीकारे ब्रह्मणो नानारूपत्वेनानिर्णये निर्णयप्रवृत्तव्यासशास्त्रवैफल्यमित्यत आहुः-न चेति।

—१८ एवंसाधनार्थत्वात्-विरुद्धमतनिराकरणेन ब्रह्मणो नानारूपत्वप्रतिपादनायैव शास्त्रस्य प्रवृत्तत्वात्।

—२१ विषयभेदेनेति। शत्रुमित्रादिविषयभेदेनेत्यर्थः।

सूत्रार्थः-उत्तरपक्षसूत्रम्। शब्दैकगम्यस्य ब्रह्मणो निर्णयः शब्देनैव। यथैक एव सर्पः सरलः कुण्डलाकृतिश्च भवति तथा ब्रह्माप्यचिन्त्यशक्त्या निर्गुणमनन्तरूपं च भक्तेच्छया भवति। प्रमाणसिद्धविरुद्धधर्माश्रये भगवति न कापि श्रुतिर्लाक्षणिकेति ॥ २७ ॥

इत्यष्टममधिकरणम्।

---

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ ३।२।२८ ॥

१९९—३ **धर्मरूपविचारेण**-भिन्नाभिन्नत्वस्वरूपविचारेण । **पूर्वोक्तपक्षद्वयमिति** । प्रपञ्चविलक्षणविरुद्धसर्वाधारं ब्रह्मेति शब्दबलविचारलभ्य एकः पक्षः । तत्तत्फलदित्सया तं तं भक्तं प्रति ब्रह्म तत्तद्रूपेणाविर्भवतीत्यर्थबलविचारलभ्यो द्वितीयः पक्षः ।

—५ **तद्धर्मत्वात्**-पटादिधर्मत्वात् । **तन्नित्यतायां**-धर्मनित्यतायाम् ।

—६ **नित्यत्वकल्पनायामिति** । नित्यत्वानुमान इत्यर्थः ।

—११ **समवेतत्वादिति** । प्रकाशगुणस्य तेजोद्रव्ये समवेतत्वादित्यर्थः । **मूलाविच्छेदरूपेणेति** । एवं च सर्वे भगवद्धर्मा भगवदविभक्तास्तदविनाभूतत्वादित्यर्थः । अभेदे मानमुक्त्वा भेदे मानमाहुः- **नापीति** । प्रकाश इति शेषः । नापि प्रकाशः सूर्याभिन्न इत्यर्थः ।

—१२ **विद्यमानत्वाच्चेति** । चकारेणाधाराधेयभावस्य परास्य शक्तिरित्यादेश्च समुच्चयः ।

—१३ **कल्पना**- अभेदकल्पना ।

—१४ **नहीति** । यदि स्वाभाविकधर्मसत्तामनभ्युपगम्य सर्वविशेषरहितं ब्रह्म स्वीक्रियते तदा केवलचिन्मात्रब्रह्मणः- अस्य महतो भूतस्य- इति श्रुतिप्रतिपादिता चेतनधर्मरूपा वेदप्रवृत्तिर्न स्यात् । **निषेधशेषतेति** । अथात आदेशो नेति श्रुतौ निषेधाङ्गत्वमित्यर्थः ।

—१५ **सामानाधिकरण्यं**- सत्यज्ञानादिपदानामेकवस्तुवाचकत्वम् । **लक्षणायामिति** । सत्यज्ञानानन्दपदानामसत्यभिन्नजडभिन्नासुखभिन्नेति लक्षणायामित्यर्थः । **धर्मापेक्षेति** । लक्षणाया लक्ष्यतावच्छेदकव्याप्यत्वाल्लक्ष्यतावच्छेदकशक्यसंबन्धरूपयोर्धर्मयोरपेक्षेत्यर्थः ।

—१६ **विशिष्टपदार्थः**-सत्यज्ञानानन्दविशिष्टपदार्थः । **तादृशः**-विरुद्धधर्माश्रयः ।

—१७ **तेजःशब्दवाच्यत्वादिति**। तद्देवा ज्योतिषां ज्योतिरित्यादौ ब्रह्मतद्धर्मयोस्तेजोवाचकशब्दवाच्यत्वादित्यर्थः । **बहुदूरव्याप्त्यर्थमिति** । व्यापकत्वद्योतनार्थमित्यर्थः ।

—१८ **आतपादेरिति** । आतपश्च आदिश्चेत्यनयोः समाहारः । आदिपदेन प्रकाशधर्मिसूर्यादिग्रहणम् । एवंचातपस्य प्रकाशस्य धर्मत्वेन, आदेः सूर्यादेर्धर्मित्वेन च प्रतीतेरित्यर्थः । नन्वातपादेस्तथात्वं प्रत्यक्षसिद्धं ब्रह्मधर्मयोस्तु नाश्रयाश्रयिभावः प्रत्यक्षसिद्ध इति कथं धर्मधर्मिभावसंप्रत्यय

इत्यत आहुः- अपूर्ववदिति । भक्तेर्दृष्टत्वात् । श्रुतत्वादिति । श्रुतिवाक्यै-रित्यर्थः ।

—१९ न धर्मेष्वपि युक्त्यपेक्षेति । धर्माणामपूर्वतया प्रत्यक्षदृष्टत्वाच्छ्रुतिसिद्धत्वाच्च युक्त्यपेक्षा नेत्यर्थः ।

सूत्रार्थः— यथा प्रकाशाश्रयाः सूर्यादयः प्रकाशेन न भिन्नाः पृथक्स्थित्यभावात् । नापि प्रकाशः सूर्यादिरूपो भेदेन प्रतीतेः । अतो ब्रह्म वस्त्वेतादृशमिति मन्तव्यं-अथ यदतः परो दिवः-इति श्रुत्या तेजस्त्वात् । ततो ब्रह्म यथाश्रुतं सधर्मकं निर्धर्मकं चेति ॥ २८ ॥

## पूर्ववद्वा ॥ ३।२।२९ ॥

—२२ यः सिद्धान्त इति । ब्रह्म प्रपञ्चविलक्षणं तत्समवायित्वेपि न तत्प्रकारकं नापि समवायिमात्रं किंतु ततोप्यतिरिक्तं कृत्स्नं चिन्मात्ररूपं यदाविर्भवति तदा व्यवहार्यं भवति । तत्र जडजीवधर्मा औपचारिका इत्येवंरूपः सिद्धान्तः । तादृशं- कारणरूपम् ।

२००-२ उपपत्त्या विचार इति । निष्कलं निष्क्रियमित्यादिवाक्यैर्विचारे कर्तव्ये सतीत्यर्थः ।

—३ उपपत्त्येति । ब्रह्माहिकुण्डलवदुभयरूपं तद्धर्माः प्रकाशाश्रयवद्भिन्नाभिन्ना इत्युपपत्त्येत्यर्थः । पूर्वानुरोधेन- कारणस्वरूपानुरोधेन ।

—६ सर्ववेदार्थसिद्धेः- सर्वात्मकाद्वैतब्रह्मसिद्धेः ।

—७ तत्र-ब्रह्मणि । पर्यनुयोगः- प्रश्नः ।

—८ धर्मकल्पनाया- उभयविधश्रुतिदर्शनाद्विरुद्धधर्माश्रयत्वरूपधर्मकल्पनायाम् ।

—९ समानामिति । विरुद्धधर्मकल्पनेन सधर्मब्रह्मकल्पनं समानामित्यर्थः । उपपत्त्येति । एतत्सूत्रव्याख्योक्तप्रकारेण । उपपत्त्येति । पूर्वसूत्रव्याख्योक्तप्रकारेण । पूर्वनयनमिति । धर्माणामौपचारिकव्यतिरेकेणाहिकुण्डलवदुपपत्त्या निर्धर्मकेण सधर्मकस्याभेदोपपादनम् ।

—१० स्वसिद्धान्तः- व्याससिद्धान्तः । विपरीतामिति । तेन धर्माणामौपचारिकत्वस्याङ्गीकारादित्यर्थः । उभयं-एकदेशिमतं सिद्धान्तिमतं च । संमतामिति । एकविज्ञानेन सर्वविज्ञानमिति प्रतिज्ञाया उभयमतेपि सूपपादत्वादिति भावः ।

सूत्रार्थः- अथवा-अरूपवदेव हीत्यादिपञ्चसूत्र्या यः पूर्वमेकदेशिमतेन सिद्धान्त उक्तो निर्धर्मकमेव ब्रह्म सर्वकामत्वादिधर्मनिरूपणं लक्षणयेति तद्वद्वा ब्रह्म ज्ञेयमिति ॥ २९ ॥

## प्रतिषेधाच्च ॥ ३।२।३० ॥

—१३ उपपत्त्यन्तरं-श्रुत्युपपत्तिरूपं युक्त्यन्तरम् ।

—१४ सः- द्वितीयनिषेधः ।

—१५ तदुत्पत्तिः- ब्रह्मधर्माणामुत्पत्तिः ।

सूत्रार्थः- एकमेवाद्वितीयमिति श्रुत्यैवकारेणान्यनिषेधप्राप्तावद्वितीयमिति प्रतिषेधाद्धर्मप्रतिषेधोपि गम्यते । चकारेण सर्वविज्ञानप्रतिज्ञा संगृहीता ॥३०॥

इति नवममाधिकरणम् ।

---

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३।२।३१ ॥

—२० परिहृत इति । पूर्वाधिकरणचतुष्टयेन ।

—२२ ननु सेत्वादिवाक्यानि समन्वये विचारितान्येवेति पुनः कथनवैयर्थ्यमित्याहुः- यद्यपीति ।

—२३ तथापीति । सर्ववेदान्तानां ब्रह्मपरत्वविचारे यद्यपि विचारिता एते, तथापि परस्वरूपबाधकत्वेन तत्र तेषां परिहारो न कृतोतः पुनर्विचारः ।

—२४ न सिद्धमिति । तत्तद्वाक्येषु तत्तद्रूपाणां प्रतिपादनात् । परिच्छेदेन- परिच्छिन्नत्वबोधनेन ।

२०१-१ समन्वयेन- प्रथमाध्यायप्रथमपादेन । ब्रह्मत्वं- जगत्कर्तुब्रह्मत्वम् ।

—२ उत्तरपादेन-प्रथमाध्यायद्वितीयपादेन । ऐक्यं-जगत्कर्तृब्रह्मणा सहैक्यम् । अविरोध इति । सर्वधर्माणामविरोध एकधर्मिवृत्तित्वे निर्णीते धर्मिभेदोपि निराकृत एवेत्यविरोध इत्यर्थः ।

—४ धर्मिविचारादिति । पूर्वाधिकरणे ब्रह्मणः सकाशाद्धर्माणां भेदो निवारित इह तु धर्म्यन्तरं निवार्यत इत्यर्थः ।

—५ फलत इति । श्लोकोक्ताः सर्वाः पञ्चम्यो ल्यब्लोप इति लक्षणेन साधिताः । तथा चायमर्थः । फलं भक्त्या मामभिजानातीति साधनं ब्रह्मविदाप्नोति परमित्यादि, प्रमेयं वेदाः श्रीकृष्णवाक्यानीति प्रमाणं चानुसंधाय विचारेण तदबृहत् अर्थात् ब्रह्म पूर्वोक्तविचारतो न सिद्धं तर्हि तत्साधयितुं कोन्यो हेतुः क्षमः फलायुक्तहेतून् विरहय्य कोप्यन्यो हेतुर्ब्रह्म साधयितुं न समर्थः ।

—७ बाधकान्- परत्वबाधकान् । एकदेशबाधकत्वादिति । परब्रह्मत्वे साध्ये परत्वमेकदेशस्तद्बाधकत्वादित्यर्थः । फलतः- ब्रह्मविदाप्नोति परमिति फलत्वात् ।

—१३ दोषा गच्छन्तीति। एतं सेतुं तीर्त्वान्धः सन्ननन्धो भवतीति श्रुतेः।

—१५ फलवचनं- हिरण्यनिधिं निहितमित्यादिना दृष्टान्तेन फलत्व-बोधनम्। अवान्तरफलपरमिति। हिरण्यस्यार्थरूपत्वाद्यथा परंपरया ब्रह्म-प्रापकत्वमेवं प्रतिबन्धनिवर्तकत्वेन सेतोरवान्तरफलत्वमित्यर्थः।

—१६ उदाहरणमिति। उपसंक्रम्येति ल्यबन्तप्रयोगादवान्तरत्व उदा-हरणमित्यर्थः।

—१७ तत्रैव- दहरविद्यायामेव।

—१८ साधनयुक्तिप्रश्न इति। साधनमाकाशान्तःस्थितस्य ज्ञानार्थं यत्नकरणरूपमन्वेषणं तद्युक्तिर्विषयावगमानुकूलत्वं तत्प्रश्न इत्यर्थः।

—२१ तत्रैव-दहरवाक्य एव।

—२२ वस्तुपरिच्छेद इति। वस्तुत्वेनाभिमतस्य प्रमेयस्योभया-धिकरणत्वेनैव निरूपणं कृतं न तु परब्रह्मत्वेनेति परिच्छेदः फलित इत्यर्थः। वस्तुपरिच्छेद उदाहरणान्तरमाहुः-प्राज्ञेनेति।

—२६ अतिदेशः प्रमाणमिति। तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ-इत्यादिश्रुतेः। गेष्णौ-पर्वणी।

सूत्रार्थः—पूर्वपक्षसूत्रम्। ब्रह्मणोप्यन्यदुत्कृष्टमास्ति। सेतुव्यपदेशात्परि-माणकथनात् आधाराधेयसंबन्धनिरूपणात् आक्षिस्थितपुरुषयोः परस्परं धर्मातिदेशकथनाच्चेति॥ ३१॥

## सामान्यात्तु ॥ ३।२।३२ ॥

२०२-५ कल्पयन्तीति। पूर्वाधिकरणे श्रुत्यैव दोषनिरासस्य कृतत्वात्।
—७ संबन्धः आधारत्वेन निरूपणम्।

—८ दिव्यत्वाय-अलौकिकत्वाय। धर्मातिदेशः- आक्षिपुरुषधर्माति-देशः। मासाग्निहोत्रवदिति। एवंच मासाग्निहोत्रनामके कर्मान्तरेऽग्निहोत्र-पदप्रयोगेण तद्गुणानामेवातिदेशस्तद्वत्।

—९ अन्यशङ्का-नाममात्राद्दोषशङ्का।

सूत्रार्थः—समाधानसूत्रम्-गुणसाम्यप्रदर्शनार्थं तथा निर्देशस्य सत्त्वेन नातः परमन्यदस्तीति॥ ३२॥

## बुद्ध्यर्थः पादवत् ॥ ३।२।३३ ॥

सूत्रार्थः—यथा भूतादीनां पादत्वेन ज्ञानमुपासनार्थं तथा ब्रह्मणोप्यन्य-साम्येन कथनमुपासनार्थम्॥ ३३॥

## स्थानविशेषात्प्रकाशादिवत् ॥ ३।२।३४ ॥

### अतः परं प्रभूणां गोस्वामिश्रीविठ्ठलेशचरणानां भाष्यम् ।

—२० अन्यत्र–स्फटिकादौ । तथात्वं–समानधर्मवत्त्वम् ।

सूत्रार्थः–यथा यदादित्यगतं तेज इति वाक्यात्सूर्यचन्द्रादितेजसामैक्येपि स्थानभेदात्समानधर्मत्वं नास्ति तथा प्रकृतेपि स्थानभेदाद्धर्मभेदः स्यादतो धर्मातिदेशः । आदिपदेन कालो ग्राह्य इति ॥ ३४ ॥

## उपपत्तेश्च ॥ ३।२।३५ ॥

२०३–६ विशेषाभावः–अन्योत्कर्षाभावः ।

सूत्रार्थः—ब्रह्मभिन्नपदार्थस्य सर्वप्रमाणविरोधेनानुपपत्त्या ब्रह्मैव परमफलरूपमुपपद्यत इति ॥ ३५ ॥

## तथान्ये प्रतिषेधात् ॥ ३।२।३६ ॥

—१० अस्मदुक्त एव मार्गः-ब्रह्मणः परत्वमितिरूपः ।

—१२ आधिक्यमिवेति । पूर्वं सर्वं भगवति स्थितमेवाविर्भूतमिदानीमितीवशब्दः । अन्यपदोपादानमिति । न तत्सम इति श्रुत्यान्यप्रतिषेधात् ।

सूत्रार्थः न तत्समश्चाभ्यधिकश्चेति श्रुत्यान्यप्रतिषेधादन्यकल्पना निर्मूलेति ॥ ३६ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३।२।३७ ॥

—१५ प्रकरणं–धर्मधर्मिविरोधनिराकरणप्रकरणम् ।

—१६ केचित्–मायावादिनः ।

—२० अग्रिमपदवैयर्थ्यापत्तेरिति । अग्रिमपदस्य व्यापकताबोधकायामशब्दादिभ्य इति पदस्य वैयर्थ्यादित्यर्थः । तदेव व्युत्पादयन्ति–अत्रैवमिति ।

—२१ शक्नोतीति । सूत्रकार इति शेषः ।

२०४–१ आयामशब्दादिभ्य इति । आयामो दैर्घ्यं व्याप्तिरिति यावत् । शब्द्यतेनेनेति शब्दः । आयामस्य शब्दो येषु त आयामशब्दाः–व्यापकत्ववाचकपदघटितश्रुतय इत्यर्थः । तदाहुः–व्यापकत्वेत्यादि । व्यापकत्ववाचकसहितानि यानि श्रुतिवाक्यादीनि तेभ्य इत्यर्थः ।

—९ विलम्बोपस्थितिकत्वेनेति । व्याप्तिज्ञानपरामर्शादिकृतविलम्बोपस्थितिकत्वेनेत्यर्थः ।

—१० अभ्युच्चयमात्रमिति । वृथास्वीकारमात्रमित्यर्थः ।

सूत्रार्थः–ब्रह्मभिन्नस्य परत्वखण्डनेन–आकाशवत्सर्वगतश्चेति श्रुत्या–सर्वत

पाणिपादमिति स्मृत्या च सर्वव्यापित्वकथनेन ब्रह्मणः सर्वव्यापित्वं सिद्धमिति ॥ ३७ ॥

इति दशममधिकरणम्।

---

## फलमत उपपत्तेः ॥ ३।२।३८ ॥

सूत्रार्थः- ईश्वरादेवैहिकं पारलौकिकं च फलमुपपद्यते। सर्वस्य वशी-त्यादिश्रुत्या तस्यैव फलदातृत्वोक्तेरिति ॥ ३८ ॥

## श्रुतत्वाच्च ॥ ३।२।३९ ॥

सूत्रार्थः-स वा एष महानज इति श्रुतौ चकारात्- सुखं दुःखमित्यादि-स्मृतौ चेश्वरस्यैव फलदातृत्वकथनात्स एव फलप्रद इति ॥ ३९ ॥

## जैमिनिरत एव ॥ ३।२।४० ॥

२०५-१० विधिवैयर्थ्येत्यादि । विधिवैयर्थ्यप्रसंगः प्रवृत्त्यनुपपत्ति-प्रसंगश्चेति दूषणद्वयं, यदि कर्म न फलजनकं तर्हि यावज्जीवादीनां कर्म-विधीनां वैयर्थ्यं तथा निष्फले तत्र कर्मणि प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तत इति न्यायेन प्रवृत्तेरनुपपन्नत्वमित्यर्थः। तत्सापेक्षत्वे-कर्मसापेक्षत्वे।

—११ कृतं-अलम्। तेन-ईश्वरेण। तेन-कर्मणा।

—१७ सः-फलरूपः स्वर्गादिः।

—१८ अन्यथा दर्शनेपीति-राजादिभ्यः कर्मकरणाभावदशायां कर्म-कारिभिः फलप्राप्तावपीत्यर्थः।

—१९ धर्मिग्राहकप्रमाणेन- कर्मफलयोः कार्यकारणभावबोधकश्रुति-प्रमाणेन। सिद्धत्वात्-कर्मण एव फलस्य सिद्धत्वात्। अत्र-वेदबोधितकर्मणि तत्फले च।

—२० तत्प्रतिबन्धकापगम इति। स्वर्गादौ लौकिकदेहाद्यपगम इत्यर्थः।

—२१ तस्य-कर्मणः।

सूत्रार्थः- पूर्वोक्तहेतोरुपपत्तेश्च जैमिनिर्यागादिकर्म फलदातृ मन्यत इति ॥ ४० ॥

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ३।२।४१ ॥

२०६-१० विद्वन्मण्डने श्रीविठ्ठलेन चेति। यदि भाष्यमेतच्छ्रीवल्लभा-चार्यकृतं स्यात्तर्ह्येतत्कथनमसंगतं भवेत्पुत्रवाक्यस्य पित्रा स्वग्रन्थे स्वोपोद्बल-कत्वेन कथनस्य लौकिकरीत्या गर्हणीयत्वात्। अत एतद्भाष्यं प्रभुश्रीविठ्ठले-

शक्तमेव तेन चेदं संगच्छते स्वग्रन्थे स्वकृतग्रन्थान्तरोल्लेखस्य विद्वज्जनगृहीतत्वात् । श्रीविठ्ठलेनेति नामनिर्देशस्तु स्पष्टप्रतिपत्त्यर्थत्वेन निर्वाह्यः । एवंच स्थानविशेषात्त्वित्यारभ्य प्रभूणां भाष्यम् । दर्शितं च तथा तत्रैव सूत्रे ।

**सूत्रार्थः**– खण्डनसूत्रम् । बादरायणः पूर्वोक्तमीश्वरमेव फलदातृत्वेनाङ्गीकुरुते । एष एव साधुकर्मेत्यादिश्रुतौ तस्यैव हेतुत्वेन कथनादिति ॥ ४१ ॥

इत्येकादशमधिकरणम् ।

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालबोधिन्यां तृतीयाध्यायस्य द्वितीयः पादः ३।२

---

# अथ तृतीयाध्याये तृतीयः पादः ॥ ३।३ ॥

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ३।३।१ ॥

—१७ पूर्वपादार्थमनूद्यैतत्पादगतमर्थमाहुः-**पूर्वपाद इत्यादिना** । **जडजीवधर्मानिराकरणेनेति** । श्रुत्या प्रतिपादितानां ब्रह्मणि प्रतीयमानानां जडजीवधर्माणां ब्रह्मरूपत्वनिरूपणेनेत्यर्थः ।

—१८ **निरूपितमिति** । ब्रह्मणो विरुद्धधर्माश्रयत्वस्य व्यवस्थापनात् तस्य प्रपञ्चविलक्षणशुद्धसच्चिदानन्दविग्रहत्वं प्रतिपादितमित्यर्थः । **इह**– तृतीयपादे । **विचार्यन्त इति** । उपासनादेरन्तरङ्गसाधनभूता ब्रह्मधर्मा अतस्तदङ्गतयोपसंहाराद्यर्थं विचार्यन्त इत्यर्थः । एवं च द्वितीयतृतीयपादयोः प्रसङ्गसंगतिः । **ते**– विरुद्धधर्माः ।

—१९ **विरोधाभावादिति** ।

स्थितं व्रजन्तमासीनं शयानं वा गुहाशयम् ।

इतिवत् कालभेदेन पर्यायभेदेन च विभावने विरोधाभावादित्यर्थः ।

२०७–५ **गोकुलेत्यादि** । गोकुलक्षेत्रे वृन्दायाः कानने संचरमाणस्य गोपस्य रूपं धारयन्तम् ।

—६ **अनल्पाः**– बहुलाः । ये कल्पद्रुमास्तत्प्रसूनैर्विरचिताः स्थलयोकृत्रिमभूमयो येन तदेतादृशं कालिन्दीसलिलं यमुनाजलम् । कालिन्दीजले निपतद्भिर्बहुलकल्पद्रुमकुसुमैः प्रवाहरयवशात्तीरभूमयो विचित्रिताः कृता इत्यर्थः । तादृशकालिन्दीजलस्य कल्लोला वीचयस्तत्संगी तल्लग्नो यो मृदुतरपवनस्तेन चलन्तो येऽलकास्तैर्विराजमानं शोभमानं यद्गण्डमण्डलं तद्द्युत्या तत्प्रभया मण्डिते भूषिते ये कुण्डले तत्प्रभानुभावितो यो वामांसो

वामस्कन्धः । तेन मिलन् संगच्छमानो मूर्द्धन्यो मूर्ध्नि भवो महामणिर्यस्या एतादृशी मुरलिका । वादनसमये तिर्यक्कृताया मुरलिकायाः शिरोभागे विद्यमानो यश्च महामणिः स श्रीकृष्णस्य वामांससमीपमासीदित्यर्थः । एवंभूतमुरलिकाया मुखावलिर्मुखपङ्क्तिस्तत्र मिलन्त्योऽतितरला अतिचञ्चलाः करकमलयुगलस्याङ्गुलयस्तद्वशंवदास्तदधीना या विविधस्वरमूर्च्छनास्ताभिर्मोहिता या व्रजवरनितम्बिन्यो गोपस्त्रियः । तत्कदम्बं तत्समूहस्तत्कटाक्षकुवलयैरर्चितम् । एतावता श्रीकृष्णस्वरूपं वर्णितम् । अतः परं रामस्वरूपम् ।

—१० क्वचिदिति । कोदण्डं धनुस्तन्मण्डितभुजदण्डाभ्यां खण्डितः प्रचण्डो दशमुण्डो दशशिरा रावणो येन तत् । नृसिंहरूपमग्रे वर्ण्यते ।

—११ क्वचिदिति । अतिकरालमतिभयानकं यद्वदनं तेन वित्रासिता भयं लम्भिताः । कमला- लक्ष्मीः । कमलासनो ब्रह्मा, वृषभासनो हर इत्यादयो येन तत् । नृकेसरिरूपं-नरसिंहरूपम् । उरुक्रमादिरूपं चेति । उरुक्रमस्य श्रेष्ठत्वं वेदे विष्णुसूक्ते श्रीमद्भागवतादिषु चोक्तम् । आदिपदेन नारायणानुवाकाद्युक्तनारायणसदात्मरूपं तत्र तत्रोक्तं शिवरूपमन्यच्च ग्राह्यम् । एवमस्याधिकरणस्य विषयः । एवं च पूर्वपादे ब्रह्मप्राधान्येन विषयः । अत्र तु ब्रह्मरूपप्राधान्येनेति वैलक्षण्यम् ।

—१३ तथा- धर्मभेदप्रकारेण । यागभेदवदिति । द्रव्यं देवता चेति यागस्वरूपं तेन द्रव्यदेवताभेदेन यथा यागो भिद्यत एवमुपासनाभेदोक्तधर्मभेदे ब्रह्मभेदोऽङ्गीकार्यः । आवापोद्वापाभ्यामिति । आवापो ग्रहणं, उद्वापस्त्यागः । प्रापञ्चिकानां मुरलीकोदण्डधरत्वादीनामावापेन तद्विलक्षणानां सदेकरसत्वास्थूलत्वादीनामुद्वापेन चेत्येवमावापोद्वापाभ्यामित्यर्थः । दृष्टादृष्टफलभेदाच्चेति । दृष्टं फलं-साकारादिदर्शनम् । अदृष्टं फलं-तत्तत्पदप्राप्तिः ।

—१४ वेद्यभेदे-तत्तदुपासनाप्रकरणोक्तधर्मैर्ज्ञेयभेदे । ब्रह्मानेकत्वापत्ताविति । सर्वत्रोपासनावाक्येषु ब्रह्मण एवोपास्यत्वप्रतिपादनादनेकत्वापत्तिरित्यर्थः । श्रुतिविरोधात्-एकमेवाद्वितीयमिति श्रुतिविरोधात् ।

—१६ तद्विशिष्टानां-उपासनावाक्योक्तधर्मविशिष्टानाम् । तथात्वं-अब्रह्मत्वम् ।

—१७ वेदान्तानां-उपनिषद्वाक्यानाम् ।

—१९ समन्वयविरोधापत्तेरिति । सर्वासां श्रुतीनां विरुद्धधर्माश्रय एव ब्रह्मणि समन्वयः स त्वदुक्ताङ्गीकारे विरुध्येतेत्यर्थः ।

—२० **ब्रह्मविद्यात्वहानेरिति**। उपासनाविषयाणामब्रह्मत्वे तद्बोधकोपनिषदां ब्रह्मानिरूपकत्वेन ब्रह्मविद्यात्वहानिरित्यर्थः। **प्रतारकत्वापत्तेश्चेति**। अब्रह्माविद्याकार्यं ब्रह्मेति बोधयन्ती श्रुतिः प्रतारिका स्यादित्यर्थः।

—२३ व्यासस्यापीदमसंमतमित्याहुः- **स्पष्टार्थानामिति**। स्पष्टार्थकरामकृष्णादिपदघटितश्रुतिवाक्यानां निर्णयो व्यासेन पूर्वं कृतः स्यात्। ततः संदिग्धार्थज्योतिराकाशादिघटितवाक्यानां ब्रह्मपरत्वं निर्णीतं स्यादित्यर्थः।

—२४ एवं पूर्वपक्षं खण्डयित्वा स्वमतमाहुः- **एवं चेति**।

—२५ **तेषां**-उपासनावाक्योक्तधर्मविशिष्टब्रह्मस्वरूपाणाम्। **उभयतःपाशा रज्जुरिति**। भेदाङ्गीकार एकमेवाद्वितीयमित्यभेदश्रुतिविरोधः। तदनङ्गीकारे द्रव्यदेवताभेदाद्यागभेद इति प्रतिपादकामिक्षान्यायविरोध इत्युभयतःपाशा रज्जुरित्यर्थः।

—२६ सूत्रे सर्ववेदान्तप्रत्ययेतिव्यधिकरणो बहुव्रीहिस्तं व्याख्यान्ति- **सर्ववेदान्तैः प्रत्यय इति**।

२०८-३ **अविशेषात्**-साम्यात्।

—७ **आदिपदादिति**। आदिपदेन एवं वा संयोगरूपचोदनाख्याविशेषादिति सूत्रोक्ता अनेकरूपाणामैक्यबोधकाश्चत्वारो हेतवः संग्राह्याः। तथा च सूत्रे चोदनादीति समाहारद्वन्द्वः। तद्विग्रहश्च चोदना च आदयश्चैतेषां समाहार इति।

—९ **प्रयोजनसंयोग इति**। एकस्मिन्नेव ब्रह्मणि नानाप्रकारैर्जातानां फलानां संयोगः समुच्चय इत्यर्थः।

**सूत्रार्थः**—सर्ववेदान्तवाक्यैरनेकरूपैर्यस्य ज्ञानं भवति तद्ब्रह्मैव। विधिवाक्याद्यविशेषात् यथा शाखाभेदेन ज्योतिष्टोमे धर्मभेदेपि ज्योतिष्टोमाविधेरेकत्वमिति ॥ १ ॥

## भेदान्नेति चेदेकस्यामपि ॥ ३।३।२ ॥

—११ **धर्मभेदेनेति**। एकस्यामुपासनायामुक्तस्य धर्मस्योपासनान्तरेनुक्तत्वेन मिथोभेदात्परस्परभेदात्। **उक्तहेत्वासिद्धिमिति**। संयोगादिहेतुचतुष्टयमध्ये रूपात्मकहेतोरसिद्धिमित्यर्थः।

—१५ **तद्ग्रहणाग्रहणयोः**—षोडशिग्रहणाग्रहणयोः। **इहापि**-उपासनावाक्येष्वपि।

—१७ त्वदुक्तहेत्वासिद्धिरिति । ब्रह्मधर्माणां ब्रह्मणो भिन्नत्वाद्धर्मिभेदसाधकधर्मभेदरूपस्य त्वदुक्तहेतोर्ब्रह्मण्यसिद्धिरित्यर्थः ।

—१८ एवं सति–पूर्वोक्तप्रकारेण वेद्यैक्ये सति ।

—१९ उपसंहारः— सामान्यतः श्रुतानां विशेषे नियमनम् । अत्र–गुणोपसंहारे । उपासनाविषयेष्वखिलेष्विति । अवताररूपेष्विति शेषः ।

—२१गुणाः–ब्रह्मधर्माः । ओमित्येतदक्षरमिति । ब्रह्मत्वं गौणीकृत्येयं वर्णोपासना बोध्या ।

–२०९–१ अन्यथा– प्रकरणातिक्रमेणोपसंहारे । अतिप्रसंगादिति । प्रकरणस्य नियामकत्वभङ्गप्रसंगादित्यर्थः ।

—२ अग्रे–न वा प्रकरणभेदात्परोवरीयस्त्वादिवादित्यस्यापरव्याख्यायाम् । सूत्रार्थः–ननु धर्मभेदाद्भेद इति चेन्न । यतो यथैकस्यामप्यातिरात्रव्यक्तौ षोडशिग्रहणाग्रहणधर्मभेदाद्भेदो न तथेत्यर्थ इति ॥ २ ॥

## स्वाध्यायस्य तथात्वेन समाचारेधिकाराच्च सववच्च तन्नियमः ॥ ३।३।३ ॥

—३ ताश्चोपासनाः कथं कर्तव्या इत्याकाङ्क्षासमाधानमुत्तरसूत्रेष्वस्तीत्याशयेन सूत्रमवतारयन्ति–नन्विति ।

—७ रूपान्तरधर्मा इति । अस्योपसंहर्तुं शक्यन्त इत्यनेनान्वयः । अवतरणिकाया अयमर्थः । यथा कर्मणां विलक्षणत्वेपि शाखान्तराधिकरणोक्तन्यायादेकत्वमेवमुपासनानामप्येकत्वं सिद्धम् । ततश्चैक्यरूपहेतोर्गुणोपसंहारप्रयोजकतया यथा सर्वासूपासनासु गुणोपसंहारस्तथा ज्योतिष्टोमादियागेषु शाखान्तरोक्तगुणोपसंहारो युक्तः स्यात्तच्च शिष्टाचारादिविरुद्धम् । इमामापत्तिमपाकर्तुं शाखान्तरोक्तगुणोपसंहारो न क्रियते चेत्तेनैव न्यायेनोपासनास्वपि गुणानुपसंहारापत्तिरतोपि शिष्टाचारविरोधः । एवमुभयत्रापि शिष्टाचारविरोधे तुल्ये तत्समाधानायोत्तरं पठति सूत्रकार इति । तथात्वेनेत्यस्य व्याख्यानं स एकमेवेत्यादि ।

—११ समाचार इत्यस्य व्याख्यानं–तत्प्रयुक्त इत्यादि ।

—१५ तथानियमः–स्वशाखीयानामेवानुष्ठाननियमः ।

—१७ तन्नियमे–स्वशाखोक्तानामेव धर्माणामनुष्ठानमिति नियमे । क्वचिदिति । यथा कुक्कुटोसीत्यश्मानमादत्ते कुटरुरसीति वेत्यश्मादानमन्त्रे ।

—१८ व्यवस्थितविकल्पविषयत्वेनेति । उभयोरेककोटिनिर्णायको विकल्पो व्यवस्थितविकल्पः । यथोदिते जुहोत्यनुदिते जुहोतीति पक्षयोः

कस्याप्येकतरस्याङ्गीकारं कृत्वा यावज्जीवं तथैवानुष्ठानं न तु व्रीहियववदैच्छिकविकल्पविषयत्वेनानुष्ठानम् । विकल्पे- ऐच्छिकविकल्पे । उभयस्यापि विकल्पबोध्यपक्षद्वयस्यापि । अशास्त्रार्थत्वमिति । अष्टदोषदुष्टत्वादिति भावः ।

—१९ शास्त्रार्थत्वमिति । शास्त्रेणोभयोरपि प्राप्तिः स्यात्परंतु सुन्दोपसुन्दन्यायेन परस्परविरोधान्नैकमपि प्रवर्तेतेति भावः ।

—२० ननु यदा वेदविभागात्प्राक् शाखाभेदस्यासिद्धिस्तदा शाखाधिकारिणामसंभवात्सर्वकर्माङ्गानां सर्वकर्मसूपसंहारः स्यादत आहुः-अत्रेति । यथा सवा इति । एवं च शाखाभेदात्प्रागपि तत्तद्वेदे तत्तच्छाखानामपि नियामिकानां सत्त्वात्ताभिरेव नियमसंभवान्न सर्वकर्मसु सर्वाङ्गोपसंहार इत्यर्थः । त्रेताग्न्यनभिसंबन्धात्-सवहोमेषु वह्नित्रयसबंन्धाभावात् ।

—२२ तथात्वादिति । तत्तच्छाखोक्तकर्मसु तत्तच्छाखोक्ताङ्गानामेवानुष्ठानं नत्वन्येषां विरुद्धानामिति नियामकत्वादित्यर्थः ।

२१०-१ तथा सति- तद्बोधकप्रमाणाविरोधेन रूपान्तरोपासनासाधारणधर्माणामुपसंहारे सति ।

—२ चापशरादिकामिति । रामरूपगुणानामुपसंहारः कर्तव्यः स्यादित्यर्थः । भावनीयं स्यादिति । अस्याग्रिमवाक्येप्यन्वयः ।

—३ आयामशृङ्गम्- विस्तीर्णशृङ्गम् ।

—६ अभिसंधिः- समाधानम् ।

—१० उक्तमेवेति । प्रकरणस्य नियामकत्वभङ्गप्रसंग इति बाधकमुक्तमेवेत्यर्थः ।

—११ नन्वेवं सति प्राणाद्युपासनासु शाखान्तरोक्तगुणानामुपसंहारो न स्यादत आहुः- प्राणाद्युपासनास्विति ।

—१४ अधिकगुणस्येति । कस्यांचिच्छाखायामुक्ते न्यूनसंख्याविशिष्टप्राणे शाखान्तरोक्ताधिकसंख्योपसंहारेऽधिकसंख्यायां-शते पञ्चाशद्-इति न्यायेन न्यूनसंख्यायाः संभवाद्विरोधाभावेन न किंचिद्बाधकमित्यर्थः ।

—१६ परविद्यासु रूपान्तरे रूपान्तरगुणोपसंहारानुपपत्तिं शङ्कते-नन्विति ।

—१७ अनुपपन्नमिति ।

योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।

इति वचनाविरोधादनुपपत्तिरित्यर्थः । धर्मिग्राहकमानेन-यदेकमव्यक्तमनन्तरूपमिति श्रुतिरूपेण ।

—१८ **तथात्वात्**–विरुद्धधर्माश्रयत्वेन श्रुतौ श्रावणात्।

—१९ अत्रार्थे **दृष्टान्तमाहुः–यथैकस्यैवेति**। नियतपदार्थवादिमते भावभिन्नो निषेधमुखप्रतीतिगोचरो य एको भावभेदरूपोऽन्योन्याभावपदार्थस्तस्यैव तादृशपटाद्यनन्तभावप्रतियोगिकता तत्तत्पटादिरूपत्वं चाद्रियते। तथा तस्यैवान्योन्याभावस्य तत्तत्प्रतियोगिकात्यन्ताभावत्वमप्याद्रियते। एवं प्रतियोगिभेदाद्भावरूपत्वमभावरूपत्वं चैकस्यैवान्योन्याभावस्याद्रियते न तु निरूपकभेदेन स्वरूपभेदः स्वीक्रियते तद्वत् ब्रह्मण उपनिषत्प्रतिपादितत्वेनोपनिषद्वाक्यस्यैव नियामकत्वात्स्वरूपाभेदेऽप्यनन्तरूपतया तत्तल्लीलाकर्तृत्वज्ञानं स्वरूपाभेदश्चोपपद्यते।

—२१ **अभावत्वस्य**–नानापदार्थानामभावरूपत्वस्य।

—२२ **अप्रयोजकत्वादिति**। ऐक्यबोधकप्रबलप्रमाणाभावेनाप्रयोजकत्वादित्यर्थः। **धर्मिग्राहकमानस्य**–यदेकमव्यक्तमिति वाक्यस्य। **तथात्वात्**– ऐक्यबोधकप्रबलप्रमाणत्वात्। **तदेव प्रबलप्रमाणं दर्शयन्ति- तच्चेति**।

२११–१ नन्वेकस्य ब्रह्मणः सर्वेवतारास्तदभिन्नाश्चेदेकावतारस्वरूपे तादितरावतारस्वरूपैक्यं प्राप्तं ततश्चान्यावतारधर्मवत्त्वेनान्यावतारोपासनमपि स्यात्सर्वत्रोभयालिङ्गाधिकरणे विरुद्धधर्माधारत्वस्योक्तत्वादित्याशङ्कायां तथोपासने श्रुतिविरोधरूपं दूषणं वक्तुं प्रतिवादिनमनुयुञ्जते- **अपरं चेति**।

—२ **विज्ञानहेतुः**–ब्रह्माभिन्नत्वाविज्ञानकारणम्।

—३ **निरूप्यते**–तत्तच्छाखासु भिन्नतया निरूप्यते।

—५ **को हेतुरिति**। यदि भिन्नरूपधर्मैरेकस्यैवोपासने ब्रह्मज्ञानं संभवेत्तर्हि श्रुत्या नानाधर्मवत्त्वेन नानास्वरूपानिरूपणं किमर्थं कृतमित्यर्थः। **प्राप्तिं**–उपास्येनुक्तगुणानां प्राप्तिम्। **अनिरूपणे**–एकरूपत्वानिरूपणे।

—७ **तस्य**–ब्रह्मज्ञानस्य। **एकजातीयत्वात्**–तन्मतानुसारं गुणोपसंहारेण समानजातीयत्वात्।

—८ **क्लृप्ताशेषसाधनसाध्यत्वादिति**। यथा घटो दण्डाद्यशेषसाधनसमुदायसाध्यस्तथोपासनाप्यशेषगुणानुसंधानसाधनसाध्यातोऽशेषगुणनिरूपिका श्रुतिरुपासनां निरूपयेदित्यर्थः।

—९ **अन्योति**। अन्यशाखोक्तेत्यर्थः।

—१० **उपसंहार्यान्**–अन्यशाखोक्तान्। एवं चोपासनश्रुतौ कतिपयगुणकथनमन्यथानुपपत्त्या रूपान्तरे रूपान्तरगुणोपसंहारो दोषावह इति कल्पयत्यतः श्रुतितात्पर्यविरोधरूपो दोष इत्यर्थः।

—११ तात्पर्यान्तरं शङ्कित्वा निषेधन्ति–**न चेति**। स्वशाखामात्रेति मात्रपदेन शाखान्तराध्ययनज्ञाने निरस्येते।

—१२ **परशाखाज्ञानेन**–अध्ययनाभावात्परशाखाया अज्ञानेन।

—१३ **तस्मात्**–तात्पर्यान्तरस्यानुपपत्त्या।

—१४ **भवतीति**। तावद्धर्मविशिष्टब्रह्मसाक्षात्कारो भवतीत्यर्थः। **तैत्तिरीयाणामिति**। एवं च तत्तच्छाखासु कियद्गुणोक्तिसामर्थ्यात्तैरेव गुणैरुपासनासाद्गुण्यम्, अतो न रूपान्तरे रूपान्तरगुणा उपसंहार्याः।

—१६ **एकैकप्रकारकं**–केवलरूपप्रकारकं केवलगन्धप्रकारकं केवलरसप्रकारकं वा।

—१७ **एतेन**–अनन्तशाखास्वनन्तगुणकथनेन।

—२० स्वकृतं सूत्रव्याख्यानं द्रढयितुमन्यव्याख्यानं दूषयन्ति–**केचिदिति**। **केचित्**–शंकरभास्कररामानुजादयः।

—२१ **स्वाध्यायस्य**–अथर्ववेदगतोपनिषदध्ययनस्य।

—२३ **अचीर्णव्रतः**–असमाप्तव्रतः।

२१२–२ एषः–शिरोव्रतधर्मः। यद्यपीदं शङ्करादिमतं विद्यायां धर्मशास्त्रमितिसूत्रशाबरभाष्यानुसारि तथापि सूत्रकाराशयविरुद्धं तदिति स्पष्टयन्ति–**स चिन्त्यत इति**। **नहीति**। अस्य शिरोव्रतस्य विद्याधर्मत्वं तु विद्याभेदकं नेत्यर्थः। **उक्तन्यायेन**–चोदनाद्यविशेषन्यायेन। **अन्यत्र**–अध्ययने।

—३ **तदुपसंहारस्य**–शिरोव्रतोपसंहारस्य। **अनुपसंहारार्थं**–विद्याभेदं स्वीकृत्य विद्यान्तरधर्माणां विद्यान्तरेनुपसंहारार्थम्। **अतद्धर्मत्वं**– शिरोव्रतस्याध्ययनधर्मत्वाभावः।

—५ **उपेक्ष्य इति**। शंकरादिव्याख्यातः सूत्रार्थो हेय इव प्रतिभाति। शाबरभाष्यानुसारिमतखण्डनमसहमानः शङ्कते–**नन्विति**।

—६ **तदुक्तार्थत्वे**–शंकरादिकृतार्थघटितत्वे।

—७ **स एव**–तदुक्तसूत्रार्थ एव।

—१० **तस्मिन्**–मुख्यार्थे। **तद्बाधः**–मुख्यार्थबाधः। ननु तात्पर्यनिर्वाहायाद्दतो मुख्यार्थबाधो न दोषावह इत्यरुच्या दूषणान्तरमाहुः–**किंचेति**। **एवं**– विद्यैकत्वं स्वीकृत्यात्रोक्तोपासनाधर्माणां ब्रह्मण्युपसंहारानङ्गीकारे।

—११**अनिवृत्तिरिति**। भिन्नाभिन्नशाखोक्ताग्निष्टोमस्यैकत्वस्वीकार एकशाखोक्ताग्निष्टोमाङ्गेषु तदितरशाखोक्ताङ्गानामप्युपसंहारेणानुष्ठानापत्तिरित्याशङ्काया निवृत्तिर्न स्यादित्यर्थः। **पूर्वं रूपान्तरे रूपान्तरगुणानुपसंहारे**

रूपभेदः कारणतयोक्तस्तं रूपभेदं स्पष्टयितुं विचारान्तरमारभन्ते–**नन्विति**। स होवाचेति श्रुतिरुत्तरतापनीयस्था । अस्यामुपनिषदि दुर्वासाः स्वगतं भगवज्ज्ञानं वक्तुं ब्रह्मनारायणसंवादमुपक्षिपति–**स होवाचेति** । **अब्जयोनिः**–ब्रह्मा ।

—१५ **मथुरास्वरूपमिति**। मथुरास्वरूपनिरूपणं परमेश्वरस्य भूम्यामवतारसूचनार्थम् ।

—१८ **पूर्वोक्तरीत्या**–यदेकमव्यक्तमित्यादिश्रुत्युक्तरीत्या ।

—१९ **सर्वतुल्यता**–सर्वावताराणां तुल्यब्रह्मरूपता । द्वितीयं संशयमाहुः–**किंचेति** ।

—२२ सत्त्वं यस्येति, विशुद्धसत्त्वमिति वाक्यद्वये क्रमेण प्रियेतिविशुद्धेतिविशेषणाभ्यां प्राकृतगुणान्तर्गतसत्त्वस्य निवृत्तिरित्याहुः– **अप्राकृत इति** ।

मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् ।

इत्यादिना प्राकृतगुणानामप्रियत्वाविशुद्धत्वबोधनादित्यर्थः ।

—२५ **स स इति** । अवतार इत्यर्थः ।

२१३–१ **तद्रूपत्वं**– आविष्टांशस्य ब्रह्मरूपत्वम् । **तदेवांशत्वमिति**। तद् ब्रह्मस्वरूपमेवांशत्वेन व्यवह्रियत इत्यर्थः । मूलस्वरूपं बोधयन्ति–**यत्रेति** । **अधिष्ठानं**– सत्त्वाद्यात्मकं शरीरादि ।

—४ **तोकादिभावेनेति** । वत्साहरणे, रासे, एकमौहूर्तिकनानास्त्रीविवाहे, नारदपरीक्षायां च यथायोग्यं बालप्रौढराजभावेनाविरभवद्भगवान् । यद्येकरूपत्वं स्वास्मिन् ज्ञापयितुमनभीष्टं स्याद् भगवतस्तर्हि रामाद्यवतार इवात्र श्रीकृष्णावतारेप्येवं न ज्ञापयेत् । विविधरूपतया प्रकटो न स्यात् । एवं चैतादृशं प्राकट्यमेव मूलरूपैश्वर्यादिगमकमित्यर्थः । **तेन**– बालादिभावेपि जृम्भाव्यादानोलूखलबन्धादिलीलासु सर्वात्मकत्वव्यापकत्वविरुद्धधर्मप्रदर्शनेन । **यादृग्यादृगिति** । यद्यल्लीलायां यादृग् यादृक् पाणिपादादिपरिमाणानि प्रतीयन्ते तानि तथैव ब्रह्मस्वरूपनिष्ठानि । **अयमर्थः**– सर्वतः पाणिपादान्तमिति श्रुत्या बोध्यते ।

—५ **जानीम इति** । एवं च निरवयत्वेप्युपाधिप्रविष्टघटाकाशादिवदंशांशिभावाविरोधान्न प्रमाणान्तरविरोधो न वा श्रीकृष्णावतारस्य श्रेष्ठत्वविरोध इत्यर्थः । **एवं**– सत्त्वस्याधिष्ठानत्वे ।

—६ **सर्वत्र**– श्रुतिषु ।

—७ **मन्त्राद्यधिष्ठातृरूपाणि**– मन्त्रजापकादिभिर्दृष्टानि जपादिप्रसा-

दितस्य भगवतो रूपाणि । विभूतिरूपाणीति । परब्रह्मण इतरानधीनत्वेन जपाद्यधीनत्वासंभवात्तानि विभूतिरूपाण्येवेत्यर्थः ।

—८ **तत्त्वं-** विभूतिरूपत्वम् ।

—११ **तत्र तत्र-** उद्गीथादिरूपेषु । कुत्राचिच्छुद्धधर्मिणः स्थितिः, कुत्रचित्कलायाः स्थितिः,कुत्रचिदंशस्यावताररूपतेति रूपत्रयमसहमानः शङ्कते- नन्विति ।

—१३ **प्राकट्योक्तिः**-अंशकलावताराणां प्रकटतोक्तिः । **अनुपपन्नेति** । निराकारस्वभावस्यावतारकथनं व्याघातघटितमतोनुपपन्नेत्यर्थः ।

—१४ **अनपनोद्यत्वात्-** अबाध्यत्वात् ।

—१५ **तच्च**-स्वतोनन्तरूपत्वे प्रमाणं च । **प्राकट्यं**-ब्रह्मस्वरूपप्रकटता ।

—१६ **बहुविधेति** । सकामानिष्कामभेदेन सकामायामपि कामनानात्वेन च भक्तेर्बहुत्वमित्यर्थः । **तथेति** । ये यथा मां प्रपद्यन्ते-इति भगवद्गीतावाक्यात् । **तथा-** तत्तत्प्रकारेण ।

—१७ **इतरासक्तिः**-सर्गाद्यासक्तिः । **उपाध्यन्तरितस्नेहवत्वात्**-सर्गाद्युपाधिनिमित्तमेव भगवति तेषां स्नेहोतः कामनाव्यवहितस्नेहवत्त्वान्निष्कामस्नेहाभावात्तान् प्रति भगवत्प्रादुर्भावोपि सत्त्वोपाधिव्यवधानेनैवेति ज्ञेयम् ।

—१९ **अतद्व्यवधानेन-** मलिनसत्त्वाव्यवधानेन । **एतेन**-अधिकारिभेदात्प्राकट्यप्रकारभेद इति निरूपणेन ।

—२१ **निरुपाधितत्तदर्थं-** निरुपाधिस्नेहवतां कृते ।

—२२ **तथात्वात्-** गोपालतापनीयाद्युक्तप्रमाणसिद्धत्वात् ।

—२३ **एतदेव-** आनन्दमयमेव ।

२१४-१ **तथा-** विषयः । **तादृक्कृद्वतां**-सोपाधिस्नेहवताम् । **अवसीयत इति** । एतेनेत्यादि अवसीयत इत्यन्तमेकं वाक्यम् । **एवं सति**-भक्तिभेदमूलकनानारूपैरेकस्यैव ब्रह्मणः प्रकटीभावे सति । **गुणभेदस्य**-तत्तद्रूपगुणभेदस्य । **अप्रयोजकत्वात्**-रूपिभेदप्रयोजकत्वाभावात् ।

—२ **सर्ववेदान्तप्रत्ययत्वं**-नानारूपप्रतिपादकसर्ववेदान्तप्रत्ययत्वम् ।

**सूत्रार्थः**— नन्वेवं सति शाखान्तरीयधर्माणामुपसंहारः स्यात्तथावतारान्तरधर्मा अवतारान्तरेप्युपसंहर्तव्या इति चेन्न । वेदसंबन्धिकर्मणस्तत्तच्छाखोक्तप्रकारेण करणेधिकारात् । अत्र दृष्टान्तः सवाः । यथा सवाख्यहोमविशेषा आथर्वणिकैरेव कार्या इति नियम्यन्त एवमेवोपासनायामपि राम-

कृष्णादिरूपेषु तत्तद्रूपोपासकस्य तत्तदवतारधर्मा एव भावनीया न त्ववतान्तरधर्मा अपीति ॥ ३ ॥

## दर्शयति च ॥ ३।३।४ ॥

**सूत्रार्थः-** सर्वे वेदा यत्पदमामनन्तीत्यादिना श्रुतिर्विद्यैकत्वाद्विद्यानामेकत्वं दर्शयति । चकाराद्यदा ह्येवैष इत्यादिना भेददर्शननिन्दा च सूचितेति ॥ ४ ॥

## उपसंहारो भेदाद्विधिशेषवत् समाने च ॥ ३।३।५ ॥

—१० **पूर्वसूत्रोक्तरीत्या-** स्वाध्यायस्येत्यादिसूत्रोक्तपद्धत्या । **गुणोपसंहारः-**एकावतारधर्माणामवतारान्तर उपसंहारः ।

—११ **श्रीरामोपनिषत्स्विति** । एवं च मत्स्यकूर्माद्यवताररूपत्वं श्रीरामावतार उपसंहृतम् ।

—१४ **श्रीव्रजनाथ इति** । श्रीमद्भागवतदशमस्कन्धीयाक्रूरस्तुतौ श्रीकृष्णे रघुवर्यत्वादिगुणोपसंहारः । **तत्प्रयोजकं**-उपसंहारप्रयोजकम् । **एवं सति-** भगवल्लक्षणार्थैक्यस्योपसंहारप्रयोजकत्वे सति ।

—१८ **विधिशेषाणामिति** । अग्निहोत्रादीनामित्यस्य विशेषणं, विधिः शेषोऽङ्गं येषामिति विग्रहघटितो बहुव्रीहिः । अग्निहोत्रादिक्रियाणामङ्गं वैदिको विधिः । आम्नायस्य क्रियार्थत्वात् । एतस्मिन् विधिशेषवदित्यस्य व्याख्याने गुणोपसंहारप्रयोजनं न स्पष्टतया प्रतिभासत इत्यतः पक्षान्तरमाहुः-**यद्वेति** । **मत्वर्थीयो वत्प्रत्यय इति** । मतुपो मकारस्य मादुपधायाश्च मतोर्वोयवादिभ्यः ( पा. सू. ८।२।९ ) इति सूत्रेण वकारादेशे वत्प्रत्यय इत्यर्थः ।

—२१ **विधिशेष इति** । विधेः शेषोऽङ्गमर्थवादः । **तद्वत्**-तद्युक्तम् । **समानं च**-एकं च । एवं च-वर्म वा एतद्यज्ञस्य क्रियते यत्प्रयाजानुयाजौ-इत्याद्यर्थवादानां नानाशाखीयदर्शपौर्णमासादिषु स्तावकत्वेन यथोपसंहारस्तद्वदत्राप्युपसंहार इत्यर्थः ।

—२५ **तत्फलसाधकत्वस्य**-श्रुत्यन्तरोक्तफलान्तरसाधकत्वस्य ।

२१५-४ **उक्तरीतिरितीति** । एकस्मिन् कर्मणि वाक्यद्वयेन फलद्वयबोधनाद्यथा फलद्वयसाधकत्वमुपसंह्रियते तथा यत्र गोपालतापनीयाद्युक्तोपासनायां फलद्वयं श्रुतं-तत्र तं यथा यथोपासत इति श्रुत्या तत्तत्फलदत्वस्योपसंहारः कर्तव्यः । परोक्तव्याख्यानं दूषयन्ति- **यत्त्वित्यादिना** ।

—७ **शक्यवचन इति** । एवं च शिष्टाचारविरोधादिदोषात्तद्व्याख्यानमुपेक्ष्यमित्यर्थः ।

—९ तदादयः– प्राणविद्यादयः। प्राणादिविद्यागतशङ्कायाः समाचारसूत्रविरोधादेवानुदयेन तन्निवारणार्थं चकारस्यानुपयोगात्प्रयोजनान्तरं प्रदर्शयन्ति– वस्तुतस्त्विति । पूर्वसमुच्चयार्थः–अर्थभेदसमुच्चयार्थः ।

—११ उपसंहारबीजमिति। बाधकाभाववैशिष्ट्यरूपं तत्तत्फलार्थरूपत्वं च बीजमित्यर्थः ।

सूत्रार्थः—नमस्ते रघुवर्यायेत्यादिषु यः श्रीकृष्णधर्माणामुपसंहार उक्तः स शुद्धब्रह्मोपासकैः कर्तव्यः । भगवद्रूपस्यावतारद्वयेपि समानत्वात् । एकान्तिभक्तैस्तु तत्तदवतारोपासनविध्युक्तप्रकारवदविरुद्धधर्माणामुपसंहारः कर्तव्यः। नतु विरुद्धधर्माणां तेषु समानत्वाभावादिति ॥ ५ ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ३।३।६ ॥

—१३ नन्विति। विरुद्धगुणोपसंहार एकरसतानिवृत्त्या ब्रह्मत्वमेवापेयात् ततश्चार्थभेदहेतोर्निवृत्त्योपसंहारो न भवेदिति भावः।

—१८ तेनेति। एवं श्रुतिबलनिर्णयस्योभयत्र समानत्वात् ब्रह्मत्वेनाभेदे सिद्धे ब्रह्मत्वप्राधान्येनोपासनायां उपसंहारबाधो नेत्यर्थः ।

सूत्रार्थः—ननु धर्माणामुपसंहारे श्रुतिप्रतिपादितमेकरसं ब्रह्मान्यथा भवेदनेकरसं च तत्स्यादिति चेन्न श्रुतिप्रतिपादितत्वाविशेषात्। यथा श्रुत्या ब्रह्मण एकरसत्वेन निर्णयः कृतस्तथा विरुद्धधर्मवत्त्वेनापीति ॥ ६ ॥

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ३।३।७ ॥

—२० पूर्वसूत्रोक्तेत्यादि। पूर्वसूत्रे अन्यथात्वं शब्दादिति भागेन या शङ्का कृता तस्या एवानेन सूत्रेण प्रकारान्तरेण निराकरणं क्रियत इत्यर्थः। विकल्पेनेत्यस्यैव व्याख्यानं– पर्वोक्तादिति ।

—२२ तदुक्तधर्मवत्–श्रुत्युक्तधर्मवत् ।

—२७ आथर्वणोपनिषदितीति । अयमथः। ब्रह्मणि सर्वगुणसत्त्वेपि यादृशोपासकं प्रति यावन्तो गुणा भगवता प्रकटीक्रियन्ते तावन्त एव श्रुत्या तत्र निर्दिश्यन्त इति प्रकरणभेदेन तत्तद्रूपतत्तद्गुणकथनाज्ज्ञायते। अतोधिकारिणापि तत्तद्गुणा एव तत्र तत्र भावनीयाः ।

२१६–१ अस्मिन्न इति । अस्याः श्रुतेरर्थः प्रकाश एवं निर्दिष्टः। अहीनाख्ये सोमयागेहीनसत्रे चोपसद्दिनसंख्यां पूर्वं विधाय तेषु दिनेष्ववान्तरदीक्षाङ्गव्रतपानस्तनसंख्यां विधत्ते। तत्रावान्तरदीक्षा द्विविधा। योस्मिँल्लोके समृद्धिशीलं फलं कामयते तस्याराग्रावान्तरदीक्षा। सोमक्रयदिने

सायमेकस्तनम्। अपरेद्युः प्रातर्द्वौ स्तनौ सायं त्रीन् स्तनान्, परेद्युः प्रातश्चतुःस्तनान्। एवंपानेराग्रावान्तरदीक्षा सिध्यति। सा पूर्वमुक्ता। आरं बलीवर्दप्रतोदनलोहं तद्वदग्रं मुखं यस्याः साराग्रा। तदग्रे परोवरीयसीवाक्येन्या। तत्र विपरीतं व्रतम्। सोमक्रयणादिने चतुरः स्तनान् दुह्युः। अपरेद्युः प्रातस्त्रीन्। सायं द्वौ। परेद्युः प्रातरेकमित्येवं दिनत्रय इति। भक्तित्वं नेति। भक्त्यतिरिक्तफलनिमित्तं कृतत्वाद्भक्तित्वं नेत्यर्थः। ननु पूर्वसूत्रेणैव तच्छङ्कानिरासे व्यर्थमिदं सूत्रमतो व्याख्यानान्तरमाहुः- **अथवेति।**

—८ **पूर्वसूत्रेण**–उपसंहारोर्थाभेदादिति सूत्रेण।

—९ **व्यवस्थितविकल्पं**–ज्ञानिनामुपसंहारो न भक्तानामिति व्यवस्थितविकल्पम्।

—१३ **तत्र**–व्यवस्थायाम्।

—१५ **उच्यत इति।** उत्कृष्टाधिकारे सति नोपसंहार इत्युच्यत इत्यर्थः। एवं सति प्रकरणभेदादित्यस्याधिकारिभेदादित्यर्थे सिद्धे सति।

—१६ **परस्मादिति।** छान्दोग्ये प्रवाहणेनोद्गीथविद्यासमाप्तावुक्तम्।

**सूत्रार्थः**- यथा परोवरीयस्त्वव्रतस्य दीक्षाप्रकरणे पठितत्वात्तया सहितस्यैव परोवरीयस्त्वं तद्रहितस्य न प्रकरणभेदात्तथा ज्ञानप्रकरणे ज्ञानिनं प्रत्येकरसत्वेन निरूपणं भक्तिप्रकरणे तु भक्तानुभवानुरोधाद्भिन्नाभिन्नप्रकारेण निरूपणमिति ॥ ७ ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ३।३।८ ॥

—२२ पूर्वसूत्रोक्तामधिकारिभेदप्रयुक्तामुपसंहारानुपसंहारव्यवस्थां द्रढयितुं सूत्रमाशङ्कापूर्वकं व्याख्यान्ति- **एकान्त्यनेकान्तिनोरपीति।** रूपप्राधान्यवानेकान्ती। ब्रह्मप्राधान्यवाननेकान्ती। **एकान्तिनः**–भक्तस्य।

—२४ **उक्तामिति।** उपसंहारानुपसंहारयोर्व्यवस्थापनात्।

—२५ **हेतोः**–उपसंहारहेतोः। **अन्वयव्यभिचारः**- अन्वयस्य व्यभिचारः। यत्र यत्र संज्ञैकत्वं तत्र तत्र संज्ञिधर्माणामुपसंहार इत्यन्वयस्य व्यभिचार इत्यर्थः।

—२६ **प्रमितभेदेषु**- निर्णीतेषु भेदेषु। **परोवरीयस्त्वादिष्विति।** आदिपदेनाक्षिपुरुषप्रतीकस्योद्गीथत्वेनोपासनं ग्राह्यम्। **उद्गीथोपासनेपीति।** तत्र संज्ञैक्येपि धर्मोपसंहारो नास्तीत्यन्वयव्यभिचार इत्यर्थः।

**सूत्रार्थः**–ननूभयोरपि ज्ञानिभक्तयोर्ब्रह्मोपासकत्वरूपसंज्ञाया एकत्वात्प्रकरणभेदाभावात्सर्वधर्मोपसंहारः स्यादिति चेत्तद्विषय एकान्त्यनेकान्तित्वेन

व्यवस्थोक्ता । संज्ञैकत्वमप्रयोजकमित्याह–यथोद्गीथोपासनेति संज्ञैक्येपि परोवरीयस्त्वाद्युपासनेषु धर्मभेदस्तथात्रापि संज्ञैक्येपि धर्मभेद इति ॥ ८ ॥

**व्याप्तेश्च समञ्जसम् ॥ ३।३।९ ॥**

२१७–२ पुनर्ब्रह्मगतानेव धर्मान् विचारयति सूत्रकार इत्याशयेनावतारयन्ति । अथेदमिति ।

—३ **तथा सति**–बाल्याद्यवस्थावत्त्वे सति । **तत्रोक्तं**– तत्तद्रूपेषु श्रुत्योक्तम् ।

—४ **सर्वं**–उपास्यरूपस्य ब्रह्मत्वं, ब्रह्मत्वेनोपासने श्रुतिविरोधपरिहारादिकं च सर्वम् ।

—८ **क्रमेण**–लीलारसानुभवक्रमेण । **योगमायापसारणेनेति** ।

नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।

इति गीतावचनाद्योगमाया सच्चिदानन्दविग्रहस्यावरणभूता । तां क्रमेणापसार्य भक्तानां तल्लीलानुभवार्थमिच्छया कृपया वा तत्तद्रूपं प्रकटीकरोति भगवान् । **सर्वं**–बाल्यादिभावम् ।

—९ **तेन**–व्याप्त्यादिना सामञ्जस्यसाधनेन । **यावदुक्तधर्मवत्**–पूर्वोक्तबाल्यादिवास्तवधर्मवत् । एवं च भक्तिमार्गीयेणाविरोधाद्बाल्यादयो धर्मा अप्युपसंहार्या इत्यर्थः ।

**सूत्रार्थः**– ननूपास्यरूपेषु बाल्याद्यवस्थानामुक्तत्वाद्विग्रहन्यूनाधिकभावेन ब्रह्मणः सच्चिदानन्दत्वमनुपपन्नमिति चेन्न । सर्वतः पाणिपादान्तमित्युक्त्या साकारस्यैव व्यापकत्वात् । चकारेण सर्वरस इति श्रुत्या भक्तानुभवानुगुणं रूपं प्रकटीकृत्य विहरतीति सूचितमिति ॥ ९ ॥

—१० अग्रिमसूत्रमवतारयन्ति–नन्विति । **ते सर्वे**-बाल्यादयः । **नित्या इति** । अनुच्छित्तिधर्मेति श्रुत्योच्छेदराहितत्वान्नित्या ध्वंसाप्रतियोगिन इत्यर्थः । **तत्तद्भक्तविशिष्टाः** । तत्तत्क्रीडोपयोगिभक्तविशिष्टाः ।

—११ **श्रूयत इति** । यो नन्दः परमान्द इत्यादिना कृष्णोपनिषदि श्रूयते ।

—१२ **तथात्वं**–नित्यत्वम् ।

—१३ **तस्यैव**– पूर्वलीलानुभवार्थमाविर्भूतभक्तस्यैव । **अशक्यवचन इति** । एकस्मिन्काल एकेन भक्तेन विरुद्धनानालीलानुभवो न संभवत्यतो न तथा वक्तुं शक्यत इत्यर्थः ।

—१४ **नित्यत्वे**– पूर्वलीलाया नित्यत्वे । **अग्रिमलीलासबन्धिन इति** । भक्तस्येति शेषः । **तच्च**–संबन्धिभिन्नत्वं च ।

—१५ अनुभवतदावेदकमानाविरुद्धामिति। लीलानुभावितृभक्तानुभवस्तदावेदकमानं कृष्णोपनिषच्छ्रुतिस्तद्विरुद्धम्। एवं च भक्तैक्ये कृष्णोपनिषच्छ्रुतिविरोधः। तद्भेदे-अनुच्छित्तिधर्मा-इत्यादिश्रुतिविरोध एवमुभयतः-पाशा रज्जुरिति शङ्कयोपसंहारो दुष्कर इति प्राप्ते तन्निवृत्त्यर्थमुत्तरभूतं सूत्रं प्रणिनाय सूत्रकारः-सर्वाभेदादिति।

## सर्वाभेदादन्यत्रेमे ॥ ३।३।१० ॥

—१७ अभेदादिति।

तस्मान्न भिन्ना एतास्तु आभिर्भिन्नो न वै प्रभुः।

इति कृष्णोपनिषच्छ्रुतेः।

—१८ इमे-पूर्वलीलासंबन्धिनः।

—१९ ते- उत्तरलीलासंबन्धिनः। आकूतं-अभिप्रायः।

—२१ विभावानुभावादिरूपा इति। आलम्बनविभावरूपा भक्ताः। उद्दीपनविभावरूपा ऋत्वादयः। अनुभावाः कटाक्षवेणुवादनादयः। एवं च सर्वेषामेतेषां रसाभेदे सिद्धे लीलास्थभक्तानां ब्रह्मात्मकतया नित्यत्वेन पूर्वोत्तरलीलासंबन्धित्वं निर्बाधमित्यर्थः। आतानवितानेत्यादि। आताना दीर्घतन्तवस्तत्प्रोततन्तवो वितानाः। यथा पटेन सह तन्तुरूपकारणानामभेदस्तथा रसत्वेन सर्वेषां भक्तानामभेदः।

—२३ विरुद्धदिक्स्थभक्तविषये किंचिदाशङ्क्य परिहरन्ति-नन्विति।

२१८–२ भक्तिमार्गविरोधापातादिति। एकस्मिन् भक्ते कापट्येन पदार्थानामनाविर्भावे एकान्तभक्तेषु मे स्वल्पमप्यन्तरं नास्तीति यो भक्तिमार्गस्तद्विरोधः स्यादित्यर्थः।

—४ शङ्का- लीलासंबन्धिपदार्थानामव्यापकत्वेन जायमाना शङ्का।

—५ तथात्वात्- व्यापकत्वात्।

सूत्रार्थः- लीलासंबन्धिसर्वपदार्थानां भगवता सहाभेदादग्रिमलीलायामपीम एव भक्ताः। न त्वन्ये। एवं च लीलानित्या भक्ता अपि त एवेति ॥ १० ॥

## आनन्दादयः प्रधानस्य ॥ ३।३।११ ॥

—८ सूत्रमवतारयन्ति- नन्विति। तेषु- भक्तेषु।

—१० एवं सति- पूर्णानन्दैश्वर्यादीनामभावे सति।

—१३ अनागन्तुकधर्मस्येति। परिच्छिन्नप्रतीतिविषयत्वप्राकृतप्रतीति-

विषयत्वादयो धर्मा ब्रह्मण्यागन्तुका लीलासंबन्धिधर्मास्त्वनागन्तुका एव। कृष्णोपनिषच्छ्रुतेः। स्वोक्ते सूत्रकारप्रामाण्यमाहुः– अत एवेति।

सूत्रार्थः– पूर्णानन्दादयः प्रधानस्य भगवत एव धर्मा न तु जीवस्य। भगवदभेदात्ते सिद्धजीवेष्वाविर्भवन्तीति ॥ ११ ॥

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ ३।३।१२ ॥

—१८ पूर्वसूत्रत्रयेण साकारत्वव्यापकत्वादिभगवद्धर्मा भक्तेष्वपि तिष्ठन्ति। पूर्णानन्दादयस्तु केवलं भगवत्येव तिष्ठन्तीति साधितमतः परमेतत्सूत्रप्रयोजनं वक्तुं सूत्रमवतारयन्ति–नन्विति।

—२२ चित्तशुद्धीत्यादि। अयं भावः। द्विविधा हि भक्ता उपासका लीलास्थाश्च। तत्रोपासकानां चित्तशुद्धितारतम्येन प्रियत्वादिज्ञानम्। लीलास्थानां तु ब्रह्मतादात्म्याद्भगवति तदवयवेषु प्रियत्वादिज्ञानं निरुपधिस्नेहहेतुकं न चित्तशुद्धितारतम्यमूलम्। अत उपासकज्ञानक्रमेण श्रुतावुक्ता ये प्रियशिरस्त्वादयस्तेषां लीलास्थभक्तेषु प्राप्तिरेव न संभवति। अतः स्वरूपोपासकेन प्रियशिरस्त्वादीनामुपसंहारो न कार्यः।

२१९–१ एवं लीलास्थभक्तानां निर्णयसंभवेपि उपासकानां निर्णयस्यासंभवात्तन्निर्णयार्थं सूत्रं विधान्तरेण व्याख्यान्ति–अथवेति।

—२ कुर्वत इति। पक्षिरूपधर्मानुपसंहृत्य पुरुषरूपोपासनां कुर्वत इत्यर्थः।

—३ उक्तत्वादिति। पुरश्चक्रे द्विपद इत्यादिना पक्षिरूपस्योक्तत्वात् तत्र पुरुषत्वनिरूपणस्य स्त्रीत्वव्यावृत्त्यर्थत्वेनापि गतार्थत्वसंभवादित्यर्थः। तथात्वे– वस्तुतः पक्षिरूपस्य पुरुषाकारत्वे। कथमिति। इयमेका शङ्का।

—४ अपरं चेति। इयं मिथ्यावादिकृता द्वितीया शङ्का।

—५ देशभेदेन–दक्षिणोत्तरदेशभेदेन। तादृग्रूपकथनं–पक्षिरूपकथनम्।

—६ तर्कमुखेन सूत्रार्थं दर्शयन्ति–यदीति। अथर्वणोपास्यात्–नित्यानन्दैकरसब्रह्मणः सकाशात्।

—७ प्रियशिरस्त्वादिविशिष्टस्य–पक्षिरूपस्य। तदप्राप्तिः–प्रियशिरस्त्वाद्यप्राप्तिः।

—८ उपसंहार्यमेवेति। एवं च पक्षिस्वरूपं नित्यानन्दस्वरूपं चाभिन्नमेवेति भावः।

—९ चित्तशुद्धीत्यादि। एवं च चित्तशुद्धितारतम्येन भासमानमानन्दतारतम्यं नानन्दन्यूनतां संपादयति तस्य पूर्णत्वादित्यर्थः। परोक्षवाद-

प्रक्षेपीति । भक्तनामलौकिकदेहरक्षार्थं पक्षिरूपो भूत्वा स्वयमन्नमयादि-रूपस्तत्र तत्र कोशेषु प्रविशति जीवे त्वानन्दमय इति परोक्षवादपक्ष इत्यर्थः ।

—१० तत्र–पक्षद्वयेपि । ब्रह्मधर्मा एवेति । एवकारेण धर्मिणो व्यवच्छेदः ।

—१३ इयं–मोदप्रमोदविषयिणी ।

सूत्रार्थः—शुद्धाभेदज्ञानिषु प्रियशिरस्त्वादिधर्मा नोपसंहर्तव्याः । प्रिय-मोदाद्युपचयापचययोर्भेद एव संभवादिति ॥ १२ ॥

## इतरे त्वर्थसामान्यात् ॥ ३।३।१३ ॥

—१५ अविरुद्धाः– पुरुषधर्माः । विरुद्धाः–पक्षिधर्माः ।

—१९ तत्र–परस्वरूपे । विरोधव्यवच्छेदः–विरोधनिराकरणम् । तत्र–उपसंहारे ।

सूत्रार्थः–विरुद्धत्वेन भासमाना अपीतरधर्मा उपसंहार्याः । पक्षिपुरुष-रूपयोर्भिन्नमात्रस्यानन्दमयत्वलक्षणस्यार्थस्यैकत्वादिति ॥ १३ ॥

## आध्यानाय प्रयोजनाभावात् ॥ ३।३।१४ ॥

—२१ प्रियत्वादिधर्मा इति । पक्षिरूपे विद्यमाना इत्यर्थः ।

—२२ अग्रिमं– आध्यानायेत्यादिसूत्रम् ।

२२०-१ ध्यानपदार्थस्येति । भक्तिमार्गीयस्य ध्यानपदार्थस्येत्यर्थः ।

—२ तथात्वात्–प्रयोजनाभावात् ।

सूत्रार्थः—ध्यानसिद्ध्यर्थं गुणानामुपसंहारोक्तौ यावद्भिर्गुणैर्ध्यानसिद्धि-स्तावन्त एवोपसंहर्तव्या मान्ये । प्रयोजनाभावादिति ॥ १४ ॥

## आत्मशब्दाच्च ॥ ३।३।१५ ॥

—३ अन्येषां–पक्षादीनाम् ।

—४ अविवक्षितत्वादिति । आनन्दमयात्मोपासने पक्षप्रभृतीनामनुप-योगादित्यर्थः ।

—१० भक्तज्ञानप्रकाराणां– एकान्तलीलास्थभक्तज्ञानविषयभगवद्धर्मा-णाम् ।

—११ तेषां– उपासकानाम् । उपासकानां विषयीभूतं विभूतिरूपमेव न तु मूलरूपं यत्र एकान्तभक्तविषयीभूतम् । भावप्रती– भगवत्स्वरूप-मनाभविभ्रमिप्रापकती ।

—१२ श्रुतिः–यतो वाचो निवर्तन्त इत्यादिः । तथा–उपासनाया अवि-षयत्वम् । सर्वप्रकारस्वरूपेपि–पक्षादिपुच्छविभूतिरूपेपि ।

सूत्रार्थः—प्रियप्राधान्यादिगुणानामेवोपसंहारः कार्यो न तु शिरःपक्षादीनाम्। आनन्द आत्मेत्यनेन तेषामेवात्मत्वेन कथनादिति ॥ १५ ॥

इति प्रथममधिकरणम्।

---

## आत्मगृहीतिरितरवदुत्तरात् ॥ ३।३।१६ ॥

—१८ पूर्वाधिकरण एकान्तभक्तेः पुरुषोत्तमे पक्षादिधर्माणामनुपसंहारे आनन्द आत्मेत्यादिश्रुतिस्थात्मशब्दो हेतुत्वेनोक्तस्तत्प्रसङ्गेनानन्दमयप्रकरणस्थात्मशब्दयुक्तं वाक्यान्तरं विचारयितुमेतदधिकरणम्।

—२२ ननु तर्हि जीवत्वमेवास्त्विति चेत्तत्राहुः—उच्यते चेति।

—२५ जीववत्—शारीरपदस्य समीपोच्चारणाज्जीववत्।

२२१—१ तदुत्तरात्—सर्वोत्तरानन्दमयाभिप्रायात्।

—३ तत्तच्छरीराभिमानित्वादिति। एवं चान्नमयाद्याध्यात्मिकतत्तच्छरीराभिमानी आनन्दमय एव। सोयमभिमानो नाध्यासरूपः किंतु तदात्मानमेवावेदहं ब्रह्मास्मीति श्रुत्या यथार्थज्ञानरूप एव। तथा—आनन्दमयः।

—४ ननु तत्रैव प्रकरणे शारीर आत्मेति वदन्योन्तर आत्मेत्यात्मग्रहणमस्ति तेन कतरोत्रात्मशब्दः सूत्रकारगृहीत इति ज्ञानाभावाद्व्याख्यानान्तरमाहुः—अथवेति। पूर्वनिरूपितवत्—विज्ञानमयान्तेषु निरूपितात्मवत्।

—५ यः—प्राणमयादिविज्ञानमयान्तः।

—६ प्रकृतस्यापि—आनन्दमयस्यापि। आत्मग्रहणकथनं—आत्मशब्देन कथनम्। उत्तरात्—आनन्दमयाभिप्रायात्। पूर्ववदिति। इतरवदित्यस्य व्याख्यानमेतत्।

सूत्रार्थः—इतरेष्वन्नमयादिषु तस्यैष आत्मेति यदात्मकथनं तत्सर्वोत्तरानन्दमयत्वस्य हेतोः। एवं चानन्दमयस्य परमकाष्ठापन्नत्वेन ततोतिरिक्तब्रह्मणोभावान्न जीवत्वमिति ॥ १६ ॥

## अन्वयादिति चेत्स्यादवधारणात् ॥ ३।३।१७ ॥

—९ भेदनिरूपणात्—प्रत्येकं पञ्चकोश आत्मभेदनिरूपणात्।

—१२ उक्तसर्वशरीराभिमानी—पूर्वोक्तान्नमयादिसर्वशरीराभिमानी।

—१४ पत्रकारेण—तस्यैष एव शारीर आत्मेतिश्रुत्युक्तेनैव शब्देन।

सूत्रार्थः—नन्वन्नमयादिषु तत्तच्छरीराभिमानी जीवः पृथक्तयोच्यते। आनन्दमये या तथोक्तिः सा ब्रह्मत्वेन सर्वशरीरेषु व्यापकत्वादिति चेन्न।

यत आनन्दमय एवोक्तसर्वशरीराभिमानी भवति तस्यैष एवाति श्रुत्यैवकारेणेतरनिषेधपूर्वकमानन्दमयस्यैवात्मत्वनिर्धारादिति ॥ १७ ॥

इति द्वितीयमधिकरणम् ।

---

## कार्याख्यानादपूर्वम् ॥ ३।३।१८ ॥

—२१ एतदग्रे-अन्नाद्वै प्रजाः प्रजायन्ते-इत्यनुवाके ।

—२३ संशयं वदन्ति-तत्रेत्यादिना ।

२२२-४ कार्याख्यानादिति । ल्यब्लोपे पञ्चमीयम् । कार्यस्याख्यानमकथनं कृत्वेत्यर्थः । अपूर्वमिति । अग्रे उच्यमानं भिन्नं न तु तादित्यर्थः ।

—१० अन्यथा-उक्तवैपरीत्ये ।

—१२ श्रुतेः-अब्रह्मणो ब्रह्मत्वेन ज्ञानं तपसा वदन्त्याः-अन्नं ब्रह्मेति श्रुतेः ।

—१३ एवमेव निरूपणाच्चेति । आनन्दमयज्ञानपर्यन्तं तपोरूपसाधनस्य निरूपणादित्यर्थः । अत एव-एतदन्नमयस्य भौतिकस्वभावादेव ।

—१४ सः-आनन्दमयस्यात्मा । नन्वेवमप्याधिभौतिकादाध्यात्मिकस्य भेदो वर्तत एवेति चेन्न ।

आध्यात्मिकस्तु यः प्रोक्तः सोसावेवाधिदैविकः ।

इति श्रीमद्भागवतद्वितीयस्कन्धेन तयोरभेदबोधनात् । तस्मादन्नमयानन्दमययोराध्यात्मिकाधिदैविकयोः कार्यभेदेन विभूतिविभूतिमत्त्वादेव भेदो न तु स्वरूपतः । धर्मधर्मिणोरभेदस्तु सिद्ध एव । अनेनैव न्यायेन प्राणमयादीनामप्युपासना । एवं चानन्दमयाविद्यायामन्नमयादयश्चत्वारो विभूतित्वेनोपास्या आनन्दमयः परमात्मा पुरुषोत्तमस्तु तादृशान्नमयादिविभूतिमत्त्वेनोपास्य इत्यर्थ इति बोध्यम् ।

पूर्वनिरूपितार्थस्य प्रायश आनन्दमयाधिकरणे गतत्वान्नात्यन्तमावश्यकतेत्यरुचेः पक्षान्तरेण व्याख्यान्ति-अथवेति । वाजसनेयिशाखायामिति । तत्र बृहदारण्यके पुरुषविधब्राह्मणे ।

—२३ कार्याख्यानादित्यत्र कार्यैराख्यानात्कर्मनामकथनादिति तृतीयासमासमाश्रित्य जायमानमर्थमाहुः-इतः पूर्वमिति । इतः पूर्वं- आत्मेत्येवेत्यतः पूर्वम् ।

—२६ एकस्यैव-सर्वकर्तुः सर्वात्मकस्यैव । यत्-जीवात्मरूपं वस्तु ।

२२३-२ आत्मशब्दवाच्यं-आत्मानं प्रियमुपासीतेत्यात्मशब्दवाच्यम् । ननु जीवस्यापि प्राणनादिकार्ये प्रेरकत्वात्कार्याख्यानमात्रेण जीवातिरिक्त आत्मात्रेति कथं निश्चय इत्यत आहुः- लोके हीति ।

—४ अत एवेति । जीवभिन्नत्वादित्यन्तस्त्वादेवेति यावत् ।

—६ एतेन—पुरुषोत्तमस्यान्तरत्वप्रतिपादनेन ।

सूत्रार्थः—१ पूर्वस्यात्ममयपुरुषस्याकथनादत्र स वा एष इति वाक्येना-ग्रिमश्रुतिभिर्ब्रह्मत्वेन प्रतिपिपादयिषितमन्नरूपमेवोच्यते न तु पूर्वमित्ये-कोर्थः । २ प्राणमेव प्राणो भवतीति श्रुतौ सर्वेन्द्रियैः कृत्स्नप्राणवागादित्वे-नैकस्यैवात्मनः कथनादपूर्वं जीवभिन्नमीश्वरमेव प्राणमिति श्रुतिर्वदतीति द्वितीयोर्थ इति ॥ १८ ॥

## समान एवं चाभेदात् ॥ ३।३।१९ ॥

—९ वैलक्षण्यप्रतीतेरिति । एवं च वृक्षशाखे इतिवत् स्वगतं द्वैतमिति भावः ।

—१० उक्तकर्मनामवत्त्वं—प्राणवागादिपदबोध्यत्वम् ।

—१४ आकूतं—अभिप्रायः ।

—१८ तद्वाच्यता—श्रुतिवाच्यता । व्यवहार्यत्वे—व्यवहारविषयत्वे । सः—औपनिषदः पुरुषः ।

—२० स च—व्यवहारश्च ।

—२१ तत्तदवयवेषु—भक्तानन्दकारितत्तद्भगवदवयवेषु ।

—२४ एतेन—ईश्वरस्य तथात्वबोधकश्रुत्या ।

—२५ प्रकारान्तरेण सूत्रार्थं दर्शयन्ति—एवं सतीति ।

२२४—२ ज्ञातव्यमिति । अस्मिन्पक्षे विश्वतश्चक्षुर्यदेकमव्यक्तमित्याद्याः श्रुतयः । पूर्वप्रकारे चकारोप्यर्थ इति व्याख्यातमस्मिन्पक्षे तस्य समुच्च-यार्थकत्वं व्याख्यान्ति—चकारेणेति । साक्षादाविर्भूते— सत्त्वाद्यनधिष्ठा-नेन स्वरूपेणाविर्भूते ।

—३ तदुपासकेन—पुरुषोत्तमोपासकेन ।

सूत्रार्थः—चक्षुरादीनां वैलक्षण्येन भानेप्येकरूप एव भगवान् । तेषां चक्षुरादीनां ब्रह्मत्वेन परस्परभेदादिति ॥ १९ ॥

## संबन्धादेवमन्यत्रापि ॥ ३।३।२० ॥

—५ आविर्भूतभगवति गुणोपसंहारं विचार्यावेशे तं विचारयति सूत्र-कार इत्याशयेनावतारयन्ति—अथेति । स्वयमाविशतीति । यथा—

योन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्ति ।

इत्येकादशस्कन्धे श्रीमद्भागवते तनुभृदन्तर्बहिरशुभविधूननादिकार्यचि-कीर्षया जीवे भगवदावेश उक्तः ।

—१२ तत्त्वेन व्यपदेशादिति । तथा चोक्तं स्कान्दे पाण्डुरङ्गमाहात्म्ये ।

शिलाबुद्धिर्न कार्या च तत्र नारद कर्हिचित् ।
ज्ञानानन्दात्मको विष्णुर्यत्र तिष्ठत्यचिन्त्यकृत् ॥

इति ।

—१९ अन्यबुद्धिनिषेधादिति ।

आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् ।

इति वाक्यात् । तथा–सर्वगुणोपसंहारः कार्य इत्यर्थः ।

सूत्रार्थः—अन्यत्र भगवदाविष्टजीवेपि सकलब्रह्मधर्मोपसंहारः कार्यः । अयोगोलके वह्नेरिव तस्मिन्भगवदावेशादिति ॥ २० ॥

## न वाविशेषात् ॥ ३।३।२१ ॥

—१९ उपसंहारनिषेधपक्षो भक्तिमार्ग इति बोधयितुमवतारयन्ति–यस्त्विति ।

—२१ अस्येति ।

तत्प्रसङ्गानुभावेन रन्तिदेवानुवर्तिनः ।
अभवन्योगिनः सर्वे नारायणपरायणाः ॥

इति श्रीमद्भागवतनवमस्कन्धोक्तप्रकारेण भक्तभक्तस्य तत्प्रसङ्गानुभावादेव गुणोपसंहारे तदनुपसंहारे वा भगवत्प्राप्तिः समाना । अनुपसंहारे विस्मृततदाविष्टभगवत्कत्वेन तन्निरपेक्षत्वेन वेति हेतुद्वयम् ।

२२५–६ अनादरज्ञापनायेति । एवं चैकान्तभक्तस्य रसानुभावकत्वरूप एव भजननियमो न तूपसंहारेपीति भावः । अनुवादप्रयोजनं कथयन्ति–भगवदवताररूप इति ।

—७ तदीयरसावेशः–भक्तिमार्गीयरसावेशः । तद्भावस्वभावं–भगवद्भक्तिभावस्वभावम् ।

सूत्रार्थः–यस्तु भगवदाविष्टं भक्तं ज्ञात्वैतद्भजनेनैवाहं कृतार्थः स्यामिति मनुते तेन तत्र भगवदाविष्टभक्ते भगवद्धर्मोपसंहारो न कार्यः । विशेषाभावादिति ॥ २१ ॥

## दर्शयति च ॥ ३।३।२२ ॥

सूत्रार्थः–उपसंहारो नामाविद्यमानानां धर्माणां कुत्रचिद्भावनं, भगवदाविष्टभक्ते तु भगवान् सर्वधर्मान् प्रत्यक्षतो दर्शयत्यतो नोपसंहारापेक्षेति ॥२२॥

## संभृतिद्युव्याप्त्यपि चातः ॥ ३।३।२३ ॥

—१५ तत्संभारकत्वस्य–वीर्यादिसमूहस्य ।

—१७ राणायनीयानां–वेदशाखाविशेषाणाम् । खिलेषु–परिशिष्टेषु ।

२२६-८ तत्रैव-न वा विशेषादिति सूत्रे ।

—९ अयमेव सूत्रकृदाशय इत्यत्र गमकं वदन्ति-विषयवाक्येत्यादि । धर्मानुद्देशेन-धर्माकथनेन ।

—१० दर्शनं-भक्तभक्तं प्रति भक्तेन कारितं भगवद्दर्शनम् । स्पर्धाकृतिसंभावनायामिति । भगवन्तं स्पर्धितुं योग्यस्यान्यस्य कस्यचित्संभावनायामित्यर्थः ।

सूत्रार्थः—पूर्वोक्ताद्विशेषाभावहेतोर्भगवदाविष्टभक्ते तद्भक्तैः सकलवीर्यसंभृतियुव्याप्त्यादयोपि धर्मा नोपसंहार्या इति ॥ २३ ॥

इति तृतीयमधिकरणम् ।

---

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ ३।३।२४ ॥

—१८ एवमनारभ्याधीतधर्माणां भक्तिमार्गेनुपसंहारमुक्त्वोत्तमाधिकारिभिः सकलगुणपूर्णं परब्रह्मैवोपास्यं न तु विभूतिरूपमिति बोधयितुमुपासनामार्गेप्यनुपसंहारं सूत्रकारो वदतीत्याशयेनाहुः- तैत्तिरीयक इति । सहस्रशीर्षेत्यादिषु सर्वत्र सहस्रशब्दोनेकोपलक्षकः । तेनानेकशीर्षाक्षिपादयुक्त इत्यर्थः ।

—१९ वृत्वा-व्याप्य ।

—२० भव्यं-भावि ।

२२७-२ अविशेषादिति । अन्नमयादिषु ब्रह्मत्वस्य पुरुषसूक्ते पुरुषत्वस्योक्त्याविशेषादित्यर्थः ।

—७ तत्र-अन्नमयाद्युपासनाप्रकरणे ।

—८ अन्यद्वैलक्षण्यमाहुः-किंचेति ।

—१२ अतिवैलक्षण्यात्-अन्नमयाद्यपेक्षयोपास्यपुरुषस्यात्यन्तं विलक्षणत्वात् ।

—१३ अम्भस्यपारे-अपारजले । नाकस्येति । अविद्यमानमकं दुःखं यस्मिन्निति नाकः स्वर्गः ।

—१५ एतेन- विभूतिभ्योतिवैलक्षण्येन ।

—१६ तथात्वेन- मूलभूतब्रह्मत्वेन ।

—१८ तेन- विभूतिवैलक्षण्येन ।

सूत्रार्थः- सहस्रशीर्षा पुरुष इत्यत्र पुरुषविद्यायां यथानेकवाचिसहस्रपदेन साकारव्यापकाधिदैविकब्रह्मस्वरूपं निरूप्यते तथान्नमयादिभौति-

केषु पुरुषविधत्वं न निरूप्यते। अतोऽन्नमयादिभौतिकेषु सहस्रशीर्षत्वाद्युपसंहारो न कर्तव्य इति॥ २४॥

इति चतुर्थमधिकरणम्।

---

## वेधाद्यर्थभेदात्॥ ३।३।२५॥

—२४ **वाजसनेयिशाखायामिति**। तत्र बृहदारण्यक उद्गीथब्राह्मणे।

२२८-१ **अत्ययाम**- जयेम।

—४ **अप्रतिरूपं**- असत्यम्।

—७ **ऋत्वा**-प्राप्य।

—८ **विध्वंस्यो विनेशुरिति**। यथा लोष्ठं पाषाणं प्राप्य ध्वंसत एवमसुरा ध्वंसमानाः सर्वतोदिशं विनष्टा इत्यर्थः।

—९ **आसन्येनेति**। आस्ये भव आसन्यः प्राणः।

—१२ **जिज्ञासेति**। एवं च वागादीनां पाप्मवेधः सत्य. काल्पनिको वेति संशयमूलकः प्रश्न इत्यर्थः।

—१५ **प्रमाणत्वव्याहतिः**-प्रमाणत्वव्याघातः। ननु विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युरिति जैमिनीयैरर्थवादानां विधेयस्तावकत्वेन प्रामाण्यं तेन तेषां विध्यर्थ एव प्रामाण्यं न तु स्वार्थ इत्याकाङ्क्षायामाहुः-**एकत्रेति**। **तच्छङ्कया**-प्रतारकत्वशङ्कया।

—१७ एवं जैमिनीयानुसारेण परंपरयार्थवादानां क्रियार्थत्वमुक्त्वोत्तरतन्त्रविचारेण साक्षादेव तेषां क्रियार्थत्वमाहुः-**वस्तुतस्त्विति**।

—२० **य एवं वेदेति वाक्यैरिति**। य एवं वेद स वीर्यैरेव छन्दोभिरर्चति य एवं वेदोपैनं यज्ञो नमति-इत्यादिविद्वद्वाक्यैरित्यर्थः।

—२१ **फलोपकार्यङ्गनिरूपकत्वात्**-फलोपकारिसाधनप्रतिपादकत्वात्।

२२९-२ **अर्थपदेनोक्तिः**-सूत्रे ब्रह्मणोर्थपदेनोक्तिः। **एवं**-निर्दोषत्वम्।

—३ अर्थपदस्य ब्रह्मरूपत्वानङ्गीकार आहुः-**अथवेति**।

—४ **आकूतं**-अभिप्रायः।

—९ **उक्तमानैः**- उपास्यत्वपाप्मवेधराहित्यासुरजयहेतुभूतार्थज्ञानैः।

—११ **अन्यत्र**-वागादिषु। **अत्र**-आसन्ये।

—१३ **तेन**-भगवत्संबन्धादन्येषां निर्दोषत्वेन।

—१५ **कैमुतिकन्याय इति**। एते मूषका दण्डानपि भक्षयन्ति किमुतापूपानिति मूलवाक्यमस्य न्यायस्य।

—१७ वस्तुनः—ब्रह्मवस्तुनः । तथात्वादिति— दोषत्वाभिमतकर्मणां गुणत्वसंपादकत्वादित्यर्थः । अत एवोक्तं ब्रह्माण्डपुराणे—

अज्ञत्वं पारवश्यं च विधिभेदादिकं तथा ।
तथा प्राकृतदेहत्वं देहत्यागादिकं तथा ॥
असुराणां विमोहार्थं दोषा विष्णोर्न तु क्वचित् ।

इति ।

सूत्रार्थः—बृहदारण्यके छान्दोग्ये च वाक्यप्राणादिषु यः पाप्मवेधो दुःखसंबन्धश्चोक्तः स भगवद्रूपस्य संबन्धाभावात् । अथवा विषयभेदादिति ॥२५॥

## हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तम् ॥ ३।३।२६ ॥

—१८ तथा सति—दोषसंबन्धे सति ।

—२२ सूत्रार्थोपयोगिनीं भगवत्संबन्धगतविशेषबोधिनीं श्रुतिमाहुः—तदा विद्वानिति । एतत्पूर्वार्धस्त्वेवम् । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।

—२३ पठ्यत इति । मुण्डकोपनिषदीत्यर्थः ।

—२४ सकार्याविद्यारहितः—पुण्यपापे अविद्याकार्ये तद्रहितः ।

२३०—१ इदं—साम्यम् ।

—६ तस्यां सत्यां—ब्रह्मणः सकाशाज्जीवस्य विभागे सति । तथासाम्यम् ।

—८ अल्पत्वादिति । सर्वे जीवाः सर्वमयास्तथाप्यल्पा इति नृसिंहोत्तरतापनीये जीवानन्दादीनामल्पत्वोक्तेस्तदानन्दा अपि तथा ।

—१५ तदेव—ब्रह्मसंबन्ध एव ।

—२० उपगानमिति । उपगीयतेऽनेनेत्युपगानम् । करणे ल्युट् । एवं च कुशाभिः कृत्वा छन्दःस्तुत्युपगानसाधनभूतमकारवदिति सूत्रार्थ इत्यर्थः ।

—२१ तेषामन्य एव— कर्ममार्गगतस्वरानेव ।

—२३ प्रकृते— जीवब्रह्मस्थले ।

—२४ अत्र—जीवे । अभेदबोधनात्—ब्रह्माभेदबोधनात् । मुक्तिदशायामाविर्भूतं निर्दोषत्वं जीवधर्मः ।

—२५ ब्रह्मणि च तन्निर्दोषत्वं सार्वदिकमेवं तयोरभेद इति तत्त्वमसिश्रुतेरर्थ उक्त इत्याहुः— तात्पर्यमुक्तमिति ।

२३१—१ ब्रह्मोपायनस्य—ब्रह्मप्राप्तेः । वाक्योपायनं—साम्यप्राप्तिः । तदुपायनस्य—ब्रह्मप्राप्त्युपकरणस्य ।

—६ नन्विदं व्याख्यानं न संगतं, उपसंहारप्रकरणे धर्मसाम्यविचारस्याप्रासङ्गिकत्वादित्याहुः–यथेति।

सूत्रार्थः—जीवस्य भगवत्सकाशाद्भेदे सति तिरोहिता आनन्दादयस्तद्धर्मास्तत्संबन्धे पुनराविर्भवन्ति। परमं साम्यमुपैतीति श्रुतेः। ननु जीवस्यानन्दादिभिः कतिपयैरेव धर्मैः साम्यं भवति न तु सर्वैरिति कुत इति चेन्न। उपायनशब्दशेषत्वात्। उपायनं प्राप्तिः सा स्वधर्माणामेव युक्ता नान्येषाम्। एवं चोपायनशब्देन कथनात्तैरेव धर्मैः साम्यम्। नन्वेवमानन्दादिभिः साम्ये ब्रह्माभेद इति चेन्न। कुशाच्छन्दःस्तुत्युपगानवद्भेदात्। तथाहि– औदुम्बरसमित्संबन्धिच्छन्दःस्तुत्युपगाने–अभि–त्वा शूर नोनुम इत्यृचि, अच एवोपसंहृत्य भकारेण गानं क्रियते। एतावता भकाराणामृगात्मकत्वं न संभवति तथेत्यर्थः। तत्त्वमस्याद्यभेदतात्पर्यं तु पूर्वमुक्तमिति॥ २६॥

इति पञ्चममधिकरणम्।

---

## संपराये तर्तव्याभावात्तथा ह्यन्ये॥ ३।३।२७॥

—११ जीवस्य भगवत्संबन्धे साधनभूतयोर्ज्ञानभक्त्योः कतरच्छ्रेय इति विचारयितुमेतदधिकरणं तद्विषयवाक्यद्वयमाहुः– वाजसनेयिशाखायामित्यादि। स एष नेतीति वाक्यं बृहदारण्यकशारीरब्राह्मणस्थम्।

—१४ एते–कल्याणपापे। परं ब्रह्मेति वाक्यमाथर्वणिकगोपालतापनीयोपनिषदि।

—२३ एतद्विषयव्यवस्थेति। उक्तश्रुत्योर्विषयभूतज्ञानभक्त्योर्व्यवस्था। अधिकारिभेदेन रूपभेदनिरूपणाज्ज्ञानिभिर्धर्मोपसंहारः कार्यो न भक्तैरित्येवंरूपा। पुरा– न वा प्रकरणभेदादिति सूत्रविवरणे।

२३२–१ एवं सति– ज्ञानभक्त्योर्मुक्तिसाधनत्वस्य साम्ये सति। भक्तिदशायां– भक्त्या मुक्तिरिति पक्षे।

—२ एवमेव– पापसत्त्वमेव।

—५ संपरायशब्दस्य मुक्त्यर्थत्वाङ्गीकारे भक्त्येतिपदाध्याहारप्रसक्त इति यौगिकार्थेन व्याख्यान्ति– अथवेति।

—८ ननु रूढिर्योगमपहरतीति न्यायेन योगस्य दौर्बल्यादिदं व्याख्यानद्वयमथवेत्यादिना प्रदर्शितमसंगतं व्यासेन वा कथमेवं प्रयुक्तमित्यत आहुः– ज्ञानमार्ग इति।

—९ तस्मात्—ज्ञानमार्गात् । अत्र—भक्तिमार्गे । एवं कथनं—यौगिकपदकथनम् ।

—१० ज्ञानमार्गाद्भक्तिमार्गस्योत्कर्षं ज्ञापयन्ति— ब्रह्मभूतस्येति ।

—१२ तथा— ज्ञानमार्गाद्भक्तिमार्गस्योत्कृष्टत्वम् । इदमत्राकूतम् । ज्ञानमार्गे साक्षात्कारोत्तरं पुण्यपापनिवृत्त्या सुखप्राप्तिः । तावत्कालपर्यन्तं दुःखानुभवोऽस्ति । भक्तिमार्गे तु प्रथमत एव सुखं पापनाशोत्तरमेव भक्तेः सभवात् ।

—१६ वैष्णवत्वं— भक्तिमार्गीयस्नेहः । यतस्तदग्रे

एतज्ज्ञात्वा तु विद्वद्भिः पूजनीयो जनार्दनः ।
वेदोक्तविधिना सम्यग्भक्तिमार्गानुसारतः ॥

इति वाक्यम् ।

सूत्रार्थः— पूर्वं ज्ञानेनैव पापस्य नाशाद्भक्तिमार्गे पापं नास्ति । अयमेव ज्ञानमार्गाद्भक्तिमार्गस्य विशेषो यज्ज्ञानमार्गे पापसत्ता ततस्तन्नाशः । भक्तिमार्गे त्वादित एव तदभाव इति ॥ २७ ॥

## छन्दत उभयाविरोधात् ॥ ३।३।२८ ॥

—२३ प्रेष्ठः— प्रियतमः ।

—२५ पूर्वोक्तवचनैः— पापाभावबोधकवचनैः ।

२३३-४ एवं सति— नराणां क्षीणपापानामिति बहुवचनैः भक्तेः पूर्वं पापनाशे साधिते सति ।

—५ औत्सर्गिकः— स्वाभाविकः । सामान्यविधिरिव नियमानुल्लङ्घनेन प्रवर्तत इत्यर्थः ।

—६ किंचिदुच्यत इति । विस्तरस्तु सुबोधनीतो ज्ञेयः ।

—७ सोपधिस्नेहवत्यः— प्रयोजननिमित्तं स्नेहवत्यः ।

—११ सार्वदिकः— इच्छाविशेषसंपादितत्वान्न सर्वदा जायमानः ।

सूत्रार्थः— अथवा भक्तिमार्गे परमेश्वरेच्छया भक्तेरनन्तरमपि पापनाशः । नराणां क्षीणपापानामिति भरतमृगदेहारम्भकवचनानां चाविरोधादिति॥२८॥

इति षष्ठमधिकरणम् ।

---

## गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ ३।३।२९ ॥

—१६ पूर्वाधिकरणे ज्ञान्यपेक्षया भक्तस्य ज्ञानापेक्षया भक्तेश्चोत्कर्षः प्रतिपादितस्तद्धेतुप्रदर्शनार्थमिदमधिकरणमित्याशयेनावतारयन्ति—नन्विति।

—१७ अयनाय- मोक्षाय ।

—२१ श्रुतिविरोधं प्रदर्श्य स्मृतिविरोधं दर्शयति-किंचेति ।

२३४-५ श्रौतत्वाविशेषादिति । ब्रह्मविदाप्नोति परमिति श्रुत्याक्षरज्ञानस्य तमेव विदित्वेति श्रुत्या च पुरुषोत्तमज्ञानस्य मुक्तिसाधनत्वकथनादित्यर्थः ।

—६ समुच्चयासंभवादिति । श्रुत्याक्षरपुरुषोत्तमेति ज्ञानद्वयस्य प्राप्यफलभेदकथनादेकत्र फले समुच्चयासंभवादित्यर्थः ।

—७ विरोधाभावात् —ज्ञानद्वयाद्भिन्नफलद्वयप्राप्तिस्तेन विरोधाभावात् ।

—११ मत्स्वरूपाविदः—मत्स्वरूपानाभिज्ञाः ।

—१२ ज्ञानमार्गीयेत्यादि । एवं च भक्तिमार्गीयगोपिकानां भगवत्कामनाहेतुभूतस्य रमणत्वादिप्रकारकज्ञानस्य च सत्त्वाद्ब्रह्मत्वेन ज्ञानाभावेपि न दोषः ।

—१३ तत्साधनत्वानिरूपकेत्यादि । ब्रह्मत्वेन ज्ञानस्य मुक्तिसाधनत्वमिति निरूपिकायाः श्रुतेर्विरोधोतोधिकरणमावश्यकम् ।

—१५ आहेति । ज्ञानोत्कर्षबोधनस्य तात्पर्यमाहेत्यर्थः ।

—१६ मर्यादापुष्टिभेदेनेति । एवं च मार्यादिकज्ञानस्य मार्यादिकभक्तेश्च मार्यादिकमोक्षं प्रति कारणता । पुष्टिमार्गीयभक्तेः पुष्टिमार्गीयज्ञानस्य च पुष्टिमार्गीयमोक्षं प्रति कारणता तेन न व्यभिचार इत्यर्थः ।

—२१ ताभ्यां-ज्ञानभक्तिभ्याम् । तद्रहितानामिति । अनुग्रहमात्रेणाङ्गीकृतानामित्यर्थः ।

—२३ अतएव-मार्गभेदादेव ।

—२४ तदपेक्षित्वं-ज्ञानाद्यपेक्षित्वम् ।

—२७ एतेनचेति । अस्य-शङ्का निरस्ता वेदितव्या-इत्यनेन संबन्धः ।

२३५-२ अविशेषपक्ष इति । श्रवणादिरूपापि भक्तिः प्रेमरूपभक्तिरिव पापनाशोत्तरं जायत इत्यविशेषपक्षः ।

—५ न साधीयानिति । पापं विना कापट्यकरणासंभवात् ।

—६ निरासप्रकारमाहुः—तथा हीति ।

—८ वस्तुस्वभावेनेति । भगवद्वस्तुमाहात्म्याज्जातप्रेमस्वभावत्वेनेत्यर्थः।

—९ अपर्वीं-मुक्तिरूपाम् ।

—१० अस्मिन्मार्गे-मर्यादाभक्तिमार्गे।

--१३ विधिविषय इति। श्रोतव्यो मन्तव्य इत्यादिविधिविषयो नेत्यर्थः। न ह्यविद्येत्यादि। आविद्यादिमुक्त्यन्तरूपा अविद्याप्रभृतिमुक्तिपर्यन्तस्वरूपा भजनानन्दान्तरायरूपा भजनानन्दविघ्नकारिस्वरूपा येभ्रङ्कषा मेघसंघर्षिणस्तथा अविरला घना ये विविधमहातरवो नानाविधमहावृक्षास्तेषां गहनान्यरण्यानि तद्दहने तद्भस्मीकरणे । तदान्तरालिकपापतूलं-तद्वनमध्यस्थपापकार्पासः। उत्पातितं-उत्पन्नम्। हरित्वेनेति।

हराम्यघं यत्स्मर्तॄणां हविर्भागं क्रतुष्वहम्।
वर्णश्च मे हरिश्चेष्टस्तस्माद्धरिरहं स्मृतः॥

इति महाभारतवाक्यात्। नतु मया कृतमिति। अकामतो बुद्धिपूर्वकं च कृतमित्यर्थः। एवं च सांसर्गिकेण सह त्रिविधं विकर्मोक्तम्।

—२१ त्यक्तान्यभावस्यैतदप्यसंभवीत्यरुचेरन्यदाहुः—त्यक्तान्यभावत्वेनेति।

—२२ अज्ञानं वेति । कथंचिदुत्पतितां विकर्मस्थानीयामिति शेषः। वक्तेति। एवं च तादृशस्य पापमेव न किं तु सन्मार्गस्थापनार्थं भगवतस्तादृशीच्छैवेत्याशयेन करभाजनो योगीश्वरो भागवतैकादशस्कन्धे निमिं प्रति तथोक्तवान्।

२३६-२ तत्संसर्गजं- अज्ञात कथंचित्संसर्गाज्जायमानम्।

—३ उच्यत इति। इदमपि नवमस्कन्धीयरन्तिदेवोपाख्यानात्सिद्धम्। तत्क्षणे नैवेति। अस्योदाहरणं दुःसहप्रेष्ठविरहेत्यादिनोक्तम्। संभव इति। भगवत्कृपयैव विकर्मनाशश्चेति बोध्यम् । एवमधिकरणेन हेतुबोधनपूर्वकं भक्त्युत्कर्षो दृढीकृतः।

सूत्रार्थः- मर्यादापुष्टिभेदेन ज्ञानस्य फलजनकत्वमन्यथा ज्ञानादेव कैवल्यं, यमेवैष वृणुते तेन लभ्य इति वाक्यविरोधः स्यादिति॥ २९॥

इति सप्तममधिकरणम्।

---

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत्॥ ३।३।३०॥

—९ मर्यादापुष्टिभक्त्योस्तारतम्यं विवरीतुं सूत्रमवतारयन्ति-नन्विति। एतत्-मुक्तेः फलत्वम्।

—१० तदनपेक्षित्वं-मुक्त्यनपेक्षित्वम्।

—११ **पठ्यत इति**। गोपालतापनीये मोक्षनिरूपणानन्तरं भजननिरूपणे भक्तिलक्षणं पठ्यत इत्यर्थः।

—१३ **भक्तिरहस्यभजनमिति**। अत्र भक्तिः, रहस्यभजनमिति पदद्वयम्। भक्तिशब्दात्परिभूतस्य सुप्रत्ययस्य छान्दसो लुक्। रहस्यभजनमिति विवृण्वन्ति-तदिहेति। तत्- रहस्यभजनम्। **इहामुत्रोपाधिनैराश्येन**-ऐहिकपारलौकिकफलेच्छाराहित्येन।

—१४**अमुष्यात्मनः**-भगवदीयजीवस्य। **कल्पनं**-अनन्यतया भगवदीयत्वसंपादनम्। **एतदेव**-स्वस्य तदीयत्वसमर्थनमेव। **नैष्कर्म्यं**-संन्यासः। एवं च पारलौकिकफलसामान्यनैराश्ये सति तदन्तर्गतत्वान्मुक्तेरप्यनपेक्षा बोध्या।

—१५ **एतत्**- गोपालतापनीयवाक्यद्वयम्। **मन्त्रावृत्तीत्यादि**। अमुं पञ्चपदं मन्त्रमावर्तयेद्यः स यात्यनायासतः केवलं तत् इति मन्त्रोक्ता या पञ्चपदस्याष्टादशार्णमन्त्रस्यावृत्तिः पुनः पुनः कथनं, तस्मात् कृष्ण एव परो देवस्तं ध्यायेत्तं रसेत्तं भजेदिति ब्रह्मणोक्तं यत्तदधिष्ठातृध्यानादि तस्य सर्वस्यामृतत्वं फलमुपक्रम एवोच्यते।

—१८ **एतान्**-उपासकान्। **भूत्वा**-अवतीर्य।

—२२ **अतएव**-स्वरूपस्य फलत्वादेव।

—२३ **संशये**-उक्तहेतुभ्यामुभयोर्भक्तयोः साम्यमेव योग्यमिति पूर्वपक्षरूपे संशये। **गूढाभिसंधिरिति**। गूढे श्रुतिस्थगूढाभिप्राये अभिसंधिः प्रकटनेच्छा यस्येत्यर्थः।

—२४ **रहस्यभजनकर्तीति**। निरुपाधिभजनकर्तीति पाठान्तरम्। **तं**-तादृशभक्तम्।

२३७-२ **तदधीनत्वं**-सायुज्याधीनत्वम्।

—३ **वैपरीत्यं**-मुक्तिदशायां तत्पूर्वदशातोपि हीनत्वम्। **कर्हिचित्**-कदाचित्।

—७ **सामीप्यवाच्युपसर्ग इति**। प्रकृतसूत्रे उपलब्धेरितिपद उपेत्युपसर्गः सामीप्यवाची।

—८ **महत्पदार्थः**— मुक्त्यादिः। **अल्प एवानन्दे**-राज्यादौ।

—९ **मन्वान इति**। कश्चित्प्राकृत इति शेषः। **पूर्वोक्तं**-मुक्त्यादि।

—११ **स्वर्गादित्रये**-स्वर्गापवर्गनरकेषु।

—१३ न्यूनार्थजिघृक्षोः-मुक्तिरूपाल्पार्थं गृहीतुमिच्छोः । पूर्णार्थवान्-भक्तिमान् ।

—१९ ज्ञाप्यं-भक्तमाहात्म्यम् ।

—२० ज्ञापकात्-भगवतः ।

—२१ सूच्यत इति । एवमत्र भक्तेः परा काष्ठा सूचिता । तेन फलभक्तौ मुक्तेः प्रसङ्गाभाव इति मर्यादाभक्तिफलभूतमुक्तिमतोपि पुरुषात्पुष्टिभक्तोधिक इति सिद्धम् ।

सूत्रार्थः- मुमुक्षोरपेक्षया रहस्यभजनकर्तैव श्रेष्ठः । भगवल्लक्षणपुरुषार्थस्य स्वाधीनत्वोपलम्भात् । यथा लोके स्वाधीनभर्तृका स्त्री भर्तारमेव फलत्वेन मनुते न तद्दत्तं गृहवित्तादिकमिति ॥ ३० ॥

इत्यष्टममधिकरणम् ।

---

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३।३।३१ ॥

एवं पुष्टिभक्तेः फलत्वं तादृशभक्तेः स्वरूपं च पूर्वाधिकरणे निरूपितमधुना मर्यादाभक्तेर्ज्ञानमार्गादुत्कर्षं बोधयितुं मर्यादाभक्तिसाध्यमुक्तौ सर्वा भक्तयः समुदिता एव कारणमथवा प्रत्येकमिति विचारयितुमाधिकरणारम्भः ।

—२६ तदुपयोगिविषयवाक्यं-आथर्वणोपनिषत्स्विति । रसति-कीर्तयति । भजति-सेवते ।

२३८-१ प्रेमति-स्निह्यति । आचरति-भगवत्प्राप्त्यनुगुणधर्मानिति शेषः ।

—२ समुदितानामिति । पूर्वोक्तनवानां समुदायस्येत्यर्थः ।

—१३ दण्डादीनामिति । आदिपदेन चक्रचीवरादिसंग्रहः ।

—१८ उक्तन्यायः—दण्डादिन्यायः ।

—२० निषेकादिकं-गर्भाधानादिकम् ।

—२३ एवमेव-प्रत्येकपक्षमेव ।

—२५ एतेन-अनियम इत्यादिकथनेन । अनुशयः-अभिप्रायः । साधनस्तोमः-साधनसङ्घः ।

२३९-१ अन्यथासिद्धिसंभव इति । अत्र युगपदपि संभवादिति हेतुः ।

—२ अतः—नियमाभावात् ।

—३ तथात्वे-फलोपधायकत्वे ।

—४ तत्र-श्रुतौ स्मृतौ च ।

—९ इति भाव इति। एवं च तादृशस्थले भक्तीनां संनिपातात्फलशीघ्रतेति बोध्यम्। श्लिष्टः प्रयोग इति । सूत्रेनियम इति श्लिष्टः प्रयोगः। तथाच क्वचित्कारणद्वयेन क्वचित्कारणत्रयेण कार्यजननेपि न सर्वत्र नियम इति श्लेषबोधितोर्थः संपन्नः।

सूत्रार्थः-फलसाधने भगवद्धारणरसनभजनादयः समुदिता एवापेक्ष्यन्तं इत्यनियमः। धारणादीनां प्रत्येकं फलं प्रत्याविरोधात्। अत्र प्रमाणं चिन्तयंश्चेतसा कृष्णमिति श्रुतिः। केवलेन हि भावेनेति स्मृतिश्चेति ॥ ३१ ॥

इति नवममधिकरणम्।

---

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३।३।३२ ॥

—१० पूर्वाधिकरणसंगतिं वक्तुमस्याधिकरणस्य प्रयोजनमाहुः—पूर्वमित्यादि।

—१३ मुक्तो भवतीति। सायुज्यं प्राप्नोति न वेत्यर्थः। यदि सायुज्यं लभेत भक्तेर्मुक्तिजनकत्वं न स्यात्तेषु भक्त्यभावात्। यदि न लभेत तदाधिकारिकभगवद्धर्मत्वं मुक्तिप्रतिबन्धः स्यात्। एवं च ते भगवद्धर्मा विषयः। ते मुक्तिहेतवो न वेति संशयः। पूर्वपक्षमाहुः-तत्रेति। जीवकृतेत्यादि। भगवद्विषयकधर्माणां रसतीत्यादीनाम्।

—१५ तेषां-आधिकारिकाणाम्। अविधेयत्वात्-मुक्तिसाधनत्वेन विधातुमशक्यत्वात्। संदेह इति। अत्र पूर्वपक्षद्वयेन संदेहो जायते। तत्र प्रथमपूर्वपक्षः—भगवान्यदा स्वकार्यकर्तृत्वेनाधिकारिकानङ्गीकरोति तदा तान् धर्मान्ददातीति वरणहेतुकत्वात्तैरपि मुक्तिरितिस्वरूपः सुतरामित्यनेनोक्तः। द्वितीयः स्वकार्यार्थं विहितत्वाभावान्नेतिरूपः, अप्रवेशोपीत्यन्तेनोक्तः।

—१९ तावदेव-तावत्कालपर्यन्तमेव।

—२१ नन्वाधिकारिकाणां मुक्तिपर्यन्तं व्यापाराभावे ब्रह्मणा सहेत्यादि वाक्यं विरुद्धमत आहुः—यच्चेति।

—२२ प्रतिसंचरे-प्रलये।

—२३ सप्तर्षिप्रभृतीनामिति। एवं च सप्तर्षीणां भक्तिः प्रलयकाल एव फलोन्मुखी भवत्विति भगवता विचारितमित्यर्थः।

—२५ न वदेदिति।

स भुक्तभोगां त्यक्त्वेमां निर्गतस्तपसा हरिम्।
उदासीनस्तत्पदवीं लेभे वै जन्मभिस्त्रिभिः।

इति वाक्येन न कथयेदित्यर्थः।

सूत्रार्थः- कार्यविशेषसिद्ध्यर्थं भगवताधिकारिपुरुषे स्थापिता धर्मास्तत्कार्यसमाप्तिपर्यन्तं तिष्ठन्ति ततः परं तु ते भगवताकृष्यन्ते । ततोधिकारिणां सिद्धिर्भक्त्यैवेति ॥ ३२ ॥

इति दशममधिकरणम् ।

---

## अक्षरधियां त्ववरोधः–सामान्यतस्तद्भावाभावाभ्यामौपासनवत्तदुक्तम् ॥ ३।३।३३ ॥

श्रुत्यन्तरेक्षरज्ञानमपि मुक्तिकारणत्वेनोक्तं तत्प्रकारोनेनाधिकरणेन प्रकाश्यते ।

२४०-६ भगवद्धर्माणां-पूर्वश्रुत्युक्तानां धारणभजनादिरूपाणाम् ।

—१० पूर्वपक्षमाहुः—श्रुतित्वेत्यादिना। श्रुतित्वाविशेषात्-भक्तिज्ञानयोर्मुक्तिं प्रति कारणत्वस्य श्रुत्या प्रतिपादितत्वात् ।

—११ तदसंभवात्- कार्यवैजात्यासंभवात् ।

—१४ तत्प्रापकत्वं- मुक्तिप्रापकत्वम् ।

—१५ पूर्वपक्षानिरासे- अक्षरज्ञानमेव साक्षान्मुक्तिहेत्विति पूर्वपक्षस्य निरासे ।

—१७ परा-परा विद्या ।

—२३ भक्तिलाभोक्तेरिति ।

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥

इति गीतावाक्येनेत्यर्थः । तस्य-भक्तिलाभस्य । तस्य-अविद्यानाशस्य ।

—२५ पूर्वकक्षाविश्रान्तं- प्रथमकोटिस्थम् ।

२४१-२ सामान्यतद्भावाभ्यामित्यस्य विवरणं-पुरुषोत्तमेत्यादि । सामान्यमिति । तत्र किं सामान्यमित्यपेक्षायां पुरुषोत्तमसंबन्धिसंबन्धे मुक्तिरिति भक्तसङ्गे सिद्धम् ।

सत्सङ्गलब्धया भक्त्या मयि मां य उपासिता ।
स वै मे दर्शितं सद्भिरञ्जसा विन्दते पदम् ॥

इत्येकादशस्कन्धे । स च पुरुषोत्तमसंबन्धिसंबन्धस्तद्धामरूपाक्षरज्ञानेप्यस्तीति तदेव सामान्यम् । अक्षरज्ञानां मुक्तिसाधनेषु प्रवेशः । मर्यादामार्गीयाणां पुरुषोत्तमप्राप्तौ स्वरूपयोग्यतासंपादकत्वेन प्रवेश इत्यर्थः ।

—८ तत्रैव-अक्षर एव । भक्तिलाभः– ब्रह्मविदाप्नोति परमिति श्रुत्युक्तपरप्राप्तिसाधनीभूताया भक्तेर्लाभः ।

—९ हेतुं– भगवदिच्छारूपम् ।

—१३ समवमृशन्ति– स्पृशन्ति ।

—१४ यशसं– यशःसंपादकम् ।

—१५ अवमर्शयेत्– वृणुयात् ।

—१६ तथेच्छा– स्वयज्ञयशःसंपादकत्वेच्छा ।

—१७ तथा कृतिः– प्रथमतो वरणम् । पर्यनुयोगः– प्रश्नः ।

—१८ एवमिहापीति । परममुक्तावपीत्यर्थः । तथा भगवान्यस्य जीवस्य विषये भक्तिं दत्त्वा स्वप्राप्तिमिच्छति तस्मै भक्तिं ददाति नेतरेभ्य इति भावः ।

—१९ निखिलासुरेति । निखिलासुरजीवा एव तमःपुञ्जं तन्निरासकेन तन्निषूदयित्रा ।

—२० यदुवंशेत्यादि । श्रीकृष्णेनेत्यर्थः । निरस्तेति । भगवद्गीतायामष्टमाध्याये भगवता श्रीकृष्णेन तथोक्तमित्यर्थः ।

—२४ वैलक्षण्यं– स्वस्याक्षराद्वैलक्षण्यम् ।

२४२-१ अत्र-सहस्रयुगपर्यन्तमित्यत्र ।

—४ तुशब्दः–परस्तस्मात्तु भावोन्य इत्यत्रत्यस्तुशब्दः ।

—६ तथात्वासंभवात्– जीवातीतत्वासंभवात् ।

—७ शास्त्रवैफल्येत्यादि ।मुक्तिसाधनप्रतिपादकशास्त्रं विफलं स्यादित्यर्थः । इत एव-यं प्राप्योति वाक्यादेव ।

—११ मृत्सादिप्रसङ्ग इति । प्रशस्ता मृन्मृत्सा । तद्भक्षणं श्रीकृष्णेन कृतं तत्समये यशोदया तन्मुखे सर्वभुवनान्यालोचितानि ।

—१५ पुरुषोत्तमस्याक्षरादुत्तमत्वसिद्धावप्यक्षरस्य लोकत्वं पुरुषोत्तमस्य तत्र स्थितत्वं च न गीतावाक्यात्सिद्धमत आहुः– किंचेति । एतस्यां श्रुताक्षरस्य सर्वाधारत्वं सर्वलीलोपयोगिदेवस्थानत्वं सर्वात्मकत्वं च पादत्रयेणोच्यते । चतुर्थचरणे तदाधार उच्यते ।

—२१ परमपदेन भक्तिहृदयाकाशग्रहणे मानमाहुः– अत एवेति ।

—२७ इतोपि– शुकवाक्यादपि । एवं सति– पूर्वोक्तप्रकारेणाक्षरे पुरुषोत्तमाधिष्ठानत्वस्य श्रुतिसिद्धत्वे सति । सामान्यमिति । सामान्यानां भगवद्विभूतिरूपाणां भाव इति तदाहुर्भगवद्विभूतिरूपत्वमिति ।

सूत्रार्थः– अक्षरविषयकोपासनानां मोक्षसाधनेषु गणना सामान्यतद्भावाभ्यां भवति । तथाहि सामान्यं भगवत्संबन्धः अक्षरसंबन्धः । तद्भावो भग-

वद्भावः । अत्र भगवद्भावरूपा मुक्तिर्मुख्या । अक्षरसंबन्धः परंपरया मुक्तिसाधकः । एवं चाक्षरोपासनया केषांचिदक्षरे लयः केषांचिद्भक्तिभावो भवति । ननूपासनैक्ये फलभेदः कथमत्र दृष्टान्तमाह-औपसदवदिति । यथौपसदाख्ये कर्माणि यमृत्विजं कामयेतायं यज्ञं यशसमृच्छेत्तं प्रथमं तानूनप्त्राख्यमाज्यं स्पर्शयेत् । तत्र यथा यजमानेच्छा नियामिका तथात्र भगवदिच्छेत्यर्थः । तच्च गीतासु यदक्षरमित्युपक्रम्य स याति परमां गतिमित्यन्तेनाक्षरज्ञानस्यैव प्राप्तिर्नतु भगवत इत्युक्तामिति ॥ ३३ ॥

## इयदामननात् ॥ ३।३।३४ ॥

२४३-६ तस्य-पुरुषोत्तमापेक्षयाक्षरे न्यूनत्वस्य ।

—१० एवं सति- श्रुत्याक्षरानन्दस्यैकत्वेन परिच्छेदे प्रतिपादिते सति ।

**सूत्रार्थः**-तैत्तिरीयोपनिषत्स्वक्षरानन्दस्येयत्त्वेन गणितत्वात्तत्राक्षरे निकृष्टत्वं पुरुषानन्दस्य त्वगणितत्वादुत्कर्षनिरूपणामिति ॥ ३४ ॥

इत्येकादशमधिकरणम् ।

---

## अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३।३।३५ ॥

—१५ प्रसङ्गसंगतिं बोधयन्तोधिकरणमवतारयन्ति-अथेति ।

—१७ श्रुतौ-यः पृथिव्यां तिष्ठन् पृथिव्या आन्तर इति श्रुतौ । तथात्वेपि- वस्तुतो जीवानां ब्रह्मज्ञानेपि ।

—१९ विपरीते- स्वात्मत्वेन ज्ञाने ।

—२० स तु- भजनानन्दस्तु ।

—२१ तद्व्यवधायक इति । स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छदित्यादिश्रुतिभ्यो मुख्यभक्तिमार्गो रमणार्थकोभेदे तु रमणासंभवस्तेनाभेदज्ञानं तस्य भक्तिमार्गस्य व्यवधायकमित्यर्थः । स्वात्मत्वेन ज्ञानं- यत्र त्वस्य सर्वमात्मैवाभूदित्यादिरूपं ज्ञानम् ।

२४४-४ अलौकिक इति । साक्षात्संबन्धस्य हेयरूपे लौकिकविग्रहेसंभवादित्यर्थः ।

—५ ननु लौकिकशरीरस्य भजनानन्दे प्रतिबन्धकत्वं कुत्रापि नोक्तमतः प्रकारान्तरेण दृष्टान्तं व्याख्यान्ति-अथवेति ।

**सूत्रार्थः**- भक्तिमार्गे भगवताङ्गीकृतस्य पुरुषस्य स्वात्मत्वेन भगवज्ज्ञानं भजनविघ्नकारि भवेदतो भगवांस्तन्न संभावयति । यथा तच्छरीरस्यालौकिकत्वात्तत्र भूतग्रामो न संभवति तथैवेदमभेदज्ञानमपीति ॥ ३५ ॥

**अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३।३।३६ ॥**

—९ ननु ब्रह्माभेदानुभवो भजनानन्दानुभवप्रतिबन्धकस्तर्हि भगवानुद्धवादिभक्तांस्तत्कथमुपादिशतीति शङ्कायाः समाधानं सूत्रकार आरचयतीत्याशयेनाहुः— **नन्विति । श्रूयत इति ।** श्रीमद्भागवतैकादशस्कन्धे ।

—११ **एवं सति**— ब्रह्माभेदज्ञानस्य सर्वत्रावश्यकत्वे सति ।

—१२ **अग्रिमस्वर्गेत्यादि ।** अपवर्गो मोक्षः । अग्रिमस्वर्गापवर्गाख्यपारलौकिकानन्दाः फलं यस्य तस्मिन् ।

—१३ **अधिकाररूपसंस्कारार्थं**— अधिकारसिद्ध्यर्थम् ।

—१४ **तत्संस्कारः**— गायत्र्युपदेशसंस्कारः ।

—१५ **नोपहन्यत इति ।**

अग्न्यादिभिर्न हन्येत मुनेर्योगमयं वपुः ।

इति श्रीमद्भगवत एकादशस्कन्ध उक्तम् ।

—१६ **प्रकृत इति ।** देहरक्षार्थमेकान्तभक्तेषु स्वात्मनि ब्रह्माभेदोपदेश इत्यर्थः ।

—२० **अभिप्रेतं**— मुख्यतयाभिप्रेतम् । **अन्यथा**— अभेदोपदेशस्य मुक्तिसाधकत्वे ।

—२१ **न वदेदिति ।** ज्ञानसमकालं मुक्तिप्रसङ्गादित्यर्थः ।

—२२ **एवमेव**— विरहे सत्युपदेशस्य देहरक्षार्थत्वमेव । ननु सूत्रे भेदानुपपत्तिरिति पदं तद्भवताभेदोपदेशानुपपत्तिपरतया कथं व्याख्यायतेत आहुः— **अत्रेति । उपदेशान्तरपदं**— दृष्टान्तप्रतिपादकमुपदेशान्तरपदमित्यर्थः ।

—२३ **प्रस्तुतस्य**—दार्ष्टान्तिकस्य ।

—२४ **उच्यत इति ।** लक्षणयेत्यर्थः । **एतेन**— पूर्वोक्तशङ्कानिरासेन । **भक्तिभावेत्यादि ।** भक्तिभावो भजनानन्दानुभवस्तत्प्रतिबन्धको यो विरहे देहविनाशस्तन्निरासायेत्यर्थः ।

—२५ ननु विरहे भक्तदेहास्थितिर्योगेनापि लभ्या तदर्थं ब्रह्माभेदोपदेशकथनमयुक्तमित्यरुचेराहुः— **अथवेति ।**

२४५–१ **अत्र**— भक्तिमार्गे ।

—२ **तेन**— पुरुषोत्तमस्य स्वात्माभेदज्ञानेन । एवं च स ज्ञानोपदेश एतत्फलको नत्वात्मब्रह्माभेदज्ञानफलक एवं च ज्ञानस्योत्कर्षसिद्धिः ।

—३ नन्वेवं चेत्पुनर्ज्ञानोपदेशवैयर्थ्यमित्यत आहुः— **यद्यपीति ।**

—५ **तथा**— वैयर्थ्याभावः । **अग्र इति ।** एवं च यत्र किंचित्कार्यार्थं वियोगसहनस्यावश्यकता तत्रैव प्रभुस्तथा करोति न तु सर्वत्र ।

—६ सारमिति– उपपन्नमित्यर्थः ।

सूत्रार्थः– ननु तादृशज्ञानस्याभावे भक्तेषूद्धवादिष्वभेदज्ञानोपदेशानुपपत्तिरिति चेन्न । गायत्र्युपदेशवत्तस्य सार्थक्यादिति ॥ ३६ ॥

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३।३।३७ ॥

—९ तद्योहं सोसाविति । ऐतरेयक इदं वाक्यमादित्यपुरुषं प्रकृत्योक्तम् । तैत्तिरीयके तु जलस्थं ब्रह्म प्रकृत्य ।

—११ अत्र– तैत्तिरीयकवाक्ये । उभयत्रेति । अस्मदर्थस्य विशेषणतया विशेष्यतया चेत्यर्थः । आवृत्त्या– ब्रह्मपदावृत्त्या ।

—१३ श्रूयत इति । पञ्चाध्याय्यां भक्तानामुल्लेखः श्रूयत इत्यर्थः । भक्तिफलं– भक्तिजन्यफलम् । परफुल्लयमानं– गर्वेण स्फुरन्तम् ।

—१४ तत्स्वरूपं– व्यतिहारस्वरूपम् ।

—१५ द्वितीयभावोद्रेके– विप्रयोगभावातिशये ।

—१७ तत्त्वेन– श्रीकृष्णत्वेन । विशिंषन्ति– निरूपयन्ति ।

—१८ भक्त्युत्कर्षसिद्धिं स्फुटयन्ति– अपरं चेति । उद्देश्यविधेयभावस्फूर्तौ– अहं ब्रह्मास्मि, ब्रह्माहमस्मीति वाक्यार्थोद्देश्यविधेयभावस्फूर्तौ ।

—२० तल्लीलां– भगवल्लीलाम् । कुर्वन्तीति ।

लीला भगवतस्तास्ता ह्यनुचक्रुस्तदात्मिकाः ।

इति कथनात् ।

—२१ एवं सति– भगवल्लीलायाः स्वयं करणे सति ।

—२२ एकतरादिति । तथा च भक्तिभावैकदेशो विरहभावस्तत्रत्या य संचारिभावास्तत्राप्येकतमोभेदानुभव इत्यर्थः । स्वर्णाचलः– मेरुपर्वतः ।

सूत्रार्थः– अश्रुप्रलापादिवद्भक्तानामहं कृष्णः कृष्णोहमिति विशेषणविशेष्यबुद्धिव्यत्यासो व्यभिचारिभावः । यतो भगवद्द्रष्टृत्वेनाश्वत्थादीनिवानेन प्रकारेणात्मानं कदाचिदिव विशिंषन्ति न सर्वदास्तथेति ॥ ३७ ॥

इति द्वादशमधिकरणम् ।

---

## सैव हि सत्यादयः ॥ ३।३।३८ ॥

फलतो भक्त्युत्कर्षः साधितः । साधनतस्तं साधयितुमिदमधिकरणम् ।

२४६–४ न वेतीति । भक्त्युत्तरं शमदमादयो विधीयन्ते न वेति संशयः । फलोपकारीत्यादि । फलस्य भगवत्प्राप्तेरुपकारि मुख्यसाधनं भगवदाविर्भावस्तदन्तरङ्गचित्तशुद्धिस्तत्साधनभूताः शमदमादय इत्यर्थः । सर्वसाधनरूपेति ।

यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ॥
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
धर्मः सत्यदयोपेतो विद्या वा तपसान्विता ॥
मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि ।

इत्यादिवाक्येभ्यः ।

सूत्रार्थः— यस्माद्भक्तिरेव सत्यादिसाधनरूपातः सत्यादिसाधनानि भक्तस्य स्वत एव भवन्तीति ॥ ३८ ॥

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३।३।३९ ॥

—११ सूत्रप्रयोजनमाहुः- पूर्वसूत्र इति । तद्दार्ढ्यार्थमिति । कैमुतिकन्यायेन तद्द्रढयितुमित्यर्थः ।

—१४ अन्यतः- शास्त्रव्यतिरिक्तहेतोः ।

कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा ।
नित्यं हरौ विदधतो यान्ति तन्मयतां हि ते ॥

इति भागवतदशमस्कन्धीयवाक्यानुसारेण कामादयो मुक्तिसाधनमित्याहुः- भगवतीति । आदिपदात्- सूत्रस्थादिपदात् ।

—१८ स्नेहत्वाभावे- द्वेषादौ स्नेहत्वाभावे ।

—२० तत्रेति । सौत्रक्रमानुसारमेतदग्रे चकारार्थसूचिकान्तिमा माहात्म्यज्ञानेत्यादिफक्किका बोध्या । लेखकप्रमादेनाधुना सूत्रान्त उपलभ्यते । अथवान्त एव चकारार्थसंसूचनं सर्वत्रोपलभ्यते तदनुसारमत्रापि भाष्यकृन्निबद्धमेव स्यात् । आयतनादिभ्य इति हेत्वर्थमाहुः- शास्त्र इति ।

—२३ प्रयोगप्राचुर्यादिति ।

अण्डमुत्पादयामासुर्ममायतनमुत्तमम् ।

पञ्चायतनपूजेत्यादिषु प्रयोगबाहुल्यादित्यर्थः ।

—२४ चकारसूचितमर्थमाहुः- माहात्म्यज्ञानेत्यादि ।

सूत्रार्थः - विहितभक्तेरन्यत्र कामाद्यौपाधिकभगवद्भावे कामाद्येव मुक्तिसाधनम् । ज्ञानमार्गे हेयत्वेन कथितेभ्यो गृहादिभ्य एव तत्र भक्तिमार्गे मुक्तिर्भवतीति ॥ ३९ ॥

इति त्रयोदशमधिकरणम् ।

---

## आदरादलोपः ॥ ३।३।४० ॥

सात्त्विकभक्तानां ज्ञानासक्तिवारणाय ज्ञानमार्गाद्भक्तिमार्गस्य श्रैष्ठ्यं फलतः साधनतश्च पूर्वाधिकरण उक्तम् । अधुना राजसानां कर्मासक्तिं निवर्तयितुं कर्मकरणनिर्णयायेदमाधिकरणम् ।

२४७–५ **इतरत्र**– भगवद्धर्मेषु ।

—६ **अन्यदापि**– कर्माविहितकालेपि ।

—७ **निरवकाशानां**– कर्मणाम् ।

—८ **पठ्यत इति**। आरण्यके स्वाध्यायब्राह्मणे । श्रुत्यर्थस्तु– ब्रह्मयज्ञेन यक्ष्यमाणॐ इति प्रतिपद्यते प्रणवाक्षरं प्रथममुच्चारयेत् । प्रतिपद्यत इति पञ्चमो लकारः । पूर्वोच्चारणे हेतुः । एतद्वै यजुस्त्रयीं विद्यां प्रति । अयं यजूरूपः प्रणवमन्त्रः त्रयीं लक्ष्यीकृत्य प्रतिनिधिरूपो यतोस्ति । तच्चाथर्वणे स्फुटम् । एषा वाक् सर्ववेदबीजत्वात्सर्ववेदमयी प्रणवरूपा वागित्यर्थः ।

—९ **तदेतत्**–परब्रह्मस्वरूपमक्षरम् । **ऋचा**– अनुपदोक्तर्चा । **अभ्युक्तं**–स्पष्टमुक्तम् ।

—१० **यस्मिन्**– प्रणवात्मकेक्षरात्मके । **अधिविश्वे**– विश्वात्मकमक्षरं लोकमधिकृत्य । **निषेदुः**– स्थिता भवन्ति । **यस्तं न वेद** । यः पुरुषस्तत्रत्यं पुरुषोत्तमं न वेद स किमृचा करिष्यति– ऋगिति वेदोपलक्षणम् । स पुरुषो वेदेन किं करिष्यति न किंचिदित्यर्थः । इदिति निर्धारणार्थकमव्ययम् ।

—११ **समासते**– ब्रह्मलोके सम्यगासते ।

—१३ **तत्**– लोकवेदप्रसिद्धं पुरुषोत्तमस्वरूपम् ।

—१४ **एवं सति**– पुरुषोत्तमाज्ञाने वेदानां नैष्फल्ये सति । **तदुक्तकर्मणः**– वेदोक्तकर्मणः । **तथात्वं**– नैष्फल्यम् ।

—१८ **ऋषयोपीति**– इदं वाक्यं श्रीभागवततृतीयस्कन्धनवमाध्यायस्थम् । अन्वये निदर्शनम्– वेदाध्ययनसत्त्वेपि संसारित्वकथनेन फलाभावप्रदर्शनम् ।

—२१ **सम्यगसत्त्वं**– ब्रह्मलोके सम्यगगमनम् ।

—२२ **ज्ञायत इति** । एतेन वरणलभ्यभक्तौ श्रुतेरादरो निश्चितः ।

—२३ साधनभक्तेः श्रुतिसंमितत्वमाहुः– **ऋक्शाखायामपीति** । **तं** लोकवेदप्रसिद्धं भगवन्तम् । उ इति संबोधनार्थकमव्ययम् । श्रुतयो वदन्ति– भो भो स्तोतारो भगवद्वर्णनपराः । **तं पूर्व्यं**–सर्वकारणकारणम् । **यथाविदः**–

यथावद्भगवत्स्वरूपवेत्तारो भवन्तः। ऋतस्य- सूनृतवाग्रूपस्य वेदस्य। गर्भे- अन्तर्निहितम्। जनुषा- संपूर्णजन्मना। पिपर्तन- पूर्तियुक्तं संतुष्टं कुरुत। एवं च श्रुतिरपि भगवद्धर्मेषु स्फुटमादरं दर्शयति। भगवत्तोषाभावे किमपि न सेत्स्यतीत्याशयेनानुकल्पमाह श्रुतिरुत्तरार्धेन।

—२४ आ- आसमन्तात्। अस्य- पुरुषोत्तमस्य। नाम जानन्तः-अखण्डब्रह्मात्मकत्वेन नाम स्वरूपं जानन्तः। विवक्तन- विशेषेण वदत। नामस्वरूपं ज्ञात्वा तथैव कीर्तयतेत्यर्थः। अनुकल्पेन कथं संतोष इत्यतो नामस्वरूपमाह श्रुतिः। चिदिति नाम सच्चिदानन्दस्वरूपं भवतीत्यर्थः। एवं च नाम्नः सच्चिदानन्दरूपत्वात्ततो भगवत्स्वरूपावबोधे संतोषो भगवतो भविष्यतीत्यर्थः। नामस्वरूपाज्ञाने तदुपायं गुरूपसत्तिरूपमाह-महः इति। ह विष्णो ते- त्वत्संबन्धि। महः- तेजोरूपम्। सुमतिं- सम्यग्भगवत्स्वरूपं जानन्तं सुबुद्धिं भक्तं गुरुं भजामहे। अन्यो भजतु मा वा वयं तु भजाम इति श्रुतयः स्वकृत्यमावेदयन्ति।

—२६ तेषां- भगवद्धर्माणाम्। अलोपः- अवश्यकर्तव्यता।

२४८-१ प्रत्युक्तं- खण्डितम्। वैयर्थ्यादिति। श्रुतिविरोधेनेत्यर्थः। तदपरिहारात्- प्रत्यवायापरिहारात्। एवं सति- भगवद्धर्माणामवश्यमनुष्ठेयत्वे सति।

—२ तेन- प्रत्यवायकथनेन। तस्मात्- भगवद्धर्मात्। अवकाशं प्राप्येति। भगवद्भक्त्यनुकूलपदार्थाननुष्ठाय व्यतिरिक्ते काले कर्मकरणमित्यर्थः। अकरणे- नित्यकर्मणामननुष्ठाने।

—३ तथा- प्रत्यवायसंभवः। तस्याशय इति। प्रत्यवायबोधकवाक्याशय इत्यर्थः।

सूत्रार्थः- वर्णाश्रमधर्माणां भगवद्धर्माणां च युगपत्प्रसक्तौ श्रुतीनां भगवद्धर्मेष्वादरात्त एवानुष्ठेया न तु वर्णाश्रमकर्मभिस्तल्लोपः संपादनीय इति ॥ ४० ॥

## उपस्थितेतस्तद्वचनात् ॥ ३।३।४१ ॥

—४ सूत्रमवतारयन्ति- नन्विति। एवमिति। पूर्वोक्तश्रुतिभ्यां भगवद्धर्माणामवश्यानुष्ठेयत्वेन बोधनात्तदनुष्ठान एव श्रौतकर्मणां सफलता नान्यथेत्यर्थः। ७ मौपयोगित्वमिति। साफल्यकरणेन तदुपयोगित्वम्।

—८ तयोः- श्रौतकर्मभगवद्धर्मयोः।

—१० आदरात्- श्रुतिकृतादरात्।

सूत्रार्थः— भगवद्धर्मवर्णाश्रमधर्माणां युगपत्करणे प्राप्ते भगवद्धर्माणां बलवत्त्वेनालोपवचनाद्भगवद्धर्मा एवानुष्ठेयाः। अतो भगवद्धर्मा न कर्माङ्गं किं तु मुख्या इति ॥ ४१ ॥

इति चतुर्दशमधिकरणम् ।

---

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥३।३।४२॥

ननु पूर्वोक्तरीत्या कर्मणां गौणत्वे यथा परमहंसेषु कर्मणामप्राप्तिस्तथा भक्तेष्वपि तदप्राप्तिस्तथा च पूर्वोक्तकर्मविचारो व्यर्थ इत्याशङ्कायां पाक्षिकप्राप्त्या तत्प्रयोजनमिति बोधयितुमिदमधिकरणम् ।

—१५ तदनुकूलविचारमाहुः- अथेदमिति ।

—१६ मार्गत्रयफलात्मक इति । कर्म ज्ञानं भक्तिरिति मार्गत्रयम् । तस्मिन्- पुरुषोत्तमज्ञाने ।

—१८ आकूतं- अभिप्रायः ।

—१९ एतादृशस्य- सर्वदा भगवदानन्दमनुभवितुः ।

—२१ न तपतीति । अहं किमर्थं पापं कृतवान्, किमर्थमहं पुण्यं न कृतवानिति रूपं पश्चात्तापं स न लभते ।

—२३ उभयविधानां- मर्यादायां पुष्टौ च स्वीकृतानां भक्तानाम् ।

२४९-२ अतन्निर्धारणे- भगवदिच्छाया अनिर्धारणे ।

—३ सिद्धमिति । एवं सति येन कर्म कर्तव्यमापतति तदर्थं कर्मविचारस्य साफल्यमिति भावः ।

—४ तस्य- भगवदिच्छाज्ञानवत उत्तमाधिकारिणः ।

—८ द्वितीयस्य- मध्यमाधिकारिणः । नन्वेवं व्याख्याने सूत्रस्थपृथग्घ्यप्रतिबन्धः फलमिति भागस्यैव सार्थक्यं भवति न संपूर्णभागस्येत्यरुचेराहुः- अथवेति । विधेयाभावात्- ज्ञानकर्मादिविधेयाभावात् ।

—१२ असंभवाच्चेति । भक्तस्य सर्वदा पुरुषोत्तमनिष्ठत्वेन तदतिरिक्तकर्मास्फूर्त्या तत्करणासंभवादित्यर्थः ।

—१४ धर्मिण्येव- भगवत्येव ।

—१६ एतादृशस्य- पुरुषोत्तमधर्म्यतिरिक्तज्ञानादिदृष्टिशून्यस्य । प्रभुसंगमात्रमिति । स भक्तः केवलं रासलीलायां भगवत्संगमपेक्षते । भगवदुक्तमिति । यास्यसे ह्यकुतोभयामित्यादिना भगवतोक्तम् ।

—१८ एतेन-तन्निर्धारणपदेन ।

—१९ अनिर्वाच्यत्वादिति । यतो वाचो निवर्तन्त इति श्रुत्या ।

—२० अन्यत्र– मोक्षपर्यन्तं फलान्तरे।

—२१ फलमेव– परमानन्दस्फूर्तिरूपं फलमेव । तत्फलस्य– संगमरूपफलस्य ।

—२२ तद्भावाप्रतिबन्धः– सर्वात्मभावस्याप्रतिबन्धः । फलं– प्रासंगिकफलम् ।

सूत्रार्थः– मया कर्म कर्तव्यं न वेति येषां ज्ञानं नास्ति भगवदिच्छाज्ञानाभावात् तैराधुनिकैर्निष्कामतया कर्म कर्तव्यमेव । भगवदिच्छां ये जानन्त्यम्बरीषादयस्तेषां जीवकृतकर्मफलाद्भिन्नमीश्वरकृतकर्मफलं लोकसंग्रहादिकम् । निष्कामकर्मकारिणां तु कर्मजप्रतिबन्धाभावः फलमिति ॥ ४२ ॥

इति पञ्चदशमधिकरणम् ।

---

## प्रदानवदेव तदुक्तम् ॥ ३।३।४३ ॥

एवं राजसकर्मकरणप्रकारं निरूप्य तेषां राजसानां कर्मासक्तिं वारयित्वा मुख्यभक्तिः केन साधनेन भवतीति जिज्ञासायामिदमधिकरणम् ।

२५०–१ तदनुकूलविचारमाहुः– अथेदमिति ।

—४ वाक्य इति । अस्य कथनेनेत्यनेनान्वयः । एवंच मामेकमेवेत्यादिवाक्ये कथनेन सर्वात्मभावस्य स्वप्रयत्नसाध्यत्वं गम्यत इति योजना ।

—५ स्वप्रयत्नेति । शरणगमनरूपेण स्वप्रयत्नेन साध्यत्वात्कृतिसाध्यत्वमित्यर्थः ।

—११ तन्निवृत्तेरिति । शत्रुभयनिवृत्तेः फलत्वमित्यर्थः । प्रकृतेपि– भजनानन्दार्थं सर्वात्मभावेन शरणगमनेपि ।

—१२ सर्वात्मभाव इति । तस्मिन् सिद्धे सतीत्यर्थः ।

—१३ तद्भावस्वाभाव्येन-सर्वात्मभावस्वाभाव्येन ।

—१६ वदित्युक्तमिति । फलसामान्यं पूर्वदशायां प्रदर्शितमित्यर्थः नन्वेवमपि शरणगतिः स्वकृत्यसाध्येति सिद्धं न तु सर्वात्मभाव इत्यतो याहि सर्वात्मभावेनेति वाक्यं प्रकारान्तरेण योजयन्ति । अथवेति ।

—१७ संबन्ध इति । शरणं मां याहीति संबन्धः । एवंच सर्वात्मभावस्यैव प्रदानतुल्यत्वं निष्प्रत्यूहम् । अत्र पौराणवाक्यमात्रस्योपन्यासेऽश्रौतत्वशङ्का स्यात्ततः श्रौतत्वप्रदर्शनाय व्याख्यानान्तरमाहुः– यद्वेति ।

—२२ नन्वेवं सर्वात्मभावस्य मुक्तिसाधनत्वेन पुरुषोत्तमप्राप्तेरपि साधनकोटिनिविष्टत्वान्मुक्तेरेवोत्कर्षः सिध्यतीत्यतोकुतोभयपदमन्यथा व्याख्यान्ति-भगवदुक्तेत्यादि ।

—२५ तदर्थः- न बिभेति कुतश्चनेति वाक्योक्तार्थः ।

सूत्रार्थः- शरणप्राप्तिर्वरदानामिव स्वकृत्यसाध्या । तन्नायमात्मा प्रवचनेनेत्यादिश्रुत्योक्तमिति ॥ ४३ ॥

इति षोडशमधिकरणम् ।

---

## लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ३।३।४४ ॥

पूर्वाधिकरणे सर्वात्मभावस्य वरणैकलभ्यत्वं प्रतिपादितम् ।

२५१-३ यमेवैष इत्यादिश्रुतौ तत्परमात्मन उक्तमिति दूषणसमाधानाय सर्वात्मभावस्वरूपं वरणैकलभ्यत्वं च वक्तुमिदमधिकरणमित्याशयेन सूत्रमवतारयन्ति- नन्विति । प्रतिबन्धकेत्यादि । प्रतिबन्धका ये कालादृष्टादयस्तेषां सद्भावेस्तित्वे । तन्निवृत्तावेवेति । प्रतिबन्धकभावस्य कार्यसामान्यं प्रति कारणतायाः सर्वशास्त्रसंमतत्वात् ।

—६ उपदेशार्हा- उपदेशयोग्या ।

—७ मोपसीदेति । यज्जानासि तत्कथनेन मां प्रत्यागच्छ । स्वाधीतं वद ।

—८ देवजनविद्याः- गन्धर्वोक्तनृत्यगीतादिविज्ञानानि ।

—९ मन्त्रवित्- परोक्षज्ञानवान् ।

—१३ नाम- भगवन्नाम । वाक्- भगवच्चरित्रप्रतिपादिका । मनः-भगवत्संबन्धिप्रश्नानुकूलान्तःकरणव्यापारविशेषः। संकल्पः-कर्तव्यनिर्णायकान्तःकरणवृत्तिविशेषः । चित्तं- त्रैकालिकस्वकृतिनिर्णायकान्तःकरणवृत्तिविशेषः । ध्यानं- निदिध्यासनम् । विज्ञानं- शास्त्रोक्तविशिष्टज्ञानम् । बलादयः प्रसिद्धाः ।

—१९ एतेनेति । एतेन भूम्नः कार्यलक्षणवाक्येन यदुद्धवं प्रति सर्वात्मभावस्वरूपं स्वस्मिन् विगाढभावात्मकं भगवतोक्तं तदेवोक्तमित्यर्थः ।

—२० तत्प्रतिपादयन्ति- तत्रेति ।

—२२ एतेषां- विरहभावकृततत्तत्स्फूर्तिरूपज्ञानानाम् ।

—२४ पूर्वभावेन- विरहभावेन ।

२५२-३ श्लोकैरिति । न पश्यो मृत्युं पश्यतीत्यादिश्लोकैस्तत्रस्थैः । आहारशुद्धाविति । संपूर्णवाक्यं यथा ।

आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः ।
स्मृतिप्रतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ॥
आहारशुद्धिश्च-
त्वयोपभुक्तस्रग्गन्धवासोलंकारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥

इति प्रकारेण भगवद्दत्तप्रसादतो जायमाना सत्त्वं शोधयति ।

—५ एवं सति- श्रुत्या वरणसर्वात्मभावादौ प्रतिपादिते सति ।

—६ सः- प्राणपोषको भगवान् । सः- सर्वात्मभावः ।

—७ तत्- वरणम् । उक्तकार्यानुमेयमिति । भगवत्कृतप्राणपोषणानुमितसर्वात्मभावरूपकार्यानुमेयमित्यर्थः ।

—९ हिशब्दसूचितमर्थमाहुः- यल्लिङ्गमेवेति । यस्य लिङ्गं सर्वात्मभावरूपं सर्वतोधिकं कालादिभ्यो बलिष्ठं तस्य वरणस्य कालाद्यपेक्षया बलिष्ठत्वे किं वाच्यमित्यर्थः ।

—१० प्रतिबन्धशङ्कायामिति । स्वात्मनि ब्रह्माभेदज्ञाने सति विरहभावस्यासंभवेन ज्ञानमार्गीयज्ञानरूपप्रतिबन्धशङ्कायामित्यर्थः ।

—१२ उपपादितमिति । भगवानेव प्रतिबन्धं न करिष्यतीति भावः ।

सूत्रार्थः- वरणलिङ्गस्य सर्वात्मभावस्य सर्वाधिकत्वात्तदेव वरणं कालकर्मादिभ्यो बलीयः । तस्य ज्ञानेनापि प्रतिबन्धो नेत्यन्तरा भूतग्रामवदिति सूत्र उक्तमिति ॥ ४४ ॥

## पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥ ३।३।४५ ॥

—१५ पूर्वोक्तसिद्धान्तं द्रढयितुं सूत्रद्वयेनाशङ्कते सूत्रकार इत्याशयेनावतारयन्ति- तत्राहेति । अत्र पूर्वपक्षी पृच्छतीत्यर्थः ।

—१६ निरूपित इति । ऐतदात्म्यमिदं सर्वमिति महावाक्ये निरूपितः ।

—१८ उत्तरं- सनत्कुमारोक्तम् ।

—१९ तद्विषयकं- आत्मविषयकम् ।

—२२ तदेव- आत्माभेदज्ञानमेव । आह- सूत्रकार आह ।

—२३ अग्रेपि- नवमप्रपाठकेपि । उपपादितमिति । अवतरणग्रन्थ उपपादितम् ।

—२४ तद्धृदयसंवादार्थं- वादिमनोदृढीकरणार्थम् । तत्- पूजनम् ।

२५३-२ अन्यतरस्य- बाह्याभ्यन्तरयोरेकस्य । तद्भिन्नत्वं- पूजनभिन्नत्वम् ।

सूत्रार्थः— छान्दोग्ये यत्र नान्यदित्यादिना वरणभूयस्त्वं नोच्यते किंतु श्वेतकेतूपाख्यानज्ञानस्यैव प्रकारभेदो निरूप्यते । आत्मप्रकरणत्वादुभयोः प्रपाठकयोः । अत्र क्रियामानसवादिति दृष्टान्तः । यथा बाह्या पूजा क्रियेत्युच्यते । आन्तरी मानसमुच्यते । एवं प्रकारभेदेपि ज्ञानत्वाविशेषस्तद्वदिति ॥ ४५ ॥

## अतिदेशाच्च ॥ ३।३।४६ ॥

—५ पूर्वे–पूर्वप्रपाठके । सर्वशब्देन–ऐतदात्म्यमिदं सर्वमिति सर्वशब्देन ।

—६ अग्रे– अस्मिन् प्रपाठके ।

—७ इतोपि हेतोरिति । नामोपास्स्वेत्यादिवाक्यैर्नामादीञ्जगद्रूपाननूद्य नामादिशब्दैस्तत्तदात्मकत्वं तेष्वतिदिश्यत इत्यतिदेशाद्धेतोरित्यर्थः । ज्ञानप्रकारभेद इति । न तु भवदभिमतभक्तिप्रकार इत्यर्थः ।

सूत्रार्थः— नामोपास्स्वेत्यृगादिविद्या अनूद्य नामब्रह्मातिदेशादपि ज्ञानप्रकारविशेष एवायं न भक्तिप्रकार इति ॥ ४६ ॥

## विद्यैव तु निर्धारणात् ॥ ३।३।४७ ॥

—११ विद्यैव– सर्वात्मभावस्वरूपं ज्ञानमेव ।

—१२ अत्रेदमिति । अस्याः श्रुतेर्वरणश्रुत्याविरुद्धं तात्पर्यं तस्माद्वरणश्रुत्यर्थः प्रोच्यत इत्यर्थः ।

—१५ अत एव– भगवतो वृतात्मत्वादेव । ननु माध्यन्दिनान्तर्यामिब्राह्मणे यस्यात्मा शरीरमिति सामान्यत आत्ममात्रस्य ब्रह्मशरीरत्वं श्रूयते तेन कथमत्र वृतस्यैव ब्रह्मशरीरत्वमुच्यत इत्यत आहुः– तद्वरणस्येति । एवंच माध्यन्दिनान्तर्यामिब्राह्मणे सामान्यत आत्ममात्रस्य शरीरत्वश्रावणं य आत्मानमन्तरो यमयतीति नियन्तव्यत्वायैव तेन न स्वकीयत्वकथनं तत्र । अतः सर्वेषु भगवच्छरीरत्वे समानेपि भगवान्यं स्वीयत्वेनालोचितवांस्तमेव वृणुत इत्यर्थः ।

—१७ अत एव– वरणस्य भगवता सह भोगार्थत्वादेव ।

—२४ अन्यादृशं– भगवतोन्तःस्थितत्वमात्ररूपम् । तथा चेन्नायमात्मा बलहीनेनेत्याद्यनुपपन्नं स्यात्तदाहुरिति ज्ञापनायेति ।

२५४–१ ननु श्रुतौ बलशब्दो वर्तते न भक्तिशब्द इत्यतो बलशब्देन भक्त्यर्थप्राप्तिमाहुः– बलकार्यमिति । बलशब्दस्य केवलशरीरसामर्थ्य एव न प्रयोगः । अपि तु यत्किंचित्सामर्थ्ये यथा भागवततृतीयस्कन्धे ।

बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम्।
या करोति पदाक्रान्तान् भ्रूविजृम्भेण केवलम्॥

इति कपिलवाक्ये भ्रूविजृम्भसामर्थ्ये बलप्रयोगः।

—३ अत्र भक्तिरूपमेव बलं विवक्षितमित्यत्र विनिगमकमाहुः। अन्यथेति। पूर्ववाक्ये– नायमात्मा प्रवचनेनेति श्रुतौ।

—५ तथात्वं– हेतुत्वम्। अयं भावः। बलहीनेन न लभ्य इति वाक्येन बलहीनत्वं भगवदलाभे हेतुस्तथा च बलं भगवल्लाभे हेतुः। तच्च बलं लौकिकादिबलविलक्षणं भगवदनुग्रहजन्यं पुष्टिमार्गीयमेवाङ्गीकार्यं तादृशं तद्भक्तिरूपमेव। अतोत्र बलशब्देन भक्तिरेव ग्राह्या।

—९ तद्धृदये– एवं प्रयतमानस्य हृदये।

—१० नन्वेवमपि पूर्वसूत्रद्वयेन याशङ्का कृता तत्परिहारः कथमित्याहुः– प्रकृत इति। अन्यार्थमन्यकथनमिति परोक्षवादः।

—११ ब्रह्माभेदबोधनेन– जीवस्याक्षरब्रह्माभेदबोधनेन।

—१२ अग्रे– अग्रिमप्रपाठके। एतावता– अक्षराभेदग्रहणमात्रेण।

—१३ तथा सति– अक्षराभेदग्रहणमात्रेणाविर्भावे सति।

—१५ तद्बोधाधिकारी– सनत्कुमारोपदेशाधिकारी।

—१७ तत्र–सनत्कुमारनारदसंवादे। स एव–पुरुषोत्तम एव।

—२१ औपचारिकः– परंपरया वियासाधनत्वेन लाक्षणिकः।

—२५ त्वद्धेत्वसिद्धिरिति। प्रपाठकद्वयमपि भिन्नप्रकरणस्थं तेन पूर्वपक्ष्युक्तैकप्रकरणत्वहेतोरसिद्धिरित्यर्थः।

२५५–३ भूमा–संख्याशून्यः। अल्पे– गणितानन्दे।

—८ तथा सति– सर्वत्र भूमदर्शने सति।

—११ तैः– प्राणादिधर्मैः।

—१३ तदुक्तेरिति। एवंच तादृशलीलोपयोगिदर्शनं भगवतैव संपादितमित्यर्थः।

सूत्रार्थः– तुः पक्षव्यावर्तकः। अत्र सर्वात्मभाव एव निरूप्यते। भूमा त्वेव विजिज्ञासितव्य इत्यानन्दात्मकपुरुषोत्तमस्यैव जिज्ञास्यत्वेन निर्धारणादिति॥ ४७॥

## दर्शनाच्च॥ ३।३।४८॥

—१५ श्रुतिद्वारान्यादर्शनं साधयित्वा प्रत्यक्षेणापि साधयति सूत्रकार इत्याशयेन व्याख्यान्ति–दृश्यते चेति। व्रजसीमन्तिन्यो गोप्यः।

—१६ स्वानुभवमिति । स्वयं व्यासेन समाधावनुभूतमेतदित्यर्थः ।

सूत्रार्थः—सर्वात्मभाववतां व्रजभक्तानां पूर्वं सर्वविस्मृतिर्भगवत्सामर्थ्यादग्रे सर्वसामर्थ्यं चेति श्रीमद्भागवते दर्शनादिति ॥ ४८ ॥

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ३।३।४९ ॥

—२४ उचित इति । असंजातविरोधित्वेनोपक्रमस्य बलीयस्त्वात् । अग्रे–द्वितीयप्रपाठके ।

—२५६–१ वाक्यभेद इति । एकार्थत्वाभावादित्यर्थः । वाक्यानुरोधात्–उपक्रमगतात्मवाक्यानुरोधात् ।

—४ सूत्रं व्याख्यान्ति–नैवमिति । वाक्यानुरोधात्–वाक्यरूपप्रमाणानुरोधात् ।

—७ जैमिनीयसूत्र इति । श्रुत्यादिसमाख्यान्तानां प्रमाणानां समवाय एकत्र प्राप्तौ परं परं दुर्बलं श्रुत्यपेक्षया लिङ्गं लिङ्गापेक्षया वाक्यमित्यादि समाख्यापर्यन्तमिति सूत्रार्थः । प्रकृत इति । यद्यप्युपक्रमस्य बलीयस्त्वं तथापि तन्निःसंदेहत्वे तत् । अत्र तूपक्रमः संदिग्धः । आत्मपदस्य जीवाक्षरपुरुषोत्तमसाधारण्यात् । अतो विमर्शे नारदस्य शोकतारकात्मज्ञानार्थं प्रष्टुं प्रवृत्तत्वान्निरवधिकसुखरूप आत्मा पुरुषोत्तमस्वरूप एव ग्राह्य इति निश्चीयते ।

—१२ निरूपितमिति । वियैवेत्यादिसूत्रस्य व्याख्याने निरूपितमित्यर्थः । ननु पूर्वोक्तलिङ्गं श्रुत्यन्तरस्थं तन्न प्रकृतनिर्णायकं भवेदित्यरुचेः प्रकृतश्रुतिस्थं लिङ्गं दर्शयन्ति–अपरं चेति । नारदवाक्यानुवादयोरिति । नारदवाक्ये तदनुवादे च ।

—१४ उत्तमप्रश्नात्मकेनेति । अस्ति भगवो नाम्नो भूय इत्यादिनाधिक्यप्रश्नात्मकेन । स हि–पुरुषोत्तमो हि ।

—१७ तत्प्राप्त्यर्थमिति । केवल तदधिष्ठानमेव तत्प्राप्त्यर्थमपृच्छदित्यर्थः । अत्यार्त्या–अत्याकाङ्क्षया ।

—१९ उक्तवानिति । एवंच द्वितीयप्रश्नोत्तरे सर्वात्मभावलिङ्गस्य दर्शनान्न तद्बाध इत्यर्थः ।

सूत्रार्थः—तरति शोकमात्मविदित्युपक्रमवाक्यानुरोधात्सर्वात्मभावलिङ्गभूयस्त्वस्य न बाधः । वाक्यापेक्षया श्रुतिलिङ्गयोर्बलीयस्त्वादिति ॥ ४९ ॥

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ३।३।५० ॥

—२० सूत्रमवतारयन्ति–नन्विति । एतया श्रुत्या–स एवाधस्तादित्यादिश्रुत्या ।

२५७-२ **तदर्थस्तु**-स्वे महिम्नि प्रतिष्ठित इति श्रुत्यर्थस्तु । **स्वीयत्वेन वृत इति** । तत्र स्वपदस्यात्मीयवाचकत्वे स्वीयत्वेन वृतो यो भक्तस्तन्निष्ठो यो महिमा सर्वात्मभावरूप उत्कर्षस्तस्मिन्नित्यर्थो भवति । यदि च स्वपदमात्मवाचकं तदा स्वरूपात्मके महिम्नीत्यर्थो भवति । स च महिमा सर्वात्मभाव एव ।

—४ **तदितरस्य**-सर्वात्मभावाभिन्नस्याक्षराभेदज्ञानस्य । **अस्य**-सर्वात्मकभावस्य ।

—६ **विप्रयोगभावः**-विरहभावः । **सम्यक्**-परमत्वेन रूपेण ।

—७ **व्यभिचारिभावैरिति** । अस्य ज्ञात इति पदेन सह संबन्धः । **ते**-व्यभिचारिभावाः । **त्रिविधा इति** । तदादेशाहंकारादेशात्मादेशरूपास्तिस्रो विधा ज्ञापकप्रकाराः ।

—९ **निरूप्येति** । तांस्त्रीन्प्रकारान् इत्यर्थः ।

—१० **तमेव**-महिमानमेव । **अनुबध्नाति**-सर्वात्मभाववति भक्ते नियमयति ।

—११ **पूर्वपरामर्शित्वात्**-सर्वात्मभाववद्भक्तपरामर्शित्वात् । **एवं सति**-उक्तरीत्या श्रुतेः सामञ्जस्ये सति ।

—१३ **तस्मात्**- उक्तश्रुतीनां त्वदुक्तप्रकारेण व्याख्यानासंभवात् ।

—१४ **आदिपदात्**-सूत्रस्थादिपदात् ।

—१६ **उच्यते**-व्याख्यायते । **पूर्वं**-अहंकारात्मादेशाभ्यां पूर्वम् । **तदितरास्फूर्त्यां**-भगवदितरास्फूर्त्यां ।

—१७ **एतदेव**-ईदृग्दर्शनमेव ।

—२० **आत्मातिदेशफलमाहुः**-तत इति ।

—२३ **उपसर्ग उक्त इति** । विजानन्नित्यत्र वीत्युपसर्गः । विविधं जानन्नित्यर्थः ।

—२५ **तस्य**-औपचारिकत्वस्य ।

—२६ अवशिष्टं सूत्रांशं व्याख्यान्ति-**नन्विति** ।

—२७ **प्रज्ञान्तरपृथक्त्ववदिति** । अन्या प्रज्ञा प्रज्ञान्तरं तत्कृतपृथक्त्वस्येवेति प्रज्ञान्तरपृथक्त्ववत् । एतन्मनसिकृत्यार्थमाहुः-**मुमुक्षुभक्तस्येति** ।

२५८-२ **तदिष्टमेव**-मोक्षमेव ।

—३ **तमेव**- सोऽश्नुते सर्वान्कामान्सहेति श्रुत्युक्तमेव ।

—४ **स भावः**-सर्वात्मभावः । **अत्र**-सर्वात्मभावस्य पूर्वोक्तफलसाधनतायाम् ।

—१३ कालविप्लुतं–विनाशि ।

—१४ सालोक्येत्यादि । मुक्तिचतुष्टयमित्यर्थः ।

—१६ निर्णीयत इति । एवंच ज्ञानमार्गीयभगवद्दर्शने हृदयग्रन्थिभेदनं नानाविधवृत्त्यनुदयरूपम् । अत्र सर्वात्मभावे तु सर्वग्रन्थीनां विप्रमोक्षो भगवद्विषयकनानावृत्त्युदयेपि एकत्वपर्यन्तानिच्छारूप एवं दर्शनभेदात्फल-भेदस्तत्क्रतुन्यायेनाप्युपपन्न इत्यर्थः ।

सूत्रार्थः—भूमाधिकरणादिहेतुभ्यः सर्वात्मभाव एव स्वे महिम्नीत्या-दिना प्रतिपाद्यो न ब्रह्मणः स्वाधिष्ठानत्वम् । ननु सर्वात्मभावेनापि मुक्ति-रेव साध्येति चेन्न. यतो यथा सर्वात्मभाववद्भक्तप्रज्ञातोन्या विलक्षणा मुमुक्षु-प्रज्ञा सा प्रज्ञान्तरं तद्यथा कर्मज्ञानादिफलेभ्यः पृथक्त्वेन मोक्षसाधकं तथा सर्वात्मभाववद्भक्तप्रज्ञाया भगवल्लीलासाधकत्वमतो न सर्वात्मभावस्य मोक्षे-न्तर्भावः । दृष्टश्च व्रजभक्ते स्वरूपानुभव एव फलम् । तच्च वशे कुर्वन्ति मां भक्त्येत्यादिना भगवतोक्तमिति ॥ ५० ॥

न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥ ३।३।५१ ॥

—१९ अत एव–तदनुपपन्नत्वादेव । पुरुषोत्तमपरत्वोक्तिश्चेति । अनु-पपन्नेत्यर्थः । तस्य–अभेददर्शिनः ।

२० प्रतिपाद्यत इति । श्रीमद्भागवते कपिलादिवाक्यैः । अत्र–सनत्कु-मारवाक्ये ।

—२१ एवं सति– अकामत्वबोधककपिलस्मृतेः कामचारबोधकश्रुत्या विरोधे सति ।

—२२ द्वितीयस्य–सकामत्वबोधकश्रुतिवाक्यस्य ।

—२३ उक्तप्रमाणपराहतत्वेन–पूर्वोक्तस्मृतिवाक्यनिराकृतत्वेन । आद्य-पक्षः–अकामत्वपक्षः ।

—२५ अनेकश इति । यथा अजामेकामित्यत्र सृष्टीरुपदधातीत्यादौ च । प्रकृतेपि–कामचारवाक्येपि ।

२५९–२ प्राणादिसर्ववतः– सर्वात्मभाववद्भक्तस्य ।

—३ एतदग्रे–नान्यत्पश्यतीति श्रुतेरनन्तरम् ।

—५ आत्मातिरिक्तेति । प्रापञ्चिकसर्ववस्तुव्यवच्छेदः ।

—६ मृत्युवदिति । मृत्योरिव मृत्युवदिति षष्ठ्यर्थे वतिः । एवंच मृत्यो-रिव लोकानामपि संबन्धो नेत्यर्थः ।

**सूत्रार्थः**—ननु सर्वेषु लोकेषु कामचार इत्यादिना भक्तस्यान्नकामना दृश्यत इति चेन्न। तत्समानधर्मसंबन्धादपि श्रुतौ तत्प्रयोगस्य बहुश उपलम्भात्। ननु यथाश्रुतार्थ एव ग्राह्य इत्यत्राह—मृत्युवदिति। यथा न पश्यो मृत्युं पश्यतीति सर्वात्मभाववतो मृत्युनिषेधः क्रियते तथा भगवत्स्वरूपातिरिक्तलोकान्तरसंबन्धोपि तस्य न संभवतीति॥ ५१॥

## परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः॥ ३।३।५२॥

—११ **अत्र**–भक्तभावानामलौकिकत्वे।

—१२ **परेण**–तुरीयपादेन।

—१३ **तद्विधतैव**–तत्समानार्थकत्वमेव।

—१८ **अनुबन्धः**–पुनःसंबन्धः। संक्षेपविस्तरकथनस्य लोक इष्टत्वादित्यर्थः। प्रकारान्तरेण व्याख्यान्ति- **अथवेति**। भूयःपदसूचितमर्थं वदन्ति–**तथा चेति**। जीवकृतसाधनसाधितफलापेक्षया भगवद्दत्तफल उत्कर्षाधिक्यम्।

—२० **तथा**–अनुबन्धः। पुनःसंबन्ध इत्यर्थः।

**सूत्रार्थः**—आत्मन एवेदमिति वाक्यस्य सर्वमाप्नोतीति परवाक्येनैकरूपत्वमस्तीति न लोकान्तरसंबन्धो वक्तुं शक्यः। नन्वात्मन एवेदं सर्वमित्युक्त्वा पुनः सर्वमाप्नोतीति किमर्थमिति चेन्न। हेतुबाहुल्ये सति दार्ढ्यादिति॥ ५२॥

## एक आत्मनः शरीरे भावात्॥ ३।३।५३॥

—२२ **उक्तेर्थे**–सर्वेषु लोकेषु कामचारो भवतीत्यर्थस्यालौकिकत्वरूपेर्थे।

**सूत्रार्थः**-अत एवैके शाखिनो भगवतो भक्तशरीर आविर्भावात्तेन सह कामोपभोगरूपिकां सोश्नुते सर्वानिति श्रुतिं पठतीति॥ ५३॥

इति सप्तदशमधिकरणम्।

---

## व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत्॥ ३।३।५४॥

पूर्वाधिकरणान्त्यसूत्रे तैत्तिरीयश्रुतिः संमतिरूपोक्ता तत्प्रसंगात्तदर्थविचारायेदमधिकरणम्।

२६०–१२ तदुपयोगिविषयादिकं वदन्ति–**नन्विति**।

—१४ **इतरनिरपेक्षं**–इतरसाधननिरपेक्षम्। **तत्**–ब्रह्मज्ञानम्। **तथा**–परप्रापकम्।

—१६ अनेकेत्यादि । यमेवैष वृणुते, नायमात्मा बलहीनेन लभ्यः, भक्त्या मामभिजानाति, भक्त्याहमेकया ग्राह्यः इत्याद्यनेकप्रमाणैर्बाधिता । ज्ञानशेषं-ज्ञानाङ्गम् ।

—१८ ऋगुक्तेत्याहेति । श्रोतृसंमुखं पुरुषोत्तमसाक्षात्कारवद्भिः सत्यं ज्ञानमनन्तमित्येषा ऋगुक्तेत्यर्थः । तत्र-तस्यामृचि । ब्रह्मपद इति । अनन्तं ब्रह्मेति सह ब्रह्मणेति च वाक्योक्ते ब्रह्मपदे । ज्ञायेते इति । एतच्चानन्दमयाधिकरणद्वितीयवर्णकव्याख्यानरीत्या ज्ञेयम् ।

—२१ ऋचि परमं व्योमेति पदद्वयं ज्ञानशेषभूतब्रह्मपरमित्याशयेन ऋगर्थमाहुः- तथाचेति ।

—२२ व्यतिरेकः— अभावः । तद्भावाभावित्वादिति । तद्भावस्य पुरुषोत्तमाधिष्ठानविशिष्टसर्वात्मभावस्य अभावित्वात् । यमेवैष इत्यादिश्रुत्युक्तवरणकारणस्याभावेनासंभवित्वादित्यर्थः ।

२६१—१ ज्ञानविषयत्ववदिति । ज्ञानिनां चेतसि यथाक्षरविषयकं ज्ञानमाविर्भवति तथाविर्भावोप्यास्त्वित्यर्थः । तदतिरिक्तं-ज्ञानविषयत्वातिरिक्तम् ।

—३ तद्वद्गुहायां-ज्ञानाविर्भावयुक्तज्ञानिगुहायां तादृशपरमव्योमाविर्भावो न भवतीत्यर्थः । यस्मै भक्तायेति । एवं च यस्य यादृशी वरणसर्वात्मभावादिसामग्री तस्मिंस्तादृशलीलाविशिष्टं स्वरूपं प्रादुर्भावयति प्रभुर्न त्वनियमेनेति न काप्यनुपपत्तिरिति भावः ।

—५ वैकुण्ठलोकवत्-वैकुण्ठलोकयुक्तम् । ननु नेदमुपपन्नमक्षरस्यादृश्यत्वादिगुणकत्वेन श्रुतावुक्तत्वादित्यत आहुः— यत्रेति ।

—६ अधःकक्षस्य तस्य-निकृष्टस्य तस्य । तथात्वे-चाक्षुषत्वे ।

—७ विद्वन्मण्डने चेति । एतेनायं ग्रन्थो भाष्यरूपो विट्ठलेशैर्विरचितः । एतद्विषये पूर्वं (पृ. २८१) बहु प्रपञ्चितमतोत्र विरम्यते । अक्षरस्वरूपं विशदयितुं विचारयन्ति-नन्विति ।

—१० पश्चाद्भावित्वे-कृत्रिमत्वे । इयं-उक्तविकल्परूपा ।

—११ तथा-नानाविधम् ।

—१४ इत्यादिरूपा-अक्षरस्य नानाविधत्वप्रतिपादिका ।

२६२-३ निर्णीतमिति । एवं च स्वरूपस्योक्तरूपत्वेन भगवदिच्छयाधिकारिभेदेन विविधानां विविधतया भानान्न काप्यनुपपत्तिरित्यर्थः ।

सूत्रार्थः-ज्ञानिनां हृदये परमव्योमाविर्भावो न भवति वरणाभावेन भगवद्भावस्याभावात् । ननूपलब्धिवदाविर्भावोपि स्यादिति चेन्न । यतो यथा ज्ञानं साधनेन साध्यं तथा वरणं साधनेन साधयितुमशक्यमिति ॥५४॥

## अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ३।३।५५ ॥

—४ **निदर्शनत्वेन**–दृष्टान्तत्वेन।

—६ **अवबद्धाः**–वृताः।

—७ तदाहुः–**अवबन्धनमिति**।

—८ **इत्यादिरूपं वरणामिति** । होत्रादितत्तत्कर्मकर्तृनियमनरूपो विभागः। कैमुतिकन्यायेन प्रकृतं विवृण्वन्ति–**तथा चेति**।

—१५ **इच्छैव**–भगवतस्तत्तत्फलदित्सैव।

**सूत्रार्थः**—यथा यजमानेन हौत्राद्यर्थं वृता ऋत्विजः सर्वशाखीय-कर्मानुष्ठानसमर्था अपि वरणानुसारं तत्तच्छाखीयमेव कर्म कुर्वन्ति तथात्र भगवता वरणाभावाज्ज्ञानिनां हृदि परमव्योमाविर्भावो नेति ॥ ५५ ॥

## मन्त्रादिवद्वाविरोधः ॥ ३।३।५६ ॥

—१९ **तथैव**–भगवदिच्छानुसारं ज्ञानमार्गादिसंपादनानन्तरम्।

—२० **तथा**–विनियोगः।

—२१ **एक एव**–व्यावृत्तिरूपः। **द्वयोरिति**। शन्नो देवीरिति मन्त्रो मार्जनशनिप्रसादनेतिकार्यद्वय उपयुज्यते। **एकत्रेति**। सूर्यो ज्योतिरिति मन्त्रः प्रातरग्निहोत्रहोमे।

—२२ **तथात्रापीति**। एवमेव भगवद्वरणस्थलेपि। एकमेव वरणं क्वचि-त्कर्मज्ञानद्वारा भक्तिं दत्त्वैनमुद्धरिष्य इत्याकारकं क्वचिदेकद्वारा भक्तिं दत्त्वैनं भक्तमुद्धरिष्य इत्याकारकं तेन नानुपपत्तिशङ्केत्यर्थः।

२६३-३ ननु पूर्वोक्तव्याख्याने को दोषो येनाथवेत्यादि विधान्तरेण व्याख्यायत इत्याकाङ्क्षायां तस्मिन् व्याख्याने संभावितं दोषमाहुः–**यद्यपीति**। **इतरनिष्ठा**–कर्मज्ञानादिनिष्ठा। **न दोष इति**। दृष्टान्तवैषम्यं नेत्यर्थः।

—४ **नीचकक्षापादनमिति**। पक्षान्तरम्–ॐकारनिदर्शनपक्षः। एवं च साक्षान्मोक्षदायि प्रणवस्य क्षुद्रकामसाधककर्माङ्गमन्त्रादावुपयोगवत् वृतस्यापि ज्ञानादिनिष्ठान्तरसंबन्धो मर्यादामार्गरक्षणार्थत्वान्न दोषावह इत्यर्थः।

—६ **काचिदिति**। दृष्टान्तस्तु वादिनिग्रहायेति सूत्रकाराशय इत्यर्थः।

**सूत्रार्थः**—शास्त्रविधानानुसारं यथैक एव मन्त्रो बहुकर्मसु विनियुज्यते कश्चिद् द्वयोः कश्चिच्चैकत्रैव कर्मणि तथा भगवदिच्छया जीवोपि कश्चित्क-

र्मनिष्ठाप्राप्त्यनन्तरं वरणेन भक्तिनिष्ठां प्राप्नोति कश्चित्तु ज्ञाननिष्ठामेव प्राप्य तथा कश्चित्तु प्रथमत एव भक्तो म्रियत इति न विरोध इति ॥ ५६ ॥

इत्यष्टादशमधिकरणम् ।

---

## भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ३।३।५७ ॥

—९ प्रासंगिकं विचार्य पुनः प्रकृतशेषं विचारयितुमधिकरणं तदुपयोगि संशयादिकमाहुः—नन्विति ।

—११ तद्रूयत्-भूमस्वरूपम् ।

—१५ स भावः—सर्वात्मभावः ।

—१८ सिद्धान्त इति । भूमपदेन सर्वातिशायी सर्वात्मभावसहितः परमात्मोच्यते । यथा घटेन जलमानयेति वाक्ये घटपदेन छिद्रादिरहित-घटस्यैव ग्रहणम् ।

२६४-३ उच्यते-भाविस्वरूपमादायोच्यते । इदं भाविस्वरूपमादा-योक्तं न विद्यमानस्वरूपमादायेत्यत्र गमकमाहुः— अत्रेत्यादि । श्रुतिस्तु-यो वै भूमा तत्सुखमित्यस्यानन्तरं पठ्यमाना ।

—८ न वदेदिति । अयमर्थः । यदि भूमपदेन मोक्षावस्थाभिप्रेता स्याच्छ्रुतेस्तर्हि सा त्रिविधा वृत्तीर्न वदेत् । तत्र प्राणादिनामान्तानां च संबन्धं न वदेत् । मोक्षावस्थायामेतदुभयाभावात् । तथैव भूमपदेन जीव-न्मुक्तिरपि नाभिप्रेता यतोत्र श्रुतावात्मनः प्राणा इत्युक्तं तदसंगतं स्यात् । जीवन्मुक्तौ तु प्रारब्धवशात्पूर्वप्राणानामेव सत्त्वात् । अयमर्थः पूर्वाधिकरणेन गतार्थ इत्यरुचेराहुः-यद्वेति ।

—९ श्रूयन्ते-साहित्यग्रन्थेषु भरतसूत्रादौ चोच्यन्ते ।

—१० अलौकिकज्ञानादिभ्यः- लोकविलक्षणाक्षरज्ञानविदेहमुक्तिजी-वन्मुक्तिभ्यः ।

—१५ आतञ्चनं-दधिभावार्थं पयस्याम्लद्रव्यनिक्षेपः ।

—१७ लौकिकप्रमाणाप्राप्तत्वादिति । वेदेन तथा कर्तुमादिष्टत्वा-दित्यर्थः । अलौकिकतत्प्राप्तत्वात्-वैदिकप्रमाणबोधितत्वात् ।

—१९ ताद्रूप्यं-आरण्यसिंहरूपत्वम् ।

—२१ भगवद्भाववदित्यादि । भगवति भाववान् विगाढभाववान्यो भक्तस्तत्प्रीतिं संपादयितुमित्यर्थः । अर्हतीति । तदुक्तं कामसूत्रसमाप्ति-ग्रन्थे वात्स्यायनेन ।

तदेतद्ब्रह्मचर्येण परमेण समाधिना ।
विहितं लोकयात्रार्थं न रागार्थोऽस्य संविधिः ॥
रक्षन् धर्मार्थकामांस्त्रीन् संपश्यन् लोकवर्तिनीम् ।
अस्य शास्त्रस्य तत्त्वज्ञो भवत्येव जितेन्द्रियः ॥

इति ।

—२२ अत्र–उक्तार्थस्य प्रकृतश्रुत्यभिप्रेतत्वे ।

२६५–२ तथात्वं–सर्वसाधनाधिक्यम् ।

सूत्रार्थः–सर्वात्मभावस्य सर्वोत्कृष्टत्वं ज्ञेयम् । किंच यथा दर्शपूर्णमासादिषु दोहनादिकर्मणां लौकिककर्मतुल्यत्वेपि लौकिकत्वं न तद्वत्सर्वात्मभावस्य न लौकिकत्वम् । आत्मनः प्राणा इति श्रुतिः सर्वात्मभाववतो भगवत एव सर्वमिति दर्शयतीति ॥ ५७ ॥

इत्येकोनविंशमधिकरणम् ।

---

## नाना शब्दादिभेदात् ॥ ३।३।५८ ॥

—५ संगतिं द्योतयन्तोऽधिकरणमवतारयन्ति–पूर्वाधिकरणैरिति ।

—६ समस्येति । समुदायेनेत्यर्थः ।

—८ अनुपासनालक्षणेत्यादि । अनुपासना–उपासनाभावस्तत्स्वरूपावज्ञासंभवात् । अस्या अपि–एकस्या अपि ।

—११ आकारकर्मणामिति । आकारा हस्तपादादियुक्ताः कर्माणि रावणहननादीनि । तेषामित्यर्थः ।

—१२ सूचित इति । एवं च व्यस्तोपासनैव कार्येति सिद्धम् ।

सूत्रार्थः—सर्वावतारेषु पृथगेवोपासना कार्या न सर्वावताराविशिष्टस्यैकस्यैव ब्रह्मणः । तत्तत्स्वरूपसंबन्धिनां मन्त्राणामाकाराणां चरित्राणां च भेदादिति ॥ ५८ ॥

इति विंशमधिकरणम् ।

---

## विकल्पो विशिष्टफलत्वात् ॥ ३।३।५९ ॥

—१५ अग्रिममधिकरणमवतारयन्ति–पा[illegible]स्येनेति । विचार्यत इति । उपोद्घातसंगत्येत्यर्थः ।

—१८ अविशिष्टं–समानम् ।

—२० अप्रयोजकत्वात्–फलप्राप्तावप्रयोजकत्वात् ।

—२१ विकल्प एवेति । समुच्चये प्रयोजकत्वदोषापत्त्या विकल्प एव श्रेष्ठ इत्यर्थः ।

सूत्रार्थः—पृथक्तया कर्तव्यानामुपासनानां विकल्पो न तु समुच्चयः। मोक्षफलसिद्धौ सर्वासां साम्यादिति ॥ ५९ ॥

इत्येकविंशमाधिकरणम् ।

---

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥३।३।६०॥

२६६—२ **अविशिष्टफलत्वाभावात्**-समानफलत्वाभावात् ।

—३ **श्रूयत इति**। यथा भार्गव्यां विद्यायां-य एवं वेद प्रतितिष्ठति, अन्नवानन्नादो भवति महान् भवतीत्यादि श्रूयते। **तथैव**-सकलफल-कामनावत्तया ।

—४ **न समुच्चीयेरन्निति**। एवं च समानफलकमुपासनान्तरं नानुष्ठेय-मित्यर्थः। **श्लिष्टप्रयोगेत्यादि**। सूत्रे नवेत्यनेन श्लिष्टः प्रयोगः कृतः इत्यर्थः।

**सूत्रार्थः**—काम्योपासनासु तु कामनानुसारं समुच्चयः। यत्र त्वेकयैवोपा-सनया स्वेष्टानेकफलसिद्धिस्तत्र हेत्वभावात्समुच्चयो नेति ॥ ६० ॥

इति द्वाविंशमधिकरणम् ।

---

## अङ्गेषु यथाश्रयभावः ॥३।३।६१॥

—११ प्रसङ्गसंगत्याधिकरणमिदमित्याशयेनाहुः। **प्रधानेष्विति**। **एका-र्थसाधकानां**-एकफलसाधकानाम् ।

—१३ **तदेव**-उपासनमेव ।

**सूत्रार्थः**—यत्र यदङ्गविशिष्टमुपासनमाम्नातं तत्र तदङ्गविशिष्टं कार्यं न त्वन्यत्राम्नातानामन्यत्रोपसंहारः कार्य इति ॥ ६१ ॥

## शिष्टेश्च ॥ ३।३।६२ ॥

—१५ **अत्र**-अन्योपासनाङ्गानामन्यत्र समुच्चयाभावे ।

**सूत्रार्थः**— तदङ्गानां तत्रैवोपदेशादन्यत्रोपासने प्रमाणाभाव इति ॥६२॥

इति त्रयोविंशमधिकरणम् ।

---

## समाहारात् ॥ ३।३।६३ ॥

—२२ सूत्रप्रयोजनमाहुः-**कर्ममार्गीयेत्यादि**। कर्माङ्गतया कर्ममार्गी-यसामाद्युपासन इत्यर्थः।

**सूत्रार्थः**—ज्ञानमार्गे सर्वावतारधर्माणां समाहारात्सर्वधर्मविशिष्टोपासनं कार्यमिति ॥ ६३ ॥

## गुणसाधारण्यश्रुतेश्च ॥ ३।३।६४ ॥

**सूत्रार्थः**—ऐश्वर्यादिगुणास्तु सर्वावतारेषु श्रूयन्त इत्येकस्मिन्नवतारे सर्वावतारधर्मोपसंहारो युक्त इति ॥ ६४ ॥

इति चतुर्विंशमधिकरणम् ।

---

## न वा तत्सहभावश्रुतेः ॥ ३।३।६५ ॥

२६७-१० प्रसङ्गसंगत्याधिकरणमवतारयन्ति-**नन्विति** । **एवमुपासनं**-सर्वरूपत्वेनैकावतारोपासनम् ।

—१२ **चेत्स्यादिति** । दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेतिवत् सहभावः श्रुतः स्याच्चेदित्यर्थः ।

**सूत्रार्थः**—एकावतारे सर्वावतारयुक्तोपासनैच्छिकी न नित्या । रूपाणां नियतत्वेन तत्सहभावाश्रवणादिति ॥ ६५ ॥

## दर्शनाच्च ॥ ३।३।६६ ॥

अत्र सूत्रे पूर्वसूत्रात्तत्पदमनुवर्तते ।

—१६ **मत्वा**-निश्चित्य ।

—१८ **एतद्दृष्टान्तेन**-दर्शनदृष्टान्तेन ।

—१९ **व्यासहृदयं**-व्यासाभिप्रायः ।

—२१ ननु यद्येकस्यैव रूपस्य दर्शनं तर्हि सर्वरूपोपसंहारः किमर्थं बोधित इत्यत आहुः-**माहात्म्येत्यादि** ।

—२२ **कैश्चित्**-स्मृतिपुराणवाक्यैः । **तदपि**-सर्वरूपोपसंहरणमपि ।

**सूत्रार्थः**—भक्तिमार्गीयस्य स्वधर्मविशिष्टैकावतारोपासनं युक्तं तावतैव फलप्राप्तेरिति ॥ ६६ ॥

इति पञ्चविंशमधिकरणम् ।

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालबोधिन्यां तृतीयाध्यायस्य तृतीयः पादः ॥ ३।३ ॥

---

# अथ चतुर्थः पादः ॥ ३।४ ॥

## पुरुषार्थोतःशब्दादिति बादरायणः ॥ ३।४।१ ॥

२६८-४ चतुर्थपादं व्याचिख्यासवः प्रसङ्गसंगतिं बोधयितुं पूर्वपादार्थमनूद्यैतत्पादार्थमाहुः-उपसनाभेद इत्यादिना ।

—६ **प्राप्नोतीति** ।

यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत् ।

इति गीतावाक्यात्कर्मोपसंहार उपासनोपकारकतया प्राप्नोति । **न वेति** । यमेवैष वृणुते तेन लभ्य इति श्रुत्या साधनान्तरनिरासात्कर्मोपसंहारो न प्राप्नोतीति वेत्यर्थः ।

—७ **विधिपक्षे**-उपसंहारप्राप्तिपक्षे । **अस्य**-सर्वात्मभावस्य ।

—८ **निषेधपक्षे**-उपसंहारनिषेधपक्षे ।

—१६ शब्दशब्दप्रयोगे तात्पर्यमाहुः—**अत्रेत्यादिना** ।

—२२ **अभिमतं**-तात्पर्यतया संमतम् ।

—२३ **अप्रामाणिकत्वम्**-वेदादिप्रमाणतात्पर्यानभिज्ञत्वम् । **स्वना**म-बादरायणेति यौगिकनाम । शैलीयमाचार्य्याणां यत्स्वनामग्रहणसमये यौगिकनाम गृह्णन्ति । अतएव महाभाष्ये स्वनामग्रहणप्रसंगे पतञ्जलिना गोनर्दीयस्त्वेवमाहेति तत्र तत्रोक्तम् । तेन च

आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥

इति स्मृतिनिषेधोपि परिपालितो भवति । स्मृतौ नाक्षत्रिकनामग्रहणस्यैव निषेधात् ।

—२४ **तत्रैव**-वेदादिप्रमाणशब्द एव । **भरः**—आसक्तिः ।

२६९-१ **अन्यैः साधनैः**-मर्यादामार्गीयकर्मज्ञानविहितभक्तिरूपैः साधनैः ।

—३ **एवं सति**-उक्तार्थस्य सूत्रतात्पर्यविषयीभूतत्वे सति । एवं च व्याख्यानद्वयेन केवलविद्यैव पुरुषार्थपर्यवसायिनी । पुरुषोत्तम एव परम पुरुषार्थ इति बोधितम् ।

**सूत्रार्थः**—अतः परं नान्यदित्यतःपदघटितश्रुतिवाक्यात्पुरुषार्थो भगवानेवेति बादरायणमतामिति ॥ १ ॥

## शेषत्वात् पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ ३।४।२ ॥

—९ प्रत्यवातिष्ठत इति । पूर्वोक्तार्थे जैमिनिः प्रतिकूलतयावस्थितो भवतीत्यर्थः ।

—११ कर्मशेषत्वात्-कर्माङ्गत्वात् । तत्स्वरूपेति । विष्णुस्वरूपेत्यर्थः। तत्-माहात्म्यम् ।

—१४ श्लोकं-कीर्तिम् ।

—१६ वर्म-कवचम् । भ्रातृव्याभिभूत्यै-शत्रुपराजयाय । अयमर्थो जैमिनिना चतुर्थाध्यायतृतीयपादे वर्णितः ।

सूत्रार्थः-यथा द्रव्यगुणकर्मस्वर्थवादः । तथात्मनिरूपणं वेदान्तगतं पुरुषसंबन्ध्यर्थवादरूपमिति जैमिनेर्मतमिति ॥ २ ॥

## आचारदर्शनात् ॥ ३।४।३ ॥

—१९ प्रव्रजन्ति-संन्यस्यन्ति ।

—२१ त्वदुक्तं-जैमिन्युक्तम् ।

—२२ उत्तरं-जैमिन्यभिमतमुत्तरम् ।

—२४ आचारप्रदर्शनस्य हेतुमाहुः-ब्रह्मविदामपीति ।

—२५ मनुत इति । यदेव विद्यया करोतीति श्रुतेः ।

२७०-२ उक्तश्रुतिस्तु-तमेव विदित्वेति श्रुतिस्तु ।

सूत्रार्थः-वासिष्ठादिब्रह्मज्ञानिनामप्यग्निहोत्राद्याचारदर्शनाज्ज्ञानेन कर्मबाधो नेति ॥ ३ ॥

## तच्छ्रुतेः ॥ ३।४।४ ॥

सूत्रार्थः-जनको ह वैदेह इति श्रुतेर्ब्रह्मविदा जनकेन यज्ञकरणाज्ज्ञानेन कर्मबाधो नेति ॥ ४ ॥

## समन्वारम्भणात् ॥ ३।४।५ ॥

सूत्रार्थः-तं विद्याकर्मणी समन्वारभेते इति श्रुतौ ज्ञानकर्मणोः साहित्येन फलारम्भकत्वदर्शनान्न ज्ञानेन कर्मबाध इति ॥ ५ ॥

## तद्वतो विधानात् ॥ ३।४।६ ॥

—१६ कल्पश्रुत्या-याज्ञिकसूत्रेण ।

सूत्रार्थः– ब्रह्मिष्ठो ब्रह्मेति कल्पसूत्रेण ज्ञानवतो ब्रह्मत्वेन वरणकथनाज्ज्ञानं कर्मशेषमेवेति ॥ ६ ॥

## नियमाच्च ॥ ३।४।७ ॥

—१८ विरजेत्–संसाराद्विरक्तो भवेत् ।

—२० शेषशेषिभाव इति । कर्म शेषि ज्ञानं शेषम् । एवंच न ज्ञानस्य कर्माङ्गत्वमित्यर्थः ।

—२४ सोमपीथः– सोमपानम् । तत्यागे–कर्मत्यागे ।

२७१–२ नियतस्य– वेदेन नित्यतया बोधितस्य ।

—४ स्मृतिः– गीतावाक्यम् । प्राप्ते– जैमिनिमतेन ज्ञानस्य कर्माङ्गत्वे प्राप्ते ।

सूत्रार्थः— यावज्जीवमग्निहोत्रनियमात्कर्माकरणे प्रायश्चित्तविधानाच्च ज्ञानं कर्माङ्गमिति ॥ ७ ॥

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ३।४।८ ॥

—५ प्रतिवदति– व्यासो जैमिनिमतं खण्डयति ।

—७ पूर्वपक्षं–इज्यत्वादीश्वरः कर्माङ्गमिति जैमिनिमतम् ।

—८ कर्मसाम्यमिति । ब्रह्मणि कर्मसमन्वमित्यर्थः ।

—९ तच्छेषत्वं–कर्माङ्गत्वम् ।

—१५ इत्यादीति । बृहदारण्यके शारीरब्राह्मण इयं श्रुतिः पठ्यते । एवं सति–अनया श्रुत्या तृतीयाविभक्त्यन्तत्वेन यज्ञादीनां साधनत्वकथनात् कर्मणां भगवज्ज्ञानाङ्गत्वे कथिते सति । यज्ज्ञानसाधनत्वं–भगवज्ज्ञानसाधनता । तस्य–भगवतः ।

—१६ तद्वेदनशेषत्वं–तज्ज्ञानाङ्गत्वम् । अयं भावः । यस्य भगवतो ज्ञाने यज्ञादिकर्माणि साधनानि स भगवांस्तज्ज्ञानं वा कर्मशेषं कथं भवेत् । अतो यत्सिद्धं तदाहुः–एतेनेति ।

—१७ प्रत्युक्तं–समाहित । तद्विशिष्टस्येति । इज्यत्वेन यद्ब्रह्मज्ञानं तद्विशिष्टस्य कर्मण इत्यर्थः । तद्शेषत्वमिति । न तदनङ्गत्वम् । अपि तु ज्ञानस्य कर्माङ्गत्वमेवेति पूर्वपक्षः ।

—२२ तदसंभवात्–यज्ञादिकर्मासंभवात् । नन्वीश्वरस्य कर्तृत्वं शते पञ्चाशदितिन्यायेन यज्ञादिष्वप्यस्ति यतो यः सृष्टिं करोति स तदन्तर्गतयज्ञादीनपीति तस्य कर्मशेषत्वसंभव इत्यत आहुः–यश्चेति । यः–ईश्वरः ।

—२३ तथात्वं-कर्मशेषत्वम् । जीवब्रह्मैक्यरूपमेकदेशिमतमादाय शङ्कासमाधाने रचयन्ति-न चैतयोरित्यादिना ।

—२४ तथात्वस्य-कर्मशेषित्वस्य ।

—२५ निरस्तत्वादिति । जीवब्रह्मणोरौपाधिको भेदो वस्तुतस्त्वभेद इति मतं द्वितीयाध्यायतृतीयपादे-अंशो नानाव्यपदेशात्-(ब्र. सू. २।३।४३) इति सूत्रे निरस्तम् । पुनः श्रुत्यन्तरमादाय कर्मशेषत्वं निरस्यन्ति ।

२७२-१ न कर्मणेति । इयं श्रुतिर्बृहन्नारायणोपनिषद्यणोरणीयानित्यनुवाके ।

—१४ भक्तिमार्गस्य चेति । चकारो ज्ञानमार्गं समुच्चिनोति । मतान्तरीयस्यैतद्व्याख्यानस्यायुक्तत्वं बोधयन्ति-श्रुतय इति ।

—१५ न व्याख्यानमिति । श्रुतयः शारीरादधिकं परमात्मानं दर्शयन्तीति व्याख्यानमयोग्यमित्यर्थः ।

—१६ तन्मतं-जैमिनीयं मतम् । सोपि निष्कामकर्मणां परंपरया ज्ञानमार्ग उपयोगोपि ।

सूत्रार्थः—जैनिमतमयुक्तम् । स वा अयमिति श्रुत्या भगवतः सर्वाधिक्येन कथनात् । एवं बादरायणेन कर्मादिभ्य आधिक्येनैव भगवतो भक्तिमार्गस्य तत्संबन्धिसर्वात्मभावस्य चानुभवस्य गृहीतत्वादिति ॥ ८ ॥

## तुल्यं दर्शनम् ॥ ३।४।९ ॥

—२१ ब्रह्मण इति । इदमुपलक्षणं तेन ब्रह्मणो ब्रह्मविदायाश्चेति बोध्यम् ।

—२२ त्यागदर्शनात्-कर्मत्यागदर्शनात् ।

—२३ एनेनेति । ब्रह्मविद्भिः शुकादिभिः कर्मत्यागकरणात् । यद्विदांभगवज्ज्ञानिनाम् । तस्य-भगवतः ।

—२५ अतथात्वात्-असमर्थत्वाभावात् ।

सूत्रार्थः—यथा जनकादीनां कर्मकरणं तथा शुकादीनां कर्मत्यागो दृश्यते । एवं चाचारस्य तुल्यत्वाज्ज्ञानं न कर्माङ्गमिति ॥ ९ ॥

## असार्वत्रिकी ॥ ३।४।१० ॥

२७३-३ एतद्ध स्मेति । इयं श्रुतिर्बृहदारण्यके शारीरब्राह्मणे । एतावदिति तु तत्रैव मैत्रेयीब्राह्मणे ।

**सूत्रार्थः**—सर्वैर्ब्रह्मविद्भिः कर्म क्रियत इति तु श्रुतौ न निरूप्यतेतो-सार्वत्रिकी श्रुतिरिति ॥ १० ॥

## विभागः शतवत् ॥ ३।४।११ ॥

—१६ **निरूपयन्ति**—बोधिकेत्यस्य पदस्य श्रुतिरित्यनेन संबन्धः ।

—१७ **अत एव**- अधिकारतारतम्याभिप्रायादेव ।

—१८ **प्रकृते**-कर्मसंन्यासविभागे ब्रह्मविदाचारविभागे वा ।

—१९ **अत्र**- भगवद्भावतारतम्ये ।

**सूत्रार्थः**—यथाधिकारितारतम्येन तैत्तिरीयश्रुतौ शतगुणितानन्दा उक्ता एवं जनकशुकादिकर्मात्यागत्यागहेतुर्भगवदनुग्रह एवाधिकारतारतम्यरूप इति ॥ ११ ॥

## अध्ययनमात्रवतः ॥ ३।४।१२ ॥

— २६ **प्रत्ययस्य**-ब्रह्मिष्ठेतिपदगतेष्ठन्प्रत्ययस्य ।

२७४-३ ननु तादृशाध्ययनवान् दुर्लभस्ततश्च प्रतिपक्षान्तभाविदर्श-पूर्णमासयोरसंपत्त्यापत्तिरित्यरुचेराहुः-अथवेति । ब्रह्मविदः—शाब्दापरो-क्षब्रह्मवियावतः

—४ **तदन्तःपातित्वेन**—वेदान्तर्गतत्वेन ।

—५ **अवर्जनीयत्वादिति** । ब्रह्मज्ञानमनायत्या प्राप्तं भवेदित्यर्थः ।

—७ **तथा सति**—शब्दतः शर्करारसप्रत्यक्षे सति । **तत्कार्यं**—शर्कराकार्यम् ।

—८ **एवमिति** । शर्कराशाब्दज्ञानेन पित्तोपशमस्तु न भवतीत्यर्थः । **अतः**—उपनिषच्छाब्दज्ञानस्य ब्रह्मज्ञानत्वाभावात् ।

**सूत्रार्थः**-वेदाध्ययनमात्रवतः कर्मण्यधिकारो न तु ब्रह्मविदोपीति ॥१२॥

## नाविशेषात् ॥३।४।१३॥

—१९ **आश्विनमित्यादीति** । आश्विनं धूम्रललाममालभेतेत्यादि-श्रुतिभ्यः ।

—२० **त्याग इतीति** । एवं च यथा कर्मकरणश्रुतावकरणनिन्दा श्रूयते न तथा त्यागश्रुताविति भावः ।

—२४ तत्क्रातिनियमः-कर्मकरणनियमात् ।

—२५ व्याख्यानान्तरमाहुः-अथवेति । द्वितीये तस्मिन्- क्रमप्राप्ते गृहस्थाश्रमे ।

—२६ तत्र—कर्मकरणे ।

—२७५-१ उत्सूत्रं—सूत्राद्बहिरेव ।

—२ निर्विद्येत-वैराग्यं लभेत । अस्मिन् द्वितीयव्याख्याने यतिगृहस्थयोर्वैराग्ये विशेषाभावात्कर्मनिरपेक्षतयैव ब्रह्मविद्यासंभवात्कर्मणामप्रयोजकत्वान्न कर्मापेक्षेति भावः ।

—६ एतेनेति । वैराग्यहेतुककर्मत्यागमात्रस्यैव ज्ञानहेतुत्वेनेत्यर्थः ।

—८ तच्छेषत्वं-कर्माङ्गत्वम् ।

सूत्रार्थः—न कर्मणेति श्रुतौ मोक्षप्राप्तौ कर्मत्यागनियमदर्शनात्कर्मनियामकतत्त्यागबोधकयोः श्रुत्यभिमतत्वाविशेषान्न कर्मनियमो बाधक इति ॥ १३ ॥

## स्तुतयेनुमतिर्वा ॥३।४।१४॥

—९ उत्सूत्रं किंचिदाशङ्क्य निराकृतं सूत्रकृतेति मन्वानाः सूत्रमवतारयन्ति- अथेति । ग्राहिलतया-अन्धश्रद्धाग्रहाविष्टतया ।

—१२ एतादृशाविति । उत्कृष्टावित्यर्थः ।

—१४ उक्तानुपपत्तिभिरिति । कर्मत्यागबोधकश्रुत्यनुपपत्तेरित्यर्थः ।

सूत्रार्थः--ब्रह्मिष्ठस्य ब्रह्मत्वेन दर्शपूर्णमासयोः स्तुत्यर्थं ब्रह्मविदोनुमतिस्तत्र न तु तस्यैवाधिकार इति नियम इति ॥ १४ ॥

## कामकारेण चैके ॥३।४।१५॥

—१६ ब्राह्मणस्य-ब्रह्मविदः ।

—१८ स च-निषेधः । प्राप्तिपूर्वक इति । अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात् ।

—२० परानुग्रहार्थमिति । परेण केनचित्प्रार्थिते सति तदिच्छापूरणार्थं स्वेच्छापूर्वकं ज्ञानिनः कर्मेत्यर्थः । इच्छामात्रेणेति ।

'शौचमाचमनं स्नानं न तु चोदनया चरेत् ।
अन्यांश्च नियमान् ज्ञानी यथाहं लीलयेश्वरः'॥

इति भगवद्वाक्यात् ।

—२३ प्रकारान्तरमाहुः—अथवेति ।

—२४ प्राप्तवृद्धिह्रासयोः-प्राप्तयोर्वृद्धिह्रासयोः ।

**सूत्रार्थः**-परानुग्रहार्थमिच्छया यत्करणं तेन प्राप्तयोर्गुणदोषयोर्निवारणार्थमेतदेष नित्यो महिमेति वाक्यमेके शाखिनः पठन्ति न त्वेतावता कर्मकरणमिति नियम इति ॥ १५ ॥

## उपमर्दं च ॥ ३।४।१६ ॥

—२७६-५ उपमर्दं—विनाशम् ।

**सूत्रार्थः**-तत्केन कं पश्येदित्यादिनैके शाखिनोखण्डब्रह्मभाने कर्म तदधिकारादीनामुपमर्दं पठन्ति । एवं च ज्ञानस्य कर्माङ्गत्वं निरस्तमिति ॥१६॥

## ऊर्ध्वरेतःसु च शब्दे हि ॥ ३।४।१७ ॥

—१२ रागितद्रहितेति । संसारासक्तो रागी तद्भिन्नश्चेति विषयभेदेन । भगवदनुग्रहेत्यादि । भगवदनुग्रहविशेषाज्जायमाना चित्तशुद्धिस्तद्विशेषाज्जायमानमुपनिषदर्थपरिज्ञानम् ।

—१६ उरीकार्यः-स्वीकार्यः ।

—१७ तद्वतां-ज्ञानिनाम् ।

—१८ तदाश्रमीणमिति । शौचाचमनस्नानाष्टग्रासभक्षणादिरूपं संन्यासाश्रमकर्म । विपरीतः- ब्रह्मविद्यायाः कर्माङ्गत्वाभावरूपः ।

—१९ एतच्छेषभूतं-संन्यासाश्रमीणकर्माङ्गभूतम् । तदसहकृतं-वैराग्यासहकृतम् ।

—२५ धर्मिग्राहकमानाविरोधादिति । धर्मि-कर्मशेषत्वेन मुख्यत्वेन च संदिह्यमानं ज्ञानं तद्ग्राहकमानं तत्स्वरूपबोधिका श्रुतिः सा मोक्षरूपफलं प्रति ज्ञानं साक्षादेव कारणमिति वदति तेन ज्ञानस्य कर्मशेषत्वाङ्गीकारे तस्या विरोध इत्यर्थः ।

२७७-१ एवं-केवलं ज्ञानस्य कारणत्वे ।

—४ पञ्चम्या-संन्यासयोगादिति पञ्चम्या ।

—६ पुष्टिमार्ग इति । एवं च मार्गभेदान्न दोष इत्यर्थः ।

**सूत्रार्थः**—यदहरेव विरजेदिति श्रुत्या संन्यासविधानात्संन्यासिषु कर्माभावोङ्गीकार्यः । एवं च कर्माङ्गत्वं ज्ञानस्य न । ज्ञानस्वरूपस्य श्रुत्येकसमधिगम्यत्वात्संन्यासाश्रमकर्मशेषत्वमपि ज्ञानस्य नेति ॥ १७ ॥

परामर्शं जैमिनिरचोदना चापवदति हि ॥ ३।४।१८ ॥

—१० स्थूणानिखननन्यायेन पूर्वोक्तमेव सिद्धान्तं दृढीकर्तुं जैमिनिमतमुत्थापयति सूत्रकार इत्याशयेन पूर्वसिद्धानुवादपूर्वकं व्याख्यान्ति-ऊर्ध्वरेतःसु चेति। तस्य-ज्ञानस्य।

—१२ तस्याः—ब्रह्मप्राप्तेः।

—१३ न तु कर्मणीति। कर्मकरणे तु न तात्पर्यमित्यर्थः। तस्य-कर्मणः। जीवश्रेयोनिमित्तं-मुक्तिनिमित्तम्।

—१४ अन्यथा-श्रुतीनां जीवश्रेयोर्थत्वाभावे। निषेधविधिरिति। न कलञ्जं भक्षयेदित्यादिरूपोनर्थनिवारणविधिः।

—१६ मोहकशास्त्रप्रवर्तक इति। तदुक्तं पद्मपुराण उत्तरखण्डे मोहकशास्त्रकथनप्रस्तावे।

द्विजन्मना जैमिनिना पूर्वं वेदमपार्थतः।
निरीश्वरेण वादेन कृतं शास्त्रं महत्तरम्॥'

इति। पराशरोपपुराणेपि

'अक्षपादप्रणीते च काणादे सांख्ययोगयोः।
त्याज्यः श्रुतिविरुद्धोंशः श्रुत्येकशरणैर्नृभिः॥'

जैमिनीयं च-

इत्युक्तम्। अङ्गहीन एव-अन्धादिपुरुष एव। चोदनाबोधकेत्यादि। विधिबोधकलिङ्लोट्तव्यदादिप्रत्ययान्तपदाभावात्।

—२७८-४ अतथात्वात्-विधिसंबन्धाभावात्।

सूत्रार्थः—पूर्वपक्षसूत्रम्। किं प्रजयेत्यादिश्रुतिभिर्मोक्ष एव परमफलत्वेन परामृश्यते तं परामर्शं जैमिनिर्ज्ञानस्याविधेयत्वात्तदाविधिरपि च बाधेते। अतो जैमिनिसंमत्या विधिबलाच्च कर्मैवानुष्ठेयमिति॥ १८॥

अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ ३।४।१९ ॥

—६ तदेव-कर्मैव। ननु साम्यश्रुत्या ज्ञानस्याप्यावश्यकत्वं प्राप्यते।

—१२ न नु कर्मापवादस्तथा सति विद्वद्वाक्योक्तज्ञानवद्वेदान्तोक्तब्रह्मज्ञानस्यापि कर्माङ्गत्वमशक्यवारणमत आहुः-एतदिति। उक्तं व्यासेनेति शेषः।

—१७ ब्रह्मचर्यादिकमिति । उपनयनाभावाद्ब्रह्मचर्याश्रमधर्मादिकं नेत्यर्थः । एवंच प्रव्राजिनो लोकमभीप्सन्त इति श्रुतिं दृष्ट्वापि यदेवं निन्दामात्रेण साम्यकथनं व्यासस्य तदापातत एव । फलस्य-आत्मलाभरूपफलस्य ।

—१८ एवं-कर्मणां ज्ञानद्वारा मोक्षोपयोगित्वम् ।

—२१ एवं सति-कर्मणामात्मसुखसाधकत्वे सति ।

—२३ एवं-सकलकर्मणां ज्ञानार्थत्वमित्येवं रूपः ।

—२४ तन्निर्वाहकत्वात्-नित्यकर्मसंपादकत्वात् । तच्छेषत्वेन-नित्यकर्माङ्गत्वेन ।

—२५ एवं सति-सर्वकर्मणां ज्ञानार्थत्वे सिद्धे सति ।

—२७ तदुच्छेदः-आश्रमान्तरोच्छेदः । तद्विधीति । आश्रमान्तरविधेर्वैयर्थ्यमित्यर्थः । अनधिकृतं- अनधिकारिणम् ।

२७९-१ समाहितिः-समाधानम् ।

—८ ऋणत्रयापाकरणमिति ।

ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत् ।

इति श्रुत्युक्तम् ।

—१० बाधक इति । ज्ञानपक्षे बाधक इत्यर्थः । श्रूयत इति । ज्ञानविधिरित्यर्थः ।

—१३ इतरज्ञानस्य-ब्रह्मातिरिक्तज्ञानस्य । तथात्वेपि-पुरुषयत्नासाध्यत्वेपि ।

—१४ अन्यतः-श्रुत्यतिरिक्तप्रमाणतः ।

—१६ कर्मचोदनास्वप्येतत्सममिति बोधयन्ति-एवमिति ।

—१७ स प्रयत्नः-यागाभिव्यङ्ग्यप्रयत्नः ।

—१८ अन्याप्राप्तत्वात्- विध्यतिरिक्ताप्राप्तत्वात् । अस्मिन् व्याख्याने ज्ञानाङ्गत्वेन कर्म कर्तव्यमिति सिद्धम् ।

—२० एतदेव विधिर्वा धारणवत् (ब्र. सू. ३।४।२०) इत्यत्रापिप्रतिपाद्यं तेनान्यतरवैयर्थ्यं स्यादित्यरुचेराहुः- अथवेति ।

—२३ एवं सति-उभयनिन्दासत्त्वे ।

—२४ मिथोविरोधादिति । कर्माङ्गकामस्य ज्ञानाङ्गशान्त्यादेश्च विरोधेनाङ्गिनोः कर्मज्ञानयोः परस्परं विरोधादित्यर्थः ।

२८०-८ तथात्वाभावेन-कर्मकर्तृत्वाभावेन।

—९ भर्जनस्येवेति। भृष्टानां बीजानां प्ररोहाभावाद्भर्जनं यथा। व्रीहिवपनाङ्गं न भवति तथेति व्यतिरेके दृष्टान्तः। अन्येषां-ब्रह्मज्ञानशून्यानाम्।

—१० तथात्वात्-कर्मकरणासंभवात्।

सूत्रार्थः—उत्तरपक्षसूत्रम्। बादरायणोऽनुष्ठेयं कर्मापवदति। कर्मविधित्यागयोः श्रुत्युक्तत्वसाम्यादिति॥ १९॥

## विधिर्वा धारणवत् ॥ ३।४।२०॥

-१३ एवं सति-कर्माकरणे ज्ञानिनामज्ञानिनां च प्राप्ते सति।

—१५ तत्साधनत्वेन-समाधिसाधनत्वेन। ततः किंचनेति वाक्यं श्रीमद्भागवत एकादशस्कन्धे। तच्चापि चित्तबडिशमिति तत्रैव तृतीयस्कन्धे।

—१८ तथा-त्याज्यत्वम्।

—२२ उक्तानुपपत्त्येति। ज्ञानिनामज्ञानिनां च कर्मण्यप्रसक्त्या पूर्वकाण्डवैयर्थ्यमित्यात्मिकयानुपपत्त्येत्यर्थः। स्वानिन्द्यं-श्रुत्यनिन्दितस्थलीयम्। श्रुतिः-पूर्वकाण्डीयश्रुतिः।

—२३ इतरपदात्- अथेतरे दुःखमित्यादिश्रुतिस्थेतरपदाज्ज्ञानिभिन्नबोधकात्।

—२४ आवश्यकत्वादिति। एवं च ज्ञानिनो न कर्मणेति श्रुत्या कर्मत्यागोक्तिर्ज्ञानस्वरूपयोग्यस्यैव कर्मश्रुतिविषयस्यावश्यं प्राप्तेरित्यर्थः। इतरनिरपेक्षत्वेन-फलजनने कर्माद्याकाङ्क्षाराहित्येन।

—२५ स्वरूपोपकारित्वमिति। स्वरूपयोग्याधिकारिणो ज्ञाने चित्तशुद्धिद्वारोपयोगित्वमित्यर्थः। नन्वेवं कर्मणां ज्ञानाङ्गत्वेपि भक्त्यङ्गत्वे किं प्रमाणमत आहुः- तथा चोक्तमिति।

२८१-२ भक्त्यङ्गत्वस्य श्रौतत्वं स्पष्टयन्ति-एष नित्य इति।

—४ तस्यैवेति। तस्यैव पदवित्स्यादिति वाक्यस्थतस्यैवेति पदस्यार्थः।

—११ सर्वत्र-पदविच्छब्देपि।

—१३ साधनत्वात्-निष्कामकर्मणां परंपरया भक्तिसाधनत्वात्।

— १८ अनियमवाचीति। भगवदनुग्रहसत्त्वे भक्तिः प्रवचनादिकं नापेक्षते। तदभावे त्वपेक्षत इत्यनियमवाचीत्यर्थः।

—२० एतेन-पूर्वोक्तरीत्या विषयव्यवस्थापनेन।

—२२ अत एव-साधनबलेनाग्राह्यत्वादेव ।

—२६ उक्तसाधनैः-वेदानुवचनादिभिः ।

—२७ तत्कर्तॄणां-प्रवचनादिकर्तॄणाम् ।

२८२—१ न वदेदिति । एवं च मुनिरित्येकवचनश्रुत्या पूर्वकाण्डोपोद्बलनमेव क्रियते न तद्विरोध इति भावः ।

—३ ज्ञानं कस्याचिदेवेति यदुक्तं तत्राशङ्कते-तर्हीति ।

—८ तदेव कुर्वन्तीति । आपातत औत्सुक्यादेव कुर्वन्तीत्यर्थः । ननु भ्रमेण करणे पापभ्रमेण कृतं प्रायश्चित्तं यथा व्यर्थं तथेदमपीत्याशयेन शङ्कासमाधाने-नन्वित्यादि ।

सूत्रार्थः-यथा योगशास्त्रे मानसमूर्तेर्धारणं साधनत्वेन विधीयत एवं भक्तिसाधनत्वेनैव कर्मानुष्ठेयमिति विधीयते तेन न पूर्वकाण्डस्य वैयर्थ्यमिति ॥ २० ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ३।४।२१ ॥

—१३ ज्ञानस्तुतिरूपत्वादिति । एवं कर्मसाम्यकथनं ज्ञानांशेर्थवादरूपं न वास्तवं कर्मसाम्यमित्यर्थः ।

—१४ अन्यथा-ज्ञानिनां कर्माकरणे ।

—१६ निषेधेन-ज्ञानिनां कर्मकृतगुणदोषनिषेधेन । इतरसाधारण्यमिति । अज्ञानिनां यथा कर्मजन्यौ गुणदोषौ तथा ज्ञानिनां नेत्यर्थः ।

—१७ कर्मशेषत्वं-संन्यासाश्रमीणकर्माङ्गत्वम् ।

—१८ पदज्ञानस्य-पदविदिति श्रुत्युक्तपदज्ञानस्य । विधेयत्वमेवेति । यथा प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीति वाक्ये रात्रिसत्रीयप्रतिष्ठाफलकत्वस्यापूर्वत्वाद्विधेयत्वं नार्थवादत्वं तथात्रापि कर्मफलासंबन्धफलकत्वस्यापूर्वत्वाद्विधेयत्वमेव नार्थवादत्वमित्यर्थः ।

—२१ तयोः—ज्ञानकर्मणोः ।

—२२ एवं-अन्यार्थकथनम् ।

—२३ प्रेप्सोः—प्राप्तुमिच्छोः । पूर्वोक्तशङ्कामनूद्य परिहरन्ति-यद्येति ।

—२४ कर्मफलेत्यादि । अभावज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात्कर्मफलसंबन्ध विना तन्निषेधोनुपपन्न इत्यर्थः ।

—२५ तरणौ-सूर्ये। यतो वाचो निवर्तन्त इत्यत्राकुतोभयस्य भगवज्ज्ञानफलत्वेन श्रवणात् ततो न्यूनं कर्मफलसंबन्धाभावरूपं तत्प्रयोजनमिति कथनमसंगतमित्यरुचेराहुः—अथवेति।

२८३—१ तदाह-महत्त्वमाह।

—२ आद्यपदेन-एष नित्यो महिमेति वाक्यस्थैषशब्देन।

—६ तद्भजेत-पदं भजेत।

—८ सुस्थं-सुसंगतम्।

सूत्रार्थः—ज्ञानिनोपि कर्मकृतिस्वीकारादेष नित्यो महिमेति श्रुतिर्ज्ञानस्यार्थवादमात्रमिति चेन्न। ज्ञानिनः कर्मफलासंबन्धस्यापूर्वत्वेन विधित्वात्। एवं च विधेयत्वमेव तस्य नार्थवादत्वमिति ॥ २१ ॥

## पारिप्लवार्थ इति चेन्न विशेषितत्वात् ॥ ३।४।२२ ॥

—१० अतः परं त्रिसूत्र्याशङ्कां परिहरति सूत्रकार इत्याशयेनावतारयन्ति-अथेति।

—१४ तेषां-उपाख्यानानाम्।

—१५ अतथात्वात्। अप्राधान्यात्।

—१७ धर्मिण एवेति। धर्मिणो ज्ञानस्यैवाप्रयोजकत्वादासिद्धिरित्यर्थः। उक्तरीत्येति। इज्याङ्गत्वेन यागोपयोगित्वात् सर्वा उपाख्यानश्रुतयः कर्माङ्गभूताः।

—२० विशेषितमिति। विशेषः संजातोस्येति। तदस्य संजातमित्यादिसूत्रेणेतच्। ज्ञानस्य-उपाख्यानतात्पर्यभूतब्रह्मज्ञानस्य। अधिकधर्मविशिष्टत्वेन-आनन्दादिविषयताविशिष्टत्वेन।

२८४—१० अप्रयोजकत्वं-पुण्यपापाजनकत्वम्।

—१२ धर्म्यसिद्धिरिति। धर्मिणो ज्ञानस्यासिद्धिरित्यर्थः।

सूत्रार्थः—ननु ब्रह्मविद्यानिरूपकाणामुपाख्यानानां कर्माङ्गशंसनशेषत्वात्कर्मप्राधान्यमिति चेन्न। ज्ञानस्य कर्मापेक्षया विशिष्टत्वकथनादिति ॥ २२ ॥

## तथाचैकवाक्यतोपबन्धात् ॥ ३।४।२३ ॥

—१३ अस्य सूत्रस्य प्रयोजनमाहुः—तथापीति। असिद्धिरिति। कर्मशेषत्वाभावस्यासिद्धिरित्यर्थः।

—१५ **केवलश्रुतेः**-अधीहि भगव इत्यादिश्रुतेः।

—१६ **महतां**-नारदसनत्कुमारादीनाम्। **अत्र**-उपनिषन्मार्गे। **सापि**-महत्प्रवृत्तिरपि।

—१७ **प्ररोचनम्**-अवान्तरफलम्। **अधिकमिति**। केवलविद्याबोधक-श्रुत्यपेक्षयाधिकमित्यर्थः।

—१८ **तदाहुः-उपाख्यानं विनैवेत्यादिना**। एवं चैवं योजना। उपाख्यानं विनैव विद्यानिरूपिकायाः श्रुतेः सकाशात् सापि ब्रह्मायासपूर्विकेति विद्यामाहात्म्यज्ञापनमुपाख्यानानामधिकं प्ररोचनम्।

—१९ **एकवाक्यतामाहुः—आचार्यवानिति**।

—२० **गुरुशिष्यकथोपबन्धादिति**। यथा सौम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमिति गुरुशिष्यकथाकथनादित्यर्थः।

—२१ **ननु** गुरुशिष्याख्यानरहितकेवलज्ञानप्रतिपादिकानां ब्रह्मविदाप्नोति परमित्यादिश्रुतीनामाख्यानाकाङ्क्षा नत्वाख्यानसहितश्रुतीनामपीतराकाङ्क्षेति केवलज्ञानप्रतिपादकश्रुतीनामाख्यानसहितश्रुतिशेषत्वं स्यादतः पक्षान्तरमाहुः-**अथवेति**। एवं चैकवाक्यतया समानैकधर्मिणो ज्ञानस्य श्रुतिद्वयेनापि निरूपणान्नैकस्या अपि श्रुतेरन्यश्रुत्यङ्गत्वमित्यर्थः।

—२५ **अन्यथा**-तत्तद्गुरुशिष्याणामवास्तविकत्वे।

—२६ **अतः**—वास्तवत्वात्।

२८५—१ **बाधकं**-सर्वाख्यानानां पारिप्लवाङ्गत्वान्न तदुपयोगो ब्रह्मविद्यायामिति बाधकम्।

—५ **एवं सति**-प्रकरणसंनिधिभ्यां सर्वशब्दार्थसंकोचे सति। **विशेषविनियोग इति**। तत्तद्दिने तत्तदाख्यानकथनमिति विशेषविनियोगः।

—९ **अतएव**-एकैकस्मिन्पारिप्लव एकैकाख्यानस्य नियतत्वादेव।

**सूत्रार्थः**—यथा केवलश्रुतीनां विद्याप्रतिपादकत्वं तथा आचार्यवान् पुरुषो वेद-इति श्रुत्यैकवाक्यताज्ञानार्थमुपाख्यानरीत्या गुरुशिष्यकथोपबन्धादाख्यानश्रुतीनामपि विद्याप्रतिपादकत्वमिति ॥ २३ ॥

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ३।४।२४ ॥

—१६ **तेषां**-यज्ञोपस्कराणाम्।

—१८ **मन्युः**—क्रोधः।

—१९ **यत्**-ज्ञानम्। **तस्य**-ज्ञानस्य।

**सूत्रार्थः**-यतो ज्ञानी ज्ञानेन स्वयं यज्ञात्मको जातोत एव जरामर्याग्निहोत्रेग्रीन्धनाद्यनपेक्षोक्तेति ॥ २४ ॥

इति प्रथममधिकरणम् ।

---

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ३।४।२५ ॥

—२३ **उक्तन्यायेनेति** । ज्ञानप्रतिपादकश्रुत्या भगवतस्तज्ज्ञानस्य वाधिक्यप्रतिपादनेनेत्यर्थः ।

२८६—१ **तत्संभवात्**-ज्ञानोत्पत्तेः ।

—३ **यज्ञादिनिरूपिकेति** । आदिपदेन शमदमादिशरणगमनादिकर्मणां च संग्रहः ।

—९ **एवं सति**—ज्ञानराहितकर्मणां दुःखमात्रफलकत्वे सति ।

—१० **मन्तव्यमिति** । निरूपणान्यथानुपपत्त्येति भावः ।

—११ **तथा**-पुरुषोत्तमज्ञानसाधकम् ।

—२० **तथाभूतः**-कर्मकर्तैव ।

एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलं तथा ।

इति गीतोक्तेः । **सत्कर्मणि प्रवृत्त्यर्थमिति** । निषिद्धावैदिककर्मनिवृत्त्यर्थं सत्कर्माणि प्रवृत्तिरिति भावः ।

—२३ **तथा**—पुरुषार्थप्राप्तिः ।

—२४ **सा**-अत्रानुक्ता सर्वानपेक्षा ।

—२५ अस्मिंश्चकारार्थे विनिगमकमाहुः—**अत एवेति** । अत एव—मर्यादापुष्टिमार्गभेदादेव । **स्वेष्टफलसाधकेत्यादि** । स्वेष्टफलसाधको देशः काश्यादिस्तद्व्यवधानात्मकस्तन्मध्यस्थो देशो दण्डकारण्यादिस्तदतिक्रमे तदुल्लङ्घने हयस्य साधनत्वं न तु काशीस्थेष्टफलरूपाविश्वनाथदर्शनादौ ।

२८७-२ **इदं**-कर्मापेक्षणम् ।

**सूत्रार्थः**—पुरुषोत्तमज्ञाने कर्मज्ञानभक्त्याख्यसर्वसाधनानामपेक्षा । यज्ञादिविधायकश्रुतेः । यथा दूरदेशस्थेष्टफलप्रतिबन्धकमध्यस्थदेशातिक्रमेश्वस्य साधनत्वं न तु तद्देशस्थफलप्राप्तावपीति ॥ २५ ॥

## शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ ३।४।२६ ॥

–७ शमदमाद्युपेत इति। आदिपदेन यज्ञादीनां ग्रहणम् ।

–८ तदङ्गतया–ज्ञानाङ्गतया ।

–९ तथा–साधनत्वेन ।

–१० स्वत एवेति। इहामुत्रफलकामनाराहिततया भगवति चित्तवृत्तिनिरोधो नाम भक्तिस्तत्र शमादीनां स्वत एव सिद्धत्वादित्यर्थः ।

सूत्रार्थः—यद्यपि भक्तिमार्गेपि शमाद्युपेतः स्यात्तथाप्यात्मन्येवात्मानं पश्येदिति ज्ञानमार्गीयज्ञानाङ्गतयैव शमादिविधानाज्ज्ञानमार्गे तेषामवश्यानुष्ठेयत्वात्तथा विधानम् । भक्तिमार्गे तु स्वत एव संभवान्न तेषां तथाविधानमिति ॥ २६ ॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३।४।२७ ॥

–१३ नन्विति । अयं भावः । यथा प्राणसंवादस्थश्रुतिभ्यामाहारशोधकश्रुत्युक्तं निराक्रियते तथा ताभ्यां श्रुतिभ्यां शमदमाद्यपि निराकर्तुं शक्यम्। एवं च सत्त्वशुद्ध्यर्थं यज्ञशमदमादीनां न विधानं किं तु विद्यास्तावकान्येतानि वाक्यानि इति पूर्वपक्षे प्राप्ते तेषां स्तावकत्वं निराकर्तुं प्राणसंवादस्थान्नभक्षणश्रुतिव्यवस्थामनेन सूत्रेण वदति ।

—१६ अनन्नं-अयोग्यमन्नं, अदनानर्हमिति यावत् ।

—१७ जग्धं-भक्षितम् ।

—२० अत्र-बहिरङ्गाहारेणान्तरङ्गतमप्राणरक्षणावश्यकतायाम् ।

—२१ इभ्येन-गजमहामात्रा । सामिखादितान्-अर्धभक्षितान् ।

२८८-२ ज्ञाप्यत इति । एवं च ज्ञानिनाप्यनापदि शास्त्रविहितमेवानुष्ठेयं शास्त्रनिषिद्धं त्याज्यम् । ज्ञानिनां प्राणात्ययापद्येवं सर्वान्नानुमतिः । भक्तानां तु तादृशापत्प्रसङ्गाभावात्सर्वान्नानुमतेरनपेक्षेत्याहुः—भक्तिमार्गीयस्यैवेति ।

–१२ तथात्वं-आपद्ग्रस्तत्वम् ।

सूत्रार्थः—आहारस्य दौर्लभ्येन प्राणात्यये प्राप्ते सर्वान्नानुमतिः श्रूयते । चाक्रायणप्रकरणे तथा दर्शनात् । एवं च ज्ञानिना शुद्धान्नभक्षणपूर्वकाचित्तशुद्धिद्वारा शमादयः संपादनीया इति ॥ २७ ॥

## अबाधाच्च ॥ ३।४।२८ ॥

**सूत्रार्थः**-आपदि सर्वान्नभक्षणे चित्तदोषासंभवाज्ज्ञाने बाधो नेति ॥२८॥

## अपि स्मर्यते ॥ ३।४।२९ ॥

अत्र प्रदीपकृता विदुषो दुष्टकर्मासंबन्ध इत्यत्र विदुषोऽष्टकर्मासंबन्ध इति पाठो लब्धस्तत एवं व्याख्यातं, अष्टकर्मासंबन्धः-संन्यासाङ्गाष्टश्राद्धादिकर्माकरणे दोषासंबन्धः।

**सूत्रार्थः**—जीवितात्ययमापन्न इत्यादिनापदि दुष्टान्नभक्षणेविदुषोपि पापाभावः स्मर्यत इति ॥ २९ ॥

## शब्दश्चातोकामकारे ॥ ३।४।३० ॥

–२४ कामकारेपीति। ज्ञानिनापद्यशुद्धाचरणेपि।

२८९–१ कामकारनिवर्तक इति। निषिद्धाचारनिवर्तको वैधाचारप्रवर्तकश्चेत्यर्थः।

**सूत्रार्थः**—ज्ञानित्वे ज्ञानाग्निना सर्वपापदाहायथेष्टाचरणेपि न दोषः। परं साधनदशायां तु यथेष्टाचरणे दोषः। एवंविच्छान्तो दान्त इति श्रुतेरिति ॥ ३० ॥

इति द्वितीयमधिकरणम्।

---

## विहितत्वाच्चाश्रमकर्मापि ॥ ३।४।३१ ॥

**सूत्रार्थः**-विहितत्वाद्यथा शिष्टान्नभक्षणं तथाश्रमकर्माप्यनुष्ठेयमिति॥३१॥

## सहकारित्वेन च ॥ ३।४।३२ ॥

—१६ ननु प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायेन कर्म विधाय ज्ञानेन नाश्यं तदपेक्षया कर्माकरणमेव वरमित्यत आहुः—**संसारवासनेत्यादि**। तथाच

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेर्जुन।

इति दृष्टान्तोक्त्या यथाग्निः काष्ठानि दहंस्तेषां धूमादिजनकस्वभावं नाशयति स्वस्थितिपर्यन्तमङ्गाररूपेण तत्स्वरूपं स्थापयति च तथा ज्ञानमपि कर्मणां वासनाजनकत्वस्वभावं विनाश्य स्वान्तर्गतं तत्स्वरूपं कृत्वा स्थापयतीति भावः।

**सूत्रार्थः**-आश्रमकर्माणि ज्ञानान्तरङ्गशमदमादिसहकारीण्यतः कर्तव्यानीति ॥ ३२ ॥

## सर्वथापि त एवोभयलिङ्गात् ॥ ३।४।३३ ॥

—२२ **अन्येषां**-आश्रमधर्माणाम् ।

२९०—१ ननु तच्छब्देन पूर्वपरामर्शकेन पूर्वोक्ता आश्रमधर्माः कुतो न गृह्यन्त इत्यतो हेतुं व्याख्यान्ति—श्रुतिलिङ्गादित्यादि ।

—३ **तत्**-बहुशब्दानुध्यानम् ।

-५ **अत्र**-अनुध्यायादित्यत्र ।

—१० **स्मृतिः**-श्रीमद्भागवतस्मृतिः ।

—१२ भवप्रवाहोपरममिति । भवप्रवाहस्य संसारप्रवाहस्योपरमः समाप्तिर्यस्मिंस्तदिति ।

**सूत्रार्थः**-यद्यपि भक्तेन श्रवणादीनि कर्तव्यानि तथापि यदा वर्णाश्रमादिकर्माणि श्रवणादीनि च युगपत्प्राप्नुवन्ति तदा श्रवणादीन्येव विधेयानि अन्या वाचो विमुञ्चथेति, शृण्वन्ति गायन्तीति श्रुतिस्मृतिलिङ्गादिति ॥३३॥

## अनभिभवं च दर्शयति ॥ ३।४।३४ ॥

**सूत्रार्थः**—यतः सर्वं पाप्मानं तरतीत्यादिश्रुतिः कर्मानुष्ठानजदोषैर्भक्तस्यानभिभवं दर्शयतीति ॥ ३४ ॥

## अन्तरा चापि तु तद्दृष्टेः ॥ ३।४।३५ ॥

२९१-२ अल्पं-आश्रमकर्म हीनम् ।

-५ व्यवधानवाचक इति । अन्तरेन्तरा अन्तरेण च मध्ये स्युरिति कोशात् ।

**सूत्रार्थः**-भगवत्यनन्यभावनाविशिष्टस्य भक्तस्य वर्णाश्रमधर्माः फलप्रतिबन्धका इति ॥ ३५ ॥

## अपि स्मर्यते ॥ ३।४।३६ ॥

**सूत्रार्थः**—न ज्ञानं न च वैराग्यमिति स्मृत्यानन्यभक्तस्य वैराग्यादीनामपि फलप्राप्तावन्तरायः किमुत वर्णाश्रमधर्माणामिति ॥ ३६ ॥

## विशेषानुग्रहश्च ॥३।४।३७॥

—१७ मुक्तिपर्यन्त एवेति । अर्थान्मुक्त्याधिकफलं तत्र नास्तीत्यर्थः ।

सूत्रार्थः-अहं भक्तपराधीन इत्यनेन ज्ञान्यपेक्षया भक्ते विशेषानुग्रहः कथित इति ॥ ३७ ॥

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३।४।३८ ॥

—२३ मुक्तेरपि-मुक्त्यपेक्षयापि ।

—२४ तदीयत्वं-भगवदीयत्वम् । अत्र-ज्यायस्त्वे ।

—२५ स्वरूपमेवेति । आत्मस्वरूपमेव प्राप्तमस्तीत्यर्थः ।

२९२-२ तत्-भाक्तिमार्गीयत्वादि । तथा-ज्यायः ।

—५ एतदुपोद्बलकमाहुः-अत एवेति । इतरत्-भक्तिमार्गीयभगवदीयत्वम् ।

—८ उक्तयोः-श्रुतिस्मृत्योः । एतेन-भक्तेरुत्कृष्टत्वसंपादनेन ।

—१० तस्य-भक्तस्य ।

सूत्रार्थः—पूर्वोक्तश्रुत्यादिभ्यो मुक्त्यपेक्षया भक्तिमार्गतदीयत्वमेव श्रेष्ठतरं किंचान्यदपि कारणं तथाहि मुक्तानां देहेन्द्रियाद्यभावेन केवलात्मस्वरूपेणैव ब्रह्मानन्दानुभवः । भक्तानां त्वलौकिकदेहेन्द्रियादिभिः सर्वोत्कृष्टभजनानन्दानुभव इति ॥ ३८ ॥

इति तृतीयमधिकरणम् ।

---

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥ ३।४।३९ ॥

—१४ अधिकरणमवतारयन्ति-अथेत्यादिना ।

—१५ तत्र-ज्ञानभक्त्योर्मध्ये । तस्य-साधनस्य । तदीयत्वस्य-भगवदीयत्वस्य ।

—१८ तुशब्देनेति । तेन- नैकात्मतां मे स्पृहयन्तीत्यादिवाक्यानां न विरोध इति बोध्यम् । मर्यादासहितपुष्टिमार्गे पुरुषोत्तमसायुज्य एव पर्यवसानात् ।

—२१ कदाचिदिति । अनेकजन्मपर्यन्तं सुकृतकरणाद्भगवत्तोषे जाते सतीत्यर्थः ।

२९३-४ तस्य- लीलास्थानस्य ।

--५ तच्च-लीलास्थानं च ।

--८ तन्नियमः-सार्वदिकदर्शननियमः ।

—१२ पुष्टिमार्गीयभगवदीयत्वं मुक्तेः फलमित्यत्र श्रुतिं प्रमाणयन्ति-यदा सर्व इति । शारीरब्राह्मणस्थेयं श्रुतिः ।

--१६ न मुक्तिरिति । भगवदीयत्वस्य फलं मुक्तिर्नोचितेत्यर्थः ।

सूत्रार्थः—पुष्टिमार्गे यदि कर्मठाग्रणीजैमिनिरपि तदीयत्वं प्राप्नुयात्तर्हि तस्यापि स भावः कदापि तिरोहितो न भवेत् । तत्र हेतुः । भक्तानां भगवद्दर्शनं नित्यमिति नियमः । सोऽश्नुत इति श्रुत्या मुक्तस्य स्वरूपभेदभावानुभव उच्यते तस्य वरणैकसाध्यत्वेन तदीयत्वस्य फलरूपत्वात्साधनरूपाभावः कथित इति ॥ ३९ ॥

इति चतुर्थमधिकरणम् ।

---

## न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥३।४।४०॥

—२३ विचार्यत इति । पुष्टिमर्यादामार्गीयफलं विचार्य मर्यादापुष्टिमार्गीयस्य फलं विचार्यत इत्यर्थः ।

—२४ पतनानुमानादिति । पतनबोधकस्मृतेरित्यर्थः ।

—२६ ननु तर्हि ध्रुवाय कथमाधिकारिकफलं भगवता दत्तमत आहुः-किंचेति । तथाच ध्रुवस्य मुमुक्षुतया मर्यादामार्गीयत्वात् तथा दानम् ।

सूत्रार्थः—भगवान् स्वभक्तायाधिकारिकं ब्रह्मलोकादिकमपि फलं न यच्छति । आब्रह्मभुवनांल्लोका इत्यादिस्मृत्या ततोपि पतनकथनात् । किं च भक्तस्य निरन्तरं भक्तिरसानुभवाद्ब्रह्मलोकादिष्वनाकाङ्क्षत्वेन तादृशलोकसंबन्धाभावाच्चेति ॥ ४० ॥

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥३।४।४१॥

२९४-४ पूर्वोक्तेर्थे हेत्वन्तरमाहुः—एक इति ।

—७ सा-मुक्तिः ।

—११ अथह वाव तवेति । इदं श्रीमद्भागवते षष्ठस्कन्धे नवमाध्याये गद्यम् । तच्च संपूर्णं यथा । अथ ह वाव तव महिमामृतरससमुद्रविप्रुषा सकृदवलीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मृतदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकान्तिनो भगवति सर्वभूतसुहृदि सर्वा-

त्मनि नितरां निरन्तरनिर्वृतमनसः कथमुह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणाम्बुजानुसेवां विसृजान्ति न यत्र पुनरयं संसारपर्यावर्त इति।

सूत्रार्थः—भक्ता आधिकारिकफले केवलपतनमेव हेयत्वप्रयोजकं न वदन्ति किंतु तत्रोपपतनमपि। भक्तिभावाद्भ्रंशात्। तथापि तत्राधिकारसमाप्तौ कदाचिद्भगवदनुग्रहाशापीत्युपपतनं तत्। मुक्तौ तु पुनरावृत्त्यभावात्तादृशाशापि नास्त्यतो मुक्तिर्महापतनम्। भक्तिमार्गे तदीयभावमात्रं साक्षाद्भगवत्संबन्धरूपभोगादेव मन्यते भक्तः। सोऽश्नते सर्वानित्यादिश्रुतिषु साक्षाद्भगवद्रूपरसाशनमुक्तमिति ॥ ४१ ॥

इति पञ्चममधिकरणम्।

---

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ३।४।४२ ॥

- १९ फलस्य-भगवद्भावभगवत्साक्षात्कारान्यतररूपस्य।

—२० न बन्धायेति। एवंच गृहत्यागो न कर्तव्य इत्यर्थः।

—२९५-२ अतः-उक्तप्रमाणात्। तथेति। त्यागः कर्तव्य इति भावः।

—३ पूर्वं-ऊर्ध्वरेतःसूत्रे। उक्तवाक्यात्-मद्वार्तायातयामानामिति वाक्यात्।

—५ व्यासङ्गस्य-लौकिकव्यासङ्गस्य। तत्र-गृहस्थितौ। उक्तोभयोः-भगवद्भावभगवत्साक्षात्कारवतोः।

—६ तत्यागस्य-गृहत्यागस्य।

—७ स-गृहत्यागः।

—९ इयमुक्तिरिति। एतत्सूत्रेणानुज्ञेत्यर्थः। श्रीमद्भागवतैकादशस्कन्धेऽष्टादशाध्याये।

ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः।
सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः॥

इति वाक्येनाविदिते संन्यासेनेन सूत्रेणानुमतिर्बोधितेति यावत्।

सूत्रार्थः-भगवद्भावमात्रे स्वरूपानुभवे वोभयस्थित्योरपि गृहत्यागः कार्यः॥ त्वं तु सर्वं परित्यजेति स्मृतेरुद्धवादीनामाचाराच्चेति ॥ ४२ ॥

## स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३।४।४३ ॥

—११ विहितत्वादिति। विहितत्वेनेत्यर्थः।

—१३ अत्र-स्वामिनः फलमित्यर्थे।

—१७ **तस्यैव** सर्वात्मभावरूपबलस्यैव। **मर्यादाबलोपमर्दकत्वादिति**। एतच्च।

धर्मः सत्यदयोपेतो विद्या वा तपसान्विता।
मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति हि॥
न साधयति मां योगो न सांख्यं धर्म उद्धव।
न स्वाध्यायस्तपस्त्यागो यथाभक्तिर्ममोर्जिता॥

इति श्रीमद्भागवतैकादशस्कन्धवाक्ये स्पष्टम्।

— १९ **तदात्मकस्य**-सर्वात्मभावात्मकस्य। **अन्यत्**-भगवदतिरिक्तम्।

—२१ **व्रजपरिवृढेत्यादि**। व्रजपरिवृढो व्रजश्रेष्ठः श्रीकृष्णस्तद्वदनचन्द्राद्ये निर्गता वचनाकिरणास्तेषां प्रचारेण प्रोच्छलन् पूरमाप्नुवन् यः केवलभावाम्भोधिरात्मभावरूपः समुद्रस्तत्रत्या वचनवीचय उक्लिलहर्यो गीयन्ते।

—२२ **यर्हि**-यदा। **अस्प्राक्ष्मेति**। पादतलस्पर्शः कृत इत्यर्थः।

—२३ **पृष्ठलग्न इवेति**। एवंच त्यागस्य स्वतःसिद्धत्वादुत्तमस्य स नोक्त इत्यर्थः।

—२४ नन्वात्रेयस्य कथमेवं भक्तिमार्गीयभावस्वरूपज्ञानमित्यत आहुः **विष्णववतारत्वेनेति**। तस्य तदवतारत्वं-

अत्रेरपत्यमभिकाङ्क्षत आह तुष्टो
दत्तो मयाहमिति यद्भगवान् स दत्तः॥

इति श्रीमद्भागवतद्वितीयस्कन्धवाक्याज्ज्ञायते।

—२५ **अयं**-आत्रेयः।

**सूत्रार्थः**—गृहादित्यागस्य साधनत्वेनाङ्गीकारो न पुष्टिमार्गीयस्य भगवत्सकाशादेव फलप्राप्तेरित्यात्रेयस्य मतम्। तस्य भगवदवतारत्वेन भक्तिमार्गसिद्धान्तज्ञत्वात्तन्नामकथनमिति॥ ४३॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते॥ ३।४।४४॥

—२९६-५ **स्थविरान्वेति**। सर्वान्यूनः सर्वान् स्थविरान् वृद्धानित्यर्थः।

—७ **तत्र**-सोमादियागेषु।

—८ **अत्र**-भक्तिमार्गीयलीलायाम्। यदा पुमानिति वाक्यं श्रीमद्भागवतैकादशस्कन्ध ऊनत्रिंशाध्याये।

—१० **अत्र**-यदा पुमानिति वाक्ये। **पूर्वपदेन**-त्यक्तसमस्तकर्मेति पदेन। **विशेष इति**। तथाच विचिकीर्षित इति पदे व्युपसर्गेणेच्छायां विशेषलाभः।

—१५ **महन्महत्त्वामिति**। रमणे सार्वदिकत्वमेव भक्तिमार्गे विशेषः।

—१६ **प्रकृतेति** । स्वकीयलीलायाः सांगतार्थमेव भगवता भक्ता व्रियन्त इत्यर्थः ।

—१९ यज्ञे दक्षिणार्थं प्रवृत्तिर्भजने तु केवलं भगवदर्थमेव प्रवृत्तिरिति दृष्टान्तवैषम्यमित्याशङ्क्य परिहरन्ति–**नचेति। कश्चिदिति**। कस्यचिदृत्विजः प्रश्नोयम्। अपि नाम विपुलदक्षिणाप्राप्तिरस्मिन्यज्ञ इति प्रश्नार्थः ।

—२१ **नीरागस्य**–उदासीनस्य याजनवृत्तिमनीप्सोः । **आवश्यकत्वात्**-प्रश्नविधिघटिततयावश्यकत्वात् । **तथैव**-वैधमेव ।

—२२ **निरङ्कत्वापत्तेरिति**–धन्योहं दक्षिणाभिः सहेति वाक्याद्दक्षिणारहिततया यज्ञस्य निरङ्कत्वापत्तिरित्यर्थः । **प्रकृतेपि**–भगवद्भजनेपि ।

**सूत्रार्थः**—जीवा हि लीलार्थमेव भगवता प्रकटितास्तल्लीलोपयोगश्च गृहादित्यागं विना न संभवत्यतस्त्यागपूर्वकं भगवन्निकटे गमनं भक्तस्य ऋत्विक्कर्मवज्ज्ञेयम् । यतो हि ऋत्विग्यजमानार्थं परिक्रीयते । एवंच यथा यज्ञकर्मण्यृत्विजां प्रयासो यजमानार्थमेव भक्तानां गृहादित्यागो भगवदर्थमित्यौडुलोमिराचार्यो मनुत इति ॥ ४४ ॥

## श्रुतेश्च ॥ ३।४।४५ ॥

—२५ भक्तिरस्य भजनमित्याथर्वणी श्रुतिः । **तत्**-भजनम् ।

—२९७-१ **भक्तिमार्गप्रचारैकहृदय इति** । **बादरायणो**-व्यासः । केवलं भक्तिमार्गप्रचारे बद्धदीक्षः ।

—२ **तत्र**–व्यासस्य भक्तिमार्गप्रचारैकहृदयत्वे । भागवतं पुराणमेव प्रमाणम् ।

अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे ।
लोकस्याजानतो व्यासश्चक्रे सात्वतसंहिताम् ॥

इति श्रीमद्भागवतवाक्यात् । तेनोत्तमैर्भक्तैरेवं भक्तिरस्य भजनामिति ज्ञेयम् ।

**सूत्रार्थः**—भक्तिरस्य भजनामिति श्रुतेरयमेव सिद्धान्तो ज्ञेय इति ॥ ४५॥

इति षष्ठमधिकरणम् ।

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विधानात् ॥ ३।४।४६ ॥

—१३ **नान्यापेक्षेति** । यमेवैष इति श्रुतेर्वरणेतरसाधनानपेक्षा।

—१५ **तृतीयमिति** । मानसं शान्तो दान्त इति वाक्योक्तम् ।

—१६ **तदपि**–मानसमपि ।

—१७ विध्यादिवदिति । विधिश्च तदादिश्च विध्यादी ताविव । प्रथमार्थे वतिः ।

—१८ आदिपदेनार्थवादस्य ग्रहणं तदाहुः-विधिरर्थवादो वेति । स्वत एव-स्नेहत एव ।

—१९ इत्यर्थ इति । एवंच पित्रादौ सहजस्नेहवतः सुतादेर्यथा तत्सेवनविधिस्तत्फलबोधकोर्थवादो वा न सेवनप्रवृत्तिसाधकस्तस्य स्वत एव तत्र प्रवृत्तिसंभवादेवं भगवत्प्राप्त्यर्थमिदं शमादिकं स्वत एव संभवति नापेक्ष्यते तत्र विधिरर्थवादो वेत्यर्थः । पूर्वयोः-कायिकवाचिकयोः । एतच्छेषत्वात्- मानसाङ्गत्वात् ।

—२० तृतीयमेव-मानसमेव ।

सूत्रार्थः—जीवानां भगवदङ्गीकारो द्विधा । तत्र शमदमादिसहकारिविधानं मर्यादामार्गपक्षेण । पुष्टिमार्गे तु वरणातिरिक्तसाधनाभावाद्वरणतः कायिकवाचिकमानसेषु तृतीयं मानसिकं साधनमुक्तम् । किंच तस्य तन्मानसिकं साधनमपि विध्यादिवज्ज्ञेयं यथा पुष्टिमार्गीयस्य भक्तस्य भगवद्भजने प्रवृत्तौ विधिर्वार्थवादो वा न युज्यते स्वयं प्रवृत्तत्वात्तथा मानसिकसाधनमप्यप्रयोजकमिति ॥ ४६ ॥

इति सप्तममधिकरणम् ।

---

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ३।४।४७ ॥

—२१ सूत्रमवतारयन्ति-नन्विति । गुरोः कर्मातिशेषेणेति । गुरोः सेवारूपं यत्कर्म तत्कृत्वा ततोतिशेषेणावशिष्टभागेन । अभिसमावृत्य-साङ्गसरहस्यवेदाध्ययनमर्थपुरःसरं संपाद्य समावर्तनं कृत्वाचार्यकुलान्निवृत्त्येति यावत् ।

२९८-२ कुटुम्ब इति । दारानाहृत्येत्यर्थः ।

—३ धार्मिकान् विदधत्-पुत्रान् शिष्यांश्च धर्मशिक्षणेन धर्मशीलान् कुर्वन् ।

—४ अन्यत्र तीर्थेभ्यः-यज्ञादीन् विरहय्य । तत्र हिंसापि संभवति ।

—६ कृत इति । गृहिणा सह सर्वधर्माणामुपसंहारः कृत इत्यर्थः । एवं त्यागं विनैव तस्य ब्रह्मफलप्राप्तिरुक्ता ।

—९ एवं सति-श्रुतिसाम्ये सति ।

—१४ कृत्स्नता-सर्वेषामान्तराणां बाह्यानां च सार्थक्यम् । तेन-गृहिणा ।

—१५ अत्र-अत्रत्यगार्हस्थप्रशंसायाम् ।

—१७ कपिलदेववाक्यादिति। तद्वाक्यं चेत्थम्।

भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते।
स्वभावगुणभेदेन पुंसां भावो विभिद्यते॥

—१९ तदुक्तमिति। पञ्चमस्कन्धे शुकेनोक्तम्।

यो दुस्त्यजान् क्षितिसुतस्वजनार्थदारान्
प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम्।
नैच्छन्नृपस्तदुचितं महतां मधुद्विट्-
सेवानुरक्तमनसामभवोपि फल्गुः॥

इति संपूर्णश्लोकः। अभवोपि-मोक्षोपि।

—२० फल्गुः—अल्पः। तेन-गृहिणोपसंहार आत्मनि सर्वेन्द्रियसंप्रतिष्ठापनादिकथनेन।

—२४ तल्लाभः-भगवत्प्राप्तिः। उक्तभावाभाव इति। विगाढभावाभावे स एवाधस्तादित्यादिनोक्तस्य सर्वत्र तद्भानरूपस्य त्यागधर्मस्य मध्ये विच्छेदेन सर्वदा स्थैर्याभावात्।

—२६ प्रचुरभावविवशाशया इति। प्रचुरभावाविष्टचेतस इत्यर्थः।

२९९-१ एते सर्वे इति। येषां दशात्रेयौडुलोमिभ्यामुक्ता ते सर्वे भक्ताः। वाजसनेय्युक्ताः-वाजसनेयिनां कहोडब्राह्मण उक्ताः।

सूत्रार्थः—गृहस्थाश्रमे कुटुम्बसाहित्येन सेवाकरणात्सर्वेन्द्रियाणां भगवद्विनियोगः। परिजनकृतार्थता चाधिका संपद्यतेतो गृहिणोपसंहारः। तुशब्देन मर्यादामार्गीयगृहस्थनिरास इति॥ ४७॥

## मौनवदितरेषामप्युपदेशात्॥ ३।४।४८॥

—६ अनीहेत्यादि। अनीहा-अनिच्छा। आनिलायामः-प्राणायामः। इत्याद्यास्त्रिदण्डिनः संन्यासिनो ये धर्मास्तदुपलक्षकम्। त्रिषु वाग्देहचेतःसु दण्डो यस्येति त्रिदण्डिपदार्थः।

—११ तत्रापि-संन्यासिन्यापि।

सूत्रार्थः—मौनानीहादयो धर्मा यथा संन्यासिन उक्तास्तथा गृहस्थस्यापि सन्ति। एवंच संन्यास्यपेक्षया गृहस्थे गुणाधिक्यात् तेनोपसंहारः कृत इति॥ ४८॥

## अनाविष्कुर्वन्नन्वयात्॥ ३।४।४९॥

—१५ अनाविष्कुर्वन्-अप्रकटयन्।

—१७ ते धर्माः-आश्रमधर्माः।

—२० आविष्करणं-आश्रमधर्माणां प्रकटनम्।

**सूत्रार्थः**-भगवता सह संबन्धदाढर्याद्वेदाध्ययनादिगृहस्थधर्मैर्भगवद्भावमप्रकटयन् गृहस्थो भगवद्भजनं कुर्यात्। अत एव श्रुतौ ते धर्मा उक्ता इति ॥ ४९ ॥

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ३।४।५० ॥

—२३ **तत्समयं**-लौकिककर्मकरणकालम्।

**सूत्रार्थः**-भगवद्भावगोपनार्थं वैदिककर्मकरणवल्लौकिकं सुतसंस्कारादिकं कर्म प्रस्तुतस्य भगवद्भजनस्य प्रतिबन्धो न स्याद्यथा तथा कर्तव्यम्। धार्मिकान् विदधदिति श्रुतौ धार्मिकपुत्रादिविधानदर्शनादिति ॥ ५० ॥

इत्यष्टममधिकरणम्।

---

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ३।४।५१ ॥

३००-५ **सा**-ब्रह्मसंपत्तिः।

—९ **उक्तगृहिणः**-छान्दोग्योक्तमुक्तरूपगृहिणः।

—९ **तत्फलं**-पुरुषोत्तमलीलानुभवरूपं फलम्। अत एव-साधनाप्राप्यत्वादेव।

—१२ **औत्सर्गिकं**-अधिकारसामान्यतः प्राप्तम्।

—१९ **एवं सति**-श्रुतिद्वयस्याविरोधे कर्तव्ये सति।

—२० **तदतीते**-अक्षरातीते पुरुषोत्तमे।

—२१ **समाप्तिज्ञापनाय**-अध्यायसमाप्तिज्ञापनाय। सूत्रस्थपदावृत्तिरध्यायसमाप्तिमात्रद्योतिकेति स्वीकारेनर्थकत्वमावृत्तपदस्येत्यरुचेः पक्षान्तरमाहुः-अथवेति।

—२२ **एवं सति**-उक्तश्रुतिद्वयाविरोधे सति। भगवद्भाव इति सप्तमी।

—२३ **भगवद्भावे**-पुरुषोत्तमीयसर्वात्मभावे।

**सूत्रार्थः**-एवंभूतस्य भक्तस्य मुक्तिफलं यद्भक्तिरसानुभवः स नियमेन भवत्येवेति न। तस्य भगवदिच्छाधीनत्वात्। न स पुनरावर्तत इति श्रुत्या मुक्तेरेव नियमः क्रियते न तु तत्फलस्येति ॥ ५१ ॥

इति नवममधिकरणम्।

---

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालप्रबोधिन्यां तृतीयाध्यायस्य चतुर्थः पादः ३।४

समाप्तोऽध्यायः पादश्च।

# ॥ अथ चतुर्थोऽध्यायः ॥

—३०१-२ अथ चतुर्थाध्यायभाष्यं चिकीर्षव आचार्याः प्रथममध्यायार्थं पादार्थं च बोधयिष्यन्तः पूर्वेषां त्रयाणामध्यायानामर्थमुक्त्वा संगतिमाहुः—**समन्वयेनेति** । यथा तृतीयाध्यायारम्भे कारिकाभिरध्यायार्थो बोधितस्तथेहापि । **समन्वयेनेति** प्रथमाध्यायलिङ्गम् । **अविरोधादिति** द्वितीयाध्यायलिङ्गम् । **साधनैरिति** तृतीयाध्यायलिङ्गम् । समन्वयेनेति सार्धकारिकाया अन्वयश्चेत्थम् । समन्वयेनाविरोधात्साधनैर्यदि ब्रह्मविद्भवति तस्य जीवतो म्रियमाणस्य गच्छतः सफलस्य च याग्रिमव्यवस्था सा च तुर्ये विविच्यते । अन्वयक्रमेणार्थः । श्रुतीनां परस्परविरुद्धार्थतया भासमानानां ब्रह्मणि यः समन्वयः सम्यगबाधितोऽन्वयः सम्यग् ज्ञानरूपस्तेन श्रुतिस्मृतीनां चाविरोधादनुष्ठितैः साधनैर्यदि पुरुषो विरुद्धसर्वधर्माधारभूतं यद्ब्रह्म तद्विषयकनिःसंशयशाब्दज्ञानवान् भवति तस्य जीवद्दशायां मरणसमये गच्छतः सफलस्य याग्रिमाग्रेतनी व्यवस्था ज्ञानानुकूलतया फलपर्यन्तं भाविनी स्थितिः सा चतुर्थेऽध्याये फलाभिख्ये विविच्यते । विवेचनं च फलस्वरूपप्रकारबलनिष्कर्षेणासंकीर्णतया प्रकाशनम् । एवं च यथा प्रथमद्वितीयाध्याययोः समन्वयेनाविरोधेन चोपनिषदामाभासत्वं नेति प्रतिपाद्य तासां ब्रह्मणि प्रमाणत्वं तासु च ब्रह्म प्रमेयमिति स्फुटीकृतम् । यथा वा तृतीयेऽध्याये श्रुतीनां बोधकताद्वारोपासनात्मकं साधनं निर्णीय ब्रह्मवित्त्वं व्यक्तीकृतं तथैवात्र चतुर्थेऽध्याय उपासनादिसाधनविशिष्टस्य ब्रह्मविदोऽवस्था निरूप्यन्ते परम्परया साक्षाद्वा प्राप्यस्य ब्रह्मणः फलत्वमुपपत्तिपूर्वकं निरूप्यते च । एतावता पूर्वाध्यायानामस्य च कार्यकारणभावोऽवसरसंगतिश्च बोधिता भवति ।

—५ ननु पुरुषेणोपासनादिरूपं ज्ञानसाधनमनुष्ठेयमिति पूर्वाध्याय एवोक्तमत्र पुनस्तत्किमिति प्रोच्यतेत आहुः—**अत इति** । **ब्रह्मविदेति** । उपासनादि साधनं यस्यैतादृशो ब्रह्मविदत्र ग्राह्यो न तु प्राप्तमुक्तिफलः । **एवमेवेति** । उपासनादिसाधनानुष्ठायिनैव भावितव्यं न चान्यथेति तूष्णीं न स्थेयमित्यर्थः । यतः—तत्त्वेव भयं विदुषोऽमन्वानस्य इति श्रुत्यानुपासकस्य प्रतिबन्धो बोधितः ॥४०॥४१॥

—६ ननु—किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोकः— इति ।

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ।

इति श्रुतिस्मृतिभ्यां ब्रह्मविदः कार्यमात्रानिषेधं स्वीकुर्वन्ति केचित्तर्हि कथं ब्रह्मविदैवमेव कार्यमिति कार्यकरणोपदेश इत्यत आहुः-**तामसीमिति**। सर्वार्थवैपरीत्यावभासिनी बुद्धिस्तामसी ।

अधर्मं धर्ममिति या मन्यते तमसा वृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ।

इति गीतोक्तेः। **सर्वविप्लवमिति** । सर्वेषां सगुणब्रह्मोपासनगुरूपदेशादीनां विप्लवं मायिकत्वरूपम् ।

—७ **शास्त्रनाशायेति** । वैयासिकोत्तरमीमांसाशास्त्रविघातायेत्यर्थः । **शोच्या इति** । अबोधग्रस्तत्वेन शोच्यास्ते नतु तेषां वचनमुपादेयमित्यर्थः। **अनु तानिति**। **ताननु**-तदनुसारिण इत्यर्थः । तस्य कार्यं न विद्यते-इत्यस्यानन्तरम् ।

तस्मादसक्तः सततं कार्यं कर्म समाचर ।

इति गीतावचनेन कार्यकर्मणामावश्यकत्वं कथितम् ॥ ४२ ॥

ननु-तस्य तावदेव चिरम्-इति श्रुत्या ब्रह्मज्ञानोत्तरं सद्योमुक्तेः कथनाद्ब्रह्मविदो न किमपि कर्तव्यमवशिष्यते । यत्क्रममुक्त्यादिगमनमुक्तं तत्सगुणोपासकानां कृते ।

—८ एवमेव द्वितीयतृतीयपादोक्तोत्क्रान्तिगमनादिविचारव्यवस्थोन्नेयेति चेत्तत्राहुः—**ब्रह्मविदिति** । **गमनाभाव इति** । ब्रह्मविदोऽर्चिरादिमार्गेण गमनं न स्याच्चेदित्यर्थः। **शतांशेनेति**। अल्पांशेनापीत्यर्थः ।

—९ **शास्त्रमेतदिति** । एतदध्यायस्य तृतीयपादरूपम् । **सर्वसूत्रविनाशात इति** । सर्वाणि सूत्राणि-अर्चिरादीत्यारभ्य विशेषं च दर्शयतीत्यन्तानि । विनाशश्च वैयर्थ्यार्ज्ज्ञेयः । परप्राप्तेः साधनं विनापि संभवाद्वैयर्थ्यम् ॥ ४३ ॥

—१० ननु भवद्भिः कथं सूत्राणां परब्रह्मपरता बोध्यत इत्यत आहुः-**स्वाप्ययस्येति**। **स्वाप्ययस्य**-सुषुप्तेः। **संपत्तेः**—ब्रह्मप्राप्तेः। अत्र-दहरविद्यायां ब्रह्मविद्गतिप्रकरणे। ब्रह्मगतिश्रुती-ब्रह्मणि यद्गमनं तद्बोधकं श्रुतिवाक्यद्वयं पूर्वं वर्तते तच्चेत्थम्। अथ या एता हृदयस्य नाड्यः-इत्यारभ्य-तेजसा हि तदा संपन्नो भवति-इत्यन्तैका । अथ यत्रैतदस्माच्छरी-

रादुत्क्रामति–इत्यारभ्य–शतं चैका च हृदयस्य नाड्यः–इति श्लोकपर्यन्ता द्वितीया। अतः प्रजापतिवाक्येऽपि ते एव श्रुती आदर्तव्ये। ज्ञेयात्मन उभयत्राप्यैक्यात्।

—११ अन्यथा नेति। प्रजापतिवाक्यरूपश्रुतेरर्थोऽन्यथा पूर्ववाक्यविरुद्धो न। वदेन्न किमिति। यदि स्यात्तर्हि सर्वनिर्णयार्थं प्रवृत्तो व्यासः फलविवेचनावसरे किमिति न वदेत्। अपि तु वदेदेव। एवंचानयोपपत्त्यास्माभिर्ब्रह्मपरत्वं स्थाप्यत इत्यर्थः॥ ४४॥

—१२ ननु–नहि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वान्न तु तद् द्वितीयमस्ति–इति श्रुतिर्मुक्तौ भेददर्शननिषेधं श्रावयति तर्हि तत्र ब्रह्मविदो गत्युपपत्तिः कथमत आहुः—तानसीमिति। या मुक्तिरिति। सांख्यमतवत् संबोधरहिता मुक्तिरित्यर्थः।

—१३ सुषुप्तिश्रुतेरर्थ इति। शारीरब्राह्मणे तत्सजातीयवाक्यानां पाठात्। मोहादिति।

मायां मदीयामाश्रित्य वदतां किंनु दुर्घटम्।

इत्युक्तभगवन्मायामोहादित्यर्थः। अन्यथा मतिरिति। प्रजापतिवाक्यासिद्धायां मुक्तावन्यथा मतिरित्यर्थः। एवंच प्रथमपादे यदुक्तं तद्ब्रह्मविद उपदेशायैव। न तु साधनशेषतयेति ध्येयम्। तत्त्वेव भयं विदुषोमन्वानस्य इति श्रुतिर्ज्ञानोत्तरमपि मननस्यावश्यकत्वमितिपरेत्यर्थः॥४५॥

—१४ एवं पादप्रयोजनं निश्चित्य तदर्थमाहु.–अत इति। जीवन इति। जीवद्दशायामित्यर्थः। कार्यमिति। ज्ञानफलानुकूलमावश्यकं कार्यमित्यर्थः। पूर्व–प्रथमे पादे।

—१५ तदेव कार्यमाहुः–आवृत्तिरिति। आवृत्तिः प्रथमाधिकरणस्यार्थः। द्वितीयाधिकरण आवृत्तेः फलम्। श्रवणादीनि–श्रवणमनननिदिध्यासनानि। तत्र हेतुत्रयम्। १ नवकृत्वोपदेशतः। २ दर्शनार्थत्वतः। ३ लिङ्गादपीति। नवकृत्वोपदेशतः-नववारमुपदेशात्। नवकृत्व इत्यव्ययं सकारान्तं तस्योपदेशतः इत्यनेन संधिस्तु ये सान्तास्तेदन्ता इत्यभ्युपगमात्कथमपि संसाध्यः।

—१६ दर्शनार्थत्वत इति। ब्रह्मदर्शननिमित्तं श्रवणादीनां कर्तव्यत्वात्। लिङ्गात्–आवृत्तिरसकृदुपदेशात् इति व्यासस्मृतेः। व्रीह्यवघातवदिति। यथा व्रीहीनवहन्तीति वाक्यानुरोधाद्वितुषीकरणरूपफलप्राप्तिपर्यन्तं व्रीह्यवघात एवं श्रवणादि दर्शनफलपर्यन्तमेव कर्तव्यम्।

—१७ फलमाहुः–आवृत्ताविति । आत्मा–भगवान् । एवं चेयं दृढमतिस्तस्यावान्तरफलम् ॥ ४६–४७ ॥

—१८ तदवान्तरत्वं साधयन्ति–आपातत इति । भगवतः सर्वात्मकत्वात्सर्वस्वरूपत्वाज्जीवात्माभेदेन यद्दर्शनं तदापाततो दर्शनमिति बोध्यते । अपिशब्देन यथाधिकारमात्मोपदेशः कर्तव्य इति ब्रह्मविदो द्वितीयं कार्यं बोध्यते ।

—१९ प्रतीकोपासकादीनां वैलक्षण्यमाहुः–प्रतीकोपासकादीनामिति । उपासनमुपास्यं प्रतीकमुपासनं येषां ते प्रतीकोपासनाः। आदिशब्देन कर्ममार्गीयाणां ग्रहणम् । एवं भावः–ज्ञानित्वं भक्तिर्वा ॥ ४८ ॥

—२० आलम्बनार्थम्–ध्यानविषयत्वेन स्वीकरणाय । ब्रह्म दृष्टिरिति। इदं मदालम्बनं ब्रह्मैवेति दृष्टिः। विशिष्यते–विशेषबोधिका भवति ।

—२१ अङ्गत्वमिति । मुख्यफलयोर्ब्रह्मसाक्षात्कारभक्त्योरुपकारकत्वात् । स्वतन्त्रता–स्वातन्त्र्येण मुख्यफलसाधकता । आदित्यादीति तृतीयाधिकरणस्यार्थः ॥ ४९ ॥

—२२ मनने चेति । आदित्यबुद्ध्यादित्याद्युपासनेन भक्तिद्वारा मनने । निदिध्यासे–निदिध्यासने । विशेषः–भगवतो बहिरन्तःप्रकटतारूपो विशेषः । ततश्च फलस्यापाततोनुभवप्रकारो मनननिदिध्यासनरूपं तृतीयं कार्यम् ।

—२३ तत्फलमाहुः–आसनादीति । अत्र पुरुषोत्तम आसनं भगवतो बहिःप्रकटस्योपवेशनम् । लीलाप्राकट्यं च तेषां यानि षडङ्गानि–श्रवणाद्यावृत्तिः, आत्माभेददृष्टिः, तथा ग्राहणं, अप्रतीकोपासनं, सर्वत्र ब्रह्मदृष्टिः, आदित्यादिष्वङ्गबुद्धिश्च तैश्चित्तं श्रौतार्थे भगवति धारयेत् ।

३०२–१ तदपि आमतेः–मननमारभ्य । ततः–तदनन्तरम् । सिद्धिं–भगवदासनादिसंपादकोत्कटस्नेहभावरूपाम् । एवमाप्रायणान्तसूत्रार्थ उक्तः ।

—२ तदधिगमादिसूत्रार्थमाहुः—धर्मेति । तस्य—निरुपधिप्रेमवतः । ॥५०॥५१॥

—३ अग्निहोत्रादिसूत्रार्थमाहुः–अग्निहोत्रादिकमिति ।

—४ फलप्राप्तिप्रकारमाहुः—षोढेति । अग्निहोत्रादिमोक्षान्तानि पञ्च कर्माणि ज्ञानं चेति षड्भिः प्रकारैः । फलं–मोक्षरूपम् । भवेदिति । व्यक्तं भवेदित्यर्थः ॥५२॥

—६ सर्वेन्द्रियलय इति। पुष्टिमार्गीयस्य सर्वेन्द्रियलयो भगवति । मर्यादामार्गीयस्य भूतेषु ॥५३॥

—७ इहेति। अधमाधिकारिण्युत्क्रान्तिरित्यर्थः।

—८ दिनायनादीति। शुभदिनोत्तरायणादिकं तस्य सहकारि नेत्यर्थः ॥५४॥

—९ यस्य–अधिकारिणः। अन्यमार्गाणामिति। बहुव्रीहिः। अन्ये मार्गा येषामिति। भक्तिज्ञानेतरमार्गीयाणामित्यर्थः ॥५५॥५६॥

—१३ चतुर्थपादगतविशेषार्थमाहुः–प्रभोरेवेति। आत्मा प्रकरणादिति सूत्रद्वयेन प्रभोः फलत्वं, तत्त्वभावे संध्यवादित्यादिसूत्रद्वयेन प्रभोर्निर्दोषत्वं प्रोक्तं ततःपरं जगद्व्यापारवर्ज्जमित्यादिसूत्रेषु। ततः–तस्मात् कारणात्। अखिलमिति। सर्वं लीलाविशिष्टस्वरूपफलमित्यर्थः ॥५७॥

—१५ अन्तरङ्गत्वमिति। फलपूर्वाङ्गतया फलमध्यपातित्वम्। एवं च मनननिदिध्यासनयोः श्रवणाङ्गत्वम्।

—१६ तन्निर्धारं–तन्निश्चयम्।

## आवृत्तिरसकृदुपदेशात् ॥ ४।१।१ ॥

—१८ अधिकरणमवतारयन्ति–आत्मेति।

—२० शास्त्रार्थस्य–आत्मा वारे द्रष्टव्य इत्यादिशास्त्रार्थस्य।

—२३ तथात्वं–आवृत्तिः। प्रकृते–श्रवणादौ।

३०३–२ अर्थसिद्धिरिति। अदृष्टद्वारेत्यर्थः।

—३ उपदेश्यपुरुषभेद आवृत्तिः संभवत्यत आहुः–एकस्मा इति। कालभेदेनैकपुरुषार्थमप्यावृत्तिः संभवत्यत आहुः–एकदेति। एतेन–असकृदुपदेशेन।

—४ अवघातवदिति। अवघात इव सप्तम्यर्थे वतिः। अन्येषां–नवमाभिन्नानामष्टानामुपदेशानाम्। चरमस्य तस्य–नवमस्य तत्त्वमसीत्युपदेशस्य।

सूत्रार्थः—श्रवणमननादीनामावृत्तिः कर्तव्या। छान्दोग्ये नवकृत्व उपदेशादिति ॥ १ ॥

## लिङ्गाच्च ॥ ४।१।२ ॥

—६ अत्रैव–आवृत्तावेव।

—८ यथा यथेति। आत्मा–अन्तःकरणम्।

—१० अञ्जनसंप्रयुक्तं–अञ्जनेन–कज्जलेन सुविहितम्।

—११ अत्र–स्मृतौ। दृष्टान्तेन–चक्षुर्दृष्टान्तेन।

—१२ श्रवणादीनामवान्तरफलत्वे कारणमाहुः—आत्मेति ।

—१३ पूर्वमुक्त्वेति । भगवच्चाक्षुषप्रत्यक्षमितरफलापेक्षयोत्कृष्टं तेन प्राधान्यात्प्रथमं तस्य कथनमित्यर्थः ।

—१४ परमफलरूपतत्सजातीयत्वेनेति । परमफलस्य भगवन्मानससाक्षात्कारस्यापि साक्षात्कारत्वेन रूपेणैकजातीयतया भगवच्चाक्षुषसाजात्यं तेनेत्यर्थः ।

—१५ तेन—अवान्तरफलस्यापि प्रधानफलमध्यपातेन ।

—१६ तथापीति । यद्यप्यस्मिंस्तन्त्रे शाब्दक्रमस्यैव मुख्यत्वं तथापि पूर्वोत्तरमीमांसयोरैकशास्त्र्यात् पूर्वमीमांसाया अप्यादरणीयत्वं तेन तत्राग्निहोत्रं जुहोति यवागूं पचतीति वाक्यविचारे समादृतोयं शाब्दक्रमादार्थक्रमो बलीयानिति न्यायोत्रापि समाद्रियते ।

—१७ पश्चात्संबन्ध इति । आत्मा वारे श्रोतव्यो मन्तव्यो निदिध्यासितव्यो द्रष्टव्य इति संबन्धे कृते सति ।

—१८ उक्तरीतिरिति । दर्शनस्य चाक्षुषस्य मुख्यत्वेनोक्ताववान्तरस्य मानसस्य लाभ इति रीतिरित्यर्थः । प्रकृतविचारस्य—साधनावृत्तिविचारस्य ।

—२० एवं प्रकारान्तरं प्रतिज्ञाय तत्र पूर्वाध्यायेन सहैतदध्यायस्योपजीव्योपजीवकभावरूपां संगतिं वदन्ति—श्रुतिर्हीति । हीनेत्यादि । यथासंख्यमन्वयः । हीनाधिकारिणं प्रति कर्म, मध्यमाधिकारिणं प्रति ज्ञानं, उत्तमाधिकारिणं प्रति भक्तिरिति कर्तव्यत्वेन प्रतिपादयतीत्यर्थः ।

—२१ तत्र—साधननिरूपणे ।

—२२ तेषां—कर्मज्ञानभक्तीनाम् । स्वरूपं—फलोपयोगि रूपम् ।

—२४ तत्—कर्म । एवंच भक्त्यर्थं ज्ञानार्थं वा कृतं कर्मोत्तमफलकम् । स्वमार्गीयं कर्म त्वधमफलकमिति सिद्धम् ।

—२६ उभयत्र—साध्ये हेतौ च । अत्र—कर्ममार्गोसकृज्जन्मावृत्तिफल इत्यत्र ।

—३०४-२ वाजसनेयिशाखायामिति । बृहदारण्यके शारीरब्राह्मणे ।

—१७ लिङ्गपदस्य स्मृतिवाचकत्वमप्रसिद्धमतो व्याख्यानान्तरमाहुः—अथवेति ।

—१९ पूर्वजन्मेत्यादि । यदि वर्तमानं जन्म कर्म च शुभं तेन पूर्वस्मिन्न जन्मनि कर्म शुभमाचरितमित्यनुमापकमित्यर्थः ।

—२० इत्यर्थः-जन्मावृत्तिरूपोर्थः ।

—२१ तस्य-कर्मणः । ज्ञानोपकर्तृत्वमात्रं-चित्तशुद्धिद्वारा ज्ञानोपकारित्वमात्रम् । अस्मिन् द्वितीयव्याख्यान इदं सूत्रद्वयं नाधिकरणान्तर्गतं संशयाद्यभावादिति बोध्यम् ।

सूत्रार्थः—यथा यथात्मा परिमृज्यत इत्यादिश्रुतिलिङ्गभूतस्मृतिरपि श्रवणादीनामावृत्तिं बोधयतीति ॥ २ ॥

इति प्रथममधिकरणम् ।

---

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४।१।३ ॥

—२७ तस्याः-उपासनायाः । अनेकजन्मभिरिति ।

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।

इति गीतावाक्यात् ।

३०५-१ आविर्भावादिति । ज्ञानिनो हृदये ।

—३ तत्रैव-ब्रह्मण्येव ।

—४ फलान्तःपातीति । भगवत्कृपाकार्यत्वात्फलान्तर्गतम् ।

—७ पूर्वं सूत्रार्थ एवोक्तो न त्वधिकरणमतोधिकरणरचनामाहुः-अथवेति ।

—८ तत्र-अनावृत्तौ ।

—१० तन्निवृत्तिमिवेति । अमरशब्देन यथा शतवर्षानन्तरं जायमानं मानुषमरणमेव निवर्त्यते न त्वात्यन्तिकं मरणं तथेत्यर्थः ।

—११ त्वयापि-ज्ञानान्मुक्तिरिति वादिनापि । अङ्गीकार्यत्वादिति । यावदायुषमेवं वर्तयान्नेति श्रुतेः । तस्य-कर्मणः । तस्य-प्ररोहस्य । दुरतिक्रमत्वात्-अनुल्लङ्घनीयत्वात् ।

—१२ तत्फलानुभवस्येति । कर्मणो जन्मावृत्तिलक्षणं फलमवश्यमेवानुभवितव्यम् ।

—१३ अनावृत्तौ बाधकमाहुः-अपि चेति ।

—१४ सा-अनावृत्तिः ।

—१५ इत एवेति । भक्तेः स्नेहरूपत्वाज्ज्ञानानन्तरमेव स्नेहस्य संभवादित्यर्थः ।

—२० अत एव-उपदेशकस्य ज्ञानासंभवादेव ।

—२३ आत्मत्वेन-शरीरभूतस्यात्मनो नियामकत्वेन ।

—२४ तत्कार्यमेव-तद्धर्मकार्यमेव ।

३०६-२ कर्मस्वभाव इति । तत्फलमवश्यं भोक्तव्यमित्यर्थः ।

—३ गौरवाय-जाड्याय । अयं भावः । अजीर्णान्नेन पुरुषेणान्नजीर्णतायै स्वीकृतमौषधमधिकाजीर्णतायै भवति । पूर्वमजीर्णमन्नं न जारयति वा । एवंच यथान्नौषधयोर्भक्ष्यत्वेन तुल्यत्वेपि स्वभावभेदस्तथा प्रकृतेपि । तदेव व्युत्पादयन्ति-व्यापादनैकस्वभावमपीति । व्यापादनं-मरणं तत्स्वभावमप्यवश्यमारकमपि विषमाशीविषं दुःसहसर्पं तस्य तादृशसर्पस्यापगमे विनाशे पटुतरो यो निगमसंगमो मन्त्रसंयोगो न विनाशयत्यपि तु विनाशयत्येव । तथा चोक्तं मार्कण्डेयपुराणे

अविद्याप्युपकाराय विषवज्जायते नृणाम् ।
अनुष्ठिताभ्युपायेन बन्धायान्यायतो हि सा ॥

इति ।

—६ कर्ममोक्षायेति । इदं संपूर्णवाक्यं श्रीमद्भागवतैकादशस्कन्धे योगीश्वरवाक्ये ।

परोक्षवादो वेदोयं बालानामनुशासनम् ।
कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ॥

इति । कर्मनाशायेति पाठः ।

—१३ उभयसंग्रहस्य सूत्राभिप्रेतत्वं स्पष्टयन्ति-एवमिति । श्लेषोक्तिरियमिति । उपगच्छन्तीति पदे श्लेषोक्तिः ।

—१५ उभयत्र-मार्गद्वयोपदेशे ।

—१६ तस्मादिति । आत्मत्वेन हेतुना ज्ञानभक्तिभ्यां पुनरावृत्तिरहितात्मलाभात् ।

**सूत्रार्थः**—आत्मेत्युपासनाद् भगवन्तं प्राप्नुवन्ति । उत्तमाधिकारिणमुपस्थितं तद्विषयमुपदिशन्ति चेति ॥ ३ ॥

## न प्रतीकेन हि सः ॥ ४।१।४ ॥

—२१ तेन-आरोपितोपास्येन । सः-भक्तिज्ञानप्राप्यः । श्रुतिसिद्धत्वादिति । य एनं विदुरमृतास्ते भवन्ति । तमेवं विद्वानमृत इह भवतीत्यादिश्रुतिसिद्धत्वादित्यर्थः ।

—२२ भाव इति । अत आत्मनः परमात्मत्वेनोपासनं प्रतीकोपासनमिति तवाभिमतमसंगतमित्यर्थः । अस्मिन्व्याख्यान आत्मत्वेनोपासनस्याप्रतीकोपासनत्वाद्यद्यपि ज्ञानभक्त्योः साफल्यमायाति तथापि नहीति पदद्वयं सूत्रे व्यर्थं स्यादित्यरुचेः प्रकारान्तरेण व्याख्यातुमवतारयन्ति-अथवेति ।

—२३ तत्प्रवेशः–ब्रह्मणि प्रवेशः ।

—२४ अनात्मभूते–मनःप्रभृतौ ।

३०७-१ तदुपगमनं–पुरुषोत्तमप्राप्तिः ।

**सूत्रार्थः**—प्रतीकोपासनेन मोक्षो न भवति । यतोन्यस्यान्यरूपेणोपासनं प्रतीकं तत्र भेदोदयादिति ॥ ४ ॥

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ४।१।५ ॥

—३ सर्वं खल्वित्यादिवाक्यं छान्दोग्ये शाण्डिल्यविद्यायाम् । आत्मैवेदमिति तत्रैव सनत्कुमारनारदसंवादे ।

—४ मुक्तिसाधनत्वेनेति । साक्षात्परंपरया वेत्यर्थः ।

—५ सा–ब्रह्मदृष्टिः ।

**सूत्रार्थः**–सर्वस्य ब्रह्मरूपत्वाद् ब्रह्मदृष्टिकरणं तु न प्रतीकोपासना । ज्ञानाधिक्यात्तस्या ब्रह्मदृष्टेः स्वत एवोदयादिति ॥ ५ ॥

इति द्वितीयमधिकरणम् ।

---

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ४।१।६ ॥

—१४ अङ्गोपासनाफलविचारार्थमिदमधिकरणम् । तदनुगुणविषयादिकमाहुः– छान्दोग्य इति ।

—१९ तत्रैव–छान्दोग्ये मधुविद्यायाम् ।

—२४ पूर्वे–पूर्वाधिकरणसूत्रद्वये । तत्त्वेन–ब्रह्मत्वेन ।

—२५ एकप्रकारकेण–सर्वं खल्विदं ब्रह्मेति श्रुत्युक्तप्रकारकेण ।

—२६ तादृशाधिकाराभावात्–उत्कृष्टाधिकाराभावात् ।

३०८-१ तद्भावनायां–सर्वं ब्रह्मेति भावनायाम् ।

—२ एवं सति–उत्कृष्टाधिकाराभावेपि सर्वं ब्रह्मेति ज्ञानसंभवे सति ।

—३ तत्–ब्रह्मत्वेनोपासनम् । तथा–फलोपयोगि । सर्वस्यापीति । ब्रह्मत्वेन सर्वस्याप्युपासनं फलाय भवेदित्यर्थः ।

—६ हेतुं व्याख्यान्ति–उपपन्नमिति । युक्तिसिद्धमित्यर्थः । एतत्–अङ्गेषु ब्रह्मोपासनम् । एवं च–अङ्गं प्रतीकोवयवः–इति कोशादङ्गमेव प्रतीकं तदुपासनं चाङ्गोपासनमेव । न तु त्वदुक्तरीतिकप्रतीकोपासनम् । अतस्त्वदुक्तप्रकारकप्रतीकोपासनान्न फलम् ।

—७ **पूर्वोक्तमन्त्रार्थं विशदयन्ति-अपरं चेति** । आदित्यो भगवच्चक्षुः । तस्य मधुत्वं मधुनाडित्वात् । प्राच्यो मधुनाड्य इति श्रुतेः ।

—१२ **अन्यधर्मनिवृत्तिः**-क्षुधादिरूपप्राणधर्मनिवृत्तिः । **तस्यैव**-भगवच्चक्षूरूपादित्यस्यैव ।

—१३ **तत्रैव**-तस्मिन्नादित्य एव ।

—१४ **तद्दर्शनं**-आदित्यदर्शनम् । **पूर्वभावं**-आदित्यसायुज्यम् ।

—१५ **हेत्वभिप्रेत इति** । उपपत्तेरिति सूत्रस्थहेतुबोधकपदतात्पर्यविषयीभूत इत्यर्थः ।

—१६ **न हीति** । ज्ञानमार्ग एवान्धत्वादिदोषो न भक्तिमार्ग इत्यपि सूच्यते ।

—१७ **एकवचनं**-सूत्रेऽङ्ग इति पद एकवचनम् ।

—१८ **एतेन**-स्वरूपैक्यस्याङ्गे सत्त्वेन ।

**सूत्रार्थः**-भगवतः शक्तिभूतेष्वादित्यादिषु या ब्रह्मत्वोपासना उक्तास्ताः साकारव्यापकस्य ब्रह्मण एकमप्यङ्गमुपासितं तादृशफलदमिति बोधनार्थम् । उपपद्यते चैतत् । आनन्दस्वरूपकरपादोदरादेर्ब्रह्मणोऽङ्गमपि तादृशमेवेति न प्रतीकोपासनमिति ॥ ६ ॥

## आसीनः संभवात् ॥ ४।१।७ ॥

—२१ **सूत्रमवतारयन्ति-पूर्वसूत्रेणेति** । **धर्ममात्रस्य**-चक्षुरादिरूपस्यादित्यादेर्धर्मस्य । **धर्मिणः**-भगवतः ।

—२२ **तदग्रे**-अङ्गोपासकस्याग्रे ।

**सूत्रार्थः**-उत्कटस्नेहात्मकसाधनसंपन्नत्वादङ्गोपासकाग्रे भगवांस्तदधीनः सन्नासीनो भवतीति ॥ ७ ॥

## ध्यानाच्च ॥ ४।१।८ ॥

**सूत्रार्थः**—उत्कटभावेन निरन्तरस्मृत्यात्मकध्यानादपि भगवांस्तदग्र आसीनो भवतीति ॥ ८ ॥

## अचलत्वं चापेक्ष्य ॥ ४।१।९ ॥

**सूत्रार्थः**—भक्तेच्छामपेक्ष्य भगवतोऽचलत्वं चलत्वमपि च भवतीति ॥ ९ ॥

## स्मरन्ति च ॥ ४।१।१० ॥

**सूत्रार्थः**—केचिद्भक्ता अन्यफलनिरपेक्षतया भगवन्तं स्मरन्ति चकारात्कीर्तयन्ति शृण्वन्ति चेति ॥ १० ॥

इति तृतीयमधिकरणम् ।

---

## यत्रैकाग्रता तत्राविशेषात् ॥ ४।१।११ ॥

३०९-१४ अथ-पूर्वाधिकरणोक्तरीत्यादित्याद्यङ्गोपासनाभिः साधनभक्त्युत्कर्षात्पुरुषोत्तमस्यान्तर्बहिःप्राकट्यानन्तरम् ।

—१५ **एकाग्रता**-चित्तस्य भगवन्मात्रविषयता ।

—१६ **ग्राहकचित्तधारेति** । भगवद्ग्राहकस्य चित्तस्याखण्डा वृत्तिरित्यर्थः ।

—१७ **न तारतम्यमिति** । एवं च यत्र भावसाम्यं तत्र न तारतम्यं यत्र तु भाववैषम्यं तत्र तारतम्यमस्त्येवेति भावः ।

**सूत्रार्थः**-यत्र भक्तेष्वेकाग्रतया भगवज्ज्ञानं तद्भक्तमध्येन्तर्बहिः पश्यतोर्भक्तयोः किमपि तारतम्यं नास्ति विशेषाभावादिति ॥ ११ ॥

इति चतुर्थमधिकरणम् ।

---

## आ प्रायणात्तत्रापि हि दृष्टम् ॥ ४।१।१२ ॥

—२१ अधिकरणान्तरत्वाशयेनाहुः-**उक्तेर्थ इति** ।

—२३ **वैलक्षण्यात्**-भूतकालवर्तमानकालसंबन्धकृतवैलक्षण्यात् ।

३१०-१ **सतामहमिति** । अयं संपूर्णः श्लोकः श्रीमद्भागवतैकादशस्कन्धे एकादशाध्याय इत्थम् ।

प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव ।
नोपायो विद्यते सम्यक् प्रायणं हि सतामहम् ॥

अयं हि श्लोको भगवता ज्ञानमार्गाद्भक्तिमार्गस्योत्कर्षं कथयतोक्तः ।

—३ **मर्यादीकृत्य**-अन्तःप्रकटभगवदनुभवं मर्यादीकृत्य । **सैवावस्था**-अन्तःप्रकटानुभवरूपावस्था ।

—५ **आलापेत्यादि** । भगवता सह संभाषणं तदवलोकनं तच्चरणकमलस्पर्शादिकम् ।

—७ **अन्यथा**-शुद्धपुष्टिमार्गेङ्गीकाराभावे ।

**सूत्रार्थः**—परमपुरुषार्थरूपफलप्राप्तिपर्यन्तं बाह्यान्तरत्वानुसंधानरहितावस्था नित्या। ततः परं सायुज्यमित्यपि न। तत्रापि पूर्ववद्भगवता सहालापादिकं तस्य दृष्टमेव फलं नादृष्टं सायुज्यादिकमिति ॥ १२ ॥

इति पञ्चममधिकरणम्।

---

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ४।१।१३॥**

—१३ अधिकरणप्रयोजनमाहुः-पुष्टिमार्गीयभक्तस्येति।

—१४ तत्र-मर्यादाभक्तिमार्गे। आवश्यकमिति।

तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव।
ज्ञानविज्ञानसहितो भज मां भक्तिभावतः॥

इति भगवतो वाक्यात्।

—१५ तत्र-कर्म। स्वसजातीयतत्संतानजननादिति। तत्संतानस्य भोगानुकूलकर्मप्रवाहस्योत्पादनात्।

—१७ तद्वत्-प्रायश्चित्तवत्। तस्य-ज्ञानस्य।

—१८ तदुद्देशेन-कर्मनाशोद्देशेन। अन्योन्याश्रयं स्फुटयन्ति-दुरितस्येति। दुरितनाशे सति ज्ञानोदयः। ज्ञानसत्त्वे च दुरितनाश इत्यन्योन्याश्रयः।

—१९ अनुक्तविषयेति। वक्तुमशक्येत्यर्थः।

—२१ तस्य-अघस्य।

—२२ अनुत्पत्तिरेवार्थ इति। यथा पुष्करपलाश आपो न श्लिष्यन्त इति श्रुतेरपि पापानुत्पत्तिरेवार्थ इत्यर्थः। एवं भोगातिरिक्तेन ज्ञानेन प्रारब्धनाशाङ्गीकारे।

—२४ इह तु-ज्ञानेन प्रारब्धनाशे तु। तथा संपत्तेः-कर्मसंबन्धासंपत्तेः। अत एव-ज्ञानस्यैवं सामर्थ्यवत्त्वादेव।

३११-४ एतेन-ज्ञानेनाश्वमेधादिकर्मणापि दुष्कर्मक्षयश्रावणेन।

—६ या-चित्ताशुद्धिः।

—७ तत्प्रसङ्गः—अन्योन्याश्रयप्रसङ्गः।

—९ उररीकार्यं-अङ्गीकार्यम्।

**सूत्रार्थः**—ब्रह्मज्ञानस्याधिगमे सत्युत्तरपापस्यासंबन्धः। पूर्वपापस्य विनाशश्च भवति। यथेषीकातूलमिति श्रुत्या यथैधांसीति स्मृत्या च तथा कथनादिति ॥ १३ ॥

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४।१।१४ ॥

—१२ सूत्रमवतारयन्ति-पापस्येति । शास्त्रविरोधित्वेनेति । शास्त्रे निषिद्धतया कथनात् ।

—१३ अतथात्वेन-शास्त्राविरोधित्वेन । पूर्वन्यायातिदेशं-पूर्वस्य नाश उत्तरस्यासंश्लेष इति न्यायातिदेशम् ।

—१५ स एव-ज्ञानरूप एव । उभे इत्यादिश्रुतिः शारीरब्राह्मणस्था । क्षीयन्त इत्यादिश्रुतिर्मुण्डकोपनिषत्स्था । सामान्यसुकृतदुष्कृतबोधक-सामान्यकर्मशब्दत्वेन कथनात् ।

—१८ सङ्गजदोषोत्पत्तिवदिति । यथा ज्ञानानन्तरं सङ्गजदोषा उत्पद्यन्ते तथा ।

—१९ अग्रे-ज्ञानानन्तरम् ।

—२१ तुशब्दप्रयोगरहस्यमाहुः-अपिशब्द इत्यादिना ।

—२२ इति वाक्यादिति । इदं वाक्यं तु श्रीमद्भागवते तृतीयस्कन्धे कापिलेये । तच्चेत्थम् ।

न कर्हिचिन्मत्पराः शान्तरूपे नङ्क्ष्यन्ति नोनिमिषो लेढि हेतिः ।
येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम् ॥

—२३ तथा करोति-भक्तिभावं रुणद्धि । प्रतिबन्धे हेतुं दर्शयन्ति-तद्भाव इति ।

—२४ ज्ञायत इति । भरतादिषु महत्सु तथा दर्शनात् ।

—२५ तस्मिन् सत्यपि-भरते पूर्वप्रारब्धभोगे सत्यपि । असंश्लेष एवेति । तदुपाख्याने, स च तदा पितृसंनिधावेवासध्रीचीनामिव स्म करोतीति वाक्येन तादृशकर्मबोधनाद्ब्राह्मणशरीरदशायां जीवन्मुक्तत्वबोधनाच्चासंश्लेषः ।

—२६ तत्परत्वेन-अतिदेशपरत्वेन। एवं च पातेत्विति सूत्रांशे नातिदेशः।

३१२-१ अन्यव्याख्यानं दूषयन्ति-पातशब्दस्येति ।

—२ मुक्तिप्रापकपदाभावादिति । सूत्रे तादृशबोधकपदाभावादित्यर्थः।

—४ वक्तव्यत्वाच्चेति । एवं चान्यव्याख्याने तत्सूत्रवैयर्थ्यापत्तिरित्यर्थः ।

सूत्रार्थः— एवमेवेतरस्य पुण्यस्यापि गतिः । भगवद्भावाच्युतिरूपे पातेऽप्येवमेव पुण्यपापयोरश्लेषविनाशौ स्त इति ॥ १४ ॥

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४।१।१५ ॥

—६ सूत्रमवतारयन्ति-नन्विति । तन्नाशे- कर्मनाशे । तन्नाशस्य-देहनाशस्य ।

—७ प्रवचनानुपपत्तिः- शिष्यं प्रति ब्रह्मोपदेशानुपपत्तिः । एवं ब्रह्मज्ञानात्प्रागुपदेशयोग्यत्वाभावादुपदेशाभावः । तदनन्तरं शरीरपातादुपदेशाभाव इति ब्रह्मोपदेशसंप्रदाय एव विहन्येतेत्यर्थः ।

—८ तदभावेन-आचार्याभावेन ।

—११ कार्ये-शरीरम् । ते एवेति । दह्येते इति शेषः ।

—१९ तत्रेति । तादृशस्थले प्रारब्धकर्मणोपि दाह इत्यर्थः ।

—२० अग्रे- अतोन्यापीत्यादिसूत्रे ।

—२२ भरतं प्रति- भरतं लक्ष्यीकृत्य ।

—२४ इच्छाप्रतिबद्धतादशायां- प्रारब्धं ज्ञानेन न नश्यत्विती-च्छादशायाम् । प्राचीना- ज्ञानेन प्रारब्धनाश्यत्वरूपा ।

३१३-३ तथेच्छा-प्रारब्धस्य भोगेनापनयनमितीच्छा । स्वकृतमर्यादापालनायेति । प्रारब्धकर्मणां भोगादेव क्षय इतीश्वरकृतमर्यादारक्षणायेत्यर्थः ।

—४ पुष्टावङ्गीकृते-अजामिलादौ । न तथेति । प्रारब्धस्य भोगेनापनयनेच्छा नास्तीत्यर्थः ।

सूत्रार्थः—प्रारब्धेतरसंचिताक्रियमाणसुकृतदुष्कृते एव नश्यतः । तत्प्रारब्धकर्मणामदहनं कार्यमात्रपूर्वावधिरूपभगवदिच्छातो ज्ञेयमिति ॥ १५ ॥

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४।१।१६ ॥

—६ सूत्रमवतारयन्ति-नन्विति ।

—७ प्रयोजनाभावादिति । अग्निहोत्रादीनां प्रारब्धनाशकत्वासंभवात् । तादृशानां-जनकवसिष्ठादिब्रह्मविदाम् ।

—८ तत्करणं-अग्निहोत्रादिकरणम् । अतादृशैः-अग्निहोत्रादिजनकप्रारब्धशून्यैः ।

—११ अत एव-अग्निहोत्रादिसंपादकप्रारब्धकर्माभावादेव ।

—१५ मतान्तरमनूद्य दूषयन्ति-केचिदिति । कार्ये-मोक्षरूपम् ।

—१९ दर्शनपदार्थ इति । अस्मिन् सूत्रे यत्तद्दर्शनादिति पदं तत्रत्यदर्शनपदस्यार्थ इत्यर्थः । पूर्वविरोधादिति । मनसैवेदमाप्तव्यमिति पूर्वश्रुतिविरोधात्तथा तदधिगम इत्यादिपूर्वसूत्रविरोधाच्चेत्यर्थः ।

सूत्रार्थः— जनकादीनामग्निहोत्राद्यनुष्ठानं प्रारब्धकर्मोपभोगायैव । यथाकारीत्यादिश्रुतिदर्शनादिति ॥ १६ ॥

इति षष्ठमधिकरणम् ।

---

## अतोन्यापि ह्येकेषामुभयोः ॥ ४।१।१७ ॥

—२२ एतदधिकरणं न पूर्वशेषमिति बोधयितुं पूर्वोक्तमनूद्यैतदवतारयन्ति–तदेवमिति। मर्यादयेति। भोगात्मिकयेत्यर्थः।

—२४ तस्य–प्रारब्धस्य।

—२५ तं विना–भोगं विना। अस्यापि–पुष्टिमार्गीयस्यापि।

३१४-३ प्रवचनादिनिरूपणेनेति। प्रवचनाद्यनुपपत्त्येत्यर्थः। तदनाश्येति। ज्ञानानाश्यप्रारब्धाख्यकर्माक्षेपिकायाः, भोगेन प्रारब्धनाशो भवतीति बोधकश्रुतेरित्यर्थः।

—४ तस्य पुत्रा इति। इयं शाट्यायनिश्रुतिः। दायं–पैतृकं रिक्थम्।

—६ विषयभेद इति। पुष्टिमर्यादाभक्तभेदेनेत्यर्थः।

—९ नाशनिरूपणादिति। ज्ञानेनेति शेषः।

—११ एतत्संबन्धिगतमिति। एतस्य पुष्टिभक्तस्य संबन्धिनः सुतादिप्रभृतयस्तद्गतम्। तस्य–प्रारब्धस्य। तेन–भक्तसंबन्धिना।

—१२ तयोः–प्रारब्धपुण्यपापयोः।

—१३ अकृताभ्यागमप्रसङ्गेनेति। सुतादिभिरकृतयोः पुण्यपापयोरभ्यागमः प्राप्तिस्तत्प्रसङ्गेनेत्यर्थः।

—१४ अत्र–पुष्टिमार्गे।

—१५ तस्याः–अनुपपत्तेः। कर्तुमकर्तुमन्यथाकर्तुं समर्थत्वाद्भगवत इति भावः।

**सूत्रार्थः**—एकेषां पुष्टिभक्तानां प्रारब्धाप्रारब्धयोः सुकृतदुष्कृतयोरुपभोगं विनैव नाशः। तत्र प्रमाणं तु ज्ञानानाश्यप्रारब्धकर्माक्षेपकश्रुतेर्भिन्ना तस्य पुत्रा दायमुपयन्तीया श्रुतिरिति ॥ १७ ॥

## यदेव विद्ययेति हि ॥ ४।१।१८ ॥

—१८ सूत्रमवतारयन्ति–नन्विति।

—१९ तथात्वस्य–वीर्यातिशयत्वस्य।

—२० तदुत्तरस्य–तदुत्तरकर्मणः। तत्समर्था–ब्रह्मविद उत्तरकर्माश्लेषसंपादनसमर्था।

—२५ त्रयीप्रवृत्तिहेतुत्वमिति। ओँकारपूर्वकमेव वेदत्रयस्य प्रवृत्तिरतस्तस्य तथात्वम्।

३१५-२ ज्ञायत इति । प्रकरणादित्यर्थः । तेन-वाक्यस्य प्रकरणावरुद्धत्वेन ।

—४ श्रद्धोपनिषदोः साधारणत्वाद्विद्याया अपि साधारण्यं युक्तं न तत्संकोच इति कश्चिच्छङ्केत तदर्थं प्रकारान्तरेण व्याख्यान्ति-यद्वेति ।

—६ सवासनतन्नाशनात्-वासनासहितप्रारब्धनाशात् ।

—७ पूर्वोक्तार्थं संगृह्यैतत्सूत्रस्य तात्पर्यान्तरमाहुः-यद्वेति ।

—१० एवं सति-जीवनिष्ठविद्याया भगवज्ज्ञानशक्त्यंशत्वे सति । धर्मसंबन्धिसंबन्धादिति । धर्मो भगवज्ज्ञानशक्तिरूपस्तत्संबन्धिनी जीवनिष्ठा विद्या तत्संबन्धादित्यर्थः ।

—११ धर्मिसंबन्धे-भगवत्संबन्धे ।

सूत्रार्थः-भगवज्ज्ञानशक्तेरंशभूता जीवनिष्ठा विद्या । ततश्च यदेव विद्यया करोतीति श्रुत्या भगवच्छक्त्यंशभूतविद्यासंबन्धाज्जीवकृतं कर्म यदि वीर्यवत्तरं तर्हि साक्षात्तत्कृपया प्रारब्धनाशः कुतो दुष्करः । एवं च पुष्टिमार्गे भगवत्कृपातः प्रारब्धं नश्यतीति भाव इति ॥ १८ ॥

**भोगेन त्वितरे क्षपयित्वाथ संपद्यते ॥ ४।१।१९ ॥**

—१४ सूत्रमवतारयन्ति-पुष्टिमार्गीयफलप्राप्ताविति ।

—१९ उक्तदेहं-भगवल्लीलोपयोगिदेहम् । व्यवच्छेदकः-निरासकः ।

सूत्रार्थः-लिङ्गस्थूलशरीरे त्यक्त्वा भगवल्लीलोपयोग्यलौकिकदेहसंपत्त्यनन्तरं भोगसंपत्तिं लभते सोऽश्नुते सर्वान्कामान्सहेति श्रुतेरिति ॥ १९ ॥

इति सप्तममधिकरणम् ।

---

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालप्रबोधिन्यां चतुर्थाध्यायस्य प्रथमः पादः ४।१

# अथ चतुर्थाध्याये द्वितीयः पादः ॥ ४।२ ॥

## वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ४।२।१ ॥

३१६-४ अथ द्वितीयपादं व्याचिख्यासव आचार्याः पूर्वपादार्थमनुवदन्ति-पूर्वपाद इति । लौकिकशरीरे-लिङ्गस्थूलदेहौ । अलौकिकं तत्-अलौकिकशरीरम् ।

—५ अथात्रेदमिति । एवंचावसरसंगतिः प्रथमद्वितीयपादयोः । सूक्ष्मशरीरस्य-लिङ्गशरीरस्य ।

—६ चामीकरत्वमिवेति । स्पर्शमणिसंयोगाल्लोहस्य सुवर्णत्वमिव । पूर्वपक्षमाहुः-अत्रेति ।

—८ पूर्वावस्थापगमः-संसारावस्थाविनाशः ।

—११ तथैवाहेति । कारणभूते सत्स्वरूपे लयमाहेत्यर्थः ।

—१२ उक्तमुक्त्यभावात्-सायुज्यमुक्त्यभावात् ।

—१४ तदपगमे-दोषापगमे । तस्य-पुष्टिभक्तस्य । तथात्वं-आनन्दात्मकत्वम् ।

—१५ तादृशाः-जीववद्ब्रह्मांशाः । तद्दृष्टान्तेन-जीवदृष्टान्तेन । अत्रापि-प्राणेन्द्रियादिष्वपि । तथात्वं-आनन्दरूपत्वम् ।

—१८ सामान्यनिषेध इति । सामान्यतया लौकिकालौकिकदेहनिषेध इत्यर्थः । तदनुभवः-वैकुण्ठवासिगतो देहेन्द्रियाद्यनुभवः ।

—१९ तेषां-देहेन्द्रियाणाम् । तथात्वे-आनन्दरूपत्वे ।

—२२ भक्तानां-मर्यादामार्गीयभक्तानाम् । अनागन्तुकं-नैसर्गिकम् ।

—२३ संपद्यते-आविर्भवति । तदीयत्वेन-भक्तसंबन्धित्वेन । तत्-देहेन्द्रियादि । देहादिरपीति । आदिपदेन प्राणेन्द्रियाणां ग्रहणम् । तदीयत्वेन-पुष्टिमार्गीयभक्तसंबन्धित्वेन ।

—२६ संपद्यते-आविर्भवति ।

—३१७-१ आत्मकामः-पुरुषोत्तमकामः । नतु मुक्तिकाम इत्यर्थः । आप्तकामः-प्राप्तमनोरथः । तस्मात्-भक्तदेहात् ।

—२ अत्रैव-अन्तःप्रकटे भगवत्येव । ब्रह्मैव सन्-आनन्दरूपः सन् ।

—७ ध्वन्यत इति । कामपदेन तात्पर्यवृत्त्या ध्वन्यत इत्यर्थः ।

—९ तदयोग्यत्वात्- भगवदाश्लेषायोग्यत्वात् । तत्रैव- अन्तःप्रकट-पुरुषोत्तम एव ।

—१० आत्मातिरिक्तस्य-प्राणेन्द्रियादेः ।

—१३ बृंहणत्वादिति । भक्तात्मनोपि महत्त्वाविर्भावादित्यर्थः ।

—१४ अन्यथा-जीवो ब्रह्मैव भवति न तु तस्य लीलायां प्रवेश इत्यर्थकरणे ।

—१५ ब्रह्मत्व इति । सिद्धे सतीत्यर्थः । तदितरव्यवच्छेदे-प्राणेन्द्रियातिरिक्तदेहतद्धर्मादिव्यवच्छेदे ।

—१६ अत एव-जीवस्य भगवद्भोगावश्यकत्वादेव । तथा च मर्त्योमृतो भवतीत्येव वदेन्न त्वत्र ब्रह्म समश्नुत इति वदेत् ।

—१८ तद्वत्त्वेन-मर्त्यशरीरवत्त्वेन । तथा-मर्त्यत्वेन । पूर्वं-पुष्टिलीला-प्रवेशात्पूर्वम् । तादृश एव-मर्त्य एव ।

—१९ अस्मिन्नेव-प्राप्तानन्दमयशरीर एव ।

—२३ तस्य-स्नेहस्य । तदौत्कण्ठ्ये-भक्तस्योत्कण्ठतायाम् ।

—२४ तस्य-प्रभुप्राकट्यस्य । तस्मिन्-भगवत्प्राकट्ये ।

३१८-१ तेषां-लौकिकेन्द्रियाणाम् ।

—२ तत्रैवेति । मनोद्वारा पुरुषोत्तम एवेत्यर्थः ।

सूत्रार्थः- पुष्टिभक्तानां भगवदानन्दप्राप्तौ भगवति लये प्रथमं वाङ्मनसि लीयते । एवंभावात् पूर्वं मनस्येव भगवतो दर्शनात् । वाङ्मनसि संपद्यत इति श्रुतेश्च । दर्शनाभावे वेण्वादिशब्दश्रवणेनापि सर्वेन्द्रियैः स्वरूपानुभवेच्छा जन्यत इति शब्दाच्चेत्युक्तम् ॥ १ ॥

## अत एव सर्वाण्यनु ॥ ४।२।२ ॥

—१२ संपद्यत इत्यर्थ इति । तथाच श्रुतौ वाक्पदमिन्द्रियान्तरोपलक्षणम् । मतान्तरमनूद्य खण्डयन्ति- केचिदिति ।

—१७ मुख्यार्थत्याग इति । वाक्शब्दस्य वाग्वृत्तिरित्यर्थस्वीकारे मुख्यो वाक्पदस्यार्थस्त्यज्येत लक्षणया तद्वृत्तिरूपोर्थो गृह्येतेत्यर्थः ।

—१८ पदवैयर्थ्यमिति । वृत्तिनाशे मनोरूपाधिकरणस्याप्रयोजकत्वान्मनसीत्यस्य वैयर्थ्यं स्यादित्यर्थः । विषयवाक्येत्यादि । एतस्य विषयवाक्यत्वे सूत्रकृता तेजस्त्यागेन प्राणस्य करणाध्यक्षे जीवे लयकथनात् क्रमत्यागस्तदनुपपत्तिश्चेत्यतो व्यासानभिप्रेतत्वावगमादिदं व्याख्यानमयुक्तमित्यर्थः ।

सूत्रार्थः—पूर्वोक्तहेतुभ्यामेव सर्वेन्द्रियाणि वाग्लयानन्तरं मनसि संपद्यन्त इति ॥ २ ॥

## तन्मनः प्राण उत्तरात् ॥ ४।२।३ ॥

—२२ स यथा शकुनिरिति श्रुतिश्छान्दोग्ये श्वेतकेतूपाख्याने।

सूत्रार्थः—सर्वेन्द्रिययुक्तं मनः प्राणे लीयते। प्राणबन्धनं हि सोम्य मन इत्युत्तरश्रुतिवाक्यादिति ॥ ३ ॥

## सोध्यक्षे तदुपगमादिभ्यः ॥ ४।२।४ ॥

३१९–४ ततः–पुष्टिमार्गेङ्गीकारात्।

—६ तदादित्वं–अनुग्रहादित्वम्। उद्देशः–स्नेहादीनामेकैकशः कथनम्।

—८ स्वप्रकृताविति। जीवस्य पुरुषाक्षरादौ भूतानां तत्तन्मात्रादौ लय इत्यर्थः।

—९ भक्त्या मुक्तिरिति। भक्तितारतम्येन मुक्तितारतम्यम्।

—१० तारतम्यमिति। मर्यादामार्गापेक्षया पुष्टिमार्गेतीव तारतम्यमित्यर्थः।

सूत्रार्थः—भगवता पुष्टिमार्गेङ्गीकार इत्यादिहेतुभ्यः स सर्वेन्द्रियमनोयुक्तः प्राणोध्यक्षे भगवति लीयते। आदिपदेन भगवद्वशीकरणसमर्थस्नेहतत्प्राप्तिप्रतिबन्धकत्यागादीनां ग्रहणमिति ॥ ४ ॥

इति प्रथममधिकरणम्।

---

## भूतेषु तच्छ्रुतेः ॥ ४।२।५॥

—१९ एवमेव–पुष्टिमार्गीयवत्।

—२१ तच्छ्रुतेः–बृहदारण्यकार्तभागब्राह्मणस्थश्रुतेः।

३२०–१० एतेन–एवं निर्धारितवाक्येन। कर्माश्रित इति। पुण्यापुण्यकर्माश्रितो न तु ब्रह्माश्रित इत्यर्थः।

—११ एवं सति–विरुद्धवाक्यद्वयस्यैकस्मिन्कर्मणि स्थितत्वे सति।

—१२ अत्र–सद्योमुक्तिप्रतिपादकवाक्ये। तस्यैव–सद्योमुक्तस्यैव। द्वयं–प्राणानुत्क्रमणं, संघातलयश्चेति द्वयम्।

—१३ तस्मिन्–मुक्ते।

—१६ मर्यादामार्गीयतत्प्रापकमिति । मर्यादामार्गीयमुक्तबोधकमित्यर्थः ।

—१७ तदग्रिमविचारितः-याज्ञवल्क्यार्तभागाभ्यां विचारितः । तद्विषयः-मुक्तविषयकः ।

—१८ बाधकं-कर्माश्रयेणावस्थानरूपं विद्वत्ताबाधकम् । श्रुतिशिरःसमाकलितं-उपनिषत्तात्पर्यम् । तथैव-विधिप्राधान्यतयैव ।

—२० एवं सति-मर्यादामार्गे कर्मप्राधान्ये सति ।

—२४ दुर्ज्ञेयत्वमिति । ईश्वरेच्छारीतिमविदुषः पुंसोस्यार्थस्य दुर्ज्ञेयत्वं जानन्ती श्रुतिरिति योजना । एवं चायमर्थो नेश्वरेच्छारीतिमाविदुषा पुरुषेण ज्ञातुं शक्य इत्यर्थः ।

३२१-१ अत्र-श्रुतिवाक्ये । कर्मपदमिति । कर्मपदेन मत्वर्थलक्षणया कर्मिणो ग्राह्यास्तदाहुः-मर्यादामार्गपरमिति ।

—३ तद्दाने-मुक्तिदाने । तत्-ज्ञानसमुच्चितं कर्म ।

—४ अत्र-फलदाने ।

सूत्रार्थः—मर्यादाभक्तानामिन्द्रियाणि भूतेषु लीयन्ते । यत्रास्य पुरुषस्य मृतस्येत्यादिश्रुतेरिति ॥ ५ ॥

## नैकस्मिन् दर्शयतो हि ॥ ४।२।६ ॥

—६ सूत्रमवतारयन्ति-नन्विति । उक्तनिर्णयः-मर्यादामार्गीयस्य वैधमुक्तिनिर्णयः ।

—७ तादृशं-मर्यादामार्गीयम् ।

—१२ अन्यथा-तद्वागादिलयस्य भगवत्यङ्गीकारे ।

—१४ एतद् द्रढयितुं मतान्तरमनूद्य दूषयन्ति-केचिदिति । शरीरान्तरप्रेप्सासामयिक इति । शरीरान्तरस्य प्रेप्सा लाभेच्छा तत्कालीनः ।

—१५ प्रश्नविषय इति । क्वायं तदेत्यनेन तादृशजीवविषयकः प्रश्नः क्रियत इत्यर्थः ।

—२० एतेन-पूर्वोक्तरीत्या शरीरान्तरप्रेप्सासामयिकजीवनिराकरणेन । अस्य निरस्तमित्यनेन संबन्धः । अयं-क्वायं तदेति प्रश्नश्रुत्युक्तो जीवः ।

—२१ तत्फलं-परविद्याफलम् । तच्च-अमृतत्वफलं च । देशान्तरानायत्तमिति । इहैव समवनीयन्त इति श्रुतेरत्रैव लभ्यमानत्वात् ।

—२२ तस्याः-अपरविद्यायाः ।

—२३ **निरस्तामिति** । एवंरीत्योत्क्रमणाङ्गीकारे पूर्वेन्द्रियलयप्राणानुत्क्रमणवैयर्थ्यप्रसङ्गेनार्तभागब्राह्मणेनुक्तायाः शरीरान्तरप्रेप्साया नूतनेन्द्रियापेक्षायाश्च कल्पनापत्त्या लक्षणाप्रसङ्गेन श्रुतिसूत्रव्याकुलीभावाच्च निरस्तामित्यर्थः ।

**सूत्रार्थः**–मर्यादायामङ्गीकार इति नियम एकस्मिन् ज्ञानिन्येव न । किंतु मर्यादाभक्ते ज्ञानिनि चोभयोरेव मर्यादायामङ्गीकार इति नियमः । यतस्तथैव याज्ञवल्क्यार्तभागौ बृहदारण्यके दर्शयत इति ॥ ६ ॥

इति द्वितीयमधिकरणम् ।

---

## समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४।२।७ ॥

३२२–२ अधिकरणद्वयेन पुष्टिमर्यादास्थयोर्वागादिलयं व्युत्पाद्य पूर्वोक्तदार्ढ्यायातः परं नवभिः सूत्रैस्तास्ताः शङ्का निराकरोति सूत्रकार इत्याशयेनावतारयन्ति–**मर्यादापुष्ट्योरिति** । तत्र–अन्यथाभावाभावे । वस्तुस्वरूपं–मर्यादापुष्टिमार्गयोः स्वरूपम् ।

—८ **अविद्ययेति** । विद्याविद्ययेति श्लोकोक्तया स्वीयया मूलशक्त्याहंममेत्यसद्ग्रहात्मकजीवाविद्याश्रयत्वसंपादनम् । **तदुपक्रमः**– अविद्यासंबन्धोपक्रमः ।

—१० **व्रतं**–साधनानुष्ठानम् ।

—११ **पुष्टिमार्गे समानमिति** । ते नाधीतश्रुतिगणा इत्यादिभगवद्वाक्यात् ।

**सूत्रार्थः**—मर्यादामार्गे जीवसंसरणमारभ्य मोक्षपर्यन्तं साधनेनैव मुक्तिरिति व्यवस्था समाना । मध्ये भेदो न भवति । पुष्टिमार्गे त्वनुपोष्य साधनमकृत्वैवामृतत्वं नियतमिति ॥ ७ ॥

## तदपीतेः संसारव्यपदेशात् ॥ ४।२।८ ॥

—१३ सूत्रमवतारयन्ति–**एवमिति** । **परामृश्यते**–विचार्यते ।

—१४ **अग्रिमेण**–भूतेष्वित्यादिसूत्रेण ।

—२१ **मुक्तेः**–मर्यादामार्गीयमुक्तेः ।

—२३ **अत एव**–मुक्तेरितरसाधारण्यकथनादेव ।

**सूत्रार्थः**—तदा पुष्टिफलदशायां मर्यादामार्गीयमोक्षस्य संसारत्वेन कथनात्संसारतुल्यतैवातो याज्ञवल्क्यार्तभागाभ्यां तथा निरूपितामिति ॥ ८ ॥

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ४।२।९ ॥

३२३-३ सूत्रमवतारयन्ति-नन्विति। तद्बोधकप्रमाणानां-भजनानन्दोत्कर्षबोधकप्रमाणानाम्।

—८ तत्तत्वं-पुष्टिमार्गीयतत्त्वम्।

—९ उक्तेतराज्ञेयमिति। अतिशयितानुग्रहराहितेनाविज्ञेयमित्यर्थः।

—१० तेषां-अतिशयानुग्रहराहितानां मर्यादामार्गीयाणाम्।

—१२ इच्छेति। स्वर्गविषयिणी मोक्षविषयिणीच्छेत्यर्थः। किंचिदितीति। इतिशब्दो हेतौ। अतो न किञ्चिदनुपपन्नमित्यर्थः।

—१३ एवंविधार्थास्तित्वे-अनुग्रहाविरहवद्भिः सर्वैरस्यार्थस्य दुर्विज्ञेयत्वे।

—१८ दुर्ज्ञेयत्वमिति। पुष्टिमार्गीयतत्त्वस्य। तत्सत्ता-पुष्टिमार्गीयतत्त्वसत्ता।

—१९ धर्मिग्राहकमानसिद्धं-पुष्टिमार्गीयतत्त्वप्रमाणश्रुतिसिद्धम्।

सूत्रार्थः—पुष्टिमार्गीयं तत्त्वं सूक्ष्मम्। यतो वाचो निवर्तन्ते-इति श्रुतिप्रमाणेन तथोपलब्धेः। चकारात्तादृशभक्तानुभवोपि मानमिति ॥ ९ ॥

## नोपमर्देनातः ॥ ४।२।१० ॥

—२१ सूत्रमवतारयन्ति-तर्हीति।

—२२ पूर्वोक्तं-पुष्टिफलस्य सर्वोत्तमता। तत्र-तादृशमार्गानुपदेशे।

३२४-१ पूर्वस्याः-विरहदशायाः।

—३ सः-उपदेशः।

सूत्रार्थः—पुष्टिमार्गीयाणामुपदेशो न संभवति यतस्तेषां द्वे एवावस्थे विरहदशा भगवत्संगमदशा चेति। तत्र विरहदशायामैश्वर्यादीनां विनाशादुपदेशो न संभवति। भगवत्संगमदशायां त्वैश्वर्यादीनां सत्त्वेपि भगवदानन्दानुभवनिमग्नचित्तत्वेनोपदेशस्यासंभव इति ॥ १० ॥

## अस्यैव चोपपत्तेरूष्मा च ॥ ४।२।११ ॥

—५ सूत्रमवतारयन्ति-नन्विति।

—७ तत्संभवात्-दुःसहविरहतापसंभवात्।

—८ तद्धेतोरिति। आनन्दतिरोधायकस्याविद्याकामकर्मादिहेतोः।

—१३ तद्प्राप्तिजः-भगवद्प्राप्तिजः।

—१५ तथात्वात्-रसात्मकत्वात्।

सूत्रार्थः—अस्यैवानन्दात्मकभगवत एव धर्मो विरहाख्यः। नन्वानन्दात्मकस्य दुःखरूपो धर्मः कथमिति चेन्न। भगवदन्तःप्राप्तिबाह्यप्राप्तिभ्यामानन्दानुभवविरहतापयोरुपपत्तेरिति॥ ११॥

## प्रतिषेधादिति चेन्न शारीरात्॥ ४।२।१२॥

—१७ सूत्रमवतारयन्ति-नन्विति। पश्यः-भगवद्दर्शी भक्तः।

—२१ एतेन सिद्धान्तभागेन।

सूत्रार्थः—ननु न पश्यो मृत्युमित्यादिना भक्ते दुःखं प्रतिषिध्यत इति चेन्न। रागेण सह पाठात्तत्र शारीरदुःखस्यैव निषेधात्। एवंच शृङ्गारविरहादिभावात्मकं दुःखं तु न निषिध्यत इति॥ १२॥

## स्पष्टो ह्येकेषाम्॥ ४।२।१३॥

—२४ विरहदुःखं न कर्मजन्यमित्याशयेन सूत्रं व्याचक्षते-एकेषामिति। शाखिनां-तैत्तिरीयाणाम्।

—२५ अयं-पुष्टिमार्गीयभक्तः।

३२५-३ मरणहेतूपस्थित्यभाव इति। मरणहेतोर्विरहभावस्योपस्थितेरभावे।

—५ एकतरेण-संयोगविरहयोरन्यतरेण। एवंच रसपूर्णतायां संयोगस्येव विरहस्याप्यावश्यकता।

—९ सामान्यपदमिति-क इति सामान्यबोधकसर्वनामप्रयोग इत्यर्थः। ब्रह्मानन्देत्यादि। ब्रह्मानन्दादधिको यः पुष्टिभक्तिगतः पूर्णानन्दस्तद्विरहेणासन्नं समीपस्थं यन्मरणं तन्निवारणेसामर्थ्यम्।

—१४ तद्धर्माः-विप्रयोगरसात्मकभगवद्धर्माः। नीलाम्बुदश्याम इति। अत्रेयं योजना। नीलाम्बुदश्यामो (भगवान्) हृदयादपगच्छत्विस्यतिक्लेशवशाद्भावेपि हृदयान्नापसारयितुं शक्यः। यत्पुनराहेति। को ह्येवान्यादित्यादिना आनन्दनं यच्छ्रुतिः पुनराहेत्यर्थः।

—२१ वारद्वयमिति। अन्यात् प्राण्यादिति द्विवारम्।

—२२ अन्यथा-विरहावस्थाया अनभिमेतत्वे। व्याख्यानान्तरमाहुः-तदवस्थापन्न इति।

सूत्रार्थः—प्रभुस्वरूपप्राप्त्यनन्तरमेकेषां शाखिनां-रसो वै-इति मन्त्रे दुःखनिवृत्तिरूपोर्थः स्पष्टः पठ्यते॥ १३॥

## स्मर्यते च ॥ ४।२।१४ ॥

३२६-४ रूढभावाः-क्षिप्तमनसः । भवाभियः-संसारभीताः ।

सूत्रार्थः—श्रीमद्भागवते भगवद्भावस्य जीवनमरणहेतुत्वं दौर्लभ्यं च ता मन्मनस्का इत्यनेन स्मर्यत इति ॥ १४ ॥

## तानि परे तथा ह्याह ॥ ४।२।१५ ॥

—९ सूत्रमवतारयन्ति-नन्विति। तद्दर्शनजनितः-भगवद्दर्शनसंपन्नः।

—११ न दृष्टं श्रुतं वेति । फलकोटौ कुत्रापि न दृष्टमित्यर्थः ।

—२६ यमुनापुलिनेत्यादि। निकुञ्जः-लतादिपिहितमध्यभागः प्रदेशः।

३२७—१ गह्वरप्रदेशः-गुहाप्रदेशः । आद्रिसानूनि-पर्वतशिखराणि ।

—३ विषयवाक्यानुरोधादिति । विषयश्रुतिवाक्ये ता वां वास्तूनीति नपुंसकलिङ्गं बहुवचनान्तं पदं दृश्यते तदनुरोधादित्यर्थः ।

सूत्रार्थः—तानि पूर्णानन्दादिवस्तूनि वैकुण्ठादप्युत्कृष्टे श्रीगोकुले श्रीगोवर्धने च सन्ति तथाह-ता वां वास्तून्युष्मसीति श्रुतिरिति ॥ १५ ॥

इति तृतीयमधिकरणम् ।

---

## अविभागो वचनात् ॥ ४।२।१६ ॥

—९ एवं नवाभिः सूत्रैस्तत्तच्छङ्कानिराकरणं कृत्वा पुष्टिमार्गविषय एव किंचिद्विचारयति सूत्रकार इत्याशयेनाधिकरणमवतारयन्ति-नन्विति।

—१३ तत्र प्रवेशितस्य-अनुकम्पया लीलायां प्रवेशितस्य । तस्मात्-लीलास्थानात् ।

—१८ अन्यथा-अनया श्रुत्या विभागाभावस्याप्रतिपादने ।

—२० विद्वन्मण्डन इति । एतद्विषये यद्वक्तव्यं तत्पूर्वमेवोक्तम् ।

सूत्रार्थः—नित्यलीलाप्रविष्टस्य भक्तस्य सर्वदा विभागाभाव एव । तद्विष्णोः परमामिति श्रुतिवचनात् ॥ १६ ॥

इति चतुर्थमधिकरणम् ।

---

## तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ४।२।१७ ॥

—२३ तं-वृत्तान्तम् ।

३२८-५ प्रकाशत इति । इन्द्रियरूपाभिस्तेजोमात्राभिः प्रकाशत इत्यर्थः । स एता इत्यादिश्रुतिर्बृहदारण्यके शारीरब्राह्मणे ।

—१६ तच्छेषभूता-विद्याशेषभूता।

सूत्रार्थः—उत्क्रमणप्रकारमाह सूत्रकारः। तस्यात्मनः स्थानस्य हृदयस्याग्रं प्रथमं प्रकाशते ततस्तत्प्रकाशितमार्गेणोत्क्रामति। अयं सर्वजीवसाधारणो मार्गः। विदुषो विशेषमाह। ब्रह्मविद्यासामर्थ्यात्तदङ्गभूतप्रव्रजनभगवत्स्मरणसंबन्धाद् हृदयस्थितेन भगवतानुगृहीतः सन् एकशततम्या नाड्या निष्क्रामतीति॥ १७॥

इति पञ्चममधिकरणम्।

---

## रश्म्यनुसारी॥ ४।२।१८॥

—२० क्रमेण मुच्यमानस्य व्यवस्थां वक्तुमिदमधिकरणमित्याशयेनावतारयन्ति-अथेति।

सूत्रार्थः—विद्वानेव रश्मिद्वारा गच्छतीति॥ १८॥

इति षष्ठमधिकरणम्।

---

## निशि नेति चेन्न संबन्धस्य यावद् देहभावित्वाद् दर्शयति च॥ ४।२।१९॥

३२९-८ सूत्रमवतारयन्ति-विदुष इति। हार्दानुग्रहकृत इति। हृदयस्थभगवदनुग्रहकृत इत्यर्थः।

—१० आद्यकृतः-कालकृतः।

सूत्रार्थः—निशि विदुष उत्क्रमणं नेति चेन्न। अनुग्रहहेतुभूतस्य गत्यनुस्मृतिसंबन्धस्य यावद्देहपर्यन्तस्थायित्वेनानुग्रहस्य सर्वदा सत्त्वात्कालस्याप्रयोजकत्वात्। एतमेव प्रवाजिन इति श्रुतिस्तथा दर्शयतीति॥ १९॥

## अतश्चायनेपि दक्षिणे॥ ४।२।२०॥

सूत्रार्थः—अतो दक्षिणायनज उत्क्रमणविशेषोपि विदुषां नास्तीति॥२०॥

## योगिनः प्रति स्मर्यते स्मार्ते चैते॥ ४।२।२१॥

३३०-१ भिन्न इति। एवंच मार्गभेदात्तकालविशेषापेक्षेत्यर्थः।

—२ इतरानिरपेक्षत्वादिति। हार्दभगवदनुगृहीतस्य कालादीतरानुग्रहस्यानपेक्षणादित्यर्थः।

—४ सूत्रे केवलयोगिपदस्य ग्रहणादेते इति पदेन सांख्यस्य ग्रहणमयुक्तमित्यरुचेराहुः-अग्निर्ज्योतिरिति।

—६ **ते एवेति** । छान्दोग्योक्ते देवयानपितृयाणगती इत्यर्थः । अत्रापि-स्मृतावपि ।

—७ **शब्दभेदेन**-अग्न्यादिशब्दभेदेन । विरोध इति । श्रुतिस्मृत्योर्विरोध इत्यर्थः ।

**सूत्रार्थः**—अग्निर्ज्योतिरिति कालनियमो योगिनं प्रति स्मर्यते न ज्ञानिनं प्रति । यत एते योगसांख्ये स्मार्ते । श्रौतज्ञानमार्गस्य तु ज्ञानतरस्य कालादेरपेक्षा नेति ॥ २१ ॥

इति सप्तममधिकरणम् ।

---

इति श्रीमद्वल्लभाचार्यकृताणुभाष्यव्याख्यायां श्रीधरशर्मकृतायां बालप्रबोधिन्यां चतुर्थाध्यायस्य द्वितीयः पादः ४।२

---

# अथ तृतीयः पादः ॥ ४।३ ॥

## अर्चिरादिना तत्प्रथितेः ॥ ४।३।१ ॥

अस्याध्यायस्य द्वितीयपादे प्रथमं पुष्टिमार्गीयस्य ततो मर्यादामार्गीयस्य सद्योमुक्तिप्रकारः प्रदर्शितः । तदनन्तरं क्रममुक्तौ निर्गमद्वारादिकं दर्शितम् । अस्मिंस्तृतीयपादे ततो निर्गतस्य यो ब्रह्मप्राप्तिमार्गो ब्रह्मलोकस्तत्प्रकारश्च निरूप्यते ।

—१३ तत्राधिकरणमवतारयितुं संशयादिकमाहुः-नन्विति ।

—१४ नियमाभावः-साधनादिनियमाभावः ।

—१९ भक्तातिरिक्तानिति । इत्थं विदुरित्यादिना क्रियाविषयस्य क्रियायाश्च श्रुतौ प्रतिपादनाय इतिपदेन भक्तातिरिक्तानामेव ग्रहणमिति भावः। **तथा गतिः**-अर्चिरादिमार्गेण गतिः । एवंच मर्यादामार्गीयाणामपि भक्तानां प्रायः सद्योमुक्तिरेव । ननु ज्ञानमार्गीयाणामर्चिर्मार्गेण गतिर्भवतु तथापि मर्यादाभक्तस्य प्रायः सद्योमुक्तिरेवेति नियमोशक्यः । श्रुतावर्चिरादिव्यतिरिक्तानां बहूनां मुक्तिमार्गाणां कथनात् ।

—२१ किंच बहुमार्गसत्त्वेपि सूत्रकृतात्रार्चिरादिमार्ग एव कस्मादादृत इत्याशङ्कायामाहुः-अथेदं चिन्त्यत इति । तेषां मार्गाणां परस्परं भेदोस्ति नवेति चिन्त्यत इत्यर्थः ।

—२२ **पठ्यत इति** । वियाभेदेन गतिभेदः पठ्यत इत्यर्थः ।

३३१-२ **एका**-दहरवियास्था ।

—३ **अन्या**-पञ्चाग्निवियास्था ।

—५ **अपरा**-कौषीतकिब्राह्मणस्था ।

—६ **इतरा**-बृहदारण्यकस्था । **सूर्यद्वारेणेति** । इयं प्रथममुण्डकस्था ।

—८ **सर्वेषां**-श्रुत्युक्तमार्गाणाम् । **पारिभाषिकं**-सांकेतिकम् । न वास्तवमित्यर्थः।

—१३ एकदेशिकृतसमाधानं खण्डयितुं पूर्वपक्षी प्रथमं तदुपपादयति-**तत्रोच्यत इति** ।

—१४ **तथा**-पारिभाषिकत्वम् । **लाघवादिति** । पर्वप्रत्यभिज्ञानेन लिङ्गैनैकमार्गस्वीकारे लाघवादित्यर्थः ।

—१५ **गौरवप्रसंगादिति** । मार्गाणां पार्थक्ये तेषां पृथक् कार्यकारणभावाङ्गीकारो गौरवं तथा तन्मध्ये कस्यचिन्निकटत्वं कस्यचिद्दूरत्वं तत्र निकटमार्गत्यागे दूरमार्गग्रहणे चोपपत्तिकल्पनमिति च गौरवमित्यर्थः । **एवं**-मुक्तिमार्गैकत्वाङ्गीकारे ।

—१७ **तत्र**-रश्मिवाक्ये । **उच्यत इति**। शरीरादुत्क्रम उच्यत इत्यर्थः। **उपक्रम इति** । एवं चोत्क्रमणमार्गोपक्रम उत्क्रमणमात्रकथनेन मुक्तिमार्गकथनस्य व्युदासः ।

—२४ युक्त्यन्तरमाहुः-**उपसंहारे चेति** ।

—२७ **तदनुपपत्तिपरिहारः**-ब्रह्मप्रापकमार्गस्यानुपपत्तिपरिहारः ।

३३२-१ **अनर्थक इति** । एतच्छ्रुतौ ब्रह्मप्रापकमार्गस्यानिरूपणेनेत्यर्थः । एकमार्गवादिमतं दूषयितुं पृच्छति-**नन्विति** ।

—४ **तदसंभवेन**-सकलशाखोपसंहारासंभवेन ।

—५ **तस्यासंभवादिति** । अनन्ता वै वेदा इति श्रुत्या वेदानामनन्तत्वात्कलौ बुद्धिह्रासेन पठनाभावात् सर्वशाखास्वित्वस्यासंभवेन सर्वशाखाविदोसंभवादित्यर्थः ।

—६ **तथा**-श्रुत्या मुक्तिमार्गबोधनम् । **तावन्मात्रपरत्वादिति** । स्वाध्यायोध्येतव्य इत्यध्ययनविधिरपि स्वशाखामात्रतात्पर्येणैवास्ति । स्वाध्याय इति पदस्य स्वशब्दघटितत्वात् ।

—७ **शाखान्तरसंवादीत्यादि** । तथाच शाखान्तरोक्तमुक्त्यङ्गपर्वणो शाखान्तरे कथनमप्यनुचितं स्यादित्यर्थः ।

—८ विरुद्धदिक्कानामिति । चतुर्दिक्षु विद्यमानजनैर्मध्यस्थग्रामस्य प्राप्तिवदित्यर्थः । इहापीति–नानामुक्तिमार्गीयाणां स्वमार्गेणैव मुक्तिप्राप्तिरित्यर्थः ।

—९ द्विवचनाद्यनुपपत्तिं परिहरन्ति–न चेति ।

—१५ द्वितीयः–पितृयाणमार्गः ।

—१६ एवं–मुक्तिमार्गाणामनेकत्वे ।

—१७ येन–यच्छाखाध्यायिना ।

—१८ लाघवगौरवेत्यादि । लाघवगौरवाभ्यां तस्या द्वितीयशाखाया विचारावसर इत्यर्थः ।

—१९ उक्तबाधकैरिति । अध्ययनविधेः स्वशाखाध्ययनमात्रपरत्वं तदध्येतुस्तावन्मात्रकरणे सर्वशास्त्रार्थकरणपूर्तिः शाखान्तरसंवादिपर्वकथनानुपपत्तिश्चेत्येवंरूपैर्बाधकैरित्यर्थः । परोक्तं दूषयित्वा स्वमते युक्त्यन्तरमाहुः–अपरं चेति ।

—२० आवश्यक इति । तदर्थमेव कथनात्पुराणे प्रसिद्धत्वाच्च ।

—२४ अविधेयत्वात्–उपसंहारस्य विधातुमशक्यत्वात् ।

—२५ तथा–न युक्तः । निरूपितमिति । तत्र हि समाने योर्थाभेदादुपसंहारः स विधिशेषो येग्निहोत्रादयस्तद्वादेरयुक्तम् । तेग्निहोत्रादयः सर्वेषां समाना अपि येषां शाखिनां यथोक्तास्तथा तेषामेव ते विधेया नेतरेषाम् । तथा, अविधेयत्वात् । एवं यद्यत्पर्वविशिष्टो मुक्तिमार्गो यद्यच्छाखायामुक्तस्तेन मार्गेणैव तस्य तस्य सकलशास्त्रार्थसंपत्त्या कृतार्थतासंभवात्तत्तन्मार्गस्य तत्तच्छाखीयं प्रत्येव विहितत्वान्नोपसंहारशङ्केति भावः ।

३३३–१ सिद्धान्तमाहुः–अत्र वदाम इति । अयं भावः । नानाग्रामाविशिष्टेनैकेन मार्गेण गन्तॄणामनेकेषां मध्ये कस्यचिदेकस्मिन् ग्रामे विश्रमोन्यस्यान्यस्मिन्ग्रामे तद्वदिहापि ।

—६ उपसंहारस्य पर्वप्रापकत्वं शङ्कते नन्विति ।

—७ समादधते–स्यादेतदिति ।

—१० अग्रे–अग्रेतनसूत्रेषु ।

—११ पूर्वपरामर्शादिति । अर्चिषोहरन्हः पूर्वपक्ष इत्यादिश्रुतिषु पूर्वेषामहरादीनां परामर्शादित्यर्थः ।

सूत्रार्थः—अर्चिरादिमार्गेण ज्ञानमार्गीय एव गच्छति । न तु मर्यादामार्गीयोपि । तद इत्थं विदुरित्यादिना ज्ञानमार्गीयस्यैव तत्रोत्कर्षकथनादिति ॥ १ ॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥ ४।३।२ ॥

—२२ अत्र-सूत्रे। इदं-अविशेषाविशेषयोर्निर्वचनम्।

३३४-१० सोक्तिः-छान्दोग्योक्ताव्यवधानोक्तिः। तद्भोगः-वायुलोकभोगः। उक्तरीतिः-व्यासोक्तरीतिः। नानुपपत्तिरिति। एवंच भोक्तृभेदेनाव्यवधानव्यवधानसंभवान्न श्रुतिविरोधरूपानुपपत्तिरित्यर्थः।

—११ केचित्-शंकराचार्यादयः।

—१२ मिथः पौर्वापर्येत्यादि। परस्परपौर्वापर्यद्योतकपञ्चम्यन्तपदाभावादित्यर्थः।

—१८ वक्तुं शक्यमिति। ऊर्ध्वाक्रमणस्यार्थसिद्धत्वेन तच्छब्दस्य तत्रापि सत्त्वाद्वक्तुं शक्यमित्यर्थः।

—२१ एवं-ऊर्ध्वाक्रमणपूर्ववर्तित्वयोर्विशेषपदार्थत्वे।

—२२ अयं-शंकराचार्यादिकृतोर्थः। एवं सूत्रव्याख्यानांशे वादिमतं निराकृत्य बृहदारण्यकश्रुतिविरोधांशेपि तत्परिहर्तुं वदन्ति-वाजसनेयिन इति।

—२६ एवं सति-देवलोकस्य निवेशेऽवश्यं कर्तव्ये सति।

३३५-२ आदित्यमध्यपातित्वमिति। तथाच देवलोकस्यादित्यकोटौ निवेशेब्दाद्वायुं वायोरादित्यमित्येवं क्रमः सिद्ध इति न मार्गभेदापत्तिरिति भावः। व्यासोपीति। तथोक्तवानित्यर्थः।

**सूत्रार्थः**—छान्दोग्ये मासेभ्यः संवत्सरमित्यत्र संवत्सरादुत्तरं वायुलोको निवेशयितव्यः। अविशेषविशेषाभ्याम्। तथाहि-अर्चिरारभ्य संवत्सरान्तानां भूसंबन्धित्वेनाविशेषात्तन्मध्ये वायुर्न निवेशनीयः। वायुरन्तरिक्षस्याधिपतिरिति श्रुतेः। सूर्यो दिवोधिपतिरिति श्रुतेश्चैतयोः पौर्वापर्ये विशेषहेतुरस्तीति सूर्यलोकात्पूर्वं वायुलोको निवेश्य इति ॥ २ ॥

## तडितोधिवरुणः संबन्धात् ॥ ४।३।३ ॥

**सूत्रार्थः**-चन्द्रमसो विद्युतमित्यत्र विद्युल्लोकात्परतो वरुणलोको निवेशनीयः। तडितो जलसंबन्धित्वेन वरुणस्य जलपतित्वेन च जलीयसंबन्धस्य सत्त्वादिति ॥ ३ ॥

## वरुणाच्चाधीन्द्रप्रजापती ॥ ४।३।४ ॥

—९ तदिदनन्तरं वरुणादिलोकनिवेशेर्चिरादिश्रुतिविरोध इत्याहुः-अर्चिरादीति।

—११ तं-पर्यङ्कविद्युदाद्युपासकम् । प्रदीपे मार्गैक्यनियमामित्यादि-पङ्क्तिरग्रिमसूत्रावतरणिकात्वेन गृहीता ।

**सूत्रार्थः**-वरुणलोकात्परं, इन्द्रलोकः प्रजापतिलोकश्च निवेशनीयः । संबन्धादेव हेतोरिति ॥ ४ ॥

इति प्रथममधिकरणम् ।

---

## आतिवाहिकास्तल्लिङ्गात् ॥ ४।३।५ ॥

—१६ अधिकरणमेतदिति बोधयितुं विषयं संशयं चाहुः-**विद्युदनन्तरमिति** ।

—१७ **गमयित्रा**-अमानवपुरुषेण ।

—१८ **वचनाभावेनेति** । यथा विद्युल्लोकानन्तरं ब्रह्मप्रापकपुरुषवचनमास्ति तथा वरुणलोकं गतस्य ब्रह्मप्रापकपुरुषवचनाभावेनेत्यर्थः ।

—१९ **ब्रह्मप्राप्तिः**-अमानवपुरुषकारिता ब्रह्मप्राप्तिः ।

—२३ **अन्यथा**-उपासकस्य ब्रह्मप्राप्त्यभावे । **कृतसाधनवैयर्थ्यमिति** । कृतं यदुपासनाख्यं ब्रह्मप्राप्तिसाधनं तस्य वैयर्थ्यमित्यर्थः । **तेषां**-उपासनाख्यसाधनानाम् ।

३३६-१ **आतिवाहिकश्रुतिरिति** । अतिवहनम्-अतिक्रामयित्वा प्रापणम् । भावे घञ् । तत्संबन्धी आतिवाहिकस्तद्बोधिका श्रुतिरित्यर्थः ।

—४ **एकवचनमिति** । अमानवः पुरुष इत्येकवचनम् ।

—५ **उच्यत इति** । अमानव इत्यादिना वाक्येनोच्यत इत्यर्थः । **तेन**-श्रौतलिङ्गेन ।

—८ **तत्पदेनेति** । तत्पुरुष इति श्रुतिगतेन लुप्तपञ्चमीकेन तच्छब्देन ।

—९ **इतरलोकेषु**-ब्रह्मप्राप्त्यव्यवहितलोकेषु । **अत्रापि**-अव्यवहितलोकेपि ।

—११ **तत्प्राप्तिः**-अर्चिर्लोकप्राप्तिः । **तथा सति**-अर्चिर्लोकप्राप्त्यभावे ।

—१२ **कस्यचित्**-उपासकस्य ।

—१३ **सा**-ब्रह्मप्राप्तिः ।

—१४ **तेषां**-लोकानाम् ।

—१५ सामितत्कथनम्–मुक्तिमार्गीयार्धलोककथनम् । अतः-अर्धकथनात् ।

सूत्रार्थः—एतस्मिन्नेव मार्गे प्रजापतिलोकोत्तरमातिवाहिकाः पुरुषा उपसंहर्तव्याः । तत्पुरुषोमानव इत्यत्र पुरुषस्य ब्रह्मसंबन्धित्वाल्लिङ्गादिति ॥ ५ ॥

उभयव्यामोहात्तत्सिद्धेः ॥ ४।३।६ ॥

—१७ सूत्रमवतारयन्ति–नन्विति ।

—२४ अञ्जसा–शीघ्रम् ।

—२६ अन्यथा–वाञ्छाफलासंभवे ।

३३७-२ उक्तहेतुभिरिति । उत्कृष्टफलं त्यक्त्वा क्षुद्रफलेच्छाया असंभव इत्यादिहेतुभिः । तत्र–अर्चिर्लोकादिफले ।

—५ अन्यमतं दूषणायोपक्षिपन्ति–यत्त्विति ।

—८ व्यामोहशब्दस्येति । व्यामोहशब्दोऽन्यथाज्ञानवाचको न सामर्थ्याभाववाचक इत्यर्थः ।

—९ तथा सति–संपिण्डितकरणग्रामत्वेन गन्तॄणामसामर्थ्ये सति ।

सूत्रार्थः–स्वकृतमार्गस्य साफल्याय भगवानेव कांश्चिज्ज्ञानिनो मर्यादामार्गीयांश्च व्यामोहयाति । अतः कामनासिध्या फलभोग इति ॥ ६ ॥

—११ सूत्रमवतारयन्ति–नन्विति ।

—१२ तल्लोकसंबन्धी–विद्युल्लोकसंबन्धी । तत्–ब्रह्म । तान् वैद्युतादिति पञ्चाग्निविद्यास्थवाजसनेयिश्रुतिः ।

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ४।३।७ ॥

—२२ तथा सति–तस्य विद्युल्लोकवासित्वे सति ।

—२३ अत एव–तदवासित्वादेव ।

३३८-३ अत एव–एतदुभयोः सूत्रकाराभिप्रायाविषयत्वादेव ।

सूत्रार्थः—वैद्युतपुरुषेणैव ब्रह्मलोकसंबन्धिना ब्रह्मलोकप्राप्तिः । तान् वैद्युतात्पुरुषोमानव इति श्रुतेः ॥ ७ ॥

इति द्वितीयमधिकरणम् ।

---

कार्यं बादरिरस्य गत्युपपत्तेः ॥ ४।३।८ ॥

—५ क्रममुक्तिमार्गं विचार्य तत्फलं विचारयतीत्याशयेन सूत्रमवतार-

यन्ति-अत्रेति । हस्तपिहितमिति । हस्तच्छन्नम् । अग्रे प्रस्थाप्यमानत्वादधुनानुक्त्वेत्यर्थः ।

—८ अधिकरणरचनार्थं संशयादिकमाहुः- स एतानिति । तथाच ब्रह्मपदश्रुतेर्गतिश्रुतेश्च संशयः ।

—१० पूर्वपक्षमाहुः-परस्येति । सः-ब्रह्मलोकः ।

—१२ तस्य-कार्यब्रह्मलोकस्य ।

सूत्रार्थः—स एतान् ब्रह्म गमयतीत्यत्र कार्यं ब्रह्मोच्यते । यतोस्य गन्तुस्तत्रैव गमनमुपपद्यते । न तु परब्रह्मणि व्यापकत्वादिति बादरिमतमिति ॥ ८ ॥

## विशेषितत्वाच्च ॥ ४।३।९ ॥

—१६ तत्-गन्तृभिर्गम्यम् ।

—१७ तज्जन्यभोगपरं-कार्यब्रह्मजन्यभोगतात्पर्यकम् ।

सूत्रार्थः- ब्रह्मलोकान्गमयतीति श्रुतौ बहुवचनान्तत्वेन कार्यं ब्रह्मैव ग्राह्यं न परं ब्रह्म तस्यैकत्वादिति ॥ ९ ॥

## सामीप्यात्तु तद्व्यपदेशः ॥ ४।३।१० ॥

सूत्रार्थः-ब्रह्मलोकप्राप्तौ लोकान्तरव्यवधानं विनैव परब्रह्मप्राप्तिर्भवत्यतः सामीप्याद्ब्रह्मपदेन कथनमिति ॥ १० ॥

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ४।३।११ ॥

—२४ प्राप्यस्य ब्रह्मसामीप्याद् ब्रह्मत्ववाद इति स्वीकारे विषयश्रुतिविरोध इत्याशङ्क्य समाधानमित्याशयेन सूत्रमवतारयन्ति-नन्विति ।

३३९-१ अत्र-देवयानमार्गे ।

—४ व्याख्यान्ति-कल्पसमाप्ताविति ।

—५ ब्रह्मणः सकाशात्-चतुर्मुखात् ।

सूत्रार्थः—कल्पावसानेध्यक्षेण ब्रह्मणा सह कार्यब्रह्मलोकस्य नाशस्ततः परब्रह्मप्राप्तिरतोपुनरावृत्तिश्रुतेर्न विरोधः । वेदान्तविज्ञानेत्यादिश्रुतौ तथैव कथनादिति ॥ ११ ॥

## स्मृतेश्च ॥ ४।३।१२ ॥

सूत्रार्थः—ब्रह्मणा सह ते सर्वे इति स्मृतेरपि स एवार्थः प्रतीयत इति ॥ १२ ॥

## परं जैमिनिर्मुख्यत्वात् ॥ ४।३।१३ ॥

—१५ पञ्चभिः सूत्रैर्बादरिपूर्वपक्षं कृत्वा जैमिनिमतोपन्यासमुखेन स्वसिद्धान्तं प्रतिपादयति सूत्रकार इत्याशयेनावतारयन्ति–अत्रेति ।

—१९ तादृक्–बृहत्त्वादिधर्मविशिष्टम् ।

—२० अन्यत्र–कार्यब्रह्मणि ।

—२१ तथेति । ब्रह्मपदं परब्रह्मप्रतिपादकमेवेत्यर्थः ।

**सूत्रार्थः**—स एतानित्यत्र ब्रह्मपदेन परब्रह्मण एव ग्रहणमिति जैमिनिमतम् । ब्रह्मपदस्य परब्रह्मण्येव मुख्यवृत्तेरिति ॥ १३ ॥

## दर्शनाच्च ॥ ४।३।१४ ॥

३४०–२ ननु यदि स्वाभिप्रेतं स्यात्तर्हि स्वनामैव गृह्णीयाद्व्यासो न तु जैमिनेरतो नैवं सिद्धान्त इत्याशङ्कायां जैमिनिनामतात्पर्यमाहुः-अपरं चेति

—७ संनिवेश इति । छान्दोग्येनुक्तानामन्यत्रोक्तानां पर्वत्वेनार्चिरादिमार्ग एव निवेशः कार्य इत्यर्थः ।

—१३ अमन्वान इति । मार्गभेदवादी जैमिनिः । तथा–मार्गभेदम् ।

—१४ तदुक्त एव– व्यासोक्त एव ।

—१६ तेनापि–बादरिणापि ।

—१७ अन्यत्र–आक्षिपुरुषाविद्यायां पञ्चाग्निविद्यायां च । तद्दृष्टान्तेन–कौषीतकिश्रुत्युक्तप्रकारदृष्टान्तेन । तथैव–ब्रह्मपदस्य परब्रह्मपरत्वमेव । बाधकाभावादिति । गत्युपपत्त्यादिदूषणानां परिहृतत्वात् ।

—१८ दूषयितुं शंकराचार्यमतेनाशङ्कन्ते–नन्विति ।

—१९ तन्नाशे–अविद्योपाधिनाशे ।

—२१ तस्यैव–गन्तुरेव ।

—२४ बादरिमतमेव– अमानवः पुरुषश्चतुर्मुखं प्रापयतीति बादरिमतमेव ।

—२६ समाधानमाहुः–स्यादेतदिति ।

३४१–४ यदा–यस्मिन्काले । यत्र–यस्मिंल्लोके ।

—५ तत्प्राप्तेः– ब्रह्मप्राप्तेः । निष्प्रत्यूहत्वात्–प्रत्यवायराहितत्वात् ।

—७ फलतारतम्यमिति । विलम्बाविलम्बादिरूपं तारतम्यमित्यर्थः ।

—११ अन्यथा–प्रारब्धभोगाप्रतिपादने ।

**सूत्रार्थः**–स एतं देवयानमित्यादिश्रुतौ प्रजापतिलोकात्पृथक्तया ब्रह्मलोककथनस्य दर्शनादिति ॥ १४ ॥

## न च कार्ये प्रतिपत्त्यभिसंधिः ॥ ४।३।१५ ॥

—१७ पूर्वोक्तप्रकारेण प्रासाङ्गिकं मतान्तरं परिहृत्य जैमिनिमतं सिद्धान्तत्वेन स्वीकृत्य सूत्रं व्याख्यान्ति—अपि चेति ।

—१८ तद्विवरिकां— ब्रह्मविदाप्नोतीत्यस्य विवरणकारिणीम् ।

—२० उपक्रमानुरोधेन—आप्नोति परमित्युपक्रमानुरोधेन ।

—२१ प्रतिपत्तिः—मुक्तिफलभोगरूपा प्रतिपत्तिः । ऋगर्थस्तु—सत्यं ज्ञानमित्यादृगर्थस्तु ।

सूत्रार्थः—सोऽश्नुते सर्वान् कामान् इत्यत्र भगवता सह सर्वकामोपभोगप्राप्तिरुच्यते । सा कार्यब्रह्मग्रहणे न संभवेदतः परमेव ब्रह्म ग्राह्यमिति ॥ १५ ॥

इति तृतीयमधिकरणम् ।

---

## अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्च ॥ ४।३।१६ ॥

३४२—४ पूर्वाधिकरणसिद्धमनूद्य सूत्रमवतारयन्ति— क्रममुक्त्यधिकारिण इति ।

—५ तत्र— सिद्धे परप्राप्तिरूपेऽर्थे ।

—६ सर्वान्— तदुपासनावतः ।

—८ सः—अमानवः पुरुषः ।

—९ कर्तेति । लुट् करिष्यतीत्यर्थः ।

—११ अतथात्वं ज्ञात्वेति । शुद्धब्रह्मत्वमज्ञात्वेत्यर्थः ।

—१३ तथा च सत्यपि— तेषां प्रतीकालम्बनत्वे सत्यपि ।

—१५ शुद्धब्रह्मत्वं—उपास्यविभूतिरूपेषु शुद्धब्रह्मत्वम् ।

—२३ तत्क्रतुरिति । तद्भजनं क्रतुर्यस्य स तत्क्रतुर्भक्त इत्यर्थः ।

—२४ तस्य—भक्तस्य ।

३४३—२ अस्मिन्पक्षे लकारार्थव्यत्यय इत्यरुचेर्नयतीत्यनुसारात्पक्षान्तरमाहुः—वस्तुत इति । तथाच सूत्रे वर्तमानकालिकलडन्तनयतीतिप्रयोगात्तत्क्रतुरिति प्रथमान्तप्रयोगाच्चैवं ज्ञायते । यो ब्रह्मत्वेनाङ्गोपासनकर्ता स तत्क्रतुर्भक्तः सन् स्वयमेव स्वात्मानं भक्तिसामर्थ्येन नयति एवमेव सर्वत्रेति । एवंच न्यूनाधिकफलदातृत्वमेव तेषु न्यूनाधिकत्वव्यवस्थापने बीजम् । न तु ब्रह्मवस्तुनि परिच्छिन्नत्वमस्तीति भावः ।

